KĀVYAMĀLĀ No. 42.

# THE NĀṬYAŚĀSTRA

BY

## ŚRĪ BHARATAMUNI.

EDITED BY

PANDIT KEDĀRNĀTH

SĀHITYABHŪṢAṆA

SON OF

MAHĀMAHOPĀDHYĀYA PAṆḌIT DURGĀPRASĀD

OF

JAIPUR.



PUBLISHED BY

SATYABHĀMĀBĀĪ PĀṆḌURANG,

FOR THE 'NIRṆAYA-SĀGAR' PRESS,

BOMBAY.

1943






काव्यमाला ४२.

श्रीभरतमुनिविरचितं

# नाट्यशास्त्रम् ।

जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डित-
दुर्गाप्रसादात्मजेन पण्डितकेदारनाथ-
साहित्यभूषणेन संपादितम् ।

तदेतद्

द्वितीयं संस्करणं

मुम्बय्याम्

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः
निर्णयसागरयन्त्रालयकृते तत्रैव मुद्रयित्वा प्रकाशितम् ।

ख्रिस्ताब्दाः १९४३

# श्रीभरतमुनिकृतनाट्यशास्त्रस्य भूमिका।

ध्वनिकारेण श्रीमतानन्दवर्धनाचार्येण यथा—'अनुरणनं ध्वनिरिति ध्वनि'लक्षणं कृतं तथैवानुकरणं नाम नाट्यमित्यनुसंधेयम् । काव्यप्रकाशकृता श्रीमता मम्मटाचार्येण भरतमुनिग्रन्थादेव कारिकाः समुद्धृत्य काव्यप्रकाशनामापूर्वपूर्वो ग्रन्थः समारचितः। अदसीयाः कारिकास्तथैव दण्डिविरचितकाव्यादर्शीयाः कारिका ग्रन्थादस्मादेव समुद्धृता इति नाविदितं साहित्यशास्त्रालोचकानाम् ।

ग्रन्थोऽयं कदा रचित इति निर्णयोऽद्यापि न जातः। ग्रन्थस्यास्य भाषापि नाधिकं प्राचीना । परं 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः', (४।३।११०) इति पाणिनीयसूत्रे नटसूत्रत्वेन कोऽप्युपनिबद्धः सूत्रात्मको ग्रन्थः प्राचीन आसीदित्यनुमीयते । तदाधारत्वेनैवादिभरतनाम्ना केनापि मुनिना नाट्यशास्त्रमेतदारचितं स्यादिति संभाव्यते।

कोहलो दत्तिलश्चैवमन्येऽप्येतद्विषयकग्रन्थान् रचयामासुरिति ग्रन्थेऽस्मिन् तत्तन्नामोट्टङ्कनेन ज्ञायत एव। कोहलदत्तिलयोश्च ग्रन्थौ प्रकाशितावपि ।

अस्माकं काव्यमालायां प्रकाशितपूर्वोऽप्ययं ग्रन्थोऽशुद्धलिखितपुस्तकद्वयाधारकत्वान्नासीत् सुमनोमनोरञ्जकः । वाराणसीस्थबटुकनाथबलदेवोपाध्यायनामकसाहित्याचार्यौ काशीस्थसरस्वतीभवने विद्यमानस्य पुस्तकस्याधारेण १९२९ ख्रिस्ताब्दे संस्कृत्य प्रकाशयामासतुर्नाट्यशास्त्रमेनत् । किंतु त्रुटितपाठबाहुल्यान्नास्ति तत्संस्करणमपि कार्यक्षमम् ।

अभिनवभारतीनामिका सुप्रसिद्धाभिनवगुप्ताचार्यैरारचिता नाट्यशास्त्रटीका समुपलब्धाधुना। तत्सनाथं गायकवाड–ओरियण्टलसीरीजग्रन्थावल्यां प्रकाश्यते सोऽयं बडोदानगरतः । अद्यापि केवलमध्यायानामष्टादशकमेव भागद्वयत्वेन संपादितं मानवल्ल्युपनामकरामकृष्णकविभिर्दाक्षिणात्यै राजमहेन्द्रीवास्तव्यैः ।

अभिनवभारत्यां टीकायां तण्डुमुनिशब्दौ 'नन्दिभरतयोरपरनामनी' इति संलिखितमतो ज्ञायते यदयं ग्रन्थो मुन्यपरनामकेन भरताचार्येण रचितमथ—

'नाट्यवेदाच्च भरताः सारमुद्धृत्य सर्वतः । संग्रहं संप्रयोगार्हं मनुना प्रार्थितं व्यधुः ॥
एकं द्वादशसाहस्रैः श्लोकैरेकं तदर्धतः । षड्भिः श्लोकसहस्रैर्यो नाट्यवेदस्य संभवः ॥' इति

भावप्रकाशने (१०–३४, ३५) षट्सहस्रश्लोकात्मकत्वेनैष ग्रन्थः समुल्लिखितः। एवमभिनवगुप्ताचार्या, अपि—

'अपि तु महावाक्यात्मना षट्सहस्रीरूपेण प्रधानतया प्रश्नपञ्चकनिरूपणपरेण शास्त्रेण निर्णीते ।' इति समुल्लिलिखुः ।

एवं षट्त्रिंशकं भरतसूत्रमिदमिति लेखोऽभिनवगुप्तपादानां मतेन षट्त्रिंशदध्यायात्मकमेवास्य रूपमिति निरूपयति । गायकवाड–ओरियण्टलसीरीजमुद्रिते संस्करणे भूमिकायामस्य ग्रन्थस्य विषये मानवल्ल्युपाधिधारकाः A. B. इति संज्ञाभ्यां ग्रन्थप्रतिकृतीर्विभाजयामासुः ।

तत्र A. संज्ञाता प्रतिकृतिः काश्मीरकविदुषां स्फोटसिद्धान्तानुयायिनां मतेन; तेषु तौतोत्पलदेवभट्टेन्दुराजाभिनवगुप्तपादादयः ।

B. संज्ञाता च मीमांसकानां न्यायशास्त्रविदुषां च संमता । तत्र प्राधान्यं शङ्कुकस्य तदनुयायिनां च लोल्लटोद्भटादीनाम् ।

अस्मदीयमेतत् संस्करणं A. श्रेण्याः पुस्तकद्वयसाहाय्येन कृतपूर्वं महामहोपाध्यायपण्डितशिवदत्तशास्त्रिभिर्दाधिमथैः । परं तत् पुस्तकाशुद्धिबाहुल्यान्नास्ते स्मोपयोगि । A. श्रेणीस्थपुस्तकानां दक्षिणापथे भूयान् प्रचारः । एषैव श्रेणी प्रत्ना । B. विभागस्थानि च पुस्तकानि नेपालमहाराजस्य पुस्तकालये एवं A. भागस्थानि चोज्जयिनीतो गृहीतानि बडोदाराजकीयपुस्तकालये, बीकानेरराज्यपुस्तकागारे च वर्तन्ते ।

दशरूपककर्ता धनंजयः A. श्रेणीस्थपुस्तकमुपयुक्तवान्, धाराधिपो भोजश्च स्वीयशृङ्गारप्रकाशे B. श्रेणीस्थमिति विदांकुर्वन्तु विद्वद्वरेण्याः ।

अस्मिन् संस्करणेऽष्टादशाध्याया बडोदासीरीजमुद्रिताभ्यां भागाभ्यां पाठभेदयोजनपूर्वं संस्कृताः । परस्ताच्च केवलं काशीमुद्रितपुस्तकसाहाय्येन संशोधिताः ।

प्रथमाध्यायादिचतुर्दशान्तमध्यायाः France देशीयेन J. Grosset नामकेन केनापि तत्रत्येन संस्कृतविदुषा संशोध्य 1898 A. D. Paris पूर्वं प्रकाशिताः ।

एवं कृतेऽपि भूयोभूयः श्रमे सहृदयहृदयावर्जकं संस्करणं केवलं बडोदातः संजातमिति प्रमोदावसरः ।

बडोदासंस्करणानुसारमवशिष्टाष्टादशाध्यायानां पाठभेदान् परस्तात् प्रकाशयिष्यामः । तत्रैव च विशदा विषयसूची मर्मप्रकाशिका भूमिका च प्रस्तूयेत ।

अस्माभिः किल बडोदासंस्करणप्रतीक्षायां भूयान् कालो यापितस्तथापि नेष्टापत्तिः संजातेति खेदास्पदम् । अग्रिमे संस्करणेऽस्य सर्वाङ्गसुन्दरता स्यादित्याशास्महे । अस्मदीयकाव्यमालास्थग्रन्थानां पाठ्यपुस्तकेषु नियततया नाट्यशास्त्रस्यापि एम्. ए. श्रेण्याः पाठ्यपुस्तकेषु नियतिः संजातेति ग्रन्थस्यास्य गौरवं विद्वद्वर्यैः स्वीकृतमेव । तथाविधसंस्करणकृतेऽधुना सप्रयत्ना वयमिति संस्कृतभाषायां निबद्धादरैः पुस्तकादिसाहाय्यं करणीयम् ।

काव्यमालायां प्रकाशितग्रन्थानां भूयसां द्वित्रसंस्करणानि जातानि तत्र सोऽयं ग्रन्थोऽपि द्वितीयवारं संस्कृत्य प्रकाश्यते । अत्र पदे पदे स्खलितिः कस्य वा नोपहासास्पदं स्यादतोऽत्र तद्विषये क्षमाप्रार्थनमपि द्वितीयभागः स्यादिति ।

'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।'

इति पद्यार्थं स्मारयन्तस्तृतीये संस्करणे सर्वथा सज्जीभूय प्रयतिष्यामोऽत्रेति विरमामः ।

संघीरथ्या<br>जयपुरम् ता. १४–८–४३

सहृदयहृदयानामनुचरः<br>**केदारनाथः ।**

१ काव्यमालायां संपादितपूर्वस्य रसगङ्गाधरस्य नूतनं संस्करणं १९३९ खिस्ताब्देऽस्मत्सहृदयैः भट्टमथुरानाथसाहित्याचार्यैः स्वीयया सरलया सह संपादितं समक्षमेव । भूमिका चास्य जयपुरराजकीयपाठशालाध्यक्षैर्महामहोपाध्यायैः पण्डितश्रीगिरिधरशर्मव्याकरणाचार्यैः संलिखिता । भूमिकायां यत्र तत्र दिवसस्य रात्रिः संजातेत्यादिसमुल्लेखोऽरुंतुदमर्मस्पृक्शब्दैः कृतोऽस्मानुद्वेजनपूर्वं तत्समाहित्यै प्रेरयति । रसगङ्गाधरकर्तुः 'कस्तूरिकाजननशक्तिभृता मृगेणे'त्यादिपद्यान्यखर्वगर्वपर्वताधिरूढतां प्रकाशयन्ति । संशोधकवर्गेऽपि सोऽयं रोगः समाक्रान्त इति नैतच्चित्रम् । काव्यप्रकाशकर्तुः स्वोपज्ञं संकलिता संकेताभिधा काव्यप्रकाशटीकाचिरादेव प्रकाश्येत तदानीमेव दिवसं रात्रिं मन्वानाः समाहिताः स्युः ॥

॥ श्रीः ॥

# नाट्यशास्त्रस्य विषयानुक्रमणिका ।

पृष्ठसंख्या



१. गायकवाड–ओरिएन्टलसीरीजमुद्रितपुस्तके सोऽयमध्यायोऽङ्गाभिनयनामा, उपाङ्गाभिनयनाम्ना च नवमः। २. काशीमुद्रितपुस्तके हस्ताभिनयो नाम नवमः, शरीराभिनयो नाम च दशमः। ३. काशीमुद्रितपुस्तके चारीविधाननाम्नाऽध्याय एकादशः। एवमेकान्तरेणाग्रेऽध्यायः। ४. गायक. ओरि. सीरीजमुद्रितपुस्तके कक्ष्याविभागविधानं नाम त्रयोदशोऽध्यायः, अयमेव काशीमुद्रितपुस्तके तु प्रवृत्तिधर्मव्यञ्जनं नाम चतुर्दशोऽध्यायः। ५. गा. ओ. सी. पुस्तके वागभिनये वृत्तलक्षणं नाम पञ्चदशोऽध्यायः, का. मु. पुस्तके वाचिकाभिनये छन्दोविभागः पञ्चदशः। ६. लक्षणालंकाराः इति गा. ओ. सी. मुद्रितपुस्तके, काशीमुद्रिते च वृत्तानि सोदाहरणानि षोडशोऽध्याये। ७. गा. ओ. सी. पुस्तके भाषालक्षणं तन्नियमश्च काकुस्वरूपः सप्तदशे। काशीमुद्रितपुस्तके च सप्तदशो वागभिनयः, अष्टादशो भाषाविधानं काकुस्वरव्यञ्जनं चैकोनविंशः। ८. काशीमुद्रितपुस्तके सोऽयं विंशोऽध्यायः।

---

१. काशीमुद्रिते पुस्तके सोऽयमेकविंशः । २. का. मु. पुस्तके द्वाविंशोऽयमध्यायः । ३. का. मु. पुस्तके त्रयोविंशः । ४. का. मु. पुस्तके चतुर्विंशः । ५. का. मु. पुस्तके बाह्योपचारनामाध्यायोऽयं पञ्चविंशः । ६. का. मु. पुस्तके चित्राभिनयनामायं षड्विंशः । ७. का. मु. पुस्तके सिद्धिव्यञ्जननाम्ना सप्तविंशः । ८. आतोद्यविधिनामाष्टाविंशोऽध्यायः का. मु. पुस्तके । ९. वाद्याध्यायनाम्ना त्रयस्त्रिंशोऽध्यायः का. मु. पुस्तके । १०. काशीमुद्रितपुस्तके प्रकृतिविचारनाम्ना चतुस्त्रिंशः । ११. भूमिकापात्रविकल्पः पञ्चत्रिंशः का. मु. पुस्तके । १२. नाट्यावतारः षट्त्रिंशोऽध्यायः का. मु. पुस्तके ।

# काव्यमाला।

श्रीभरतमुनिप्रणीतं

# नाट्यशास्त्रम्।

प्रथमोऽध्यायः।

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ।<br>
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम्॥ १॥<br>
समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम्।<br>
अनध्याये कदाचित्तु[1] भरतं नाट्यकोविदम्॥ २॥<br>
मुनयः पर्युपास्यैनमात्रेयप्रमुखाः पुरा।<br>
पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः॥ ३॥<br>
योऽयं भगवता सम्यग्ग्रथितो[2] वेदसंमितः।<br>
नाट्यवेदः कथं ब्रह्मन्नुत्पन्नः[3] कस्य वा कृते॥ ४॥<br>
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चास्य कीदृशः।<br>
सर्वमेतद्यथातत्त्वं भगवन्वक्तुमर्हसि॥ ५॥<br>
तेषां तद्वचनं श्रुत्वा मुनीनां भरतो मुनिः।<br>
प्रत्युवाच ततो वाक्यं नाट्यवेदकथां प्रति॥ ६॥<br>
भवद्भिः शुचिभिर्भूत्वा तथावहितमानसैः।<br>
श्रूयतां नाट्यवेदस्य संभवो[4] ब्रह्मनिर्मितः॥ ७॥<br>
पूर्वं कृतयुगे विप्रा वृत्ते स्वायंभुवेऽन्तरे।<br>
त्रेतायुगे संप्रवृत्ते[5] मनोर्वैवस्वतस्य च॥ ८॥

१. 'कदाचित्तं' क-ख-का. २. 'सम्यक्कथितो' क-ख. ३. 'चायमुत्पन्नः' क-ख. ४. 'संक्षेपो' क-ख. ५. 'ऽथ संप्राप्ते' ब-का.

ग्राम्यधर्मे[1] प्रवृत्ते तु कामलोभवशंगते ।
ईर्ष्याक्रोधादिसंमूढे लोके सुखितदुःखिते ॥ ९ ॥
देवदानवगन्धर्वै[2] रक्षोयक्षमहोरगैः ।
जम्बूद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते ॥ १० ॥
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥ ११ ॥
न[3] वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु ।
तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥ १२ ॥
एवमस्त्विति[4] तानुक्त्वा देवराजं विसृज्य च ।
सस्मार चतुरो वेदान्योगमास्थाय तत्त्ववित् ॥ १३ ॥
धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम् ।
भविष्यतश्च लोकस्य[5] सर्वकर्मानुदर्शकम् ॥ १४ ॥
सर्वशास्त्रार्थसंपन्नं सर्वशिल्प[6]प्रवर्तकम् ।
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् ॥ १५ ॥
संकल्प्य[7] भगवानेवं सर्वान्वेदाननुस्मरन्[8] ।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥ १६ ॥
जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान्रसानाथर्वणादपि ॥ १७ ॥
वेदोपवेदैः संबद्धो नाट्यवेदो महात्मना ।
[ एवं[9] भगवता सृष्टो ब्रह्मणा सर्ववेदिना ॥ १८ ॥
उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम् ।
इतिहासो मया सृष्टः[11] स सुरेषु नियुज्यताम् ॥ १९ ॥

---

१. 'धर्मप्रवृत्ते' ब-का. २. 'गन्धर्वयक्षरक्षो' ब-का. ३. 'नव्यवेदविहारोऽयं' क-ख. ४. 'नेमे वेदा यतः श्राव्याः स्त्रीशूद्राद्यासु जातिषु । वेदमन्यस्ततः स्रक्ष्ये सर्वश्राव्यं तु पञ्चमम् ॥' इति श्लोकोऽधिकः प्रक्षिप्तत्वेन बडोदापुस्तके. ५. 'लोकेऽस्य' क-ख. ६. 'शिष्यप्रवर्तकम्' क-ख.; 'सर्वशिल्पप्रदर्शकम्' का. ७. 'एवं संकल्प्य भगवान्' ब-का. ८. 'सर्ववेदाननुस्मरन्' का. ९. इतः प्रभृति 'स्वातिनारदसंयुक्तो' इति पर्यन्तं श्लोकाः क-ख-पुस्तकयोर्न सन्ति. १०. 'ललितात्मकम्' का. ११. 'दृष्टः' का.

कुशला ये विदग्धाश्च प्रगल्भाश्च जितश्रमाः ।
तेष्वयं नाट्यसंज्ञो हि वेदः संक्राम्यतां त्वया ॥ २० ॥
तच्छ्रुत्वा भगवान् शक्रो ब्रह्मणा यदुदाहृतम् ।
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम् ॥ २१ ॥
ग्रहणे धारणे ज्ञाने प्रयोगे चास्य सत्तम ।
अशक्ता भगवन् देवा अयोग्या नाट्यकर्मणि ॥ २२ ॥
य इमे वेदगुह्यज्ञा ऋषयः[1] संशितव्रताः ।
एतेऽस्य ग्रहणे शक्ताः प्रयोगे धारणे तथा ॥ २३ ॥
श्रुत्वा तु शक्रवचनं मामाहाम्बुजसंभवः ।
त्वं पुत्रशतसंयुक्तः प्रयोक्तास्य भवानघ ॥ २४ ॥
आज्ञापितो विदित्वाहं नाट्यवेदं पितामहात् ।
पुत्रा[2]नध्यापयामास प्रयोगं चा[3]पि तत्त्वतः ॥ २५ ॥
शाण्डिल्यं चैवं[4] वात्स्यं च कोह[5]लं दत्तिलं तथा ।
जटिलाम्ब[6]ष्ठकौ चैव तण्डु[7]मग्निशिखं तथा ॥ २६ ॥
सैन्धवं सपुलोमानं शाड्व[8]लिं विपुलं तथा[9] ।
कपिञ्जलिं बा[10]दिरं च यम[11]धूम्रायणौ तथा ॥ २७ ॥
जम्बुध्वजं काकजङ्घं स्वर्णकं तापसं तथा ।
कै[12]दारिं शालिकर्णं च दीर्घगात्रं च शालिकम् ॥ २८ ॥
कौत्सं ताण्डायनिं चैव पिङ्गलं चित्रकं तथा ।
बन्धुलं भल्लकं चैव मु[13]ष्टिकं सैन्धवायनम् ॥ २९ ॥
तैतिलं भार्गवं चैव शुचिं बहुलमेव च ।
अबुधं बुधसेनं च पाण्डुकर्णं सुकेर[14]लम् ॥ ३० ॥

---

१. 'मुनयः' का. २. 'पुत्रानध्यापयं योग्यान्' क. ३. 'चास्य' का. ४. 'चापि' का. ५. 'केहालं' का. ६. 'जट्ठलाम्बष्ठकौ' का. ७. 'ताण्डुं' का. ८. 'शाड्वलीं' का. ९. 'बन्धलं भक्तकं चैव मुष्टिकं सैन्धवायनम्' इत्यधिकमत्र का-पुस्तके. १०. 'बादरिं च' का. ११. 'बम' का. १२. 'केदारं' का. १३. 'मुष्टीकं' का. १४. 'सकेरलं' का.

ऋजुकं मण्डकं चैव शम्बरं वञ्जुलं तथा ।
मागधं सरलं चैव[1] कर्तारं चोग्रमेव च ॥ ३१ ॥
तुषारं[2] पार्षदं चैव गौतमं बादरायणम्[3] ।
विशालं शबलं चैव सुनाभं[4] मेषमेव च ॥ ३२ ॥
कालियं भ्रमरं चैव तथा पीठमुखं मुनिम् ।
नखकुट्टाश्मकुट्टौ च षट्पदं सोत्तमं तथा ॥ ३३ ॥
पादुकोपानहौ चैव श्रुतिं चाषस्वरं तथा ।
अग्निकुण्डाज्यकुण्डौ च वितण्ड्यं[5] ताण्ड्यमेव च ॥ ३४ ॥
कर्तराक्षं हिरण्याक्षं कुशलं दुःसहं[6] तथा ।
लाजं[7] भयानकं चैव बीभत्सं सविचक्षणम् ॥ ३५ ॥
पुण्ड्राक्षं[8] पुण्ड्रनासं च असितं सितमेव च ।
विद्युज्जिह्वं महाजिह्वं शालङ्कायनमेव च ॥ ३६ ॥
श्यामायनं[9] माठरं च लोहिताङ्गं तथैव च ।
संवर्तकं पञ्चशिखं त्रिशिखं शिखमेव च ॥ ३७ ॥
शङ्खवर्णमुखं षण्डं शङ्कुकर्णमथापि च ।
शक्रनेमिं गभस्तिं चाप्यंशुमालिं शठं तथा ॥ ३८ ॥
विद्युतं शातजङ्घं च रौद्रं[10] वीरमथापि च ।
पितामहाज्ञयास्माभिर्लोकस्य च गुणेप्सया ॥ ३९ ॥
प्रयोजितं पुत्रशतं यथाभूमिविभागशः ।
यो यस्मिन् कर्मणि यथा[11] योग्यस्तस्मिन् स योजितः ॥ ४० ॥
भारतीं सात्त्वतीं चैव वृत्तिमारभटीं तथा ।
समाश्रितः प्रयोगस्तु प्रयुक्तो वै मया[12] द्विजाः ॥ ४१ ॥

---

१. 'चैक......मेवच' का. २. 'तुषादं' का. ३. 'बादरायणिम्' का. ४. 'सुनालीमेषमेव च' का. इतोऽग्रे का-पुस्तके 'कर्तराक्षं हिरण्याक्षं' इत्यादि पञ्चत्रिंशत्तमं पद्यं वर्तते. ५. 'विताड्यं' का. ६. 'दुःषहं' ब. ७. 'जालं' का. ८. 'पुण्डाक्षं पूर्णनासं च' का. ९. 'त्र्यामायनं' का. १०. 'रौद्रवीरं' का. ११. 'तथा' का. १२. 'महाद्विजाः' का.

परिगृह्य प्रणम्याथ ब्रह्मा विज्ञापितो मया ।
अथाह मां सुरगुरुः कैशिकीमपि योजय ॥ ४२ ॥
यच्च तस्याः[1] क्षमं द्रव्यं तद्ब्रूहि द्विजसत्तम ।
एवं तेनास्म्यभिहितः[2] प्रयुक्तश्च[3] मया प्रभुः ॥ ४३ ॥
दीयतां भगवन् द्रव्यं कैशिक्याः संप्रयोजकम् ।
नृत्ताङ्गहारसंपन्ना[4] रसभावक्रियात्मिका ॥ ४४ ॥
दृष्टा मया भगवतो नीलकण्ठस्य नृत्यतः ।
कैशिकी श्लक्ष्णनै(ने)पथ्या शृङ्गाररससंभवा ॥ ४५ ॥
अशक्या पुरुषैः साधु[5] प्रयोक्तुं स्त्रीजनादृते ।
ततोऽसृजन्महातेजा मनसाप्सरसो विभुः ॥ ४६ ॥
नाट्यालंकारचतुराः प्रादान्मह्यं प्रयोगतः ।
मञ्जुकेशीं सुकेशीं च मिश्रकेशीं सुलोचनाम् ॥ ४७ ॥
सौदामिनीं देवदत्तां देवसेनां मनोरमाम् ।
सुदतीं सुन्दरीं चैव विदग्धां विपुलां[6] तथा ॥ ४८ ॥
सुमालां सन्ततिं चैव सुनन्दां सुमुखीं तथा ।
मागधीमर्जुनीं चैव सरलां केरलां[7] धृतिम् ॥ ४९ ॥
नन्दां[8] सपुष्कलां चैव कलभां चैव मे[9] ददौ ।
स्वातिर्भाण्डैर्नियुक्तस्तु[10] सह शिष्यैः स्वयंभुवा ॥ ५० ॥
नारदाद्याश्च गन्धर्वा गानयोगे[11] नियोजिताः ।
एवं नाट्यमिदं[12] सम्यग्बुद्ध्वा सर्वैः सुतैः सह ॥ ५१ ॥ ]
स्वातिनारदसंयुक्तो[13] वेदवेदाङ्गकारणम् ।
उपस्थितोऽहं लोकेशं प्रयोगार्थं कृताञ्जलिः[14] ॥ ५२ ॥

---

१. 'तस्याक्षमं' का. २. 'तेनाभ्यभिहितः' का. ३. 'प्रत्युक्तश्च' का. ४. 'मृदङ्गहारसंयुक्ता' का. ५. 'सा तु' ब. ६. 'विविधां तथा' का. ७. 'केरलान्धतीं' का. ८. 'नन्दां सुपुष्पमालां च' का. ९. 'निर्ममे' का. १०. 'स्वातिभाण्डो' का. ११. 'नाट्ययोगे' का. १२. 'भावनाट्यमिदं' का. १३. 'शिवनारदसंप्रोक्तो' क.; 'येन नारदसंयुक्तो' ख. १४. 'कृताञ्जलिम्' क.

नाट्यस्य ग्रहणं प्राप्तं ब्रूहि किं करवाण्यहम् ।
एतत्तु वचनं श्रुत्वा प्रत्युवाच पितामहः ॥ ५३ ॥
महानयं प्रयोगस्य[1] समयः[2] समुपस्थितः ।
अयं ध्वजमहः श्रीमान्महेन्द्रस्य प्रवर्तते ॥ ५४ ॥
अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम् ।
ततस्तस्मिन्ध्वजमहे निहता[3]सुरदानवे[4] ॥ ५५ ॥
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे ।
नान्दी[5] कृता मया पूर्वमा[6]शीर्वचनसंयुता ॥ ५६ ॥
अष्टाङ्गपदसंयुक्ता विचित्रा वेद[7]निर्मिता ।
तदन्तेऽनुकृति[8]र्बद्धा यथा दैत्याः सुरैर्जिताः ॥ ५७ ॥
संफेटविद्रवकृता छेद्यभेद्याह[9]वात्मिका ।
ततो ब्रह्मादयो देवाः प्रयोगपरितोषिताः ॥ ५८ ॥
प्र[10]ददुर्हृष्टमनसः सर्वोपकरणानि नः[11] ।
प्रीतस्तु प्रथमं शक्रो द[12]त्तवान् स्वं[13]ध्वजं शुभम् ॥ ५९ ॥
ब्रह्मा कु[14]टिलकं चैव भृङ्गारं वरुणस्तथा ।
सूर्यश्छत्रं शिवः[15] सिद्धिं वायुर्व्यजनमेव च ॥ ६० ॥
विष्णुः सिंहासनं चैव कुबेरो मुकुटं[16] तथा ।
श्राव्य[17]त्वं प्रेक्षणीयस्य ददौ देवी सरस्वती ॥ ६१ ॥
शेषा ये देवगन्धर्वा यक्षराक्षसपन्नगाः ।
तस्मिन्सदस्यतिप्रीतां[18]न् नानाजातिगु[19]णाश्रयान् ॥ ६२ ॥

---

१. 'प्रयोगश्च' क-ख. २. 'समया' क-ख. ३. 'निहत्य' ख. ४. 'दानवैः' क-ख. ५. 'पूर्वं कृता मया नान्दी' ब-का. ६. 'ह्याशी–' ब. ७. 'देवसंमता' का. ८. 'तदन्ते तु कृति' ख. ९. 'रवात्मिका' क-ख. १०. 'प्रददुर्मत्सुतेभ्यस्तु' ब. ११. 'वै' ब. १२. 'दत्तस्तु' क-ख. १३. 'स्वं ध्वजं' ब.; 'ध्वजमुत्तमम्' क-ख. १४. 'कमण्डलुं' का. १५. 'शिवा' क-ख. १६. 'मकुटं' ब. १७. 'श्राव्यत्वं–' इत्यादि पद्यार्धं क-ख-पुस्तकयोर्नास्ति, ब-पुस्तके च प्रक्षिप्तत्वेन वर्तते. १८. 'प्रीता' क-ख. १९. 'गणाश्रया' क-ख.

अंशांशैर्भाषितान्[1] भावान्रसान्रूपं[2] बलं तथा ।
प्रददुर्मत्सुतेभ्यश्च[3] चित्रमाभरणं बहु ॥ ६३ ॥
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने ।
अभवन्क्षुभिताः सर्वे दैत्या ये तत्र संगताः ॥ ६४ ॥
विरूपाक्षपुरोगांश्च[4] विघ्नानुत्सा(त्पा)द्य तेऽब्रुवन्[5] ।
नेत्थमिच्छामहे[6] नाट्यमेतदागम्यतामिति ॥ ६५ ॥
ततस्तैरसुरैः सार्धं विघ्ना मायामुपाश्रिताः[7] ।
वाचश्चेष्टां[8] स्मृतिं चैव स्तम्भयन्ति स्म नृत्यताम् ॥ ६६ ॥
एवं विध्वंसितं[9] दृष्ट्वा सूत्रधारस्य देवराट् ।
तस्मात्प्रयोगवैषम्यमित्युक्त्वा ध्यानमाविशत् ॥ ६७ ॥
अथापश्यत्सदो[10] विघ्नैः समन्तात्परिवारितम् ।
सहेतरैः सूत्रधारं नष्टसंज्ञं जडीकृतम् ॥ ६८ ॥
अथोत्थाय[11] द्रुतं क्रोधाद्दिव्यं जग्राह स ध्वजम् ।
सर्वरत्नोज्ज्वलतनुः[12] किंचिदुद्वृत्तलोचनः ॥ ६९ ॥
रङ्गपीठगतान्विघ्नानसुरांश्चैव देवराट् ।
जर्जरीकृतदेहांस्तानकरोज्जर्जरेण सः ॥ ७० ॥
निहतेषु तु सर्वेषु विघ्नेषु सह दानवैः ।
संप्रहृष्य[13] ततो वाक्यमाहुः सर्वे दिवौकसः ॥ ७१ ॥
अहो प्रहरणं दिव्यमिदमासादितं त्वया ।
जर्जरीकृतसर्वाङ्गा[14] येनैते दानवाः कृताः ॥ ७२ ॥

---

१. 'भाषितान्' ब.; 'भाषितं' क-ख. २. 'रूपबलिं क्रियाम्' का.; 'रूपं क्रियाबलम्' ब. ३. 'दत्तवन्तः प्रहृष्टास्ते मत्सुतेभ्यो दिवौकसः' ब-का. ४. '°गास्तु' का. ५. 'विघ्नानुत्पादयन्ति ते' ब.; विघ्नान् प्रोत्साद्य ( ह्य ? ) तेऽब्रुवन्' का. ६. 'इष्यामहे' क-का. ७. 'विघ्नमाया' क-ख-का. ८. 'वचः' का. ९. 'तथा विध्वंसनं' ब-का. १०. 'तदा' का. ११. 'उत्थाय त्वरितं शक्रः क्रोधाज्जग्राह तं ध्वजम्' का. १२. 'ज्वलन्तं तु' का. १३. 'संप्रदास्य' क-ख. १४. 'जर्जरीकृत–' इत्यादि पद्यार्धं का-पुस्तके नास्त्येव.

[1]यस्माद्वनेन ते विघ्नाः सासुरा जर्जरीकृताः।
तस्माज्जर्जर एवेति[2] नामतोऽयं भविष्यति ॥ ७३ ॥
शेषा ये चैव विघ्नार्थमुपस्थास्यन्ति[3] विघ्नकाः।
दृष्ट्वैव जर्जरं तेऽपि गमिष्यन्त्येवमेव तु ॥ ७४ ॥
एवमेवास्त्विति ततः शक्रः प्रोवाच तान्सुरान्।
रक्षाभूतश्च सर्वेषां भविष्यत्येष जर्जरः ॥ ७५ ॥
प्रयोगे प्रस्तुते ह्येवं स्फीते शक्रमहे पुनः।
त्रासं संजनयन्ति स्म विघ्नाः शेषास्तु नृत्यताम् ॥ ७६ ॥
दृष्ट्वा तेषां व्यवसितं दैत्यानां विघ्नकारकम्।
उपस्थितोऽहं ब्रह्माणं सुतैः सर्वैः समन्वितः ॥ ७७ ॥
निश्चिता भगवन्विघ्ना नाट्यस्यास्य विनाशने।
अतो रक्षाविधिं[10] सम्यगाज्ञापय सुरेश्वर ॥ ७८ ॥
ततस्तु[11] विश्वकर्माणमाह ब्रह्मा प्रयत्नतः।
[12]कुरु लक्षणसंपन्नं नाट्यवेश्म[13] महामते ॥ ७९ ॥
[14]ततोऽचिरेण कालेन विश्वकर्मा शुभं[15] महत्।
[16]सर्वलक्षणसंपन्नं कृत्वा नाट्यगृहं[17] तु सः ॥ ८० ॥
प्रोक्तवान्द्रुहिणं गत्वा सभायां तु कृताञ्जलिः।
सज्जं नाट्यगृहं देव तदवेक्षितुमर्हसि ॥ ८१ ॥
ततः सह महेन्द्रेण सुरैः सर्वैश्च सेतरैः[18]।
[19]अगच्छत्त्वरितो द्रष्टुं द्रुहिणो नाट्यमण्डपम् ॥ ८२ ॥

---

१. 'नाट्यविध्वंसिनः सर्वे येन ते जर्जरीकृताः' का. २. 'इत्येव' का. ३. 'हिंसार्थमुपयास्यन्ति हिंसकाः' ब-का. ४. 'एव' का. ५. 'शक्रसदे पुरे' ख. ६. 'मद्वधबुद्धयः' का. ७. 'मदर्थे विप्रकारजम्' ब-का. ८. 'निःसृता' क-ख. ९. 'अस्य' ब-का. १०. 'विधिः' क. ११. 'ततश्च विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः' ब.; 'ततः स विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः' का. १२ 'गुरु' क-ख. १३. 'चकार सः' का. १४. एतत्पद्यार्धं का-पुस्तके नास्ति. १५. 'महच्छुभम्' ब. १६. 'कृत्वा यथोक्तमेवं तु गृहं पद्मोद्भवाज्ञया' का. १७. 'नाट्यवेश्म चकार सः' ब. १८. 'सत्तमैः' का. १९. 'आगच्छत्' का.; 'आगतः' ब.

दृष्ट्वा नाट्यगृहं ब्रह्मा प्राह सर्वान्सुरांस्ततः[1] ।
अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः ॥ ८३ ॥
रक्षणे मण्डपस्यास्य विनियुक्तस्तु[2] चन्द्रमाः ।
यथा[3]दिग्लोकपालाश्च विदिक्ष्वपि च मारुताः ॥ ८४ ॥
नेपथ्यभूमौ मित्रस्तु निक्षिप्तो वरुणो[4]ऽम्बरः ।
वेदिका[5]रक्षणे वह्निर्भाण्डे सर्वदिवौकसः ॥ ८५ ॥
वर्णाश्चत्वार एवास्य[6] स्तम्भेषु विनियोजिताः ।
आदित्याश्चैव रुद्राश्च न्य[7]स्ताः स्तम्भान्तरेषु च ॥ ८६ ॥
धा[8]रणे(णी)ष्वथ भूतानि शालास्वप्सरसस्तथा ।
सर्ववेश्मसु यक्षिण्यो महीपृष्ठे महोदधिः ॥ ८७ ॥
द्वारशा[9]खानियुक्तौ तु कृतान्तः काल एव च ।
स्थापितौ द्वा[10]रपात्रेषु नागमुख्यौ महा[11]बलौ ॥ ८८ ॥
देहल्यां[12] यमदण्डस्तु शूलं त[13]स्योपरि स्थितम् ।
द्वारपालौ स्थितौ चोभौ नियतिर्मृत्युरेव च ॥ ८९ ॥
पार्श्वे च[14] रङ्गपीठस्य महेन्द्रः स्थितवान्स्वयम् ।
स्थापिता मत्तवारण्यां विद्युद्दैत्यनिषूदि[15]नी ॥ ९० ॥
स्तम्भेषु मत्तवारण्याः स्थापिताः परिर[16]क्षणे ।
भूतय[17]क्षपिशाचाश्च गुह्यकाश्च महाबलाः ॥ ९१ ॥
ज[18]र्जरे तु[19] विनिक्षिप्तं वज्रं दैत्यनिबर्हणम् ।
तत्पर्वसु विनिक्षिप्ताः सुरेन्द्रा ह्यमितौजसः ॥ ९२ ॥

---

१. 'अथ' ब-का. २. 'नियुक्तो रजनीकरः' का. ३. 'लोकपालास्तथा दिक्षु' ब-का. ४. 'वरुणोऽम्बरे' ब. ५. 'वेदिकां पावकः पातु भाण्डं सर्वे दिवौकसः' का. ६. 'अथ' ब-का. ७. 'स्थिताः स्तम्भान्तरेष्वथ' ब-का. ८. 'धारणीषु स्थिता भूताः' ब.; 'धरणीषु स्थिता भूताः' का. ९. 'द्वारशालानियुक्तौ तु' ब.; 'द्वारशालानियुक्तस्तु' का. १०. 'द्वारपात्रे तु' क-ख.; 'द्वारपार्श्वे तु' का. ११. 'महाखलौ' क-ख. १२. 'देहल्याय महेन्द्रस्तु' क-ख. १३. 'चोपरि संस्थितम्' का. १४. 'तु' का. १५. 'निषूदनी' ब. १६. 'परिपालने' ब-का. १७. 'भूतयक्षाः' का. १८. 'यक्षभूतपिशाचाश्च गुह्यकाश्च महाबलाः । वीरभद्रोऽथ भगवान् गुह्यकाश्च तथैव च ॥' इत्यधिकं प्रक्षिप्तलेन ब-पुस्तके. १९. 'चैव विक्षिप्तं' का.

शिरःपार्श्वे[1] ततो ब्रह्मा द्वितीये शंकरस्तथा ।
तृतीये च[2] स्थितो विष्णुश्चतुर्थे स्कन्द एव च ॥ ९३ ॥
पञ्चमे च महानागाः[3] शेषवासुकितक्षकाः ।
एवं विघ्नविनाशाय स्थापिता जर्जरे[4] सुराः ॥ ९४ ॥
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ।
इत्यर्थं[5] रङ्गमध्ये तु क्रियते पुष्पमोक्षणम् ॥ ९५ ॥
पातालवासिनो ये च यक्षगुह्यकपन्नगाः ।
अधस्ताद्रङ्गपीठस्य रक्षणे ते नियोजिताः[6] ॥ ९६ ॥
नायकं रक्षतीन्द्रस्तु नायिकां तु सरस्वती ।
विदूषकमथोङ्कारः शेषास्तु प्रकृतीर्हरः ॥ ९७ ॥
यान्येतानि नियुक्तानि दैवतानीह रक्षणे ।
एतेषामधिदेवास्तु[7] भविष्यन्तीत्युवाच सः ॥ ९८ ॥
एतस्मिन्नन्तरे देवैः सर्वैरुक्तः पितामहः ।
साम्ना तावदिमे विघ्नाः स्थाप्यन्तां वचसा त्वया ॥ ९९ ॥
पूर्वं साम प्रयोक्तव्यं द्वितीयं दानमेव च ।
तयोरुपरि भेदस्तु ततो दण्डः प्रयुज्यते[8] ॥ १०० ॥
देवानां वचनं श्रुत्वा ब्रह्मा विघ्नानुवाच[9] ह ।
कथं[10] भवन्तो नाट्यस्य विनाशार्थमुपस्थिताः ॥ १०१ ॥
ब्रह्मणो वचनं श्रुत्वा विरूपाक्षोऽब्रवीद्वचः[11] ।
दैत्यैर्विघ्नगणैः[12] सार्धं सामपूर्वमिदं वचः[13] ॥ १०२ ॥
योऽयं भगवता सृष्टो नाट्यवेदः सुरेच्छया ।
प्रत्यादेशोऽयमस्माकं सुरार्थं भवता कृतः ॥ १०३ ॥

---

१. 'शिरःपर्वास्थितो' ब.; 'शिरःपर्वस्थितो' का. २. 'भगवान्' का. ३. 'महाभागाः' क-ख. ४. 'जर्जरेश्वराः' क-ख. ५. 'इष्ट्यर्थम्' ब. ६. 'विनियोजिताः' का. ७. 'एतान्येवाधिदैवानि' ब-का. ८. 'प्रशस्यते' क-ख. ९. 'विष्णुमुवाच ह' ख.; 'वचनमब्रवीत्' का. १०. 'कथं भवन्तो नाट्यस्य' इत्यारभ्य, 'त्वत्तः पूर्वविनिर्गताः' इत्यन्तः पाठः काशीमुद्रितपुस्तके नास्ति । 'कस्माद्भवन्तो नाट्यस्य विनाशाय समुत्थिताः' ब. ११. 'इदम्' ब. १२. 'दैत्यैर्विष्णुगणैः' क-ख. १३. 'ततः' क-ख.

[1]तन्नैतदेवं कर्तव्यं त्वया लोकपितामह ।
यथा देवास्तथा दैत्यास्त्वत्तः [2]पूर्वविनिर्गताः ॥ १०४ ॥
[3]विरूपाक्षवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ।
अलं वो मन्युना दैत्या [4]विषादस्त्यज्यतामयम् ॥ १०५ ॥
भवतां [5]देवतानां [6]च शुभाशुभ[7]विकल्पकैः ।
कर्मभावान्वया[8]पेक्षी नाट्यवेदो मया कृतः ॥ १०६ ॥
नैकान्ततोऽत्र भवतां देवानां [9]चापि भावनम् ।
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ॥ १०७ ॥
क्वचि[10]द्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचि[11]च्छमः ।
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः ॥ १०८ ॥
[12]धर्मो धर्मप्रवृत्तानां [13]कामः कामार्थसेविनाम् ।
निग्रहो दुर्विनीतानां [14]मत्तानां दमनक्रिया ॥ १०९ ॥
[15]क्लीबानां धार्ष्ट्यजननमुत्साहः शूरमानिनाम् ।
[16]अबोधानां विबोधश्च [17]वैदग्ध्यं विदुषामपि ॥ ११० ॥
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च ।
[18]अर्थोपजीविनामर्थो [19]धृतिरुद्विग्नचेतसाम् ॥ १११ ॥
नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् ।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥ ११२ ॥
उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ।
हितोपदेशजननं धृतिक्री[20]डासुखादिकृत् ॥ ११३ ॥

---

१. 'तत्रैतदेवं' क-ख. २. 'सर्वे विनिर्गताः' ब. ३. 'विप्रानां वचनं श्रुत्वा' ब. ४. 'विषादं त्यजतानघाः' ब-का. ५. 'दैवतानां' का. ६. 'तु' ब. ७. 'विकल्पकैः' क-ख. ८. '°पेक्षो' का. ९. 'चानुभावनम्' ब.; 'चात्र भावनम्' का. १०. 'क्वचि-द्वन्द्वः' क-ख. ११. 'क्वचिच्छ्रमः' का. १२. 'धर्मा–' क-ख. १३. 'कामात्' क-ख. १४. 'विनीतानां' ब-का. १५. 'क्लीबानामपि यूनां वा उत्साहेश्वरमानिनाम्' क-ख. १६. 'प्रबुधानां' ब-का. १७. 'वैदुष्यं' ब-का. १८. 'सर्वोपजीविनां' क-ख. १९. 'यति' क-ख. २०. 'नाट्यमेतद्भविष्यति' का.

[एतद्रसेषु भावेषु सर्वकर्मक्रियास्वथ ।
सर्वोपदेशजननं नाट्यमेत[1]द्भविष्यति ॥]
दुःखार्तानां [2]श्रमार्तानां शोकार्तानां तपस्विनाम् ।
वि[3]श्रान्तिजननं काले नाट्यमेतन्मया कृतम् ॥ ११४ ॥
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद्भविष्यति ॥ ११५ ॥
न त[4]च्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला ।
[5]न स योगो न तत्कर्म य[6]न्नाट्येऽस्मिन्न दृश्यते ॥ ११६ ॥
[[7]सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च ।
अस्मिन्नाट्ये समेतानि तस्मादेतन्मया कृतम् ॥ ]
तन्नात्र मन्युः कर्तव्यो भवद्भिरमरान्प्रति ।
[सप्तद्वीपानुकरणं नाट्यमेत[8]द्भविष्यति । ]
येनानुकरणं नाट्यमेतत्तद्यन्मया कृतम् ॥ ११७ ॥
दे[9]वानामसुराणां च [10]राज्ञामथ कुटुम्बिनाम् ।
ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् ॥ ११८ ॥
योऽयं स्वभावो लोकस्य सुखदुःख[11]समन्वितः ।
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते ॥ ११९ ॥
वेदविद्येतिहासानामा[12]ख्यानपरिकल्पनम् ।
विनोद[13]करणं लो[14]के नाट्यमेतद्भविष्यति ॥ १२० ॥

१. श्लोकोऽयमधिको ब-का-पुस्तकयोः । 'नाट्यं लोके भविष्यति' ब. २. 'समर्थानां' क-ख. ३. 'विश्रामजननं लोके नाट्यमेतद्भविष्यति' ब-का.; 'नाट्येऽस्मिन् यन्न दृश्यते' ब.; 'जननं' ब. ४. 'न तज्ज्ञानं' ब-का. ५. 'नासौयोगो' क-ख-ब. ६. 'नाट्येऽस्मिन्यन्न दृश्यते' ब-का. ७. अयं श्लोकोऽधिको ब-का-पुस्तकयोः. ८. श्लोकार्धमिदमधिकं ब-का-पुस्तकयोः.'नाट्ये ह्यस्मिन् प्रतिष्ठितम्' का. ९. 'देवानाम्' इत्यादिपद्यद्वयी का-पुस्तकेऽत्र नास्ति । इतः सार्धश्लोकत्रयात्परं 'परिशेषार्थकल्पनम्' इत्यस्याग्रे 'देवतानामृषीणां च राज्ञामथ कुटुम्बिनाम् । कृतानुकरणं लोके नाट्यमेतद्भविष्यति ।' एवं केवलमेकं पद्यं वर्तते । १०. 'राज्ये लोकस्य चैव हि' इति क-ख-पुस्तकयोः. ११. 'समन्वितम्'. क. १२. 'अर्थानां' क-ख-पुस्तकयोः. १३. 'विनोदकरणं लोके नाट्यमेतद्भविष्यति ।

एतस्मिन्नन्तरे देवान्सर्वानाह पितामहः ।
[1]क्रियतामद्य यजनं विधिवन्नाट्यमण्डपे ॥ १२१ ॥
बलिप्रदानैर्होमैश्च मन्त्रौषधिसमन्वितैः ।
[2]भोज्यैर्भक्ष्यैश्च पानैश्च बलिः समुपकल्प्यताम् ॥ १२२ ॥
मर्त्यलोकगताः सर्वे शुभां पूजामवाप्स्यथ ।
अपूजयित्वा रङ्गं तु नैव [3]प्रेक्षां प्रवर्तयेत् ॥ १२३ ॥
अपूजयित्वा रङ्गं तु यः प्रेक्षां कल्पयिष्यति ।
तस्य तन्निष्फलं ज्ञानं तिर्यग्योनिं च यास्यति ॥ १२४ ॥
यज्ञेन [4]संमितं [5]ह्येतद्रङ्गदैवतपूजनम् ।
तस्मात्सर्वप्रयत्नेन कर्तव्यं नाट्ययोक्तृभिः ॥ १२५ ॥
[6]नर्तकोऽर्थपतिर्वापि यः पूजां न करिष्यति ।
न कारयिष्यत्यन्यैर्वा [7]प्राप्स्यत्यपचयं तु सः ॥ १२६ ॥
यथाविधि [8]यथादृष्टं यस्तु पूजां करिष्यति ।
स लप्स्यते शुभानर्थान्स्वर्गलोकं [9]च यास्यति ॥ १२७ ॥
[10]एवमुक्त्वा तु भगवान्द्रुहिणः [11]सर्वदैवतैः ।
रङ्गपूजां कुरुष्वेति मामेवं समचोदयत् ॥ १२८ ॥

इति श्रीभारतीये नाट्यशास्त्रे [12]नाट्योत्पत्तिर्नाम प्रथमोऽध्यायः ।

---

श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम् ॥' इत्यधिकं ब-का-पुस्तकयोः । केवलं का-पुस्तके 'विनोदजननं काले' इति पाठः. १४. 'विनोदजननं लोके' इति ब-पुस्तके.

१. 'कुरु मन्त्रस्य यजनं विधिवन्नाट्यमण्डपे' इति क-ख-पुस्तकयोः; 'क्रियतां नाट्यविधिवद् यजनं नाट्यमण्डपे' इति का-पुस्तके; 'क्रियतामद्य विधिवद् यजनं नाट्यमण्डपे' इति ब-पुस्तके. २. 'जप्यैर्भक्ष्यैश्च पानैश्च' इति ब-पुस्तके; 'जप्यैर्भक्ष्यैश्च भोज्यैश्च' इति का-पुस्तके. ३. 'प्रेक्षा प्रवर्तते' इति का-पुस्तके. ४. 'संमतं' क-ख-पुस्तकयोः. ५. 'रङ्गपूजनम्' इति का-पुस्तके. ६. 'तत्र को' क.; 'तत् को' ख. ७. 'प्राप्नोत्यपचयं' ब.; 'प्राप्स्यत्यपचयं' का. ८. 'यथाशास्त्रं' ब. ९. 'गमिष्यति' का. १०. 'एवं भवत्विति प्राह' का. ११. 'सह दैवतैः' का. १२. 'शास्त्रोत्पत्तिः' इति का.

द्वितीयोऽध्यायः ।

भरतस्य वचः श्रुत्वा प्रत्यूचुर्मुनयस्[1]ततः ।
[2]भगवञ्श्रोतुमिच्छामो यजनं रङ्गसंश्रयम् ॥ १ ॥

अथ वा याः क्रियास्तत्र लक्षणं यच्च पूजनम् ।
भविष्यद्भिर्नरैः कार्यं कथं त[3]न्नाट्यवेश्मनि ॥ २ ॥

इहादिर्नाट्य[4]योगस्य नाट्यमण्डप एव हि ।
तस्मात्तस्यैव तावत्त्वं लक्षणं वक्तुमर्हसि ॥ ३ ॥

तेषां तु वचनं श्रुत्वा मुनीनां भरतोऽब्रवीत् ।
लक्षणं पूजनं चैव श्रूयतां [5]नाट्यवेश्मनः ॥ ४ ॥

[6]देवानां मानसी सृष्टिर्गृहेषूपवनेषु च ।
[7]यथा भावाभिनिर्वर्त्याः सर्वे भावास्तु मानुषाः ॥ ५ ॥

नराणां यत्नतः कार्या लक्षणाभिहिताः क्रियाः ।
श्रूयतां तद्यथा [8]यत्र कर्तव्यो नाट्यमण्डपः ॥ ६ ॥

[9]तस्य वास्तु च पूजा च यथा योज्या प्रयत्नतः ।
इह [10]प्रेक्षागृहं दृष्ट्वा [11]श्रीमता विश्वकर्मणा ॥ ७ ॥

त्रिविधः संनिवेशश्च शास्त्रतः परिकल्पितः ।
विकृष्ट[12]श्चतुरस्रश्च [13]त्र्यस्रश्चैव तु मण्डपः ॥ ८ ॥

तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथावरम् ।
प्रमाणमेषां निर्दिष्टं हस्तदण्डसमाश्रयम् ॥ ९ ॥

शतं चाष्टौ चतुःषष्टिर्[14]हस्ता द्वात्रिंशदेव [15]च ।
अष्टाधिकं शतं ज्येष्ठं चतुःषष्टिस्तु मध्यमम् ॥ १० ॥

---

१. 'तदा' का. २. 'भगवान्' ब. ३. 'वै' का. ४. 'नाट्यवेदस्य' का. ५. 'नाट्यवेश्मनि' क-ख. ६. 'दिव्यानां' ब-का. श्लोकोऽयमग्रेऽपि वर्तते, तत्रैव चोचितः. ७. श्लोकार्धमिदं का-पुस्तके नास्ति, ब-पुस्तकेऽपि प्रक्षिप्तत्वेन वर्तते. ८. 'तत्र' का. ९. 'तस्य दैवतपूजा च यथा योज्या च वस्तुषु' का. १०. 'प्रेक्षागृहाणां तु' का. ११. 'धीमता' ब-का. १२. 'चतुरश्रश्च' का. १३. 'त्र्यश्रश्चैव हि' का. १४. 'द्वात्रिंशच्चेति निश्चितम्' का. १५. 'वा' ब.

कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते[1] ।
देवानां तु भवेज्ज्येष्ठं[2] नृपाणां मध्यमं भवेत् ॥ ११ ॥
शेषाणां प्रकृतीनां तु कनीयः संविधीयते ।
[ प्रेक्षागृहाणां[3] सर्वेषां प्रशस्तं मध्यमं स्मृतम् ॥ १२ ॥
तत्र पाठ्यं च गेयं च सुखश्राव्यतरं भवेत् । ]
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः ॥ १३ ॥
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः ।
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम् ॥ १४ ॥
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः ।
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा ॥ १५ ॥
प्रेक्षागृहाणां सर्वेषां तच्चैव[4] हि निबोधत ।
अणू रजश्च बालश्च लिक्षा यूका यवस्तथा ॥ १६ ॥
अङ्गुलं[5] च तथा हस्तो दण्डश्चैव प्रकीर्तितः ।
अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ बाल उच्यते ॥ १७ ॥
बालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टकं भवेत् ।
यूकास्त्वष्टौ यवो[6] ज्ञेयो यवास्त्वष्टौ तथाङ्गुलम् ॥ १८ ॥
अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते ।
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः ॥ १९ ॥
अनेनैव प्रमाणेन वक्ष्याम्येषां विनिर्णयम् ।
चतुःषष्टिकरान्[7]कुर्याद्दीर्घत्वेन तु मण्डपम् ॥ २० ॥
द्वात्रिंशतं[8] च विस्तारान्मर्त्यानां यो भवेदिह ।
अत ऊर्ध्वं न कर्तव्यः कर्तृभिर्नाट्यमण्डपः ॥ २१ ॥

---

१. 'द्वात्रिंशत्करमिष्यते' का. २. 'भवनं ज्येष्ठं' का. ३. 'प्रेक्षागृहाणां' इत्यादि पद्यं प्रक्षिप्तत्वेन ब-पुस्तके.; का-पुस्तके तु 'प्रेक्षागृहाणां' इत्यारभ्य 'नाट्यवेदप्रयोक्तृभिः' इत्यन्तं पद्यत्रयं नास्ति. ४. 'तच्चैवं' का. ५. 'अङ्गुलं चैव हस्तश्च दण्डश्च परिकीर्तितः' का. ६. 'यवः प्रोक्तः' का. ७. 'चतुःषष्टिं' का. ८. 'द्वात्रिंशेन तु विस्तारं मर्त्यानां योजयेदिह' का.

यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति ।
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चरितस्वरम् ॥ २२ ॥
अ[1]निःसरणधर्मत्वाद्विस्वरत्वं भृशं व्रजेत्[2] ।
य[3]श्चाप्यास्यगतो भा[4]वो नानादृष्टिसमन्वितः ॥ २३ ॥
स[5] वेश्मनः प्रकृष्टत्वाद्व्रजेदव्यक्ततां पराम् ।
प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते ॥ २४ ॥
या[6]वत्पाठ्यं च गेयं च तत्र श्रव्यतरं भवेत् ।
[प्रे[7]क्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः ॥ २५ ॥
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः ।
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं च मध्यम् ॥ २६ ॥
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेश्म प्रयोक्तृभिः ।]
देवानां मानसी सृष्टि[8]र्वनेषूपवनेषु च ॥ २७ ॥
यत्[9]भावाद्विनिष्पन्नाः सर्वे भावा हि[10] मानुषाः ।
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः ॥ २८ ॥
मा[11]नुषस्य तु गेह[12]स्य संप्रवक्ष्यामि लक्षणम् ।
भूमेर्विभागं पूर्वं तु परीक्षेत प्र[13]योजकः ॥ २९ ॥
ततो वा[14]स्तुप्रमाणेन प्रारभेत शु[15]भेच्छया ।
समा स्थिरा तु[16] कठिना कृष्णा गौरी च या भवेत् ॥ ३० ॥
भूमिस्त[17]त्रैव कर्तव्यः कर्तृभिर्नाट्यमण्डपः ।
प्रथमं शोधनं कृत्वा लाङ्गलेन समुत्कृषेत् ॥ ३१ ॥

---

१. 'अनभिव्यक्तवर्णत्वात्' का. २. 'भवेत्' का. ३. 'यस्य लास्यगतो' क-ख.; 'यश्चाप्यस्य गतो' का. ४. 'रागो भावसृष्टिरसाश्रयः' का. ५. 'सर्वेभ्यो विप्रकृष्टत्वात्' क-ख. ६. 'यस्माद्वाद्यं च गेयं च सुखं श्राव्यतरं भवेत्' का. ७. 'श्लोकद्वयं पुस्तकद्वयेऽपि पुनरुक्तमस्ति; का-पुस्तके श्लोकद्वयं नास्त्येव. ८. 'गृहेषु' का. ९. 'यत्र भावाभिनिष्पन्नाः' क-ख. १०. 'तु' का. ११. 'मनुष्यस्य' का. १२. 'गेयस्य' (?) क-ख. १३. 'विचक्षणः' का. १४. 'वास्तुप्रमाणं च' का. १५. 'यदृच्छया' का. १६. 'च' ब-का. १७. 'तत्र तु' का.

अस्थिकीलकपालानि तृणगुल्मांश्च शोधयेत् ।
शोधयित्वा वसुमतीं प्रमाणं निर्दिशेत्ततः ॥ ३२ ॥
[[1]त्रीण्युत्तराणि सौम्यं च विशाखापि च रेवती ।
हस्ततिष्यानुराधाश्च प्रशस्ता नाट्यकर्मणि ॥ ३३ ॥]
पुष्यनक्षत्रयोगेण [2]शुक्लसूत्रं प्रसारयेत् ।
कार्पासं [3]बाल्वजं वापि मौञ्जं वाल्कलमेव च ॥ ३४ ॥
सूत्रं बुधैस्तु कर्तव्यं [4]छेदो यस्य न विद्यते ।
अर्धच्छिन्ने भवेत्सूत्रे स्वामिनो मरणं ध्रुवम् ॥ ३५ ॥
त्रिभागच्छिन्नया रज्ज्वा राष्ट्रकोपो विधीयते ।
छिन्नायां तु चतुर्भागे प्रयोक्तुर्नाश उच्यते ॥ ३६ ॥
[5]हस्तात्प्रभ्रष्टया वापि कश्चित्त्वपचयो भवेत् ।
तस्मान्नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते ॥ ३७ ॥
कार्यं चैव प्रयत्नेन मानं नाट्यगृहस्य तु ।
मुहूर्तेनानुकूलेन [6]तिथ्या सुकरणेन तु ॥ ३८ ॥
[7]ब्राह्मणांस्तर्पयित्वा तु पुण्याहं वाचयेत्ततः ।
[8]शान्तितो यत्नतो धृत्वा ततः सूत्रं प्रसारयेत् ॥ ३९ ॥
[9]चतुःषष्टिकरान्कृत्वा [10]द्विधाभूतान्पुनस्ततः ।
पृष्ठतो यो भवेद्भागो [11]द्विधाभूतस्य तस्य तु ॥ ४० ॥
[12]तस्याप्यर्धार्धभागे तु रङ्गशीर्षं [13]प्रकल्पयेत् ।
[14]पश्चिमेऽथ विभागे च नेपथ्यगृहमादिशेत् ॥ ४१ ॥

---

१. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति; ब-पुस्तके तु प्रक्षिप्तत्वेन वर्तते. २. 'शुक्लं सूत्रं' का. ३. 'बादरं चापि वाल्कलं मौञ्जमेव च' का. ४. 'यस्य च्छेदो' ब-का. ५. 'हस्तप्रभ्रष्टया' का. ६. 'तिथ्या च करणेन च' का. ७. 'क-ख-पुस्तकयोरस्य पद्यस्य 'ब्राह्मणांस्तर्पयित्वा तु तत्र सूत्रं प्रसारयेत्' इत्येवं प्रथमचतुर्थचरणात्मकं श्लोकार्धमेव. ८. 'शान्तितोयं ततो दत्त्वा ततः' ब. ९. 'चतुःषष्टिं' का. १०. 'द्विधा कुर्यात्पुनश्च तान्' का. ११. 'द्विधाभूतो भवेच्च सः' का. १२. 'सममर्धविभागेन' ब.; 'तस्यार्धेन विभागेन' का. १३. 'प्रयोजयेत्' का. १४. 'पश्चिमे च विभागेऽथ' ब.; 'पश्चिमे तु पुनर्भागे' का.

वि[1]कल्प्य भागान्विधिवद्यथावदनुपूर्वशः ।
शुभे नक्षत्रयोगे च[2] मण्डपस्य निवेशनम् ॥ ४२ ॥
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवादिभिः ।
स[3]र्वातोद्यैः प्रणुदितैः स्थापनं कार्यमेव तु[4] ॥ ४३ ॥
उत्सार्याणि त्वनिष्टानि पा[5]षण्ड्याश्रमिणस्तथा ।
कषायवसनाश्चैव विकलाश्चैव ये नराः ॥ ४४ ॥
निशायां च बलिः कार्यो नानाभोजनसंश्र[6]यः ।
गन्धपुष्पफलोपेतो दिशो दश समाश्रितः ॥ ४५ ॥
पूर्वेण शुक्लान्नयुतो नीला[7]न्नो दक्षिणेन च ।
पश्चिमेन बलिः पीतो रक्तश्चैवोत्तरेण तु ॥ ४६ ॥
या[8]दृशं दिशि यस्यां तु दैवतं परिकल्पितम् ।
तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः ॥ ४७ ॥
स्थापने ब्राह्मणेभ्यश्च दातव्यं घृतपायसम् ।
मधुपर्कस्तथा राज्ञे कर्तृभ्यश्च गुडौ[9]दनम् ॥ ४८ ॥
नक्षत्रेण तु कर्तव्यं मूलेन स्थापनं बुधैः ।
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च ॥ ४९ ॥
एवं तु स्थापनं कृत्वा भित्तिकर्म प्रयोजयेत् ।
भित्तिकर्मणि निर्वृत्ते स्तम्भानां स्थापनं ततः ॥ ५० ॥
तिथिनक्षत्रयोगेन शुभेन करणेन च ।
स्तं[10]म्भानां स्थापनं कार्यं रोहिण्या श्रवणेन च ॥ ५१ ॥
आ[11]चार्येण सुयुक्तेन त्रिरात्रोपोषितेन च ।
स्तम्भानां स्थापनं कार्यं प्राप्ते सूर्योदये शुभे ॥ ५२ ॥

---

१. 'विभज्य' ब-का. २. 'तु' का. ३. 'सर्वतूर्यनिनादैश्च' का. ४. 'च' का. ५. 'पाषण्डाश्रमिणः' का. ६. 'संयुतः' ब-का. ७. 'नीलश्चैव तु दक्षिणः' क-ख.; 'नीलः स्याद्दक्षिणेन च' का. ८. 'यस्यां यच्चाधिदैवं तु दिशि संपरिकीर्तितम्' का. ९. 'गुडौदनं' क-ख-का. १०. 'एतत्पद्यार्धं' क-ख-पुस्तकयोर्नास्ति. ११. पद्यस्यास्य स्थाने क-ख-पुस्तकयोः 'आचार्येण सुयुक्तेन कार्यं सूर्योदये शुभे' इत्येवं पद्यार्धं वर्तते.

प्रथमे ब्राह्मणस्तम्भे सर्पिःसर्षपसंस्कृते[1] ।
सर्वशुक्लो विधिः कार्यो दद्यात्पायसमेव च[2] ॥ ५३ ॥
ततश्च क्षत्रियस्तम्भे वस्त्रमाल्यानुलेपनम् ।
सर्वं रक्तं प्रदातव्यं द्विजेभ्यश्च गु[3]डौदनम् ॥ ५४ ॥
वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे ।
स[4]र्वं पीतं प्रदातव्यं द्विजेभ्यश्च घृ[5]तौदनम् ॥ ५५ ॥
शूद्रस्तम्भे विधिः कार्यः सम्यक्पूर्वोत्तराश्रये ।
नील[6]प्रायं प्रय[7]त्नेन कृ[8]शरा च द्विजाशनम् ॥ ५६ ॥
पू[9]र्वोक्तब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने ।
निक्षिपेत्कनकं मूले कर्णाभरणसंश्रयम् ॥ ५७ ॥
ताम्रं चा[10]धः प्रदातव्यं स्तम्भे क्षत्रियसंज्ञके ।
वैश्य[11]स्तम्भस्य मूले तु रजतं संप्रदापयेत् ॥ ५८ ॥
शू[12]द्रस्तम्भस्य मूले तु दद्यादायसमेव च ।
शेषे[13]ष्वपि च निक्षेप्यं स्तम्भमूले तु काञ्चनम् ॥ ५९ ॥
[स्व[14]स्तिपुण्याहघोषेण जयशब्देन चैव हि ।
स्तम्भानां स्थापनं कार्यं पु[15]ष्पमालापुरस्कृतम् ॥ ६० ॥
रत्नदानैः सगोदानैर्वस्त्रदानैरनल्पकैः ।
ब्राह्मणांस्त[16]र्पयित्वा तु स्त[17]म्भमुत्थापयेत्ततः ॥ ६१ ॥
अचलं चाप्यकम्प्यं च तथैवाचलितं पुनः ।
स्तम्भस्योत्थापने सम्यग्दोषा ह्येते प्रकीर्तिताः ॥ ६२ ॥

---

१. 'संस्कृतः' ब. २. 'तु' का. ३. 'गुडोदनम्' क-ख-का. ४. 'पीतं सर्वं' क-ख. ५. 'घृताशनं' क.; 'मृताशनं' ख.; 'घृतोदनं' का. ६. 'नीलप्रायः' क-ख. ७. 'प्रदातव्यं' का. ८. 'कृसरं' ब-का. ९. 'पूर्वं तु' ब-का. १०. 'चापि' का. ११. 'वैश्यस्य स्तम्भमूले' क-ख. १२. 'शूद्रस्य स्तम्भमूले' क-ख. १३. 'शेषेष्वेव तु निक्षिप्तं स्तम्भमूले तथैव च' क-ख.; 'शेषेष्वपि तु निक्षिप्तं स्तम्भमूले तु काञ्चनम्' ब. १४. इतःप्रभृति त्रयोदश श्लोकाः क-ख-पुस्तकयोर्न सन्ति. १५. 'पर्णमाला' का. १६. 'स्थापयित्वा' का. १७. 'स्तम्भान्' ब.

अवृष्टिरुक्ता चलने वलने मृतितो[1] भयम्।
कम्पने परचक्रात्तु भयं भवति[2] दारुणम्॥ ६३॥
दोषैरेतैर्विहीनं तु स्तम्भमुत्थापयेच्छिवम्।
पवित्रं ब्राह्मणस्तम्भे दातव्या दक्षिणा च गौः॥ ६४॥
शेषाणां भोजनं कार्यं स्थापने कर्तृसंश्रयम्।
मन्त्रपूतं[3] च तद्देयं नाट्याचार्येण धीमता॥ ६५॥
पुरोहितं नृपं चैव भोजयेन्मधुपायसैः।
कर्तॄनपि तथा सर्वान् कृसरं[4] लवणोत्तरम्॥ ६६॥
सर्वमेव[5] विधिं कृत्वा सर्वातोद्यैः प्रवादितैः।
अभिमन्त्र्य यथान्यायं स्तम्भमुत्थापयेच्छुचिः॥ ६७॥
यथाचलो गिरिर्मेरुर्[6]हिमवांश्च महाबलः।
जयावहो नरेन्द्रस्य तथा त्वमचलो भव[7]॥ ६८॥
स्तम्भद्वारं च भित्तिं च नेपथ्यगृहमेव च।
एवमुत्थापयेत्तज्ज्ञो विधिदृष्टेन कर्मणा॥ ६९॥
रङ्गपीठस्य पार्श्वे[8] तु कर्तव्या मत्तवारणी।
चतुःस्तम्भसमायुक्ता रङ्गपीठप्रमाणतः॥ ७०॥
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी।
उत्सेधेन तयोस्तुल्यं कर्तव्यं रङ्गमण्डपम्॥ ७१॥
[तस्यां माल्यं च धूपं[9] च गन्धं वस्त्रं तथैव च।]
नानावर्णानि[10] देयानि तथा भूतप्रियो बलिः[11]॥ ७२॥
आयसं तत्र[12] दातव्यं स्तम्भानां कुशलैरधः।
भोजने[13] कृसरा चैव दातव्या ब्राह्मणाशनम्॥ ७३॥

१. 'मृत्युतो' का. २. 'वदति' का. ३. 'मन्त्रपूर्वं' का. ४. 'कृसरां लवणोत्तराम्' का. ५. 'सर्वमेवं' का. ६. 'गुरुः' का. ७. 'वह' का. ८. 'पश्चात्तु' का. ९. 'वस्त्रं च गन्धमाल्यं तथैव च' का. १०. 'मनोवर्णानि' क-ख. ११. 'बलिम्' क-ख. १२. 'आयसं ताम्र (तत्र?)' क-ख.; 'पायसं चात्र' का. १३. 'भोजनं कृसरां' ब.; 'भोजने कृसरं' का.; 'भोजने कृशरा' क-ख.

एवं विधिपुरस्कारैः कर्तव्या [1]मत्तवारणी ।
रङ्गपीठं ततः कार्यं विधिदृष्टेन कर्मणा ॥ ७४ ॥
रङ्गशीर्षं तु कर्तव्यं षड्दारुकसमन्वितम् ।
कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य [2]तु ॥ ७५ ॥
[3]पूरणे मृत्तिका चात्र कृष्णा देया प्रयत्नतः ।
लाङ्गलेन समुत्कृष्य निर्लोष्टतृण[4]शर्करम् ॥ ७६ ॥
लाङ्गले [5]शुद्धवर्णौ तु धुर्यौ योज्यौ प्रयत्नतः ।
कर्तारः पुरुषा[6]श्चात्र येऽङ्गदोषविवर्जिताः ॥ ७७ ॥
अहीनाङ्गैश्च वोढव्या मृत्तिका [7]पीवरैर्नरैः ।
[8]एवंविधं प्रकर्तव्यं रङ्गशीर्षं प्रयत्नतः ॥ ७८ ॥
कूर्मपृष्ठं न कर्तव्यं मत्स्यपृष्ठं तथैव च ।
शुद्धादर्श[9]तलाकारं [10]रङ्गशीर्षं प्रशस्यते ॥ ७९ ॥
रत्नानि चात्र देयानि [11]पूर्वे [12]वज्रं विचक्षणैः ।
[13]वैडूर्यं दक्षिणे [14]पार्श्वे स्फटिकं पश्चिमे तथा ॥ ८० ॥
प्रवालमुत्तरे चैव मध्ये तु कनकं भवेत् ।
एवं रङ्गशिरः कृत्वा दारुकर्म [15]प्रयोजयेत् ॥ ८१ ॥
ऊहप्रत्यूहसंयुक्तं नानाशिल्पप्रयोजितम् ।
[16]नानासंजवनोपेतं बहुव्यालोपशोभितम् ॥ ८२ ॥
[17]अट्टालभञ्जिकाभिश्च समन्तात्समलंकृतम् ।
[18]निर्व्यूहकुहरोपेतं नानाग्रथितवेदिकम् ॥ ८३ ॥
नानाविन्याससंयुक्तं यन्त्रजालगवाक्षकम् ।

---

१. 'मत्तवारुणी' क-ख. २. 'च' क-ख. ३. 'पूरेण' का. ४. 'शर्करा' का. 'क(श?)र्कराम्' क-ख. ५. 'शुद्धवर्णे' क-ख. ६. 'स्तत्र' का. ७. 'पिटकैर्नवैः' क-ख.; 'पीठकैर्नवैः' का. ८. 'एवंविधिः' क-ख.; 'एवंविधैश्च' का. ९. 'तलप्रख्यं' क-ख. १०. 'रङ्गपीठं' का. ११. 'पूर्वं' का. १२. 'वज्रविचक्षणैः' क-ख. १३. 'वैडूर्यं' ब. १४. 'चैव' का. १५. 'प्रवर्तयेत्' का. १६. 'नानाभञ्जवरोपेतं' क-ख. १७. 'अट्टालं' क-ख. 'भवेयुश्चात्र विन्यस्ता विविधाः सालभञ्जिकाः' ब. १८. 'निर्यूहकुहु(ह?)रोपेतं' क-ख-का.

सुपीठ[1]धारणीयुक्तं कपोतालिसमाकुलम् ॥ ८४ ॥
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चाप्युपशोभितम् ।
एवं काष्ठविधिं कृत्वा भित्तिकर्म [2]प्रयोजयेत् ॥ ८५ ॥
स्तम्भं वा नागदन्तं वा वातायनमथापि वा ।
[3]कोणं वा सप्रतिद्वारं [4]द्वारविद्धं न कारयेत् ॥ ८६ ॥
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ।
मन्दवातायनोपेतो निर्वातो धी[5]रशब्दवान् ॥ ८७ ॥
[6]तस्मान्निवातः कर्तव्यः कर्तृभिर्नाट्यमण्डपः ।
[7]गम्भीरस्वरता येन कुतपस्य भविष्यति ॥ ८८ ॥
भित्तिकर्मविधिं कृत्वा भित्तिलेपं प्रदापयेत् ।
[8]सुधाकर्म बहिस्तस्य वि[9]धातव्यं प्रयत्नतः ॥ ८९ ॥
भित्तिष्[10]वथ विलिप्तासु परिमृष्टासु सर्वतः ।
समासु जातशोभासु चित्रकर्म [11]प्रयोजयेत् ॥ ९० ॥
चित्रकर्मणि चालेख्याः पुरुषाः स्त्री[12]जनास्तथा ।
लताबन्धाश्च कर्तव्याश्चरितं चात्मभो[13]गजम् ॥ ९१ ॥
एवं विकृष्टं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ।
[14]पुनरेव हि वक्ष्यामि चतुरस्रस्य लक्षणम् ॥ ९२ ॥
[15]समन्ततश्च कर्तव्या हस्ता द्वात्रिंशदेव तु ।
शुभभूमिविभागस्थो नाट्यज्ञैर्नाट्यमण्डपः ॥ ९३ ॥

---

१. 'धरिणी' क-ख-का. पीठानि स्तम्भोपरि तेषु धारिण्यस्तुलाः इत्यभिनवभारती. २. 'प्रवर्तयेत्' का. ३. 'कार्ष्णायसं' क-ख. ४. 'दारुविद्धं' का. ५. 'धीरशब्दभाक्' का. ६. ब-पुस्तके—'मण्डपे विप्रकृष्टे तु पाठ्यमुच्चरितस्वरम् । अनभिव्यक्तवर्णत्वा-द्विस्वरत्वं भृशं व्रजेत् ॥' इति पद्यमत्र प्रक्षिप्तरूपत्वेनाधिकम्. ७. 'गाम्भीर्यं सुस्वरत्वं च कुतपस्य भवेदिति' का. ८. 'सुधाकर्मविधिः' क-ख.; 'सुधाकर्म तथैवास्य' का. ९. 'कुर्याद्बाह्यं प्रयत्नतः' का. १०. 'भित्तिष्वपि च लिप्तासु' का. ११. 'प्रवर्तयेत्' का. १२. 'स्त्रीजनः' क-ख. १३. 'भोगजम्' क-ख. १४. 'अतः परं प्रवक्ष्यामि' का. १५. 'समन्ततस्तु कर्तव्यो' का.

योे विधिः पूर्वमुक्तस्तु लक्षणं [1]मङ्गलानि च ।
[2]विकृष्टे तान्यशेषाणि चतुरस्रेऽपि कारयेत् ॥ ९४ ॥
चतुरस्रं समं कृत्वा सूत्रेण प्रविभज्य च ।
बाह्यतः सर्वतः कार्या भित्तिः [3]श्लिष्टेष्टकादृढा ॥ ९५ ॥
तत्राभ्यन्तरतः [4]कार्या रङ्गपीठोपरि स्थिता ।
दश प्रयोक्तृभिः स्तम्भाः [5]शस्ता मण्डपधारणे ॥ ९६ ॥
स्तम्भानां [6]बाह्यतश्चापि सोपानाकृति पीठकम् ।
इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम् ॥ ९७ ॥
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः ।
[7]रङ्गपीठावलोक्यं तु कुर्या[8]दासनजं विधिम् ॥ ९८ ॥
[9]षडन्यानन्तरे चैव पुनः स्तम्भान्यथादिशम् ।
विधिना [10]धारयेत्तज्ज्ञो दृढान्[11]मण्डपधारणे ॥ ९९ ॥
अष्टौ स्तम्भान्पुनश्चैव तेषामुपरि [12]कल्पयेत् ।
[13]विद्धास्यमष्टहस्तं च पीठं तेषु ततो न्यसेत् ॥ १०० ॥
तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे ।
[14]धारणीधारणास्ते च शालस्त्रीभिरलंकृताः ॥ १०१ ॥
नेपथ्यगृहकं चैव ततः कार्यं [15]प्रयत्नतः ।
द्वारं चैकं [16]भवेत्त[17]त्र रङ्गपीठप्रवेशनम् ॥ १०२ ॥
जनप्रवेशनं चा[18]न्यदाभिमुख्येन कारयेत् ।
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु ॥ १०३ ॥

---

१. 'मङ्गलानि च' का. २. 'चतुरस्रस्य तान्येव कारयेन्नाट्यवेश्मनः' का. ३. 'श्लिष्टेष्टकादयः' क-ख. ४. कार्यं(र्या?) रङ्गपीठं परिस्थिताः' क-ख.; 'कार्या रङ्गपीठे यथादिशम्' का. ५. 'शस्ता मण्डपलक्षणे' क-ख.; 'शक्ता मण्डपधारणे' का. ६. 'बाह्यतः स्थाप्यं' का. ७. 'रङ्गपीठविलोक्यं च' का. ८. 'आसनिकं' का. ९. 'षडन्यान् सुन्दरान् दद्यात्' का. १०. 'स्थापयेत्तज्ज्ञो' ब.; 'स्थापयेत्प्राज्ञो' का. ११. 'मण्डपधारणा[न्?]' क. १२. 'कारयेत्' का. १३. 'संस्थाप्यं च पुनः पीठमष्टहस्तप्रमाणतः' का. १४. 'धारणीधारितास्ते च' का. १५. 'प्रयोक्तृभिः' का. १६. 'भवेत्तस्य' का. १७. 'रङ्गपीठं प्रयत्नतः' क-ख.; 'रङ्गपीठं प्रमाणतः' का. १८. 'चैवमाभिमुख्येन'

अष्टहस्तं तु कर्तव्यं रङ्गपीठं प्रमाणतः ।
[1]चतुरस्रं समतलं वेदिकासमलंकृतम् ॥ १०४ ॥
पूर्वप्रमाणनिर्दिष्टा कर्तव्या मत्तवारणी ।
चतुःस्तम्भसमायुक्ता वेदिकायास्तु पार्श्वतः ॥ १०५ ॥
समुन्नतं समं चैव [2]रङ्गशीर्षं तु कारयेत् ।
[3]विकृष्टेस्तून्नतं कार्यं [4]चतुरस्रं समं तथा ॥ १०६ ॥
एवमेतेन विधिना चतुरस्रं गृहं भवेत् ।
[5]अतःपरं प्रवक्ष्यामि त्र्यस्रगेहस्य लक्षणम् ॥ १०७ ॥
त्र्यस्रं त्रिकोणं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ।
मध्ये त्रिकोणमेवास्य रङ्गपीठं तु कारयेत् ॥ १०८ ॥
द्वारं तेनैव कोणेन [6]कर्तव्यं तस्य वेश्मनः ।
द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्ठतः ॥ १०९ ॥
[7]विधिर्यश्चतुरस्रस्य भित्तिस्तम्भसमाश्रयः ।
स तु सर्वः प्रयोक्तव्यस्त्र्यस्रस्यापि प्रयोक्तृभिः ॥ ११० ॥
एवमेतेन विधिना [8]कार्या नाट्यगृहा बुधैः ।
[9]पुनरेषां प्रवक्ष्यामि पूजामेवं यथाविधि ॥ १११ ॥

इति श्रीभारतीये नाट्यशास्त्रे [10]मण्डपविधानं [11]नाम द्वितीयोऽध्यायः ।

---

तृतीयोऽध्यायः ।

सर्वलक्षणसंपन्ने कृते नाट्यगृहे शुभे ।
गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः ॥ १ ॥
ततोऽधिवासयेद्वेश्म रङ्गपीठं तथैव च ।
मन्त्रपूतेन तोयेन प्रोक्षिताङ्गो निशागमे ॥ २ ॥

---

१. 'चतुरस्रे' क-ख-ब. २. 'रङ्गपीठं' का. ३. 'विकृष्टेरुन्नतं' क-ख.; 'विकृष्टेऽप्युन्नतं' का. ४. 'चतुरस्रे' ब. ५. 'त्र्यस्रस्य मण्डपस्यापि संप्रवक्ष्यामि लक्षणम्' का. ६. 'कर्तव्यं तु प्रवेशने' का. ७. एतत् पद्यार्धं का-पुस्तके नास्त्येव. 'विधेयश्च पुरस्तस्य' क-ख. ८. कार्यं नाट्यगृहं' का. ९. 'अत ऊर्ध्वं प्रवक्ष्यामि पूजामेषां यथाविधि' का. १०. 'प्रेक्षागृहलक्षणं' का. ११. 'नाम' इति नास्ति क-ख-पुस्तकयोः.

यथास्थानान्तरगतो दीक्षितः प्रयतः शुचिः ।
त्रिरात्रोपोषितो भूत्वा नायको[1]ऽहतवस्त्रधृक् ॥ ३ ॥
नमस्कृत्य महादेवं सर्वलोको[2]द्भवोद्भवम् ।
जगत्पितामहं[3] चैव विष्णुमिन्द्रं गुहं तथा ॥ ४ ॥
सरस्वतीं च लक्ष्मीं च सिद्धिं मेधां धृतिं मतिम् ।
सोमं[4] सूर्यं च मरुतो लोकपालांस्तथाश्विनौ ॥ ५ ॥
मित्रमग्निं स्वरान्वर्णान्रुद्रान्[5]कालं कलिं तथा ।
मृत्युं च नियतिं चैव कालदण्डं तथैव च ॥ ६ ॥
विष्णुप्रहरणं चैव नागराज च वासुकिम्[6] ।
वज्रं[7] विद्युत्समुद्रांश्च गन्धर्वाप्सरसो मुनीन् ॥ ७ ॥
तथा[8] नाट्यकुमारीश्च महाग्रामण्यमेव च ।
यक्षांश्च गुह्यकांश्चैव भूतसंघांस्तथैव च ॥ ८ ॥
एतांश्चान्यांश्च देवर्षीन्[9]प्रणम्य रचिताञ्जलिः ।
यथास्थानान्तर[10]गतान्समावाह्य ततो वदेत् ॥ ९ ॥
भगवद्भि[11]र्निशायां नः कर्तव्यः संपरिग्रहः[12] ।
साहाय्यं चैव दातव्यमस्मिन्नाट्ये सहानुगैः ॥ १० ॥
संपूज्य सर्वा[13]नेकत्र कुतपं संप्रयुज्य[14] च ।
जर्जराय प्रयुञ्जीत पूजां नाट्यप्रसिद्धये ॥ ११ ॥

---

१. 'नाट्याचार्योऽहताम्बरः' का. २. 'सर्वलोकेश्वरं भवम्' का. ३. 'पद्मयोनिं सुरगुरुम्' का. ४. 'सेन्दुं' का. ५. 'सुरावर्णान् रुद्रान्' ब.; 'स्वरान् रुद्रान् वर्णान्'. ६. 'खगेश्वरम्' का. ७. 'वज्रविद्युत्समुद्रांश्च' का.; 'वज्रविद्युत्समुद्राश्च' क-ख. ८. 'भूतान् पिशाचान् यक्षांश्च गुह्यकांश्च महोरगान् । असुरान् नाट्यविघ्नांश्च तथान्यान् देवराक्षसान् ॥' इति श्लोको ब-पुस्तके प्रक्षिप्तरूपेण, का-पुस्तके च 'दैत्यराक्षसान्' इति पाठभेदसमेतो मूलग्रन्थेऽधिकः. ९. 'राजर्षीन् प्रणिपत्य कृताञ्जलिः' इति का. १०. 'यथास्थानस्थितान् देवान् निमन्त्र्यैतद्वचोऽब्रवदत्' का. ११. 'भवद्भिर्नो निशायां तु' का. १२. 'स परिग्रहः' क-ख. १३. 'देवताः सर्वाः' का. १४. 'संप्रपूज्य' क-ख.

[1]त्वं महेन्द्रप्रहरण [2]सर्वदानवसूदन ।
[3]निर्मितस्त्वं सर्वदेवैः [4]सर्वविघ्ननिबर्हण ॥ १२ ॥
नृपस्य विजयं [5]शंस रिपूणां च पराजयम् ।
गोब्राह्मण[6]शिवं चैव नाट्यस्य च विवर्धनम् ॥ १३ ॥
एवं कृत्वा यथान्याय[7]मुपास्य नाट्यमण्डपे ।
निशायां [8]तु प्रभातायां पूजनं प्रक्रमेद्[9]इह ॥ १४ ॥
आर्द्रायां वा मघायां वा याम्ये [10]पूर्वासु च त्रिषु ।
आश्लेषामूलयोर्वापि कर्तव्यं रङ्गपूजनम् ॥ १५ ॥
आचार्येण तु [11]युक्तेन शुचिना दीक्षितेन च ।
[12]रङ्गस्योद्यापनं कार्यं [13]देवतानां च पूजनम् ॥ १६ ॥
दिनान्ते दारुणे घोरे मुहूर्ते भूतदैवते ।
आचम्य [14]तु यथान्यायं [15]देवता वै निवेशयेत् ॥ १७ ॥
रक्ताः प्रतिसराः [16]सूत्रं रक्तगन्धाश्च पूजिताः ।
रक्ताः सुमनसश्चैव यच्च [17]रक्तं फलं भवेत् ॥ १८ ॥
यवैः सिद्धार्थकैर्लाजैरक्षतैः [18]शालितण्डुलैः ।
नागपुष्पस्य [19]मूलेन [20]वितुषाभिः प्रियङ्गुभिः ॥ १९ ॥
एतैर्द्रव्यैर्युतं कार्यं [21]देवतानां निवेशनम् ।
आलिखेन्[22]मण्डलं पूर्वं यथास्थानं यथाविधि ॥ २० ॥

---

१. 'महेन्द्रस्य प्रहरणं' क-ख.; 'त्वं महेन्द्रप्रहरणं' का. २. 'त्वं दानवनिषूदन' क-ख; 'सर्वदानवसूदनम्' का. ३. 'नमितस्तु सर्वदेवैः' क-ख.; 'निर्मितं सर्वदेवैश्च' क-ख. ४. 'सर्वविघ्ननिवारणम्' का. ५. 'देहि' का. ६. 'हितं' का. ७. 'निदध्यात्' क-ख.; 'उषित्वा' का. ८. 'च' का. ९. 'बुधः' का. १०. 'पूर्वेषु च त्रिषु' ब-का. ११. 'सुयुक्तेन' का. १२. 'रङ्गस्योद्यो (द्यो?) तनं' ब. १३. 'दैवतानां' का. १४. 'च' का. १५. 'देवतायै निवेशयेत्' क-ख.; 'दैवतानि निवेशयेत्' का. १६. 'तत्र' का. १७. 'रक्तफलं' क-ख. १८. 'लक्षितैर्लाजतण्डुलैः' का. १९. 'चूर्णेन' का. २०. 'चै (च?) तुषाभिः' क-ख. २१. 'दैवतानां' का. २२. 'मण्डपं चैव' क-ख.

समन्ततश्च[1] कर्तव्यं[2] हस्ताः षोडश मण्डलम्[3] ।
द्वाराणि चात्र कुर्वीत विधानेन[4] चतुर्दिशम् ॥ २१ ॥

मध्ये चैवात्र कर्तव्ये द्वे[5] रेखे तिर्यगूर्ध्वगे ।
तयोः कक्ष्याविभागेन[6] दैवतानि निवेशयेत् ॥ २२ ॥

पद्मोपविष्टं ब्रह्माणं तस्य मध्ये निवेशयेत् ।
आदौ निवेश्यो भगवान्सार्धं भूतगणैर्भवैः[7] ॥ २३ ॥

नारायणो महेन्द्रश्च स्कन्दः[8] सूर्योऽश्विनौ शशी ।
सरस्वती च लक्ष्मीश्च श्रद्धा मेधा च पूर्वतः ॥ २४ ॥

पूर्वदक्षिणतो वह्निर्निवेश्यः स्वाहया सह ।
विश्वेदेवाः[9] सगन्धर्वा रुद्राः[10] सर्वगणास्तथा[11] ॥ २५ ॥

दक्षिणेन निवेश्यास्तु[12] यमो मित्रश्च[13] सानुगः ।
पितॄन्पिशाचानुरगान्गुह्यकांश्च निवेशयेत् ॥ २६ ॥

नैर्ऋत्यां राक्षसांश्चैव[14] भूतानि च निवेशयेत् ।
पश्चिमायां समुद्रांश्च वरुणं[15] यादसां पतिम् ॥ २७ ॥

वायव्यां[16] वै दिशि तथा सप्तवायून्[17]निवेशयेत् ।
तत्रैव[18] विनिवेश्यस्तु गरुडः पक्षिभिः सह ॥ २८ ॥

उत्तरस्यां[19] दिशि तथा धनदं संनिवेशयेत् ।
नाट्यस्य मातॄश्च तथा यक्षानथ संगुह्यकान्[20] ॥ २९ ॥

तथैवोत्तरपूर्वायां[21] नन्द्याद्यांश्च[22] गणेश्वरान् ।
ब्रह्मर्षिभूतसङ्घांश्च यथाभागं[23] निवेशयेत् ॥ ३० ॥

---

१. 'तु' का. २. 'कर्तव्या' का. ३. 'मण्डलैः' ४. 'विधिना च' का. ५. 'द्वे रेखे' का. ६. 'उक्तविभागेन' क-ख.; 'कक्ष्यानियोगेन' का. ७. 'नवैः' क-ख.; 'शिवः' का. ८. 'स्कन्दार्कौ' का. ९. 'विश्वेदेवाश्च' का. १०. 'रुद्राश्च ऋषयस्तथा' का. ११. 'सर्पगणाः' का. १२. 'निवेश्यस्तु' ख-का. १३. 'तु' का. १४. 'नैर्ऋतांश्चैव सर्वभूतान्' का. १५. 'वरुणं च निवेशयेत्' का. १६. 'वायव्यायां' क-ख-का. १७. 'सप्तवायुं' का. १८. 'निवेशयेच्च तत्रैव' का. १९. 'उत्तरस्यां कुबेरं च सर्वैरनुचरैः सह' का. २०. 'सहानुगान्' क-ख.; 'च गुह्यकान्' का. २१. 'श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति.' २२. 'नन्दिनं च गणेश्वरान्' का. २३. 'यथाभागं निवेशयेत्' इति पाठस्त्रुटितः का-पुस्तके.

स्तम्भे सनत्कुमारं तु दक्षिणे दक्षमेव च ।
[1]श्रामण्यमुत्तरे स्तम्भे पूजार्थं [2]संनिवेशयेत् ॥ ३१ ॥
अनेनैव विधानेन यथास्थानं यथाविधि ।
[3]सुप्रसादानि सर्वाणि दैवतानि निवेशयेत् ॥ ३२ ॥
स्थाने स्थाने यथान्यायं विनिवेश्य तु देवताः ।
[4]तासां प्रकुर्वीत ततः पूजनं तु यथार्हतः ॥ ३३ ॥
[5]देवताभ्यस्तु दातव्यं [6]सितमाल्यानुलेपनम् ।
[7]गन्धर्ववह्निसूर्येभ्यो रक्तमाल्यानुलेपनम् ॥ ३४ ॥
[8]गन्धान्माल्यांश्च धूपं च यथावदनुपूर्वशः ।
दत्त्वा ततः प्रकुर्वीत [9]बलिं पूजां यथाविधि ॥ ३५ ॥
[10]ब्रह्माणं मधुपर्केण पायसेन सरस्वतीम् ।
शिवविष्णुमहेन्द्राद्याः संपूज्या मोदकैरथ ॥ ३६ ॥
[11]घृतौदनेन हुतभुक् सोमार्कौ तु [12]गुडौदनैः ।
विश्वेदेवा[13]ः सगन्धर्वा [14]मुनयो मधुपायसैः ॥ ३७ ॥
यममित्रौ [15]च [16]संपूज्यावपूपैर्मोदकैस्तथा ।
पितॄन्पिशाचानुरगान्सर्पिःक्षीरेण तर्पयेत् ॥ ३८ ॥
[ [17]पक्वान्नेन[18] तु मांसेन सुरासीधु[19]फलासवैः ।
अर्चयेद्भूतसङ्घांश्च चणकैः पललाप्लुतैः ॥ ३९ ॥
अनेनैव विधानेन संपूज्या मत्तवारणी ।
[20]पक्वान्नेन तु मात्स्येन संपूज्या रक्षसां गणाः ॥ ४० ॥

---

१. 'श्रामण्यं चोत्तरे' का. २. 'विनिवेशयेत्' का. ३. 'सप्रसादानि' क-ख.; का-पुस्तके तु 'वर्णरूपान्विताः सर्वा देवताः संनिवेशयेत्' ४. 'प्रकुर्वीत ततस्तासां' का. ५. 'दैवतेभ्यस्तु' का. ६. 'सितं' का. ७. 'वह्निगन्धर्वसूर्येभ्यो' का. ८. 'गन्धमाल्यांश्च' ब.; 'गन्धं माल्यं च' का. ९. 'पूजनं च यथार्हतः' क-ख. 'बलिं पूजां' का. १०. 'द्रुहिणं' का. ११. 'घृतोदनेन' क-ख-का. १२. 'गुडोदनेन' क-ख-का. १३. 'विश्वेदेवाश्च' का. १४. 'रुद्राश्च ऋषयस्तथा' का. १५. 'समभ्यर्च्यौ' का. १६. 'मोदकैः सूपमिश्रितैः' का. १७. 'पक्वान्नेन' इत्यादि सार्धश्लोकः क-ख. पुस्तकयोर्नास्ति. १८. 'पक्वामकेन' का. १९. 'सीधु' ब. २०. 'पक्वामकेन मांसेन' का.; 'पक्वान्नेन तु मांसेन संपूज्यो रक्षसां गणः' क-ख.

[1]सुरामांसप्रदानेन [2]दानवान् प्रतिपूजयेत् ।
शे[3]षान् देवगणांस्तज्ज्ञैः सापूपोत्कारिकोदनैः ॥ ४१ ॥ ]
म[5]त्स्यैश्च पिष्टभक्ष्यैश्च सागरान् [6]सरितस्तथा ।
[7]संपूज्य वरुणं चापि [8]दातव्यं घृतपायसम् ॥ ४२ ॥
नानामूलफलैश्चापि [9]मुनीन्संप्रतिपूजयेत् ।
वायूंश्च पक्षिणश्चैव [10]विचित्रैर्भक्ष्यभोजनैः ॥ ४३ ॥
[11]मातॄर्नाट्यस्य सर्वास्ता [12]धनदं च सहानुगैः ।
[13]अपूपैर्लेपिकामिश्रैर्भक्ष्यभोज्यै[14]श्च पूजयेत् ॥ ४४ ॥
[15]एवमेषां बलिः कार्यो नानाभोजनसं[16]श्रयः ।
पुनर्मन्त्रविधानेन बलिकर्म [17]प्रवक्ष्यते ॥ ४५ ॥
देवदेव म[18]हादेव सर्वलोकपितामह ।
[19]मन्त्रपूतमिदं सर्वं प्रतिगृह्णीष्व मे बलिम् ॥ ४६ ॥
[ [20]पुरन्दरामरपते वज्रपाणे शतक्रतो ।
प्रगृह्यतां बलिर्देव [21]विधिमन्त्रपुरस्कृतः ॥ ४७ ॥

---

१. 'सुरया गुडधानेन' क-ख. २. 'मांसैश्च विधिनार्चयेत् क-ख.; 'विधिना प्रतिपूजयेत्' का. ३. 'शेषा देवगणाः सर्वेऽपूपकाद्वारिकोत्करैः' क-ख. ४. 'प्राज्ञः' का. ५. 'मृष्ट' क-ख. ६. 'सागराः' क-ख. ७. 'सदृशं वरुणायाथ' (?) क-ख.; 'अभ्यर्च्य वरुणश्चापि' का. ८. 'दातव्यो घृतपायसः' ब-का. ९. 'एव' का. १०. 'विविधैः' का. ११. 'नाट्यस्य च तथा मातॄः' का. १२. 'तथैव च महासुराः' क-ख. १३. 'आर्चाकालोचितामिश्रैः' क.; 'आवा' ख.; 'अपूपैर्लौपिकाभिस्तैः' का. १४. 'प्रयत्नतः' १५. 'एवमेवंविधं कार्यं' क-ख. १६. 'संश्रयम्' क-ख. १७. 'प्रचक्षते' क-ख.; 'च वक्ष्यते' ब. १८. 'महाभाग पद्मयोने' का. १९. 'मन्त्रपूतमिमं सर्वं बलिं देव गृहाण नः' का. २०. इतःप्रभृति श्लोकत्रयं क-ख-पुस्तकयोर्नास्ति, अथ पञ्चसु श्लोकेषु का-पुस्तके पौर्वापर्यं भिद्यत इति ते श्लोकाः का-पुस्तकानुरोधेन यथा—
'देवदेव महादेव गणेश त्रिपुरान्तक । महादेव महायोगिन् देवदेव सुरोत्तम ॥
संप्रगृह्य बलिं देव रक्ष विघ्नान् सदोत्थितान् । प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ॥
नारायणामितगते पद्मनाभ सुरोत्तम । प्रगृह्यतां बलिर्देव मन्त्रसंस्कारसंस्कृतः ॥
पुरन्दरामरपते वज्रपाणे शतक्रतो । प्रगृह्यतां बलिर्देव बलिमन्त्रपुरस्कृतः ॥
देवसेनापतिस्कन्द भगवन् शंकरप्रिय । प्रीतेन मनसा देव षण्मुख प्रतिगृह्यताम् ॥'
२१. 'बलिमन्त्रपुरस्कृतः' का.

देव[1]सेनापते स्कन्द भगवन् शंकरप्रिय।
ब[2]लिः प्रीतेन मनसा षण्मुख प्रतिगृह्यताम् ॥ ४८ ॥
नारायणामितगते पद्मनाभ सुरोत्तम।
प्रगृह्यतां बलिर्देव [3]मन्त्रपूतो मयार्पितः ॥ ४९ ॥ ]
म[4]हादेव महायोगिन्देवदेव सुरोत्तम।
संप्रगृह्य बलिं देव रक्ष विघ्नान्सदोत्थितान् ॥ ५० ॥
देव[5]देवि महाभागे सरस्वति हरिप्रिये।
प्रगृह्यतां बलिर्मातर्मया भक्त्या समर्पितः ॥ ५१ ॥
सर्व[6]भूतानुभावज्ञ लोकजीवन मा[7]रुत।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मया[8]र्पितः ॥ ५२ ॥
नानानिमित्तसंभूताः पौलस्त्याः सर्व एव ते।
राक्षसेन्द्रा महासत्त्वाः प्र[9]तिगृह्णीत मे बलिम् ॥ ५३ ॥
लक्ष्मीः [10]सिद्धिर्मतिर्मेधा सर्वलोकनमस्कृताः।
मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम् ॥ ५४ ॥
[ देव[11]वक्त्र सुरश्रेष्ठ धूमकेतो हुताशन।
भक्त्या समुद्यतो देव बलिः संप्रतिगृह्यताम् ॥ ५५ ॥ ]
सर्वग्रहाणां प्र[12]वर तेजोराशे दिवाकर।
भक्त्या मयोद्यतो देव बलिः संप्रतिगृह्यताम् ॥ ५६ ॥

---

१. 'देवसेनापतिस्कन्द' का. २. 'प्रीतेन मनसा देव षण्मुख प्रतिगृह्यताम्' का. ३. 'मन्त्रसंस्कारसंस्कृतः' का.; क-ख-पुस्तकयोः पद्यार्धमेतदत्र नास्ति, इतस्तृतीये श्लोके 'भावज्ञः सर्वभूतानां' इत्यादिपद्यस्योत्तरार्धत्वेन वर्तते. ४. 'देवदेव महायोगिन्' ब. ५. 'देविदेवि' का. ६. श्लोकोऽयं ब-पुस्तके 'लक्ष्मीः सिद्धिः' इत्यादि श्लोकोत्तरं वर्तते, का-पुस्तकेऽपि तथैव, परं का-पुस्तके 'नानानिमित्तसंभूताः' इत्यादिपद्यस्य श्लोकस्य पुरो वर्तते.; 'भावज्ञ (:) सर्वभूतानां' क-ख-पुस्तकयोः. ७. 'मारुत (:)' क-ख. ८. 'मयोद्यतः' ब-का. ९. 'प्रतिगृह्णन्त्विमं बलिम्' इति का. १०. 'देव्यः सिद्धिवृद्धिलक्ष्म्ये( क्ष्म्यः )' क-ख. ११. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १२. 'संपूज्य' क-ख.

सर्वग्रहपते सोम द्विजराज जगत्प्रिय ।
[1]प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ॥ ५७ ॥
महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः ।
[2]प्रगृह्यतां बलिर्भक्त्या मया संप्रतिचोदितः ॥ ५८ ॥
नमः पितृभ्यः सर्वेभ्यः प्रतिगृह्णन्त्वि[3]मं बलिम् ।
[4]भूतेभ्यश्च नमो नित्यं ये[5]षामेष बलिः प्रियः ॥ ५९ ॥
कामपाल नमो नित्यं यस्यायं ते विधिः कृ[6]तः ।
नारदस्तु[7]म्बुरुश्चैव विश्वावसुपुरोगमाः ॥ ६० ॥
प्रतिगृह्णन्तु मे सर्वे गन्धर्वा बलिर्मु[8]द्यतम् ।
यमो मित्रश्च भगवानीश्वरौ लोकपूजितौ ॥ ६१ ॥
इमं मे प्रतिगृह्णीतां बलिं मन्त्रपुरस्कृतम् ।
रसातल[9]गतेभ्यश्च पन्नगेभ्यो नमोनमः ॥ ६२ ॥
दिशन्तु सिद्धिं नाट्यस्य पूजिताः प[10]वनाशनाः ।
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहनः ॥ ६३ ॥
पूजितः प्रीति[11]मानस्तु ससमुद्रनदीनदः ।
वैनतेय महासत्त्व सर्वपक्षिपते वि[12]भो ॥ ६४ ॥
प्रगृह्यतां बलिर्देव मन्त्रपूतो म[13]योद्यतः ।
धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः ॥ ६५ ॥
[14]सगुह्यकः सयक्षश्च प्रतिगृह्णातु मे बलिम् ।
नमोऽस्तु नाट्यमातृभ्यो ब्रा[15]ह्म्याद्याभ्यो नमोनमः ॥ ६६ ॥

---

१. 'प्रगृह्यतामेष बलिर्मन्त्रपूतो मयोद्यतः' ब.; 'प्रगृह्यतामेष बलिर्मन्त्रपूतपुरस्कृतः' का. २. 'प्रतिगृह्णन्त्विमं भक्त्या बलिं सम्यङ्मयोदितम्' का. ३. 'प्रतिगृह्णन्तु मे बलिम्' क-ख. ४. श्लोकार्धमिदं क-ख. पुस्तकयोर्नास्ति. ५. 'तेषामेष' का. ६. 'बलिः' का. ७. 'तुम्बरः' क-ख. ८. 'उत्तमम्' का. ९. 'चरेभ्यस्तु' का. १०. 'पापनाशनाः' क-ख-का. ११. 'प्रतिमानस्तु (?)' क.; 'प्रतिमानस्त' ख. १२. 'प्रभो' का. १३. 'मयोदितः' क-ख. १४. 'सगुह्यकैश्च यक्षैश्च' का. १५. 'ब्राह्म्यादिभ्यो' का.

सुमुखीभिः प्रसन्नाभिर्बलिः संप्रति[1]गृह्यताम् ।
रुद्रप्रहरणं सर्वं [2]प्रतिगृह्णातु मे बलिम् ॥ ६७ ॥
[3]विष्णुप्रहरणं चैव विष्णुभक्त्या [4]मयोद्यतम् ।
तथा कृतान्तः कालश्च [5]सर्वप्राणिवधेश्वरौ ॥ ६८ ॥
मृत्युश्च नियतिश्चैव प्रतिगृह्णातु मे बलिम् ।
याश्चास्यां मत्तवारण्यां संश्रिता वास्तुदेवताः ॥ ६९ ॥
मन्त्रपूतमिमं सम्यक्प्रतिगृह्णन्तु मे बलिम् ।
[6]अन्येऽपि ये देवगणा दिशो दश समाश्रिताः ॥ ७० ॥
[7]दिव्यान्तरिक्षभौमाश्च तेभ्यश्चायं बलिः कृतः ।
कुम्भं सलिलसंपूर्णं [8]पुष्पमालापुरस्कृतम् ॥ ७१ ॥
स्थापयेद्रङ्गमध्ये तु सुवर्णं चात्र दापयेत् ।
[9]आतोद्यानि तु सर्वाणि कृत्वा वस्त्रोत्तराणि तु ॥ ७२ ॥
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यैर्भोज्यैश्च पूजयेत् ।
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम् ॥ ७३ ॥
[10]जर्जरस्त्वभिसंपूज्यः स्यात्ततो विघ्नजर्जरः ।
श्वेतं शिरसि वस्त्रं स्यान्नीलं रौद्रेऽथ[11] पर्वणि ॥ ७४ ॥
विष्णुपर्वणि [12]पीतं स्याद्रक्तं स्कन्दस्य पर्वणि ।
[13]मूलपर्वणि चित्रं तु देयं वस्त्रं हितार्थिना ॥ ७५ ॥
सदृशं च प्रदातव्यं [14]धूपमाल्यानुलेपनम् ।
आतोद्यानि च सर्वाणि वासोभिरवगुण्ठयेत् ॥ ७६ ॥
[15]गन्धैर्माल्यैश्च धूपैश्च भक्ष्यभोज्यैश्च पूजयेत् ।
[16]सर्वमेवं विधिं कृत्वा [17]गन्धमाल्यानुलेपनैः ॥ ७७ ॥

१. 'अद्य प्रगृह्यताम्' क-ख. २. 'चैव' का. ३. 'विष्णुप्रहरणं' का. ४. 'मयोदितम्' क-ख. ५. 'सर्वप्राणधनेश्वरः' क-ख.; 'सर्वप्राणिवशेश्वरौ' का. ६. 'अन्ये ये देवगन्धर्वा' ब-का. ७. 'दिव्यान्तरिक्षा' का. ८. 'वर्णमाला' क-ख.; 'सलिलपूर्णं च वर्णमाला' का. ९. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १०. 'जर्जरः प्रतिसंपूज्यः' का. ११. 'च.' ब-का. १२. 'वै पीतं' ब.; 'स्यात् पीतं' का. १३. 'मुषपर्वणि(?)' क-ख. १४. 'माल्यधूपानुलेपनम्' का. १५. 'गन्धमाल्यैश्च' का. १६. 'सर्वमेव' का. १७. 'धूपमाल्यानुलेपनैः' का.

विघ्नजर्जरणार्थं तु जर्जरं त्व[1]भिमन्त्रयेत् ।
अ[2]त्र विघ्नविनाशार्थं पितामहमुखैः सुरैः ॥ ७८ ॥
निर्मितस्त्वं म[3]हावीर्यो व[4]ज्रसारो महातनुः ।
शिरस्ते रक्षतु ब्रह्मा स[5]र्वैर्देवगणैः सह ॥ ७९ ॥
द्वितीयं च[6] हरः प[7]र्व तृतीयं तु[8] जनार्दनः ।
चतुर्थं च कुमारश्च पञ्चमं प[9]न्नगोत्तमाः ॥ ८० ॥
नित्यं स[10]र्वेऽपि पान्तु त्वां पुनस्त्वं च शिवो भव ।
नक्षत्रेऽभिजिति त्वं च[11] प्रसूतो रिपुसूदनः ॥ ८१ ॥
जयं चाभ्युदयं चैव पा[12]र्थिवस्य समावह ।
जर्जरं पू[13]जयित्वा च बलिं सर्वं निवेद्य च ॥ ८२ ॥
अग्नौ होमं ततः कुर्यान्मन्त्राहुतिपु[14]रस्कृतम् ।
हुत्वा स एव दीप्ताभिरुल्काभिः परिमार्जनम् ॥ ८३ ॥
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् ।
अभिद्योत्य सहातोद्यैर्नृपतिं न[15]र्तकीं तथा ॥ ८४ ॥
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान्वदेत् ।
महाकुले प्र[16]सूताःस्थ गुणौघैश्चाप्यलंकृताः ॥ ८५ ॥
यद्वो जन्मगुणोपेतं त[17]द्वो भवतु नित्यशः ।
ए[18]वमुक्त्वा ततो वाक्यं नृपतेर्भूतये बुधः ॥ ८६ ॥
नाट्यप्रयोगसिद्ध्यर्थमाशिषः संप्रयोजयेत् ।
सरस्वती धृतिर्मेधा ह्रीःश्रीर्लक्ष्मीर्धृतिर्म[19]तिः ॥ ८७ ॥

---

१. 'चाभिमन्त्रयेत्' का. २. 'विघ्नानां शमनार्थं हि देवैर्ब्रह्मपुरोगमैः' का. ३. 'महावीर्य' क-ख. ४. 'वज्रसत्रे' क-ख. ५. 'सर्वदेवगणैः' का. ६. 'तु' ब. ७. 'पातु' ब. ८. 'च' ब-का. ९. 'पन्नगोत्तमः' का. १०. 'सर्वे हि पान्तु त्वां सुराः' का. ११. 'नक्षत्रेऽभिजितं त्वं तु सूर्यतोऽहितसूदनः' ( ? ) क-ख. १२. 'पार्थिवाय प्रयच्छ नः' का. १३. 'पूजयित्वैवं' का. १४. 'पुरस्कृतः' क-ख. १५. 'नर्तकी-स्तथा' का. १६. 'प्रसूतास्ताः' क-ख.; 'प्रसूताश्च' का. १७. 'तद्वै' ब. १८. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १९. 'मतिः स्मृतिः' का.

पान्तु वो मातरः [1]सौम्याः सिद्धिदाश्च भवन्तु वः ।
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम् ॥ ८८ ॥
[2]भिन्द्यात्कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः ।
अभिन्ने तु भवेत्कुम्भे स्वामिनः शत्रुतो भयम् ॥ ८९ ॥
[3]भवेद्भिन्ने तु कुम्भे तु स्वामिनः शत्रुसंक्षयः ।
भिन्ने कुम्भे ततश्चैव नाट्याचार्यः प्रयत्नतः ॥ ९० ॥
प्रगृह्य दीपिकां दीप्तां [4]सर्वरङ्गं प्रदीपयेत् ।
क्ष्वेडितैः स्फोटितैश्चैव वल्गितै[5]र्विप्रधावितैः ॥ ९१ ॥
रङ्गमध्ये तु तां दीप्तां सशब्दां संप्रयोजयेत् ।
शङ्खदुन्दुभिनिर्घोषैर्मृ[6]दङ्गैः पणवैस्तथा ॥ ९२ ॥
सर्वातोद्यैः [7]प्रणदिते [8]रङ्गयुद्धानि कारयेत् ।
तत्र [9]च्छिन्नं च भिन्नं च दारितं च सशोणितम् ॥ ९३ ॥
[10]क्षतं प्रदीप्तमायस्तं निमित्तं सिद्धिलक्षणम् ।
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत् ॥ ९४ ॥
[11]पुरस्य बालवृद्धस्य तथा जनपदस्य च ।
दुरिष्टस्तु तथा रङ्गो [12]दैवतैर्दुरधिष्ठितः ॥ ९५ ॥
नाट्यविध्वंसनं कुर्यान्नृपस्य च तथाशुभम् ।
[13]य एवं विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ॥ ९६ ॥
प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्छति ।
यज्ञेन [14]संमितं ह्येतद्रङ्गदैवतपूजनम् ॥ ९७ ॥
अपूजयित्वा रङ्गं तु नैव [15]प्रेक्षां प्रयोजयेत् ।
पूजिताः पूजयन्त्येते मानिता मानयन्ति च ॥ ९८ ॥

---

१. 'सर्वाः' का. २. 'भिद्यात्' क-ख-का. ३. 'भिन्ने चैव तु विज्ञेयः' ब-का. ४. 'सर्वरङ्गं' क-ख. ५. 'श्च प्रधावितैः' ब-का. ६. 'मृदङ्गपणवैस्तथा' ब-का. ७. 'प्रणुदितैः' क-ख. ८. 'रङ्गे' का. ९. 'भिन्नं च छिन्नं च' का. १०. 'क्षतं' ब. 'क्षतप्रदीप्तमायत्तं' का. ११. 'पुनरस्यबालवृद्धस्य' ब. १२. 'देवतैः (?)' ब. १३. 'यस्त्वेवं' का. १४. 'संमतं' क-ख-ब. १५. 'प्रेक्ष्यं' क-ख.

तस्मात्सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ।
न [1]तथाशु दहत्यग्निः प्रभञ्जनसमीरितः ॥ ९९ ॥
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ।
[2]शास्त्रज्ञेन विनीतेन शुचिना दीक्षितेन च ॥ १०० ॥
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् ।
स्थानभ्रष्टं तु यो दद्याद्बलिमुद्विग्नमानसः ॥ १०१ ॥
मन्त्रहीनो यथा होता प्रायश्चित्ती भवेत्तु सः ।
[3]इत्ययं यो विधिर्दृष्टो रङ्गदैवतपूजने ॥ १०२ ॥
नवे नाट्यगृहे [4]कार्यः प्रेक्षायां [5]च प्रयोक्तृभिः ।

इति [6]श्रीभारतीये नाट्यशास्त्रे [7]रङ्गदैवतपूजाविधानं नाम तृतीयोऽध्यायः ।

---

[8]अथ [9]चतुर्थोऽध्यायः ।

एवं तु पूजनं कृत्वा मया [10]प्रोक्तः पितामहः ।
आज्ञापय [11]विभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥ १ ॥
ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम् ।
एतदुत्साहजननं [12]सुरप्रीतिकरं [13]तथा ॥ २ ॥
योयं [14]समवकारस्तु धर्मकामार्थसाधकः ।
मया प्रग्रथितो विद्वन्स प्रयोगः प्रयुज्यताम् ॥ ३ ॥
[15]तस्मिन् समवकारे तु प्रयुक्ते देवदानवाः ।
हृष्टाः समभवन् सर्वे कर्मभावानुदर्शनात् ॥ ४ ॥
कस्यचित्त्वथ कालस्य मामाहाम्बुजसंभवः ।
नाट्यं संदर्शयामोऽ[16]द्य त्रिनेत्राय महात्मने ॥ ५ ॥

---

१. 'तथासु(शु ?)' क-ख. २. 'शास्त्रज्ञे च' क-ख. ३. 'एवमेव विधिः' का. ४. 'कार्यम् (?)' का. ५. 'तु' का. ६. 'श्री' इति नास्ति का-पुस्तके. ७. 'रङ्गदैवतपूजनं' ख.; 'रङ्गदेवतापूजनं' का. ८. क-ख-पुस्तकयोः 'अथ' इति नास्ति. ९. 'चतुर्थाध्यायप्रारम्भः' का. १०. 'प्रोक्तं पितामह' क-ख. ११. 'प्रभो' का. १२. 'सर्वं' क-ख. १३. 'महत्' का. १४. 'समस्तकार्यस्य.' १५. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १६. 'अत्र' का.; 'अन्यं' क-ख.

ततः सार्धं सुरैर्गत्वा वृषभाङ्कनिवेशनम् ।
[1]समभ्यर्च्य शिवं पश्चादुवाचेदं पितामहः ॥ ६ ॥
मया समवकारस्तु योऽयं सृष्टः सुरोत्तम ।
श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि ॥ ७ ॥
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत् ।
ततो मामाह भगवान्सज्जो भव महामते ॥ ८ ॥
ततो हिमवतः पृष्ठे नानानगसमाकुले[2] ।
[3]बहुचूतद्रुमाकीर्णे रम्यकन्दरनिर्झरे ॥ ९ ॥
पूर्वरङ्गे कृते पूर्वं तत्रायं द्विजसत्तमाः ।
तथा त्रिपुरदाह[4]श्च डिमसंज्ञः प्रयोजितः ॥ १० ॥
[6]ततो भूतगणा हृष्टाः[7] कर्मभावानुकीर्तनात् ।
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् ॥ ११ ॥
अहो नाट्यमिदं सम्यक्त्वया सृष्टं महामते ।
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्धनम् ॥ १२ ॥
मयापीदं स्मृतं नृत्यं[8] संध्याकालेषु नृत्यता ।
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् ॥ १३ ॥
पूर्वरङ्गविधावस्मिंस्त्वया सम्यक्प्रयोज्यताम्[9] ।
[10]वर्धमानकयोगेन गीतेष्वासारितेषु[11] च ॥ १४ ॥
महागीतेषु चैवार्थान्[12] सम्यगेवाभिनेष्यसि[13] ।
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः ॥ १५ ॥
[14]एतद्विमिश्रितश्चायं चित्रो नाम भविष्यति ।
श्रुत्वा महेश्वरवचः प्रत्युक्तं च[15] स्वयंभुवा ॥ १६ ॥

---

१. 'अभ्यर्च्य च' का. २. 'समावृते' का. ३. 'बहुभूतगणाकीर्णे' का. ४. '°दाहस्थो' क-ख. ५. 'हिम' क-ख. ६. 'ततो' क-ख. ७. 'हृष्टं' क-ख. ८. 'नित्यं' क-ख. ९. 'प्रयुज्यताम्' का. १०. श्लोकार्धमिदं क-ख-पुस्तकयोर्नास्ति, ब-पुस्तके च प्रक्षिप्तत्वेन वर्तते. ११. 'गीतेष्वासादितेषु च' का. १२. 'चैवार्ताः' क-ख. १३. 'सम्यक्त्वमभिनेष्यसि' क-ख. १४. 'एभिः' का. १५. 'तु' ब.

प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम ।
ततस्तंण्डुं समाहूय प्रोक्तवान्[1]भुवनेश्वरः ॥ १७ ॥
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै ।
ततो ये त[2]ण्डुना प्रोक्तास्त्व[3]ङ्गहारा महात्मना ॥ १८ ॥
[4]नानाकरणसंयुक्तान्व्याख्यास्यामि सरेचकान् ।
स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः ॥ १९ ॥
[5]सूचीविद्धस्तथा चैव ह्यपविद्धस्तथैव च ।
[6]आक्षिप्तकस्तु विज्ञेयस्तथा चोद्ध[7]ट्टितः स्मृतः ॥ २० ॥
विष्कम्भश्चैव संप्रोक्तस्तथा चैवापराजितः ।
विष्कम्भा[8]पसृतश्चैव मत्ताक्रीडस्तथैव च ॥ २१ ॥
स्वस्तिको रे[9]चितश्चैव पार्श्वस्वस्तिक एव च ।
वृश्चिकश्चैव संप्रोक्तो [10]भ्रमरश्च तथापरः ॥ २२ ॥
मत्तस्खलितकश्चैव मदाद्वि[11]लसितस्तथा ।
गतिमण्डलो विज्ञेयः परिच्छिन्नस्तथैव च ॥ २३ ॥
परिवृ[12]त्तरेचितः स्यात्तथा वै[13]शाखरेचितः ।
परावृत्तोऽथ विज्ञेयस्तथा चैवा[14]प्यलातकः ॥ २४ ॥
पार्श्वच्छेदोऽथ संप्रोक्तो वि[15]द्युद्भ्रान्तस्तथैव च ।
[16]ऊरूद्वृत्तस्तथा चैव स्यादालीढस्तथैव च ॥ २५ ॥
रेचितश्चापि विज्ञेयस्तथैवाच्छुरितः स्मृ[17]तः ।
आक्षिप्तरेचितश्चैव संभ्रान्तश्च तथापरः ॥ २६ ॥

---

१. 'सुरसत्तमः' का. २. 'वै' का. ३. 'अङ्गहारान्' (?) का. ४. 'तांश्च' क-ख. ५. 'तथा च स्यात् सूपविद्धः' का. ६. 'आक्षिप्तकोऽथ' का. ७. 'चोद्या-द्दितः' क.; 'वीद्याद्धितः' ख.; 'चोद्धटितः' का. ८. 'अङ्गसृतश्चैव' क.; 'अपस्मृतश्चैव' का. ९. 'रचितश्चैव' क-ख. १०. 'चमरश्च' क-ख-का. ११. 'विलसतस्तथा' क-ख. १२. 'रेचितोऽथ स्यात्' का.; 'वृश्चिपरिवृत्त' क-ख. १३. 'वैशाख एव च' क-ख. १४. 'ह्यलाठकः' (?) क.; 'द्वलाटकः' (?) ख. १५. 'विद्युद्दान्तः' क-ख.; 'विद्युद्भ्रान्तः' का. १६. 'उद्वृत्तकस्तथैव [ स्यात् ]' क-ख.; 'उरुद्वृत्तः' का. १७. 'स्मृतः' इति त्रुटितं क-ख-पुस्तकयोः.

[1]अपसर्पस्तु विज्ञेयस्तथा चार्धनिकुट्टकः ।
द्वात्रिंशदेते संप्रोक्ता [2]अङ्गहारास्तु नामतः ॥ २७ ॥
[3]एतेषां तु प्रवक्ष्यामि प्रयोगं [4]करणाश्रयम् ।
हस्तपादप्रचारश्च[5] यथा योज्यः प्रयोक्तृभिः ॥ २८ ॥
अङ्गहारेषु [6]वक्ष्यामि [7]करणेषु च वै द्विजाः ।
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्यतः[8] ॥ २९ ॥
ता[9]न्यतः संप्रवक्ष्यामि नामतः कर्मतस्तथा ।
हस्तपाद[10]संमायोगो [11]नृत्यस्य करणं भवेत् ॥ ३० ॥
द्वे [12]नृत्यकरणे चैव भवतो नृत्य[13]मातृका ।
द्वाभ्यां त्रि[14]श्चतुराभिर्वाप्यङ्गहारस्तु मातृभिः ॥ ३१ ॥
[15]त्रिभिः कलापकं चैव चतुर्भिर्म[16]ण्डकं भवेत् ।
पञ्चैव करणानि स्युः संघातक इति स्मृतः ॥ ३२ ॥
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा ।
[17]करणैरिह संयुक्ता अङ्गहारा इति स्मृताः ॥ ३३ ॥
एतेषामेवं[18] वक्ष्यामि हस्तपादविकल्पनम् ।
तलपुष्पपुटं [19]पूर्वं वर्तितं [20]वलितोरु च ॥ ३४ ॥
अपविद्धं समनखं लीनं स्वस्तिकरेचितम् ।
[21]मण्डलस्वस्तिकं चैव निकुट्टकमथापि च ॥ ३५ ॥
तथैवार्धनिकुट्टं च [22]कटिच्छिन्नं तथैव च ।
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च ॥ ३६ ॥

---

१. 'असार्पितोऽथ विज्ञेयः' का. २. 'त्वङ्गहारास्तु' का. ३. 'एषां चैव प्रवक्ष्यामि' का. ४. 'करणाश्रितम्' का. ५. 'तु' का. ६. 'अङ्गहारप्रयोगेषु' क-ख. ७. 'तथाहं द्विजसत्तमाः' का. ८. 'भवेत्' का. ९. 'तान्यहं' का. १०. 'समायोगि' ख. ११. 'नृत्तस्य' का. १२. 'नृत्तकरणे' ब. १३. 'नृत्तमातृका' ब.; 'नृत्तमातृकाः' का. १४. 'त्रिभिश्चतुर्वापि' ब. १५. 'त्रिभिः कलापको ज्ञेयश्चतुर्भिर्मण्डकस्तथा' का. १६. 'षण्डकं तथा' क-ख. १७. 'करणैरिह संयुक्तो अङ्गहार इति स्मृतः ।' क-ख. १८. 'इह' का. १९. 'चैव' का. २०. 'चलितोरु च' क-ख-का. २१. 'मण्डलं स्वस्तिकं चैव' क-ख-का. २२. 'कटिच्छन्नं' क.; 'कटिच्छत्रं ख.

उन्मत्तं[1] स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च ।
दिक्स्वस्तिकमलातं च तथैव[2] च कटीसमम् ॥ ३७ ॥
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं[3] तथा ।
अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम् ॥ ३८ ॥
भुजङ्गत्रासितं प्रोक्तमूर्ध्वजानु तथैव च ।
निकुञ्चितं[4] च मत्तल्लि त्वर्धमत्तल्लि चैव हि ॥ ३९ ॥
स्याद्रेचकनिकुट्टं च तथा पादापविद्धकम् ।
वलितं[5] घूर्णितं चैव ललितं च तथापरम् ॥ ४० ॥
दण्डपक्षं तथा चैव भुजङ्गत्रस्तरेचितम् ।
नूपुरं चैव संप्रोक्तं तथा वैशाखरेचितम् ॥ ४१ ॥
भ्रमरं चतुरं चैव भुजङ्गाञ्चितमेव च ।
दण्डरेचितकं चैव तथा वृश्चिककुट्टनम्[6] ॥ ४२ ॥
कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च ।
छिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम् ॥ ४३ ॥
वृश्चिकं व्यंसितं चैव तथा पार्श्वनिकुट्टकम्[7] ।
ललाटतिलकं क्रान्तं कुञ्चितं चक्रमण्डलम्[8] ॥ ४४ ॥
उरोमण्डलमाक्षिप्तं तथा तलविलासितम् ।
अर्गलं चाथ विक्षिप्तमावृत्तं[9] दोलपादकम्[10] ॥ ४५ ॥
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम् ।
विद्युद्भ्रान्तमतिक्रान्तं विवर्तितकमेव च ॥ ४६ ॥
गजक्रीडितकं चैव तलसंस्फोटितं तथा ।
गरुडप्लुतकं चैव गण्डसूचि तथापरम् ॥ ४७ ॥

---

१. 'ननात्तं' (?) ख. २. 'तथा चैव' का. ३. 'विक्षिप्तकं तथा' ख. ४. 'निकुञ्चितमतल्लि च अर्धमतल्लि चैव हि' क-ख. ५. 'घूर्णितं चैव वलितं' का. ६. 'वृश्चिककुट्टितम्' का. ७. 'पादनिकुट्टनम्' का. ८. 'वक्रमण्डलम्' क-ख. ९. 'आर्तवं' क-ख. १०. 'दोलपादुकम्' का.

परिवृत्तं समुद्दिष्टं पार्श्वजानु तथैव च ।
[1]गृध्रावलीनकं चैव सन्नतं सूच्यथापि च ॥ ४८ ॥
अर्धसूचीति करणं सूचीविद्धं तथैव च ।
अपक्रान्तं च संप्रोक्तं मयूरललितं तथा ॥ ४९ ॥
सर्पितं दण्डपादं च हरिणप्लुतमेव च ।
प्रेङ्खोलितं नितम्बं च [2]स्खलितं करिहस्तकम् ॥ ५० ॥
[3]प्रसर्पितकमुद्दिष्टं सिंहविक्रीडितं तथा ।
[4]सिंहाकर्षितमुद्वृत्तं तथोपसृतमेव च ॥ ५१ ॥
[5]तलघट्टितकं चैव जनितं [6]चावहित्थकम् ।
[7]निवेशमेलकाक्रीडमूरूद्वृत्तं [8]तथैव च ॥ ५२ ॥
मदस्खलितकं चैव विष्णुक्रान्तमथापि च ।
सं[9]भ्रान्तमथ विष्कम्भमु[10]द्वट्टितमथापि च ॥ ५३ ॥
वृषभक्रीडितं चैव लोलितं च तथापरम् ।
[11]नागापसर्पितं चैव [12]शकटास्यं तथैव च ॥ ५४ ॥
[13]गङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम् ।
[14]अष्टोत्तरशतं ह्ये[15]तत्करणानां मयोदितम् ॥ ५५ ॥
[16]नृत्ते युद्धे नियुद्धे च तथा गतिपरिक्रमे ।
[17]गतिचारे प्रवक्ष्यामि युद्धचारीविकल्पनम् ॥ ५६ ॥
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तितः ।
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ॥ ५७ ॥
चरणस्यानुगश्चापि दक्षिणस्तु भवेत्करः ।
हस्तपादप्रचारं तु [18]कटिपार्श्वोरुसंयुतम् ॥ ५८ ॥

---

१. 'गृद्धावलीनकं' का. २. 'खलितं' क. ३. 'प्रसर्पितं समुद्दिष्टं' का. ४. 'सिंहकम्पितं' क-ख. ५. 'तलसंघट्टितं' का. ६. 'च बहिस्त्रिकम्' क-ख. ७. 'निवेशं मौलिकाक्रीडं' क-ख-का. ८. 'तथैव च' का. ९. 'संक्रान्तं' क-ख. १० 'उद्घाटितं' क-ख. ११. 'सामापसर्पितं' क-ख. १२. 'शकटास्यं' क-ख. १३. 'रङ्गावतरणं' क-ख. १४. पद्यार्धमेतत् का-पुस्तके नास्ति. १५. 'चैतत्' क-ख. १६. 'नृत्ये' क-ख. १७. 'मतिचारे' क.; 'गतिप्रचारे वक्ष्यामि' का. १८. 'कटी' क-ख.

उरः पृष्ठोदरोपेतं [1]वक्ष्यमाणं निबोधत ।
यानि स्थानानि याश्चार्यो नृत्तहस्तास्तथैव च ॥ ५९ ॥
सा मातृकेति विज्ञेया तद्योगात्करणं भवेत् ।
[2]कटीकर्णसमा यत्र को ( [3]कूँ ? ) र्परांसशिरस्तथा ॥ ६० ॥
[4]समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ।
वामे [5]पुष्पपुटः पार्श्वे पादोऽग्रतलसंचरः ॥ ६१ ॥
तथा च संनतं [6]पार्श्वे तलपुष्पपुटं भवेत् ।
[7]कुञ्चितौ मणिबन्धे [8]तु [9]व्यावृत्तपरिवर्तितौ ॥ ६२ ॥
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् ।
[10]शुकतुण्डौ यदा हस्तौ [11]व्यावृत्तपरिवर्तितौ ॥ ६३ ॥
[12]ऊरू च वलितौ [13]यस्मि[14]न्वलितोरुकमुच्यते ।
[15]आवर्त्य शुकतुण्डाख्यमूरुपृष्ठे निपातयेत् ॥ ६४ ॥
[16]वामहस्तश्च [17]वक्षःस्थो ह्यपविद्धं तु तद्भवेत् ।
श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ ॥ ६५ ॥
देहः स्वाभाविको यत्र भवेत्समनखं तु तत् ।
पताकाञ्जलि वक्षःस्थं प्रसारितशिरोधरम् ॥ ६६ ॥
[18]निकुञ्चितांसकूटं च तल्लीनं करणं स्मृतम् ।
स्वस्तिकौ [19]रेचितौ विद्धौ विश्लिष्टौ [20]कटिसंस्थितौ ॥ ६७ ॥
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् ।
स्वस्तिकौ तु करौ कृत्वा [21]प्राङ्मुखोर्ध्वतलौ समौ ॥ ६८ ॥

---

१. 'नृत्तमार्गे' का. २. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति; 'करौ कर्णसमौ' का. ३. 'कूर्पाराङ्गशिरस्तथा' का. ४. 'समुन्नतमुखं चैव' का. ५. 'पुष्पपुटं' का. ६. 'पार्श्वे' क-ख. ७. 'कुञ्चितो' क-ख. ८. 'च' क-ख. ९. 'व्यावर्तपरिवर्तिते' क-ख. १०. 'सुक' क-ख. ११. 'व्यावर्त' क-ख. १२. 'पुरौ' क.; 'उरौ' ख. १३. 'यत्र' का. १४. 'चलितोरु तदुच्यते' क-ख.; 'वलितोरु तदुच्यते' का. १५. 'आवृत्य' का. १६. 'वक्ष[ः]स्थो वामहस्तश्चाप्य°' का. १७. 'श्चाप्यपविद्धं' ब. १८. 'निहञ्चितांस' ब. १९. 'रेचिताविद्धौ' ब. २०. 'कटिसंश्रितौ' ब. २१. 'प्राङ्मुखोर्धतलौ' का.

तथा च मण्डलं स्थानं मण्डलस्वस्तिकं तु तत् ।
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे ॥ ६९ ॥
पादौ निकुट्टितौ चैव ज्ञेयं तत्तु निकुट्टनम् ।
अञ्चितौ बाहुशिरसी हस्तस्त्वभिमुखाङ्गुलिः ॥ ७० ॥
निकुञ्चितार्धयोगेन भवेदर्धनिकुट्टकम् ।
पर्यायशः कटिश्छिन्ना बाहू शिरसि पल्लवौ ॥ ७१ ॥
पुनः पुनश्च करणं कटिच्छिन्नं तु तद्भवेत् ।
अपविद्धकरः सूच्या पादश्चैव निकुट्टितः ॥ ७२ ॥
संनतं यत्र पार्श्वं च तद्भवेदर्धरेचितम् ।
स्वस्तिकौ चरणौ यत्र करौ वक्षःस्थरेचितौ ॥ ७३ ॥
निकुञ्चितं तथा वक्षो वक्षःस्वस्तिकमेव तत् ।
अञ्चितेन तु पादेन रेचितौ तु करौ यदा ॥ ७४ ॥
उन्मत्तं करणं तत्तु विज्ञेयं नृत्यकोविदैः ।
हस्ताभ्यामथ पादाभ्यां भवतः स्वस्तिकौ यदा ॥ ७५ ॥
तत्स्वस्तिकमिति प्रोक्तं करणं करणार्थिभिः ।
विक्षिप्ताक्षिप्तबाहुभ्यां स्वस्तिकौ चरणौ यदा ॥ ७६ ॥
अपक्रान्तार्धसूचीभ्यां तत्पृष्ठस्वस्तिकं भवेत् ।
पार्श्वयोरग्रतश्चैव यत्र श्लिष्टकृतो भवेत् ॥ ७७ ॥

---

१. 'मण्डलं' क-ख-का. २. 'हि' क-ख. ३. निकुट्टितं' क-ख. ४. 'विज्ञेयं चैव कुट्टकम्' क-ख.; 'ज्ञेयं तत्तु निकुट्टकम्' का. ५. 'बाहुशिखरौ' क-ख.; 'बाहुशिरसि' ब. ६. 'हस्तस्त्वा' (?) क-ख. ७. 'निकुट्टितार्धभागेन' क-ख. 'निकुञ्चितश्च पादः स्यात्' का.; 'भवेदर्धकुट्टितम्' क-ख.; 'ज्ञेयमर्धनिकुट्टकम्' का. ८. 'पर्यायसः(शः) कटी छिन्ना बाह्वोः शिरसि पल्लवे' क-ख. ९. 'अपविद्धकरः' क-ख-का. १०. 'निकुट्टकः' का. ११. 'तु' क-ख. १२. 'वक्षसि रेचितौ' का. १३. 'च' क-ख-का. १४. 'तदा' क-ख. १५. 'नृत्त' ब-का. १६. तदेतत्पद्यं क-ख. पुस्तकयोर्नास्ति । परं पद्यस्यास्य प्रथमपादोऽव्यवहितोत्तरपद्ये पूर्वपादत्वेनोपलभ्यते । 'उभाभ्यां हस्तपादाभ्यां' का. १७. 'हस्ताभ्यामथ पादाभ्यां' क-ख. १८. 'अपक्रान्तार्धसूचिभ्यां' ब-का. १९. 'श्लिष्टगतो' ब.; 'श्लिष्टः कृतो' का.

स्वस्तिकौ हस्तपादाभ्यां तद्दिक्स्वस्तिकमुच्यते ।
[1]अलातं चरणं कृत्वा व्यंसयेद्दक्षिणं करम् ॥ ७८ ॥
ऊर्ध्वजानुक्रमं [2]कुर्यादलातकमिति [3]स्मृतम् ।
स्वस्तिकापसृतः पादः करौ [4]नाभिकटिस्थितौ ॥ ७९ ॥
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् ।
हस्तो हृदि भवेद्वामः सव्यश्[5]चाक्षिप्तरेचितः ॥ ८० ॥
रेचितश्चापविद्धश्च तत्स्यादाक्षिप्तरेचितम् ।
विक्षिप्तं हस्तपादं [6]च तस्यैवाक्षेपणं पुनः ॥ ८१ ॥
यत्र तत्करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः ।
स्वस्तिकौ चरणौ कृत्वा [7]करिहस्तं च दक्षिणम् ॥ ८२ ॥
वक्षःस्थाने तथा वाममर्धस्वस्तिकमादिशेत् ।
व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ॥ ८३ ॥
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् ।
कुञ्चितं पादमुत्क्षिप्य [8]व्यस्तम्[9]ऊरुं [10]विवर्तयेत् ॥ ८४ ॥
[11]कटिजानू विवर्तौ च भुजङ्गत्रासितं भवेत् ।
कुञ्चितं पादमुत्क्षिप्य [12]जानु स्तनसमं न्यसेत् ॥ ८५ ॥
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ।
[13]वृश्चिकं चरणं कृत्वा करं पार्श्वे निकुञ्चयेत् ॥ ८६ ॥
नासाग्रे दक्षिणं चैव ज्ञेयं [14]तत्तु निकुञ्चितम् ।
वामदक्षिणपादाभ्यां [15]घूर्णमानोपसर्पणैः ॥ ८७ ॥
उद्वेष्टितापविद्धैश्च हस्तैर्[16]मत्तल्ल्युदाहृतम् ।
स्खलितापसृतौ पादौ वामहस्तश्च रेचितः ॥ ८८ ॥

---

१. 'प्रजातं' ख. २. 'चैव' का. ३. 'भवेत्' का. ४. 'नाभीकटीस्थितौ' का. ५. 'स्या' क-ख. ६. 'तु' का. ७. 'कटिहस्तं' क-ख. ८. 'अश्रम्' ब. ९. 'ऊरु' का. १०. 'प्रवर्तयेत्' क-ख. ११. 'कटी जानुविवर्तश्च' क-ख.; 'कटिजानु विवृत्तं च' का. १२. 'जानुमूर्ध्वं प्रसारयेत्' क-ख-का. १३. 'करणं वृश्चिकं कृत्वा' का. १४. 'ननु' (?) ख., 'तद्धि' का. १५. 'पूर्ण' क-का. १६. 'मतल्लि' क-ख.

सव्यहस्तः कटिस्थः स्या[1]दर्धमत्तल्लि तत्स्मृतम् ।
रेचितो दक्षिणो हस्तः पादः सव्यो निकुट्टितः ॥ ८९ ॥
दोला चैव भवेद्वामस्त[2]द्रेचितनिकुट्टितम् ।
कार्यौ नाभितटे [3]हस्तौ प्राङ्मुखौ [4]खटकामुखौ ॥ ९० ॥
सूचीविद्धावपक्रान्तौ पादौ [5]पादापविद्धके ।
अपविद्धो भवेद्धस्तः सूचीपादस्तथैव च ॥ ९१ ॥
तथा त्रिकं विवृत्तं च [6]वलितं नाम तद्भवेत् ।
[7]वर्तिताघूर्णितः सव्यो हस्तो वामश्च दोलितः ॥ ९२ ॥
स्वस्तिकापसृतः पादः करणं घूर्णितं तु तत् ।
करिहस्तो भवेद्वामो दक्षिणश्चा[9]पवर्तितः ॥ ९३ ॥
बहुशः कुट्टितः पादो ज्ञेयं तल्ललितं बुधैः ।
[10]ऊर्ध्वजानु विधा[11]याथ तस्तस्योपरि लतां न्यसेत् ॥ ९४ ॥
दण्डपक्षं तु तत्प्रोक्तं करणं नृत्तवेदिभिः ।
भुजङ्गत्रासितं कृत्वा यत्रोभावपि रेचितौ ॥ ९५ ॥
वामपार्श्वस्थितौ हस्तौ भुजङ्गत्रस्तरेचितम् ।
त्रिकं सुवलितं कृत्वा लतारेचितकौ करौ ॥ ९६ ॥
नूपुरं च तथा पादं करणे नूपुरे न्यसेत् ।
रेचितौ हस्तपादौ च [12]कटी ग्रीवा च रेचिता ॥ ९७ ॥
वैशाखस्थानकेनैतद्भवेद्वैशाखरेचितम् ।
आक्षि[13]प्तः स्वस्तिकः पादः करौ चोद्वेष्टितौ तथा ॥ ९८ ॥
त्रिकस्य [14]वलनं चैव ज्ञेयं भ्रमरकं तु तत् ।
अञ्चितः स्यात्करो वामः सव्यश्चतुर एव च ॥ ९९ ॥

---

१. 'अर्धमतल्लि' क-ख. 'अर्धमत्तल्लिमादिशेत्' का. २. 'रेचकनिकुट्टके' क-ख.; 'रेचकनिकुट्टितम्' का. ३. 'नाभिमुखे'. ४. 'खटिकामुखौ' क-ख.; 'कटकामुखौ' का. ५. 'पादापविद्धकौ' का. ६. 'स्खलितं' क-ख. ७. 'वर्तितो' का. ८. 'हि' क-ख. ९. 'प्रवर्तितः' क-ख;. 'विवर्तितः' का.' १०. इतः प्रभृति श्लोकचतुष्टयं क-ख. पुस्तकयोर्नास्ति । 'ऊर्ध्वं जानु' का. ११. 'विधायाथ' का. १२. 'कटिग्रीवौ च रेचितौ' का. १३. 'दोलितो वामकः पादः' क-ख. १४. 'वलनाच्चैव' क-ख-का.

दक्षिणः कुट्टितः पादश्चतुरं तत्प्रकीर्तितम् ।
भुजङ्गत्रासितः पादो [1]दक्षिणो रेचितः करः ॥ १०० ॥
लताख्यश्च करो वामो [2]भुजङ्गाञ्चितकं भवेत् ।
विक्षिप्तं हस्तपादं [3]तु समन्ताद्यत्र दण्डवत् ॥ १०१ ॥
रे[4]च्यते तद्धि करणं ज्ञेयं दण्डकरेचितम् ।
वृश्चिकं [5]चरणं कृत्वा [6]द्वावप्यथ निकुट्टितौ ॥ १०२ ॥
विधातव्यौ करौ [7]तत्तु ज्ञेयं वृश्चिककुट्टितम् ।
सूचीं द[8]त्त्वापविद्धं च दक्षिणं चरणं न्यसेत् ॥ १०३ ॥
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते ।
अञ्चितः पृष्ठतः पादः कुञ्चितो[9]र्ध्वतलाङ्गुलिः ॥ १०४ ॥
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत् ।
अलपद्मः कटीदेशे [10]छिन्ना पर्यायशः कटी ॥ १०५ ॥
वैशाखस्थानकेनेह तच्छिन्नं करणं भवेत् ।
वृश्चिकं चरणं कृत्वा स्वस्तिकौ च करावुभौ ॥ १०६ ॥
[11]रेचितौ विप्रकीर्णौ च [12]करौ [13]वृश्चिकरेचितम् ।
बाहुशीर्षाञ्चितौ हस्तौ पादः पृष्ठाञ्चितस्तथा ॥ १०७ ॥
दूरसंनतपृष्ठं च वृश्चिकं तत्प्रकीर्तितम् ।
[14]आलीढं स्थानकं यत्र करौ वक्षसि रेचितौ ॥ १०८ ॥
ऊर्ध्वाधो विप्रकीर्णौ च व्यंसितं [15]करणं तु तत् ।
हस्तौ तु स्वस्तिकौ [16]पार्श्वे तथा पादौ निकुट्टितः ॥ १०९ ॥

---

१. 'रेचितो दक्षिणः' क-ख-का. २. 'भुजङ्गाञ्चितके' क-ख. ३. 'च' क-ख. ४. 'ख्यातेन' क-ख. ५. 'करणं' का. ६. 'द्वावप्यवनिकुट्टितौ' क-ख. ७. 'तद्धि' का. ८. 'कृत्वा' क-ख-का. ९. 'अर्धलताङ्गुलिः' क-ख. १०. 'छिन्नपर्यायशः कटीम्' (?) क-ख. ११. 'रेचितापसृतौ चैव' का. १२. 'कार्यौ' क-ख.; 'कार्यं' का. १३. 'वृश्चिकरेचिते' क-ख. १४. 'आलीढस्थानको' का. १५. 'तद्विदुर्बुधाः' का. १६. 'पादौ' क-ख.

यत्र तत्करणं ज्ञेयं बुधैः [1]पार्श्वनिकुट्टितम् ।
वृश्चिकं चरणं [2]कृत्वा पादस्याङ्गुष्ठकेन तु ॥ ११० ॥
ललाटे तिलकं कुर्याल्ललाटतिलकं [3]तु तत् ।
पृष्ठतः कुञ्चितं [4]कृत्वा व्यतिक्रान्तक्रमं ततः ॥ १११ ॥
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः ।
आद्यः [5]पादो नतः कार्यः सव्यहस्तश्च कुञ्चितः ॥ ११२ ॥
उत्तानो [6]वामपार्श्वस्थस्तत्कुञ्चितमुदाहृतम् ।
प्रलम्बिताभ्यां बाहुभ्यां यद्गात्रेणानतेन च ॥ ११३ ॥
अभ्यन्तरा[7]पविद्धं स्यात्तज्ज्ञेयं चक्रमण्डलम् ।
स्वस्तिकापसृतौ [8]पादावपविद्धक्रमौ यदा ॥ ११४ ॥
[9]उरोमण्डलको हस्त उरो[10]मण्डलिकं तु तत् ।
आक्षिप्तं [11]हस्तपादं च क्रियते यत्र वेगतः ॥ ११५ ॥
आक्षिप्तं [12]नाम करणं [13]विज्ञेयं तद्द्विजोत्तमाः ।
ऊर्ध्वाङ्गुलितलः पादः [14]पार्श्वेनोर्ध्वं प्रसारितः ॥ ११६ ॥
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते ।
पृष्ठतः प्रसृतः पादो द्वौ [15]तालावर्धमेव च ॥ ११७ ॥
[16]तस्य चैवानुगो हस्तः पुरतस्त्वर्गलं तु तत् ।
विक्षिप्तं हस्तपादं [17]च पृष्ठतः [18]पार्श्वतोऽपि वा ॥ ११८ ॥
एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम् ।
प्रसार्य कुञ्चितं पादं [19]पुनरावर्तयेद्द्रुतम् ॥ ११९ ॥

---

१. 'पार्श्वनिकुट्टकम्' क-ख.; 'पार्श्वनिकुट्टनम्' का. २. 'करणं' का. ३. 'च' का. ४. 'कुर्याददतिक्रान्तं समन्ततः' का. ५. 'पादोऽञ्चितः' का. ६. 'वामपार्श्वश्च'. ७. '°पविद्धा' का. ८. 'पादौ पादावर्धक्रमौ' क-ख-का. ९. 'उरोमण्डलकौ हस्तौ' क-ख.; 'उरोमण्डलिकौ'. १०. 'उरोमण्डलकं' क-ख-का. ११. '°पादौ तु क्रियेते' क-ख. १२. 'करणं नाम' क-ख-का. १३. 'तद्विज्ञेयं द्विजर्षभाः' का. १४. 'पार्श्वेणोर्ध्वं' का. १५. 'तलावूर्ध्वमेव च' क-ख.; 'तलावूर्धमेव च' का. १६. 'तस्यैव चानुगो हस्तः' ब.; 'तस्यैवानुगतो हस्तः' का. १७. 'तु' का. १८. 'ऽथवा' का. १९. 'पुर आवर्तयेद्रुतम्' क-ख.

प्रयोगवशगौ हस्तौ तदावर्तमुदाहृतम्[1] ।
कुञ्चितं पादमुत्क्षिप्य[2] पार्श्वात्पार्श्वं तु दोलयेत्[3] ॥ १२० ॥
प्रयोगवशगौ हस्तौ डो( दो ? )लापादं तदुच्यते[4] ।
आक्षिप्तं हस्तपादं च त्रिकं चैव[5] विवर्तयेत्[6] ॥ १२१ ॥
रेचितौ च तथा हस्तौ विवृत्ते करणे[7] द्विजाः ।
सूचीविद्धं विधायाथ त्रिकं तु विनिवर्तयेत् ॥ १२२ ॥
करौ च रेचितो कार्यौ विनिवृत्ते द्विजोत्तमाः ।
पार्श्वक्रान्तक्रमं[8] कृत्वा पुरस्तादथ पातयेत् ॥ १२३ ॥
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तं तदुच्यते[9] ।
पृष्ठतः कुञ्चितः पादो[10] वक्षश्चैव समुन्नतम् ॥ १२४ ॥
तिलके च करः स्थाप्यस्तन्निशुम्भितमुच्यते ।
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ॥ १२५ ॥
सर्वतो[11] मण्डलाविद्धं[12] विद्युद्भ्रान्तं तदुच्यते ।
अतिक्रान्तं क्रमं[13] कृत्वा पुरस्तात्संप्रसारयेत्[14] ॥ १२६ ॥
प्रयोगवशगौ हस्तावतिक्रान्ते प्रकीर्तितौ ।
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् ॥ १२७ ॥
द्वितीयो रेचितो हस्तो विवर्तितकमेव तत्[15] ।
कर्णेऽञ्चितः करो[16] वामो लताहस्तश्च दक्षिणः ॥ १२८ ॥
दोलापादस्तथा चैव गजक्रीडितके[17] भवेत् ।
द्रुतमुत्क्षिप्य चरणं पुरस्तादथ पातयेत् ॥ १२९ ॥
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते स्मृतौ[18] ।

---

१. 'तदावृत्तमुदाहृतम्' का. २. 'उत्क्षिप्तं' क-ख. ३. 'डोलयेत्' ब. ४. 'तदुक्तं दोलपादकम्' क-ख.; 'दोलपादं प्रकीर्तितम्' का. ५. 'चक्रपादं च' क-ख. ६. 'च परिवर्तयेत्' क-ख.; 'चैव विवर्तितम्' का. ७. 'विवृत्ते' क-ख. ८. 'पार्श्वजानुक्रमं' का. ९. 'पार्श्वक्रान्तमुदाहृतम्' का. १०. 'कुञ्चितौ पादौ' का. ११. 'हस्तौ च मण्डलाविद्धौ' का. १२. 'मण्डलाबद्धं' क-ख. १३. 'प्रतिक्रान्तं क्रयं' क-ख. १४. 'संप्रयोजयेत्' क-ख. १५. 'पुनश्च रेचयेद्धस्तं' का. १६. 'कर्णाञ्चितुकरो' क-ख. १७. 'गजक्रीडितकं' ब. १८. 'मतौ' ब.

पृ[1]ष्ठप्रसारितौ पादौ लतारेचितकौ करौ ॥ १३० ॥
समुन्न[2]तंसुरश्चैव गरुडप्लुतके भ[3]वेत्।
सूचीपादोन्नतं पार्श्वमेको वक्षःस्थितः करः ॥ १३१ ॥
द्वितीयश्चाञ्चितो ग[4]ण्डे गण्डसूची तदुच्यते।
ऊर्ध्वा[5]प[6]वेष्टितौ हस्तौ सूचीपादो विवर्तितः ॥ १३२ ॥
परिवृत्त[7]त्रिकं चैव परिवृत्तं तदुच्यते।
एकः समस्थितः पाद ऊरुर्पृ[8]ष्ठे स्थितोऽपरः ॥ १३३ ॥
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते।
पृष्ठप्रसारितः पादः किंचिदञ्चितजानु[9]कः ॥ १३४ ॥
यत्र प्रसारितौ बाहू तत्स्याद्गृध्रावलीनकम्।
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्ति[10]कस्थितौ ॥ १३५ ॥
संनतौ च तथा हस्तौ संनतं तदुदाहृतम्।
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि ॥ १३६ ॥
प्रयोगवशगौ हस्तौ तत्सूचि परिकीर्तितम्।
[11]अलपद्मः शिरोहस्तः सूचिपादश्च दक्षिणः ॥ १३७ ॥
यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः।
पादसूच्या यदा पा[12]दो द्वितीयस्तु प्रविध्यते ॥ १३८ ॥
[13]कटिवक्षःस्थितौ हस्तौ सूचीविद्धं तदुच्यते।
कृत्वोरुवलितं पादमपक्रान्तकमं न्यसे[14]त् ॥ १३९ ॥
प्रयोगवशगौ हस्तावपक्रान्तं तदुच्यते।
वृश्चिकं च[15]रणं कृत्वा रेचितौ च तथा करौ ॥ १४० ॥

---

१. '°तः पादः' का.; 'तं (?) पादौ' क-ख. २. '°तं शिरः' क-ख. ३. 'कं' ब. ४. '°ण्डौ' क-ख.; '°ण्डौ' का. ५. '°चि' क-ख-का. ६. '°वचेष्टितौ हस्तौ' का.; तदेतत्पद्यं क-खपुस्तकयोर्नास्ति. ७. '°त्तत्रिकश्चैव' का. ८. 'पार्श्वस्थितः परः' का. ९. '°कम्' ब. १०. '°कौ' क-ख. ११. 'वामः पादः शिरोदेशे' क-ख-का. १२. पादौ (?)' का. १३. 'कटीदेशस्थितौ' क-ख. १४. 'नयेत्' ब. १५. 'करणं' क-ख-का.

तथा त्रिकं विवृत्तं च मयूरल[1]लितं भवेत् ॥
अ[2]ञ्चितापसृतौ पादौ शिरश्च परिवाहितम् ।
रेचितौ च तथा[3] हस्तौ तत्सर्पितमुदाहृतम् ॥ १४१ ॥
नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् ।
क्षि[4]प्तविद्धकरं चैव दण्डपादं तदुच्यते ॥ १४२ ॥
अतिक्रा[5]न्तं क्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता तद्वि[6]द्याद्धरिणप्लुतम् ॥ १४३ ॥
दोला[7]पादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
परिवृ[8]त्तं त्रिकं चैतत्प्रेङ्खोलितकमुच्यते ॥ १४४ ॥
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली ।
बद्धाचारी तथा चैव नितं[9]म्बे करणे भवेत् ॥ १४५ ॥
दोलां[10]पादक्रमं कृत्वा हस्तौ तदनुगावुभौ ।
[11]रेचितौ घूर्णितौ वापि स्खलितं करणं न्यसेत् ॥ १४६ ॥
वामो वक्षःस्थितो हस्तः प्रोद्वेष्टिततलोऽपरः ।
अञ्चितश्चरणश्चैव प्रयोज्यः करिहस्तके ॥ १४७ ॥
एकस्तु रेचितो हस्तो लताख्यस्तु[12] तथापरः ।
प्रसर्पिततलौ पादौ प्रसर्पितकमेव तत् ॥ १४८ ॥
अलातं च पुरः कृत्वा द्वितीयं च[13] द्रुतक्रमम् ।
हस्तौ पादानुगौ चा[14]पि सिंहविक्रीडिते स्मृतौ ॥ १४९ ॥
पृष्ठप्र[15]सारितः पा[16]दस्तथा हस्तौ निकुञ्चितौ ।

१. '°ललिते' क-ख. २. 'अन्तरापसृतौ' क-ख. ३. 'करौ यत्र' का. ४. 'क्षिप्राविद्धकरं' ब.; 'क्षिप्रविद्धं करं' का. ५. '°क्रान्तक्रमं' ब. ६. 'विन्द्यात्' क-ख. ७. 'डोला' ब.; 'दोलापादं' क-ख. ८. 'वृत्तत्रिकं चैव तत्' ब. ९. 'नितान्तकरणे' क-ख. १०. 'दोलापादं क्रमं' क-ख.; 'दोलापादक्रमं' का. ११. 'रेचिताघूर्णितं वापि' क-ख. १२. 'च' का. १३. 'तद्द्रुतक्रमम्' क-ख. १४. 'वापि' क-ख. १५. '°प्रसर्पितः' क-ख.; 'पृष्ठः प्रसर्पितः' का. १६. 'कुञ्चितावर्तितौ करौ' का.

पुनस्तथैव कर्तव्यौ[1] सिंहाकर्षितके[2] द्विजाः ॥ १५० ॥
आक्षिप्तहस्त[3]माक्षिप्तपादमाक्षिप्तदेहकम् ।
उद्वृत्त[4]गात्रमित्येतदुद्वृत्तं[5] करणं स्मृतम् ॥ १५१ ॥
आक्षिप्तश्चरण[6]श्चैको हस्त[7]स्यैव वशानुगः ।
आनतं च तथा गात्रं तथोपसृतकं भवेत् ॥ १५२ ॥
दोला[8]पादक्रमं कृत्वा तलसंघट्टितौ[9] करौ ।
रेचयेच्च करं वामं तलसंघट्टिते सदा[10] ॥ १५३ ॥
एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः ।
तलाग्रसंस्थितः पादो जनिते करणे भवेत् ॥ १५४ ॥
जनितं करणं[11] कृत्वा हस्तौ चाभिमुखाङ्गुली ।
[12]शनैर्निपतितौ चैव ज्ञेयं तद्[13]वहित्थकम् ॥ १५५ ॥
करौ वक्षःस्थितौ कार्यावुरो निर्भुग्नमेव च ।
मण्डलं स्थानकं चैव निवेश[14]करणं तु[15] तत् ॥ १५६ ॥
तलसंचरपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
संनतं वलितं गात्रमेल[16]काक्रीडितं तु तत् ॥ १५७ ॥
करमावृत्तकरणमूरुपृष्ठेऽञ्चितं न्यसेत् ।
जङ्घाञ्चिता तथोद्वृत्ता ह्यूरू[17]द्वृत्तं तदुच्यते ॥ १५८ ॥
करौ प्रलम्बितौ कार्यौ शिरश्च परिवाहितम् ।
पादौ च वलिताविद्धौ मदस्खलितके द्विजाः ॥ १५९ ॥
पुरः प्रसारितः[18] पादः कुञ्चितो गमनोन्मुखः ।

---

१. 'कर्तव्यं' क-ख. २. 'सिंहकम्पितके' क-ख. ३. 'आक्षिप्तदेहमाक्षिप्तपादकम्' ब. ४. 'उद्वृत्त्य' क-ख. ५. 'उद्वृत्तं' क-ख. ६. 'चरणः कार्यो' क-ख-का. ७. 'हस्तस्यैव···चानुगः' क-ख.; 'हस्तौ तस्यैव चानुगौ.' ८. 'दोलापादं' क-ख. ९. 'संघटितौ' का. १०. 'तथा' का. ११. 'चरणं' क-ख. १२. 'निपातितौ' का. १३. 'तत्तु बहिस्त्रिकम्' क-ख. १४. 'निवेशं करणं' ब. १५. 'च' क-ख. १६. 'मनिकाक्रीडितं तु तत् ।' क-ख.; 'भवेत्' ब. १७. 'तदूरूवृत्तम्' का. १८. 'प्रसर्पितः' क-ख.

करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते ॥ १६० ॥
कर[1]मावर्तितं कृत्वा ह्यू[2]रूपृष्ठे निकुञ्चयेत् ।
ऊरुश्चैव तथा विद्धः [3]संभ्रान्तं करणं तु तत् ॥ १६१ ॥
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः ।
वक्षःस्थश्च करो वामो विष्कम्भे करणे भवेत् ॥ १६२ ॥
[4]पादावुद्धट्टितौ कार्यौ [5]तलसंघट्टितौ करौ ।
[6]नितम्बपार्श्वे कर्तव्यं बुधैरु[7]द्धट्टिते सदा ॥ १६३ ॥
[8]प्रयुज्यालातकं पूर्वं हस्तौ [9]चापि हि रेचयेत् ।
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते [10]सदा ॥ १६४ ॥
रेचितावञ्चितौ हस्तौ लोलितं वर्तितं [11]शिरः ।
[ [12]उभयोः पार्श्वयोर्यत्र [13]तल्लोलितमुदाहृतम् ॥ १६५ ॥
[14]स्वस्तिकापसृतौ पादौ [15]शिरश्च परिवाहितम् ।
[16]रेचितौ च तथा हस्तौ स्यातां नागापसर्पिते ॥ १६६ ॥ ]
निषण्णाङ्गस्तु चरणं प्रसार्य तलसं[17]चरम् ।
[18]उद्धाटितमुरः कृत्वा [19]शकटास्यं प्रयोजयेत् ॥ १६७ ॥
ऊर्ध्वाङ्गुलित[20]लैः पादस्त्रिपताकावधोमुखौ ।
हस्तौ शिरः [21]संनतं च [22]गङ्गावतरणं त्विति ॥ १६८ ॥
[ यानि [23]स्थानानि याश्चार्यो व्यायामे गदितानि तु ।

---

१. 'प्रावर्तिकं' क-ख. २. 'उरूपृष्ठे' (?) का. ३. 'संभ्रान्तकरणं' का. ४. 'पादावुद्धाटितौ' क-ख. ५. तिलसंघटितौ' क-ख. ६. 'नितम्बपार्श्वे कर्तव्यौ' का. ७. उद्धाटिते' क-ख. ८. 'प्रयुज्यातालकं' क-ख. ९. 'द्वावधिरेचितौ' का. १०. 'स्मृतौ' का. ११. 'स्यातां सामापसर्पिते' क-ख. १२. इतः प्रभृति सार्धं पद्यं क-ख-पुस्तकयोर्नास्ति. १३. 'ज्ञेयं लोलितकं बुधैः' का. १४. 'स्खलितासपितौ' का. १५. 'तथा हस्तौ च रेचितौ' का. १६. 'परिवाहितं शिरश्चैव कुर्यान्नागावसर्पिते' का. १७. '°संचयम्' क-ख. १८. 'उद्वाहितं' का. १९. 'शकटाख्यं' क-ख. २०. 'तलौ पादौ' का. २१. 'सकृत्तं च' क-ख. २२. 'रङ्गावतरणं' क-ख.; 'गङ्गावतरणं च तत्.' का. २३. इतः प्रभृति श्लोकचतुष्टयं क-ख-का-पुस्तकेषु नास्ति.

पादप्रचारस्तेषां तु करणानामयं भवेत् ॥ १६९ ॥
ये चापि नृत्तहस्तास्तु गदिता नृत्तकर्मणि ।
तेषां समासतो योगः करणेषु विभाव्यते ॥ १७० ॥
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ।
चरणश्चानुगश्चापि दक्षिणस्तु भवेत्करः ॥ १७१ ॥
चार्यश्चैव तु याः प्रोक्ता नृत्तहस्तास्तथैव च ।
सा मातृकेति विज्ञेया तद्भेदात्करणानि तु ॥ १७२ ॥
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम् ।
अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् ॥ १७३ ॥
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् ।
व्यंसितापस्रुतं सव्यं [1]हस्तमूर्ध्वं प्रसारयेत् ॥ १७४ ॥
प्रत्यालीढं ततः कृत्वा तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं [2]स्वस्तिकं ततः ॥ १७५ ॥
नितम्बं [3]करिहस्तं च कटिच्छिन्नं च योगतः ।
स्थिरहस्तो [4]भवेदेष त्वङ्गहारो हरप्रियः ॥ १७६ ॥
[5]तलपुष्पापविद्धे द्वे वर्तितं संनिकुट्टकम् ।
[ [6]प्रत्यालीढं ततः कृत्वा तथैव च निकुट्टकम् ॥ १७७ ॥]
[7]ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ।
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ॥ १७८ ॥
एष पर्यस्तको नाम ह्यङ्गहारो हरोद्भवः ।
अलपल्लवसूचीं च कृत्वा विक्षिप्तमेव च ॥ १७९ ॥
[8]आवर्तितं ततः कुर्यात्तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं तथाक्षिप्त[9]मुरोमण्डलमेव च ।
करिहस्तं कटिच्छिन्नं सूचीविद्धो भवेदयम् ॥ १८० ॥

---

१ 'ऊर्ध्वं हस्तं' का. २. 'स्वस्तिकाक्षिप्तमेव च' क-ख. ३. 'करिहस्तश्च कटिच्छिन्नं तथैव च' का. ४. 'भवेदेवमङ्गहारहरप्रियाः' क-ख. ५. 'तलपुष्पापविद्धे च वर्तितं संप्रसारयेत्' का. ६. एतत्पद्यार्धं क-ख-का-पुस्तकेषु नास्ति. ७. तदेतत्पद्यं का-पुस्तके नास्ति. ८. 'आरात्रिकं' क-ख. ९. 'उरोमण्डलकं तथा' का.

अपविद्धं तु करणं सूचीविद्धं तथैव च ।
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत् ॥ १८१ ॥
उरोमण्डलकौ हस्तौ कटिच्छिन्नं तथैव च ।
[1]अपविद्धोऽङ्गहारश्च विज्ञेयोऽयं प्रयोक्तृभिः ॥ १८२ ॥
करणं रं नूपुकृत्वा विक्षिप्तालातके पुनः ।
पुन[2]राक्षिप्तकं कुर्यादुरोमण्डलकं तथा ॥ १८३ ॥
नि[3]तम्बं करिहस्तं च कटिच्छिन्नं तथैव च ।
[4]आक्षिप्तकः स विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः ॥ १८४ ॥
उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः ।
पुनस्तेनैव योगेन वामपार्श्वे भवेदथ ॥ १८५ ॥
उरोमण्डलकौ हस्तौ नि[5]तम्बं करिहस्तकम् ।
[6]कर्तव्यं सकटिच्छिन्नं नृत्ते तद्घटिते सदा ॥ १८६ ॥
प[7]र्यायाद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ ।
कुञ्चितावञ्चितौ चै[8]वं ह्यूरूद्वृत्तं तथैव च ॥ १८७ ॥
[ च[9]तुरश्रं करं कृत्वा पादेन च निकुट्टकम् ।
[10]भुजंगत्रासितं चैव करं चोद्वेष्टितं पुनः ॥ १८८ ॥ ]
परिच्छिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु ।
करिहस्तं कटिच्छिन्नं विष्कम्भः परिकीर्तितः ॥ १८९ ॥
द[11]ण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि ।
व्यंसितं वामहस्तं च सह पादेन सर्पयेत् ॥ १९० ॥
[12]चतुरश्रं करं कृत्वा पादेन च निकुट्टकम् ।
भुजङ्गत्रासितं चैव करं चोद्वेष्टितं पुनः ॥ १९१ ॥

---

१. 'अपविद्धाङ्गहारस्तु विज्ञेयस्तत्प्रयोक्तृभिः ।' का. २. 'पुरा विक्षिप्तकं कुर्यात्' क-ख. ३. 'नितम्बः करिहस्तश्च' का. ४. 'आक्षिप्तकस्तु विज्ञेयः' का. ५. 'नितम्बः करिहस्तकः' का. ६. 'कर्तव्यः स कटिच्छेदो नृत्ते तद्घटिते बुधैः' का. ७. 'पर्यायोद्वेष्टितौ' का. ८. 'च ऊरूद्वृत्तं' का. ९. 'चतुरश्रं' ब-का. १०. 'भुजङ्गत्रासकं' का. ११. 'दण्डपादकरं' ब. १२. श्लोकोऽयं क-ख-का-पुस्तकेषु नास्ति.

निकुट्टकद्वयं कार्यमाक्षिप्तं [1]मण्डलोरसि।
[2]करिहस्तं कटिच्छिन्नं [3]कर्तव्यमपराजिते ॥ १९२ ॥
कुट्टितं करणं कृत्वा भुजंगत्रासितं तथा।
रेचितेन तु हस्तेन पताकं [4]हस्तमादिशेत् ॥ १९३ ॥
आक्षिप्तकं प्रयुञ्जीत [5]ह्युरोमण्डलकं तथा।
[6]लताख्यं सकटिच्छिन्नं विष्कम्भापसृते भवेत् ॥ १९४ ॥
[7]त्रिकं सुवलितं कृत्वा नूपुरं करणं तथा।
भुजंगत्रासितं सव्यं [8]तथा वैशाखरेचितम् ॥ १९५ ॥
आक्षिप्तकं ततः कृत्वा परिच्छिन्नं तथैव च।
[ बाह्यभ्रमरकं कुर्यादुरोमण्डलमेव च ॥ १९६ ॥
[9]नितम्बं करिहस्तं च कटिच्छेदं तथैव च। ]
मत्ताक्रीडो भवेदेष [10]ह्यङ्गहारो [11]हरप्रियः ॥ १९७ ॥
रेचितं हस्तपादं [12]तु कृत्वा वृश्चिकमेव च।
पुनस्तेनैव योगेन [13]वृश्चिकं संप्रयोजयेत् ॥ १९८ ॥
निकुट्टकं तथा चैव सव्यासव्य[14]कृतं क्रमात्।
[15]लताख्यः सकटिच्छेदो भवेत्स्वस्तिकरेचिते ॥ १९९ ॥
[16]पार्श्वस्वस्तिकपादौ च [17]कार्यं त्वर्धनिकुट्टकम्।
[18]द्वितीयस्य च पार्श्वस्य विधिः [19]स्यादयमेव हि ॥ २०० ॥

---

१. 'मण्डलोरसा' का. २. 'करिहस्तः कटिच्छेदः' का. ३. 'कर्तव्यस्त्वपराजिते' का. ४. 'पताकाहस्तमादिशेत्' का. ५. 'हि' इति का-पुस्तके नास्ति. ६. 'तालाख्यं सकटिच्छिन्नं' क-ख.; 'लताख्यं सकटिच्छेदं' का. ७. 'त्रिकं तु वलितं कृत्वा' का. ८. 'चरणं चैव रेचितम्' का.; 'वैशेषरेचितम्' (?) का. ९. 'नितम्ब' का. १०. 'हि' इति का-पुस्तके नास्ति. ११. 'भवेत् प्रियः' का. १२. 'च' का. १३. 'कृत्वा वृश्चिकमेव तु'(?) का. १४. 'कृतैः क्रमैः' का. १५. 'लताख्यं सकलच्छेदो भवेत्स्वस्वररेचिते' क-ख. १६. 'पार्श्वे तु स्वस्तिकं बुद्ध्वा कार्यं त्वथ निकुट्टकम्' का. १७. 'कार्यं त्वय्ये' क.; 'कार्यं त्वयोनिकुट्टकम्' ख. १८. 'द्वितीयस्तु' का. १९. '(व्या)स्यादयमेव हि' क-ख.; 'स्यादेष एव हि' का.

ततश्च कर[1]मावर्त्य ह्यू[2]रुपृष्ठे निपातयेत् ।
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव हि ॥ २०१ ॥
नितम्बं [3]करिहस्तं च कटिच्छिन्नं तथैव च ।
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीर्तितः ॥ २०२ ॥
वृश्चिकं [4]करणं कृत्वा लताख्यं हस्तमेव च ।
तमेव च करं भूयो नासाग्रे [5]संनिकुञ्चयेत् ॥ २०३ ॥
तमेवोद्वेष्टितं कृत्वा नितम्बं [6]परिवर्तयेत् ।
करिहस्तं कटिच्छिन्नं [7]वृश्चिकापसृते भवेत् ॥ २०४ ॥
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च ।
[8]कटिच्छिन्नं [9]च कर्तव्यं [10]सूचीविद्धं तथैव च ॥ २०५ ॥
नितम्बं [11]करिहस्तं चाप्युरोमण्डलकं तथा ।
[12]कटिच्छिन्नं ततश्चैव भ्रमरः स तु संज्ञितः ॥ २०६ ॥
मतल्लिकरणं कृत्वा कर[13]मावर्त्य दक्षिणम् ।
कपोलस्य प्रदेशे तु [14]कार्यं सम्यग्निकुञ्चितम् ॥ २०७ ॥
अपविद्धं [15]द्रुतं चैव [16]तलसंस्फोटसंयुतम् ।
[17]करिहस्तं कटिच्छिन्नं मत्तस्खलितके भवेत् ॥ २०८ ॥
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः [18]पदैः ।
[19]अञ्चितैर्वलितैर्हस्तै[20]स्तलसंघट्टितैस्तथा ॥ २०९ ॥
निकुट्टितं [21]च कर्तव्यमूरूद्वृत्तं तथैव च ।
करिहस्तं कटिच्छिन्नं मदाद्विलसिते भवेत् ॥ २१० ॥

---

१. 'आवृत्त्य' का. २. 'हि' इति ब-का-पुस्तकयोर्नास्ति. ३. 'नितम्बः' का. ४. 'चरणं' क-ख. ५. 'संनिवेशयेत्' का. ६. 'अथ वर्तयेत्' का. ७. 'वृश्चिकापसृतं भवेत्' क.; 'वृश्चिकापसृते भवेत्' ख.; 'वृश्चिके संप्रयोजयेत्' क. ८. 'परिच्छिन्नं च' क-ख. ९. 'तु' का. १०. 'सूचीपादं' क-ख-का. ११. 'करिहस्तश्च उरो' का. १२. 'कटिच्छेदं' का. १३. 'आवृत्य' का. १४. 'कर्तव्यं च निकुञ्चितम्' ब.; 'कर्तव्यं तु निकुञ्चितम्' का. १५. 'हृतं चैव' क-ख.; 'तथा चैव' का. १६. 'तलसंस्फोटितं तथा' का. १७. 'करिहस्तः कटिच्छेदो' का. १८. 'परैः' क-ख. १९. 'अविर्वै' (?) क-ख. २०. 'तलसंघट्टितैः' क-ख.; 'तलसंघटितैः' का. २१. 'प्रकर्तव्यं' क-ख.

[1]मण्डलस्थानकं कृत्वा तथा हस्तौ च रेचितौ ।
[2]उद्धट्टितेन पादेन [3]मतल्लिकरणं भवेत् ॥ २११ ॥
[4]आक्षिप्तं करणं चैवं [5]उरोमण्डलमेव च ।
[6]कटिच्छिन्नं तथा चैव भवेत्तु गतिमण्डले ॥ २१२ ॥
[7]समपादं प्रयुज्याथ [8]परिच्छिन्नं त्वनन्तरम् ।
आविद्धेन तु पादेन बाह्यभ्रमरकं तथा ॥ २१३ ॥
[9]वामसूच्या त्वतिक्रान्तं भुजङ्गत्रासितं तथा ।
[10]करिहस्तं कटिच्छिन्नं परिच्छिन्ने विधीयते ॥ २१४ ॥
शिरसस्तूपरि स्थाप्यौ स्वस्तिकौ वि[11]च्युतौ करौ ।
ततः सव्यं करं चापि गात्रमानम्य रेचयेत् ॥ २१५ ॥
पुनरुत्थापयेत्तत्र गात्रमुन्नम्य रे[12]चितम् ।
[13]लतारव्यौ च करौ कृत्वा वृश्चिकं संप्रयोजयेत् ॥ २१६ ॥
रेचितं करिहस्तं च भुजङ्गत्रासितं तथा ।
आक्षिप्तकं प्रयुञ्जीत स्वस्तिकं [14]पादमेव च ॥ २१७ ॥
[15]पराङ्मुखविधिर्भूय एव एवं भवेदिह ।
[16]करिहस्तं कटिच्छिन्नं परिवृत्तकरेचिते ॥ २१८ ॥
रेचितौ सह गात्रेण [17]ह्यपविद्धकरौ यदा ।
पुनस्तेनैव देशेन गात्रमुन्नम्य रे[18]चयेत् ॥ २१९ ॥
[ [19]कुर्यान्नूपुरपादं च भुजङ्गत्रासितं तथा ।
रेचितं मण्डलं चैव [20]बाहुशीर्षे निकुञ्चयेत् ॥ २२० ॥

---

१. 'मण्डले' क-ख. २. 'उद्घाटितेन' क-ख. ३. 'मतल्लीकरणं' का. ४. 'आक्षिप्तकरणं' का. ५. 'उरोमण्डलकं तथा' का. ६. 'कटिच्छेदं' का. ७. 'समं' क-ख. ८. 'परिच्छिन्नः' का. ९. 'वामसूचि' क-ख.; 'वामं सूच्या' का. १०. इतः प्रभृति श्लोकत्रयं का-पुस्तके नास्ति. ११. 'विधुतौ' क-ख. १२. 'रेचयेत्' क-ख. १३. 'लातख्यौ' (?) क-ख. १४. 'पदमेव च' का. १५. 'पराङ्मुखी विधिर्भूयादेवमेव भवेदिह' का. १६. 'करिहस्तः कटिच्छेदः' का. १७. 'ह्यापविद्धौ करौ' क-ख-का. १८. 'मण्डलम्' क-ख. १९. इतः प्रभृति सार्धश्लोकः क-ख-पुस्तकयोर्नास्ति. 'कार्यं' का. २०. 'बाहुशीर्षं' का.

ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ।]
करिहस्तं कटिच्छिन्नं कुर्याद्वै[2]शाखरेचिते ॥ २२१ ॥
आद्यं तु जनितं कृत्वा पादमेकं प्रसारयेत् ।
त[3]थैवालातकं कुर्यात्त्रिकं तु परिवर्तयेत् ॥ २२२ ॥
अञ्चितं वामहस्तं च गण्डदेशे निकुट्टयेत् ।
कटिच्छिन्नं तथा चै[4]वं परावृ[5]त्ते प्रयोजयेत् ॥ २२३ ॥
स्वस्तिकं करणं कृत्वा व्यंसितौ च करौ पुन[6]ः ।
अलातकं प्रयुञ्जीत ऊ[7]र्ध्वं जानु निकुञ्चितम् ॥ २२४ ॥
ऊ[8]र्ध्वसूची च विक्षिप्तमु[9]द्वृत्ताक्षिप्तके तथा ।
करिहस्तं क[10]टिच्छिन्नम[11]ङ्गहारे ह्यलातके ॥ २२५ ॥
निकुट्य वक्षसि करावूर्ध्वजानु प्रयोजयेत् ।
आ[12]क्षिप्तस्वस्तिकं कृत्वा त्रिकं तु परिवर्तयेत् ॥ २२६ ॥
उरोमण्डलकौ हस्तौ नित[13]म्बं करिहस्तकम् ।
कटिच्छिन्नं तथा चैव पार्श्वच्छेदे विधीयते ॥ २२७ ॥
सू[14]चीवामपदं दद्याद्विद्युद्भ्रान्तं च दक्षिणम् ।
दक्षिणेन पुनः सू[15]ची वि[16]द्युद्भ्रान्तं च वामकम् ॥ २२८ ॥
[[17]परिच्छिन्नं तथा चैव त्रिकं तु परिवर्तयेत् ।]
लताख्यं स[18]कटिच्छिन्नं विद्युद्भ्रान्तश्च स स्मृतः ॥ २२९ ॥
कृत्वा नूपुरपादं तु स[19]व्यवामौ प्रलम्बितौ ।
करौ पार्श्वे ततस्ताभ्यां विक्षिप्तं संप्रयोजयेत् ॥ २३० ॥

---

१. 'कटिच्छेदं' का. २. 'देशाख' ख. ३. 'तथैवालातलं' का. ४. 'चैव' क. ५. 'परावृत्तं' क-ख-का. ६. 'ततः' का. ७. 'दूर्ध्वं' क-ख. ८. 'अर्ध स्तव्यथ' क-ख.; 'अर्धसूचीव' का. ९. 'उद्धृता' का. १०. 'कटिच्छेदो लङ्गहारे ललातके' का. ११. 'अङ्गहार ह्यलातले' क.; 'अङ्गहार ह्यलातके' ख. १२. 'आक्षिप्तं' क-ख-का. १३. 'नितम्बकरिहस्तकः' का. १४. 'सूचीं' क-ख-का. १५. 'सूचीं' क-ख. १६. 'विद्युद्भ्रान्तश्च वामतः' का. १७. एतत्पद्यार्धं क-ख-पुस्तकयोर्नास्ति. १८. 'सकटिच्छेदं' का. १९. 'मथ (?) वामौ' क-ख.

ताभ्यां सूची तथा चैव त्रिकं तु परिवर्तयेत् ।
लताख्यं [1]सकटिच्छिन्नं कुर्याद्[2]उद्वृत्तके सदा ॥ २३१ ॥
[3]आलीढव्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत् ।
नूपुरश्चरणो वामस्तथालातश्च दक्षिणः ॥ २३२ ॥
तेनैवाक्षिप्तकं कुर्यादुरोमण्डलकौ करौ ।
करिहस्तं [4]कटिच्छिन्नमालीढे संप्रयोजयेत् ॥ २३३ ॥
हस्तं तु रेचितं कृत्वा पार्श्वमानम्य रेचयेत् ।
पुनस्तेनैव योगेन गात्र[5]मानम्य रेचयेत् ॥ २३४ ॥
[6][ कार्यं नूपुरपादं च भुजङ्गत्रासितं तदा । ]
रेचितं करणं [7]कार्यमुरोमण्डलमेव च ॥ २३५ ॥
[8]कटिच्छिन्नं तु कर्तव्यमङ्गहारे च रेचयेत् ।
नूपुरं [9]चरणं कृत्वा त्रिकं तु परिवर्तयेत् ॥ २३६ ॥
व्यंसितेन तु हस्तेन [10]त्रिकमेव विवर्तयेत् ।
[11]पादं चालातकं कृत्वा [12]सूचीमत्रैव योजयेत् ॥ २३७ ॥
करिहस्तं [13]कटिच्छिन्नं कुर्याद्[14]आच्छुरिते सदा ।
[15]रेचितस्वस्तिकौ पादौ [16]रेचितस्वस्तिकौ करौ ॥ २३८ ॥
कृत्वा विश्लेषमेवं तु तेनैव विधिना पुनः ।
[17]पुनरुत्क्षेपणं चैव रेचितैरेव कारयेत् ॥ २३९ ॥
[18]उद्वृत्ताक्षिप्तके चैव [19]ह्युरोमण्डलमेव च ।
[20]नितम्बकरिहस्तं च कटिच्छिन्नं तथैव च ॥ २४० ॥

---

१. 'सकटिच्छेदं' का. २. 'उद्वृत्तकैः' क-ख.; 'उद्वृतके' का. ३. 'आलीढं' क-ख. ४. 'कटिच्छेदं आलीढं' का. ५. 'उन्नम्य' का. ६. पद्यार्धमेतत् क-ख-पुस्तकयोर्नास्ति. ७. 'कुर्यात्' का. ८. 'कटिच्छेदस्तु कर्तव्यो ह्यङ्गहारे तु रेचिते' का. ९. 'करणं' का. १०. 'त्रिकं चैव निवर्तयेत्' का. ११. 'वामं' का. १२. 'सूचिते नैव' क-ख.; 'सूचीं तत्रैव योजयेत्' का. १३. 'कटिच्छेदं' का. १४. 'आच्छुरितं तथा' का. १५. 'रेचितौ' का. १६. 'रेचितौ' का. १७. 'रेचितैरिव' क-ख. १८. 'उद्वृत्ताक्षिकेनैव' क-ख.; 'उद्वृत्ताक्षिप्तकं चैव' का. १९. 'हि' इति नास्ति क-ख-पुस्तकयोः. २०. 'नितम्बकरिहस्तं च' क-ख.

[1]आक्षिप्तरेचितो ह्येष करणानां विधिः स्मृतः ।
[2]विक्षिप्तकरणं कृत्वा हस्तपादमुखानुगम् ॥ २४१ ॥
[3]वामसूचीसहकृतं विक्षिपेद्वामकं करम् ।
[4]वक्षःस्थाने भवेत्सव्यो वलितं त्रिकमेव च ॥ २४२ ॥
नूपुराक्षिप्तके चैव [5]ह्यर्धस्वस्तिकमेव च ।
नितम्बं करिहस्तं च [6]ह्युरोमण्डलकं तथा ॥ २४३ ॥
[7]कटिच्छिन्नं च कर्तव्यं संभ्रान्ते नृत्त[8]योक्तृभिः ।
[9]अपक्रान्तक्रमं कृत्वा व्यसितं हस्तमेव च ॥ २४४ ॥
कुर्यादुद्वेष्टितं चैव [10]ह्य[11]र्धसूची तथैव च ।
विक्षिप्तं [12] [13]सकटिच्छिन्नमुद्वृत्ताक्षिप्तके तथा ॥ २४५ ॥
करिहस्तं कटिच्छिन्नं कर्तव्यम[14]पसर्पिते ।
कृत्वा नूपुरपादं च द्रुतमाक्षिप्य च क्रमम् ॥ २४६ ॥
पादस्य चानुगौ [15]पादौ त्रिकं तु परिवर्तयेत् ।
निकुट्य करपादं चाप्युरोमण्डलकं पुनः ॥ २४७ ॥
[16]करिहस्तं कटिच्छिन्नं कार्यमर्धनिकुट्टके ।
द्वात्रिंशदेते संप्रोक्ता ह्य[17]ङ्गहारा द्विजोत्तमाः ॥ २४८ ॥
चतुरो रेचकांश्चापि [18]गदतो मे निबोधत ।
पादरेचक एकः स्याद्द्वितीयः कटिरेचकः ॥ २४९ ॥
[ [19]कररेचक[20]स्तृतीयस्तु चतुर्थः कण्ठरेचकः ।
रेचिताख्याः पृथग्भावे वलने चाभिधीयते ॥ २५० ॥

---

१. 'आक्षिप्तरेचकष्वेषः (?)' का. २. 'विक्षिप्तं' का. ३. 'वामसूचीकरं कृत्वा' का. ४. 'वक्षःस्थं च' का. ५. 'हि' इति नास्ति क-ख-पुस्तकयोः. ६. 'हि' इति नास्ति क-ख-पुस्तकयोः; 'स्यादुरोमण्डलं तथा' का. ७. 'कटिच्छेदश्च कर्तव्यः' क-ख. ८. 'नृत्तयेत्कृती' (?) क-ख.; 'उद्वृत्ताक्षिप्तकं चैव' का. ९. 'अपक्रान्तं' क-ख. १०. 'हि' इति नास्ति का-पुस्तके. ११. 'ह्यूर्ध्वसूची' क-ख. १२. 'विक्षिप्तं' क-ख. १३. 'सकटिच्छेदम्' का. १४. 'उपसर्पिते' क-ख-का. १५. 'हस्तौ' क-ख-का. १६. 'करिहस्तः कटिच्छेदः कार्यस्त्वर्धनिकुट्टके'. १७. 'तु' का. १८. 'एव' का. १९. इतः प्रभृति सार्धश्लोकषट्कं क-ख-पुस्तकयोर्नास्ति, पुस्तकद्वयेऽपि त्रुटिचिह्नं नास्ति. २०. 'कररेचः' का.

उद्वाहनात् पृथग्भावा[1]च्चलनाच्चापि रेचकः ।
पार्श्वात् पार्श्वे तु गमनं स्खलितैश्चलितैः पदैः ॥ २५१ ॥
[2]विविधैश्चैव पापस्य पादरेचक उच्यते ।
त्रिकस्योद्वर्तनं चैव कटीव[3]लनमेव च ॥ २५२ ॥
तथापि सर्पणं चैव कटीरेचक उच्यते ।
[4]उद्वर्तनः परिक्षेपो विक्षेपः [5]परिवर्तनम् ॥ २५३ ॥
विसर्पणं च हस्तस्य हस्तरेचक उच्यते ।
उद्वाहनं सन्नमनं तथा पार्श्वं च[6] सन्नतिः ॥ २५४ ॥
भ्रमणं चापि विज्ञेयो ग्रीवाया रेचको बुधैः ।
रेचकैरङ्गहारैश्च नृत्यन्तं वीक्ष्य शङ्करम् ॥ २५५ ॥
सुकुमारप्रयोगेण [7]नृत्यन्ती चैव पार्वतीम् ।
मृदङ्गभेरीपटहैर्झ[8]र्झाडिण्डिमगोमुखैः ॥ २५६ ॥
पणवैर्दर्दुरैश्चै[9]वं सर्वातोद्यैः [10]प्रमादितैः ।
दक्षयज्ञे विनिहते संध्याकाले महेश्वरः ॥ २५७ ॥
नानाङ्गहारैः प्रानृत्य[11]ल्लयतालवशानुगै[12]म् ।
[13]पिण्डीबन्धास्ततो दृष्ट्वा [14]नन्दिभद्रमुखा गणाः ॥ २५८ ॥
चक्रुस्ते [15]नाम पिण्डीनां [16]बन्धमासां सलक्षणम् ।
ई[17]श्वरस्येश्वरी पिण्डी नन्दिनश्चापि [18]पट्टसी ॥ २५९ ॥
चण्डिकाया भवेत्पिण्डी त[19]था वै सिंहवाहिनी ।
तार्क्ष्यपिण्डी भवेद्विष्णोः पद्मपिण्डी स्वयंभुवः ॥ २६० ॥

---

१. 'वलनात्'. २. 'विविधश्चैव' का. ३. 'चलनं' का. ४. 'उद्वर्तनं' का. ५. 'विक्षेपपरिवर्तनम्' का. ६. 'पार्श्वस्य' का. ७. 'नृत्यति स च पार्वती' का. ८. 'उंडा' क.; 'झञ्झ्या' ब.; 'भाण्ड' का. ९. 'दर्दुराद्यैश्च'. १०. 'नानातोद्यैः' का. ११. 'ननर्त' क-ख. १२. '°गैः' का. १३. 'डिण्डिमभ्रान्तितो' का. १४. 'नन्दी' क-ख-का. १५. 'नावानि' का. १६. 'बन्धांश्चैव सलक्षणान्' का. १७. 'ऐश्वरी वृषपिण्डी च' का. १८. 'या वृधी' क-ख.; 'पादसी' का. १९. 'तथैव' क-ख.

शक्रस्यैरावती पिण्डी झषा [1]स्यान्मन्मथस्य तु ।
शिखिपिण्डी कुमारस्य [2]रूपपिण्डी भवेच्छ्रियः ॥ २६१ ॥
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य [3]च ।
वारुणी च नदीपिण्डी [4]याक्षी स्याद्धनदस्य [5]तु ॥ २६२ ॥
हलपिण्डी [6]बलस्यापि सर्पपिण्डी [7]तु भोगिनाम् ।
[8]गाणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी ॥ २६३ ॥
त्रिशूलाकृतिसंस्थाना रौद्री [9]स्यादन्धकद्विषः ।
एवमन्यास्वपि तथा देवतासु यथाक्रमम् ॥ २६४ ॥
[10]वज्रभूताः प्रयोक्तव्याः पिण्डीबन्धाः सुचिह्निताः ।
[11]रेचका अङ्गहाराश्च पिण्डीबन्धास्तथैव च ॥ २६५ ॥
सृष्ट्वा भगवता [12]दत्तास्तण्डवे मुनये [13]तदा ।
[14]तेनापि हि ततः सम्यग् [15]गानभाण्डसमन्वितः ।
[16]नृत्तप्रयोगः [17]सृष्टो यः स ताण्डव इति स्मृतः ॥ २६६ ॥

ऋषय ऊचुः ।

यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः स्मृतः ।
[18]तस्मान्नृत्तं [19]कृतं ह्येतत्कं [20]स्वभावमपेक्षते ॥ २६७ ॥
न गीतकार्थ[21]संबद्धं न [22]चाप्यर्थस्य भावकम् ।
कस्मान्नृत्तं कृतं ह्येतद्गीतेष्वासारितेषु च ॥ २६८ ॥

[23]भरत उवाच ।

अत्रोच्यते न खल्वर्थं [24]कंचि[25]न्नृत्तमपेक्षते ।

---

१. 'ऊरुपिण्डी तु मान्मथी' का. २. 'ऊरुपिण्डी' क-ख. ३. 'तु' का. ४. 'यक्षा' क-ख. ५. 'च' का. ६. 'अथ' का. ७. 'च' क-ख. ८. 'गणेश्वरी' क-ख. ९. 'अन्तकद्विषः' का. १०. 'वज्रभूताः' इत्यादि पद्यं ब-पुस्तके नास्ति. ११. 'रेचिताः' का. १२. 'दत्ता ताण्डवे' क-ख.; 'दत्तस्ताण्डिने' का. १३. 'तथा' क-ख-का. १४. 'ताण्डिना' का. १५. 'गाकड (?)' क-ख. १६. 'नृत्यप्रयोगः' का. १७. 'संसृष्टो यस्ताण्डवमिति स्मृतः' क-ख. १८. 'कस्मात्' क-ख. १९. 'नृत्ते कृते' का. २०. 'तत्' का. २१. 'संबन्धो' का. २२. 'वाच्यार्थस्य' का. २३. क-ख-ब-पुस्तकेषु नास्ति. २४. 'स्नानके' क. २५. 'नृत्तं कंचित्' का.

किंतु शोभां [1]जनयतीत्यतो [2]नृत्तं प्रवर्तितम् ॥ २६९ ॥
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः ।
मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम् ॥ २७० ॥
विवाहप्रसवावाहप्रमोदाभ्युदयादिषु ।
विनोद[3]कारणं [4]चेति नृत्तमेतत्प्रवर्तितम् ॥ २७१ ॥
अतश्चैव [5]प्रतिक्षेपा[6]द्भुजासंघैः [7]प्रवर्तिताः ।
ये गीतकादौ युज्यन्ते सम्यङ्नृत्तविभागकाः ॥ २७२ ॥
देवेन [8]चापि संप्रोक्त[9]स्तण्डुस्ताण्डवपूर्वकम् ।
गीतप्रयोगमाश्रित्य [10]नृत्तमेतत्[11]प्रवर्त्यताम् ॥ २७३ ॥
[12]प्रायेण ताण्डवविधिर्देव[13]स्तुत्याश्रयो भवेत् ।
सुकुमारप्रयोग[14]श्च शृङ्गाररससंभवः ॥ २७४ ॥
तस्य [15]तण्डुप्रयुक्तस्य ताण्डवस्य विधिक्रिया ।
वर्धमानक[16]मासाद्य संप्रवक्ष्यामि लक्षणम् ॥ २७५ ॥
कलानां वृद्धिमासाद्य ह्यक्षराणां [17]च वर्धनात् ।
[18]वर्धनान्नर्तकीनां च वर्धमानकमुच्यते ॥ २७६ ॥
कृत्वा कुतपविन्यासं यथावद्द्विजसत्तमाः ।
[19]आसारितप्रयोगस्तु ततः कार्यः प्रयोक्तृभिः ॥ २७७ ॥
तत्र [20]तूपोहनं कृत्वा तन्त्री[21]गानसमन्वितम् ।
कार्यः प्रवेशो [22]नर्तक्या भाण्डवाद्यसमन्वितः ॥ २७८ ॥
विशुद्धकरणायां तु [23]जात्यां वाद्यं प्रयोजयेत् ।

---

१. 'जनयतामिति' क-ख. २. 'नृत्तमिदं स्मृतम्' का. ३. 'करणं' क-ख. ४. 'चैव' खा. ५. 'प्रतिक्षेपाः' का. ६. 'पूजासङ्घै' क-ख. ७. प्रकीर्तिताः' का. ८. 'वापि' का. ९. 'ताण्ड्यस्ताण्डवपूर्वकः' का. १०. 'नृत्यमेतत्' क-ख-का. ११. 'प्रनृत्यताम्' का. १२. 'सर्वोऽपि' क-ख. १३. 'स्तुत्यात्ययो (?)' क-ख. १४. 'तु' का. १५. 'ताण्ड्य' का. १६. 'मासोय' (?) क-ख. १७. 'तु' का. १८. 'लक्ष्यस्य बन्धनाच्चापि' का. १९. 'आसारितः' का. २०. 'रूपोहनं' क-ख.; 'चोपोहनं' का. २१. 'भाण्ड' का. २२. 'नर्तव्यस्ताण्ड' (?) क-ख. २३. 'यात्यांवाय' (?) क-ख.

[1]गीत्या वाद्यानुसा[2]रिण्या तस्याश्चारीं प्रयोजयेत् ॥ २७९ ॥
वैशाख[3]स्थानकेनेह [4]सर्वे रेचकचारिणी ।
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम् ॥ २८० ॥
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च ।
प्रणम्य देवताभ्यश्च[5] ततोऽभिनयमाचरेत् ॥ २८१ ॥
[6]यत्रा[7]भिनेयं गीतं स्यात्तत्र वाद्यं न योजयेत् ।
अङ्गहारप्रयोगे तु [8]भाण्डवाद्यं [9]विधीयते ॥ २८२ ॥
समं रक्तं विभक्तं च [10]स्फुटं शुद्धप्रहारजम् ।
नृत्ताङ्गग्राहि[11]वाद्यज्ञैर्वाद्यं योज्यं तु ताण्डवे ॥ २८३ ॥
प्रयुज्य गीत[12]वाद्ये तु निष्क्रामेन्नर्तकी ततः ।
अनेनैव विधानेन प्रविशन्त्यपराः [13]पृथक् ॥ २८४ ॥
अन्या[14]श्चानुक्रमेणाथ पिण्डीं बध्नन्ति [15]याः स्त्रियः ।
ताव[16]त्पर्यस्तकः कार्यो यावत्पिण्डी [17]न बध्यते ॥ २८५ ॥
[18]पिण्डीं बद्ध्वा ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः ।
[19]पिण्डीबन्धेषु वाद्यं [20]तु कर्तव्यमिह वादकैः ॥ २८६ ॥
पर्यस्तकप्रमाणेन चित्रौघकरणान्वितम् ।
[21]तत्रैवोपोहनं भूयः कार्यं पूर्ववदेव हि ॥ २८७ ॥
ततश्चासारितं भूयो [22]गायनस्तु प्रयोजयेत् ।
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी ॥ २८८ ॥
[23]गीतकार्थं त्वभिनयेद्द्वितीयासारितस्य तु ।

---

१. 'गीत्या वाद्यानुसर्पिण्या ततः' का. २. 'सारिण्याः' क-ख. ३. 'तालकेन' का. ४. 'सार्वे' क-ख. ५. 'तु' का. ६. 'अत्र' क-ख. ७. 'अभिनेयगीतं' का. ८. 'ताण्डवाद्यं' क-ख. ९. 'प्रयोजयेत्' का. १०. 'स्फुटयुद्धप्रहारजम्' क-ख. ११. '°काद्यज्ञैः' क-ख. १२. 'गीतमेवं तु' का. १३. 'पुनः' का. १४. 'चानुग्रहेणैव' क-ख. १५. 'ताः' का. १६. 'पर्यस्ततः' का. १७. 'प्रयुज्यते' का. १८. 'पिण्डीबद्धाः' क-ख. १९. 'पिण्डीषट्केषु' क-ख-का. २०. 'हि' क-ख-का. २१. 'अथोपवहनम्' का.; 'तत्रोपवहनं' ब. २२. 'गायनं तु' का. २३. 'गीतकार्थं' क-ख.; 'गीतकार्थप्रयोगश्च' का.

तदेव [1]च पुनर्वस्तु [2]भूयो नृत्तेन दर्शयेत् ॥ २८९ ॥
[3]आसारिते समाप्ते तु निष्क्रामेन्नर्तकी ततः ।
पूर्ववत्[4]प्रविशन्त्यन्याः प्रयोगः स्यात्स एव [5]हि ॥ २९० ॥
एवं पदे पदे कार्यो विधिरासारितस्य तु ।
[6]भाण्डवाद्ये कृते चैव तथा [7]गानकृतेऽपि च ॥ २९१ ॥
[8]एकं तु प्रथमं [9]युञ्ज्याद्द्वे द्वितीयं [10]तथैव च ।
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम् ॥ २९२ ॥
पिण्डीनां विधयश्चैव चत्वारः संप्रकीर्तिताः ।
पिण्डी [11]शृङ्खलिका चैव लताबन्धोऽथ भेद्यकः ॥ २९३ ॥
पिण्डीबन्धस्तु पिण्डत्वाद्गुल्म[12]शृङ्खलिका भवेत् ।
[13]जालोपनद्धा च लता सनृत्तो [14]भेद्यकः स्मृतः ॥ २९४ ॥
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयोन्तरे ।
मध्यमे च लताबन्धो ज्येष्ठे चैवाथ भेद्यकः ॥ २९५ ॥
पिण्डीनां [15]विविधा योनि[16]र्यन्त्रं भद्रासनं तथा ।
[17]शिक्षायोगस्तथा चैव [18]प्रयोक्तव्यः प्रयोक्तृभिः ॥ २९६ ॥
एवं प्रयोगः कर्तव्यो वर्धमाने [19]तपोधनाः ।
गीतानां छन्दकानां च भूयो वक्ष्याम्यहं [20]विधिम् ॥ २९७ ॥
[21]यानि वस्तूनि मुनयः सन्ति चाङ्गकृतानि तु ।
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः ॥ २९८ ॥
[22]तत्रावतरणं कार्यं [23]नर्तक्याः [24]सर्वभाण्डिकम् ।

---

१. 'तु' का. २. 'नाट्येनाभिप्रदर्शयेत्' क-ख.; 'नृत्तेनापि प्रयोजयेत्' का. ३. 'आसारितैः समाप्ते सु (तु ?)' क-ख.; 'आसारितसमाप्तौ च' का. ४. 'प्रविशेच्चान्या' का. ५. 'तु' का. ६. 'ताण्डवाद्ये' क-ख.; 'भाण्डवाद्यकृतश्चैव' का. ७. 'गानकृतोऽपि च' का. ८. 'एका तु' क-ख.; 'एकां तु' का. ९. 'युज्यात्' क-ख.; 'कुर्यात्' का. १०. 'तु वस्तुकम्' का. ११. 'शृङ्खलिता' का. १२. '°शृङ्खलिको' ब. १३. 'तालोपनद्धा प्रलता' ख. 'तालोपनद्धाश्च लताः' का. १४. 'भेदकः' का. १५. 'द्विविधो' का. १६. 'यज्ञं' का. १७. 'शिक्षाः कार्याः' का. १८. 'प्रयोक्तव्याः' का. १९. 'प्रयोक्तृभिः' का. २०. 'विधे' क-ख. २१. 'बद्धानि यानि' का. २२. 'यत्रा' का. २३. 'नर्तक्या' का. २४. 'सार्वभाण्डिकम्' का.

[1]क्षेपप्रतिक्षेपकृतं तन्त्री[2]गानसमन्वितम् ॥ २९९ ॥
प्रथमं त्वभिनेयं स्या[3]द्गीतके सर्ववस्तुकम् ।
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत् ॥ ३०० ॥
यो विधिः पूर्वमुक्तस्तु [4]नृत्ताभिनयवादिते ।
आसारितविधौ स स्याद्गीतानां [5]वस्तुकेष्वपि ॥ ३०१ ॥
[6]एवं वस्तुनिबद्धानां गीतानां च विधिः स्मृतः ।
श्रृणुताङ्गनिबद्धानां गीतानामपि लक्षणम् ॥ ३०२ ॥
य एव [7]वस्तुषु विधिर्नृत्ताभिनयवादिते ।
[8]तमेवाङ्गनिबद्धेषु च्छन्दकेष्वपि योजयत् ॥ ३०३ ॥
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च ।
[9]मुखे सोपोहने कुर्याद्वर्णानां वि[10]प्रकर्षतः ॥ ३०४ ॥
यदा गीतवशादङ्गं भूयो भूयो निवर्तते ।
तत्राद्यमभिनेयं स्याच्छेषं नृत्तेन योजयेत्[11] ॥ ३०५ ॥
त्रिपाणिलयसंयुक्तं तत्र वाद्यं प्रयोजयेत् ।
यथा लयस्तथा वाद्यं [12]कर्तव्यमिव वादकैः ॥ ३०६ ॥
[13]एवमेष विधिः कार्यो गीतेष्वासारिते[14]ष्वपि ।

---

१. 'छेदप्रतिक्षेप' **का.** २. '°गण' **क-ख.** ३. 'स्याद्गीताक (तकं?) कर्मवस्तुकम्' **क-ख.**; 'तु गीतके सर्ववस्तु तत्' **का.** ४. 'वृत्ताभिनय–' **का.** **का**-पुस्तके 'नित्यं नृत्ताभिनयवादिते' इत्यस्य स्थाने 'नृत्यनित्याभिनयवादिते' इति पाठभेदः । ५. 'वास्तुकेष्वपि' **क-ख**; 'वस्तु तेष्वपि' **का.** ६. 'एष वस्तुनिबन्धानां गीतकानां' **का.** ७. 'वस्तुकविधिः' **का.** ८. 'ताम्' (?) **क-ख.**; 'स सर्व एव कर्तव्यश्छन्दकेषु प्रयोक्तृभिः' **का.** ९. 'मुरे सापोहने' **क-ख.** 'मुखे सोपोहने' **का.** १०. 'विप्रकर्षकः' **का.** ११. 'यदा गीतवशादङ्गं भूयो भूयो निवर्तयेत्' इति '**का.** पुस्तकेऽधिकोऽत्र पाठः. १२. 'कर्तव्यं त्वङ्गसंश्रयम्' **का.** १३. अत्र ब-पुस्तके प्रक्षिप्तत्वेन, **का.** पुस्तके च मूलत्वेन सार्धश्लोकत्रयमधिकं वर्तते— 'तत्त्वं चानुगतं चापि ओघं च करणान्वितम् । स्थिरे तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ॥ भूयश्चोघः प्रयोक्तव्यस्त्वेष वाद्यगतो विधिः । छन्दोगीतकमासाद्य त्वङ्गानि परिवर्तयेत् ॥ एष कार्यो विधिर्नित्यं नृत्ताभिनयवादिते । यानि वस्तुनिबद्धानि तेषामन्ते ग्रहो भवेत् ॥ अङ्गानां तु परावृत्तावादावेव ग्रहो मतः ।' इति.
१४. '°षु च' **का.**

देवस्तुत्याश्रयं ह्येतत्सुकुमारं निबोधत ॥ ३०७ ॥
स्त्रीपुंसयोस्तु सं[1]लापो यस्तु कामसमुद्भवः ।
तज्ज्ञेयं सु[2]कुमारं हि शृङ्गाररससंभवम् ॥ ३०८ ॥
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः ।
तत्स[3]र्वं संप्रवक्ष्यामि तच्च मे शृणुत द्विजाः ॥ ३०९ ॥
अङ्गवस्तुनिवृत्तौ तु[4] यथा वर्णनिवृत्तिषु ।
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् ॥ ३१० ॥
य[5]त्तु संदृश्यते किंचिद्दंपत्योर्मदनाश्रयम् ।
नृ[6]त्तं तत्र प्रयोक्तव्यं प्र[7]हर्षार्थगुणोद्भवम् ॥ ३११ ॥
यत्र संनिहिते कान्ते ऋतुकालाभि[8]दर्शनम् ।
गीतकार्थाभिसंब[9]द्धं नृत्तं तत्रापि चेष्यते ॥ ३१२ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
यस्मि[10]न्नङ्गे तु युवतिर्न नृत्तं तत्र योजयेत् ॥ ३१३ ॥
स[11]खीप्रवृत्ते संलापे तथासंनिहिते प्रिये ।
नहि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ॥ ३१४ ॥
[ [12]दूत्याश्रयं यदा तु स्यादृतुकालादिदर्शनम् ।
औत्सुक्यचिन्तासंबन्धं [13]न नृत्तं तत्र योजयेत् ॥ ३१५ ॥ ]
यस्मिन्नङ्गे प्रसादं तु गृह्णीयान्नायिका क्रमात् ।
ततः प्रभृति नृत्तं तु शे[14]षेष्वङ्गेषु योजयेत् ॥ ३१६ ॥
देवस्तुत्याश्रय[15]कृतं यदङ्गं तु [16]भवेदथ ।
माहेश्वरैरङ्गहारै[17]रुद्धतैस्तत्प्रयोजयेत् ॥ ३१७ ॥
य[18]त्तु शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम् ।

---

१. 'संलापे' क-ख. २. 'स्वकृतारम्भि' का. ३. 'सर्वगीतकसंबन्धं' का. ४. 'च' का. ५. 'वस्तु' क-ख.; 'यत्र' का. ६. 'तत्र' नृत्तं का. ७. 'पुरुषार्थ' क-ख. ८. '°दिदर्शनम्' का. ९. 'संबन्धं' का. १०. 'अङ्गेषु' क-ख. ११. 'सखीप्रवृत्तसंलापे' क-ख.; 'संप्रवृत्तेऽथ संलापे' का. १२. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति. १३. 'नृत्तं तत्र प्रयोजयेत्' का. १४. 'शेषेऽप्यर्थेषु' क-ख. १५. '°गतं' का. १६. 'भवेदिह' का. १७. 'उद्यतैः' क-ख. १८. 'यत्र शृङ्गारसंबन्धं' का.

[1]देवीकृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् ॥ ३१८ ॥
चतुष्पदा [2]नर्कुटके खञ्जके [3]परिगीतके ।
विधानं संप्रवक्ष्यामि [4]भाण्डनृत्तविधिं प्रति ॥ ३१९ ॥
[5]खञ्जनर्कुटसंयुक्ता भवेद्या तु चतुष्पदा ।
पादान्ते संनिपाते तु तस्या भाण्डग्रहो [6]भवेत् ॥ ३२० ॥
या ध्रुवा छन्दसा युक्ता समपादा समाक्षरा ।
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् ॥ ३२१ ॥
कृत्वैकं [7]परिवर्तं तु [8]गानस्याभिनयस्य च ।
पुनः [9]पादनिवृत्तिं तु [10]भाण्डवाद्यैर्नियोजयेत् ॥ ३२२ ॥
अङ्गवस्तुनिवृत्तौ [11]तु वर्णान्तरनिवृत्तिषु ।
[12]तथोपस्थापने चैव भाण्डवाद्यं प्रयोजयेत् ॥ ३२३ ॥
येऽपि चान्तरमार्गा[13]स्तु [14]तन्त्रीवाक्करणैः कृताः ।
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे ॥ ३२४ ॥
महेश्वरस्य चरितं य इदं संप्रयोजयेत् ।
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥ ३२५ ॥
एवमेष विधिः सृष्टस्ताण्डवस्य [15]प्रयोक्तृभिः ।
भूयः किं कथ्यतामन्य[16]न्नाट्यवेदविधिं प्रति ॥ ३२६ ॥

इति श्री[17]भारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थोऽध्यायः ।

---

१. 'देवैः कृतैः' का. २. 'नकुटके' क-ख-का. ३. 'परिजातके' क-ख.; 'परिधानके' का. ४. 'भाण्डलाय' क-ख. ५. 'खञ्जनंकुटसंयुक्ता' (?) क-ख-का. ६. 'भवे' क-ख. ७. 'परिवृत्तं' क-ख. ८. 'नागस्याभिनयस्य च' क-ख.; 'गानस्याभिनये पुनः' का. ९. 'पादनिवृत्तौ तु' का. १०. 'भाण्डवाद्यं' का. ११. 'निवृत्तेन' का. १२. 'ततोऽवस्थापने' का. १३. 'स्युः' का. १४. 'तन्त्री वाक्षारणैः कृताः' क-ख. 'तन्त्र्या वा करणैः कृताः' का. १५. 'प्रयोगतः' का. १६. 'नाट्ययोगविधिं' का. १७. 'श्री' इति का-पुस्तके नास्ति.

पञ्चमोऽध्यायः ।

भरतस्य वचः श्रुत्वा नाट्यसंतानकारणम् ।
पुनरेवाब्रुवन्वाक्यमृषयो हृष्टमानसाः ॥ १ ॥
यथा नाट्यस्य [1]जन्मेदं जर्जरस्य च संभवः ।
विघ्नानां शमनं चैव देवतानां च पूजनम् ॥ २ ॥
[2]तदस्माभिः श्रुतं सर्वं गृहीत्वा चावधारितम् ।
निखिलेन यथातत्त्वमिच्छामो वेदितुं पुनः ॥ ३ ॥
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम् ।
यथा बुध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि ॥ ४ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति ॥ ५ ॥
पूर्वरङ्गं महाभागा [3]गदतो मे निबोधत ।
पादभागाः कलाश्चैव परिवर्तास्तथैव च ॥ ६ ॥
यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव [4]प्रयुज्यते ।
तस्मादयं पूर्वरङ्गो विज्ञेयो द्विज[5]सत्तमाः ॥ ७ ॥
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः ।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा ॥ ८ ॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्रपाणिस्तथा च [6]परिघट्टना ॥ ९ ॥
[7]संघोटना ततः कार्या [8]मार्गासारितमेव च ।
[9]ज्येष्ठमध्यकनिष्ठानि [10]तथैवासारितानि च ॥ १० ॥
एतानि [11]तु बहिर्गीतान्यन्तर्य[12]वनिकागतैः ।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च ॥ ११ ॥

---

१. 'वै जन्म' का. २. 'त्वत्तः श्रुतं गृहीतं च' का. ३. 'वदतो' क-ख. ४. 'प्रयोज्यते' का. ५. 'ऽत्र द्विजोत्तमाः' का. ६. 'परिवन्दना' क-ख. ७. 'संस्वोदना' क-ख. ८. 'मार्गसौरित एव च' क-ख.; 'मार्गोत्सारितमेव च' का. ९. 'ज्येष्ठमध्यकनिष्ठा च' का. १०. 'तथैवासारितक्रिया' का. ११. 'च' का. १२. 'जवनिका' क-ख.

[1]ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत् ।
[2]विघट्य वै यवनिकां [3]वृत्तपाठ्यकृतानि [4]तु ॥ १२ ॥
गीतानां [5]मद्रकादीनां [6]योज्यमेकं तु गीतकम् ।
वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥ १३ ॥
ततश्चोत्थापनं कार्यं [7]परिवर्तनमेव च ।
नान्दी [8]शुष्कावकृष्टा च रङ्गद्वारं तथैव च ॥ १४ ॥
चारी चैव ततः कार्या महाचारी तथैव च ।
[9]त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि ॥ १५ ॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ [10]द्विजाः ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ १६ ॥
कुतपस्य [11]तु विन्यासः प्रत्याहार इति स्मृतः ।
तथावतरणं प्रोक्तं गायकानां निवेशनम् ॥ १७ ॥
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः ।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः ॥ १८ ॥
वाद्यवृत्तिविभागार्थं [12]वक्त्रपाणिर्विधीयते ।
[13]तन्त्र्योजःकरणार्थं [14]तु भवेच्च परिघट्टना ॥ १९ ॥
तथा पाणिविभागार्थं भवेत्संघोटनाविधिः ।
तन्त्रीभाण्डसमायोगान्[15]मार्गासारितमिष्यते ॥ २० ॥
कालपातविभागार्थं भवेदासारितक्रिया ।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ॥ २१ ॥

---

१. 'ततश्च सर्वैकुतपैर्युक्तान्यन्यानि कारयेत्' का. २. 'विद्याद्यवैर्जवनिकां' क-ख.; 'विधाद्य वै यवनिकां' का. ३. 'वृत्त' का. ४. 'च' का. ५. 'मुद्रकादीनां' का. ६. 'एकं योज्यं तु' का. ७. 'परिवर्तकमेव च' का. ८. 'शुक्लावकृष्टे' क-ख.; 'शुष्कापकृष्टा' का. ९. 'त्रिगतं प्ररोचना च' क-ख. १०. 'तु च' ब-का. ११. 'स' क-ख. १२. 'वक्रवाणिः' (?) क-ख. १३. 'तन्त्रौज' क-ख.; 'तन्त्र्येजस्तरणार्थं' का. १४. 'च' क-ख. १५. 'मार्गोसारित' क-ख.

अतःपरं प्रवक्ष्यामि ह्युत्थापनविधिक्रियाम्[1][2] ।
यस्मादुत्थापयन्त्यादौ[3] प्रयोगं नान्दिपाठकाः ।
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम् ॥ २२ ॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्माच्च[4] परिवर्तनम् ॥ २३ ॥
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते[5] ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ २४ ॥

नान्दीपादानामन्तरेषु[6] चित्रे पूर्वरङ्गे वर्धमानं[7] प्रयोज्यं प्रागुक्तलक्षणम् । अन्ये तु गीतकप्रयोगादनन्तरं शुद्धे चित्रे पूर्वरङ्गे वर्धमानप्रयोगमिच्छन्ति ।

अत्र[8] शुष्काक्षरैरेव[9] ह्यवकृष्टा ध्रुवा यतः ।
तस्माच्छुष्कावकृष्टेयं[10] जर्जरश्लोकदर्शिका[11] ॥ २६ ॥
यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥ २७ ॥
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ।
रौद्रप्रचारणाच्चापि महाचारीति कीर्तिता ॥ २८ ॥
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः ।
यत्र कुर्वन्ति संजल्पं तच्चापि[12] त्रिगतं मतम्[13] ॥ २९ ॥
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया[14] ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥ ३० ॥
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम्[15] ।
बहिर्गीतविधौ[16] सम्यगुत्पत्तिं कारणं[17] तथा ॥ ३१ ॥

---

१. 'च' का. २. '°क्रियाः' क-ख. ३. 'अत्र' क-ख. ४. 'तु' का. ५. 'प्रवर्तते' का. ६. एष गद्यभागः का-पुस्तके नास्ति. ७. 'वर्तमानं' क-ख. ८. 'यत्र' का. ९. 'शुक्राक्षरैरेव' क-ख. १०. 'कृष्टेव' का. ११. 'दर्शका' क-ख.; '°दर्शिका' का. १२. 'तत्रापि' क-ख-का. १३. 'स्मृतम्' का. १४. 'व्युपक्रिया' क-ख. १५. 'हि' इति नास्ति क-ख-पुस्तकयोः. १६. 'विधो' क.; '°विधिः' ख. १७. 'करणं' का.

चित्रदक्षिणवृत्ते[1] तु सप्तरूपे प्रकीर्तिता[2] ।
सोपोहने सनिर्गीते[3] देवस्तुत्यभिनन्दिते ॥ ३२ ॥
नारदाद्यैस्तु[4] गन्धर्वैः सभायां देवदानवाः ।
निर्गीतं श्राविताः[5] सम्यग्लयतालसमन्वितम् ॥ ३३ ॥
तच्छ्रुत्वा तु सुखं[6] गानं देवस्तुत्यभिनन्दितम् ।
अभवन्क्षुभिताः सर्वे मात्सर्याद्[7]दैत्यराक्षसाः ॥ ३४ ॥
संप्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः ।
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् ॥ ३५ ॥
सप्तरूपेण[8] संतुष्टा देवाः कर्मानुकीर्तनात् ।
वयं[9] गृह्णीम निर्गीतं तुष्यामो[10]ऽत्रैव सर्वदा[11] ॥ ३६ ॥
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः ।
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् ॥ ३७ ॥
एते तुष्यन्ति निर्गीते दानवाः[12] सह राक्षसैः ।
प्रणश्यतु प्रयोगोऽयं कथं वा[13] मन्यते भवान् ॥ ३८ ॥
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ।
धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु ॥ ३९ ॥
किं तूपोहन[14]संयुक्तं धातुवाद्यविभूषितम् ।
भविष्यतीदं निर्गीतं सप्तरूपे[15] विधानतः ॥ ४० ॥
निर्गीतेनाव[16]नद्धाश्च दैत्यदानवराक्षसाः ।
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः ॥ ४१ ॥
एवं निर्गीतमेतत्तु[17] दैत्यानां स्पर्धया द्विजाः ।
देवानां बहुमानेन बहिर्गीतमिति[18] स्मृतम् ॥ ४२ ॥

१. 'चित्रदक्षिणव्यक्ते' क-ख.; 'चित्रदक्षिणवृत्तौ'. २. 'प्रवर्तिते' का. ३. 'सनिगीत' (?) क-ख. ४. 'च' का. ५. 'श्राविता' का. ६. 'समं' का. ७. 'माशर्या' (?) क-ख. ८. 'सत्यरूपेण' क-ख. ९. 'एवं' का. १०. 'तुष्याम' क-ख. ११. 'वै वयम्' का. १२. 'दानवैः' क-ख. १३. 'वै' का. १४. '°तूपहन' क-ख. १५. 'सप्तरूपो' क-ख.; 'सप्तरूप' का. १६. '°वबद्धाश्च' क-ख.; '°वबद्धास्तु' का. १७. 'एवं तु' का. १८. 'बहुगीतं' क-ख-का.

धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम् ।
वर्णालंकारसंयुक्तं प्रयोक्तव्यं बुधैरथ ॥ ४३ ॥
निर्गीतं गीयते यस्मादपदं वर्णयोजनात् ।
असूयया च देवानां बहिर्गीतमिदं[1] स्मृतम् ॥ ४४ ॥
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम् ।
उत्थापनादिकं यच्च तस्य कारणमुच्यते ॥ ४५ ॥
[2]आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति नित्यशः ।
वक्त्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः ॥ ४६ ॥
परिघट्टनायां तुष्टाः [3]स्युर्युक्तायां रक्षसां गणाः ।
सं[4]घोट्टनक्रियायां [5]तु तुष्यन्त्यपि च गुह्यकाः ॥ ४७ ॥
मार्गासारितमासाद्य [6]प्रीता यक्षा भवन्ति हि ।
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ॥ ४८ ॥
[7]वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः ।
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ॥ ४९ ॥
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने ।
नान्दीप्रयोगेऽथ कृते प्रीतो भवति चन्द्रमाः ॥ ५० ॥
युक्तायाम[9]वकृष्टायां प्रीता नागा भवन्ति हि ।
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ॥ ५१ ॥
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ।
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः ॥ ५२ ॥
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ।
[10]महाचार्यां प्रयुक्तायां तुष्टो [11]भूतगणो भवेत् ॥ ५३ ॥

---

१. 'इति' क-ख. २. 'आश्रवणायां' क-ख. ३. 'स्युः' इति त्रुटितं ब-पुस्तके. ४. 'संखोदन' क.; 'संखोटन' का. ५. 'च' का. ६. 'तुष्टा' का. ७. 'वर्धमान-प्रयुक्तेषु' का. ८. 'च' का. ९. 'अपकृष्टायां' का. १०. 'रङ्गप्रयोगमाचार्यं' क-ख.; 'रङ्गप्रयोगमाचार्ये' का. ११. 'भूतगणै' का.

[1]आश्रा[2]वणादिचार्यन्तमेतद्दैवतपूजनम् ।
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ॥ ५४ ॥
[3]येन तुष्यति यो देवो यस्य यन्मनसः प्रियम् ।
त[4]त्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ॥ ५५ ॥
सर्वदैवतपूजार्हं सर्वदैवतपूजनम् ।
[5]धर्म्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् ॥ ५६ ॥
[दै[6]त्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम् ।]
[7]ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि ॥ ५७ ॥
प्रयुज्य गीतकविधिं [8]वर्धमानमथापि च ।
[निर्गी[9]तानि सगीतानि पूर्वरङ्गकृतानि तु ॥ ५८ ॥
या विद्या यानि शिल्पानि या गतिर्यच्च चेष्टितम् ।
लोकालोकस्य जगतस्तदस्मिन् नाटकाश्रये ॥ ५९ ॥
निर्गीतानां सगीतानां वर्धमानस्य चैव हि ।]
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा ॥ ६० ॥
आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा ।
गुर्वक्षराणि जानीयात्पादे ह्येकादशाक्षरे ॥ ६१ ॥
चतुष्पदा भवेत्सा तु च[10]तुरश्रा तथैव च ।
चतुर्भिः संनिपातैश्च त्रिलया त्रियतिस्तथा ॥ ६२ ॥
परिवर्ताश्च [11]चत्वारः पाणयस्त्रय एव च ।
[12]जात्या चैव हि वि[13]श्लोकास्तांश्च तालेन योजयेत् ॥ ६३ ॥

---

१. ब-पुस्तकेऽत्र 'प्रत्याहारे यातुधानाः प्रीयन्ते सह पन्नगैः । तुष्यन्त्यप्सरसस्तत्र कृतेऽवतरणे द्विजाः । तुष्यन्त्यपि च गन्धर्वा आरम्भे' इति प्रक्षिप्तरूपेणाधिकं वर्तते. २. 'प्रत्याहारादि' का. ३. 'देवस्तुष्यति यो येन' का. ४. 'तदा' का. ५. 'धन्यं' क-ख-ब. ६. पद्यार्धमदः क-ख-पुस्तकयोर्नास्ति. ७. 'ध्रुवाविधानं' क-ख. ८. 'वर्धमानं तथैव च' का. ९. इतःप्रभृति श्लोकद्वयं क-ख-पुस्तकयोर्नास्ति, ब-पुस्तके तु 'या विद्या यानि शिल्पानि' इत्यादि पद्यं प्रक्षिप्तरूपेण वर्तमानम्. १०. 'चतुरस्रे' क-ख-का. ११. 'चत्वार आपणस्त्रय एव' क-ख. १२. 'जात्यां' का. १३. 'विश्लोकः' क.; 'विष्णुकः' ख.

[1]शम्या तु द्विकला कार्या तालो द्विकल एव च ।
पुनश्चैककला [2]शम्या संनिपातः कलात्रयम् ॥ ६४ ॥
एवमष्टकलः कार्यः संनिपातो विचक्षणैः ।
चत्वारः संनिपाताश्च[3] [4]परिवर्तः स उच्यते ॥ ६५ ॥
[5]पूर्वं स्थितलयः कार्यः परिवर्तो विचक्षणैः ।
तृतीये संनिपाते तु तस्य भाण्डग्रहो भवेत् ॥ ६६ ॥
एकस्मिन्परिवर्ते तु गते प्राप्ते द्वितीयके ।
कार्यं म[6]ध्यलये तज्ज्ञैः सूत्रधारप्रवेशनम् ॥ ६७ ॥
[7]पुष्पाञ्जलिं समादाय रक्षामङ्गलसत्कृताः ।
शुद्धवस्त्राः सुमनसस्तथा चाद्भुतदृष्टयः ॥ ६८ ॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
दीक्षिताः शुचयश्चैव प्रविशेयुः समं त्रयः ॥ ६९ ॥
भृङ्गारजर्जरधरौ भवेतां [8]पारिपार्श्वकौ ।
मध्ये तु [9]सूत्रभृत्ताभ्यां वृतः पञ्चपदीं व्रजेत् ॥ ७० ॥
पदानि पञ्च गच्छेयुर्ब्रह्मणो यजनेच्छया ।
[[10]सूचीं वामपदं दद्याद्विक्षेपं दक्षिणेन च ॥ ७१ ॥]
[11]त्रितालान्तरविष्कम्भमुत्क्षिपेच्चरणं शनैः ।
पार्श्वोत्थानोत्थितं[12] चैव तन्मध्ये पातयेत्पुनः ॥ ७२ ॥
[13]एवं विष्णुपदीं कृत्वा सूत्रधारः [14]सहेतरः ।
[15]सूचीवामपदं दद्याद्विक्षेपं दक्षिणेन [16]च ॥ ७३ ॥

---

१. 'शम्पा' क-ख. २. 'शम्पा' क-ख. ३. 'तु' का. ४. 'परिवर्तस्य' का. ५. 'पूर्वस्थितिलये' क-ख.; पूर्वस्थितिलयः' का. ६. 'मध्यलयं' का. ७. 'पुष्पाञ्जली' का. ८. 'पारिपार्श्विकौ' का. ९. 'सूत्रधृक्' का. १०. ब-पुस्तके वर्तमानस्य श्लोकार्धस्यास्य स्थाने क-ख-पुस्तकयोः 'पदानां चापि विक्षेपं व्याख्यास्याम्यनुपूर्वशः ।' का-पुस्तके च 'पादानां चापि विक्षेपं व्याख्यास्यामि यथाक्रमम्' इति वर्तते. ११. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति । 'त्रिकालान्तर' का. १२. '°त्थितश्चैव' का. १३. 'एवं पञ्चपदीं गत्वा' का. १४. 'सहेतरैः' का. १५. 'सूचीं' का. १६. 'तु' का.

पुष्पाञ्जल्यपवर्गश्च कार्यो ब्राह्मेऽथ मण्डले ।
[रङ्ग[1]पीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ॥ ७४ ॥]
ततः सललितैर्हस्तैर[2]भिवन्द्यः पितामहः ।
वन्द[3]नान्यथ कार्याणि त्रीणि हस्तेन भूतले ॥ ७५ ॥
कालप्रकर्ष[4]हेतोश्च[5] पादानां[6] प्रविभागतः ।
सूत्रधारप्रवेशाद्यो वन्दनाभिनयानुगः ॥ ७६ ॥
द्वितीयः परिवर्तस्तु कार्यो मध्यलया[7]श्रितः ।
ततः[8] परं तृतीये[9] तु मण्डलस्य प्रदक्षिणम् ॥ ७७ ॥
भवेदाचमनं चैव जर्जरग्रहणं तथा ।
उत्थाय मण्डलाच्चूर्णं[10] दक्षिणं पदं[11]मुद्धरेत् ॥ ७८ ॥
[12]वेधं तेनैव कुर्वीत विक्षेपं वामकेन च ।
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत् ॥ ७९ ॥
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य च[13] ।
इत्यनेन प्रकारेण[14] सम्यक्कृत्वा प्रदक्षिणम् ॥ ८० ॥
[15]भृङ्गारभृतमाहूय शौचं चापि समाचरेत् ।
यथान्यायं तु कर्तव्या तेन ह्याचमनक्रिया ।
आत्मप्रोक्षणमेवाद्भिः कर्तव्यं तु यथाक्रमम् ॥ ८१ ॥
प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः ।
संनिपाते समं ग्राह्यो[16] जर्जरो विघ्नजर्जरः ॥ ८२ ॥
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः ।
तृतीयः परिवर्तस्तु विज्ञेयो वै द्रुते लये ॥ ८३ ॥

१. श्लोकार्धमिदं क-ख-पुस्तकयोर्नास्ति. २. 'अभिवन्द्य पितामहम्' का. ४. 'अभिवादनानि' क-ख-का. ५. 'तु' क-ख. ६. 'पातानां' का. ७. 'लयाश्रयः' का. ८. 'अतः' का. ९. 'तृतीयस्तु मण्डपस्य' का. १०. 'मण्डलाचूर्णे' (?) क-ख. ११. 'पादं' क-ख-का. १२. 'तेनैव वेधं'. १३. 'तु' का. १४. 'विधानेन'. १५. 'भृङ्गारधारं' का. १५. 'संनिपातसमं ग्राह्यो' क-ख.; 'संनिपातसमग्राह्यो' का.

गृहीत्वा जर्जरं त्वष्टौ[1] कला जाप्यं[2] प्रयोजयेत् ।
वामवेधं[3] ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥ ८४ ॥
ततः पञ्चपदीं चैव गच्छेत्तु कुतपोन्मुखः ।
जर्जरग्रहणाद्योऽयं कुतपो[4] निगमान्तकः ॥ ८५ ॥
चतुर्थः परिवर्तस्तु कार्यो द्रुतलये[5] पुनः ।
करपातनिपातास्तु भवन्त्यत्र तु षोडश ॥ ८६ ॥
त्र्यश्रे[6] तु द्वादशपदा भवन्ति करपादयोः[7] ।
एवमुत्थापनं कार्यं[8] ततश्च परिवर्तनम् ॥ ८७ ॥
वन्दनान्यथ कार्याणि त्रीणि हस्तेन भूतके ।
आत्मप्रोक्षणमद्भिश्च त्र्यश्रेनै[9](णै)व विधीयते ॥ ८८ ॥
चतुरस्रं[10] लये मध्ये संनिपातैरथा[11]ष्टभिः ।
यस्यां लघूनि सर्वाणि केवलं नैधनं[12] गुरु[13] ॥ ८९ ॥
भवेदतिजगत्यां तु सा ध्रुवा [14]परिवर्तिनी ।
वार्तिकेन[15] तु मार्गेण वाद्येना[16]नुगतेन च ॥ ९० ॥
[ललितैः[17] पदै[18]विन्यासैर्वन्द्याद्देवान् यथादिशम् ।
द्विकलं पादपतनं पादचार्यां[19] गतं भवेत् ॥ ९१ ॥
वामपादेन वेधस्तु कर्तव्यो नृत्तयोक्तृभिः ।
द्वितालान्तरविष्कम्भो[20] विक्षेपो दक्षिणस्य चं[21] ॥ ९२ ॥
ततः पञ्चपदीं गच्छेदतिक्रान्तैः पदैरथ ।
ततोऽभिवादनं कुर्याद्देवतानां यथादिशम् ॥ ९३ ॥]

---

१. 'चाष्टौ' का. २. 'जप्यं' ब. ३. 'वामवेधस्ततः कार्यो विक्षेपो दक्षिणेन तु' का. ४. 'कुतपाभिमुखान्तगः' का. ५. 'विज्ञेयो वै द्रुते लये' का. ६. 'त्र्यस्रे द्वादशपाता हि' का.; 'शस्त्रे द्वादशपाता हि' ख.; 'त्र्यस्रे तु द्वादशपदा' का. ७. 'करपादजाः' का. ८. 'पद्यमेतत्' क-ख-पुस्तकयोर्नास्ति. ९. 'त्र्यश्रेनैव' ब.; 'त्र्यस्रेनैव' का. १०. 'चतुरश्रं' ब.; 'चतुरस्रे' का. ११. 'संनिपातस्तथाष्टभिः' का. १२. 'निधनं' का. १३. 'गुरुः' क-ख. १४. 'परिवर्तनी' ब. १५. 'वामकेन तु' का. १६. 'वाद्येन...तु सग्रहाः' क-ख. १७. 'इतःप्रभृति श्लोकत्रयी क-ख-पुस्तकयोर्नास्ति. १८. 'पादविन्यासैर्वन्द्या देवा' का. १९. 'पादचर्या विधीयते' का. २०. '°विष्टम्भो' का. २१. 'तु' का.

वन्देत प्रथमं पूर्वां दिशं शक्राधिदैवताम्[1] ।
द्वितीयां दक्षिणामाशां वन्देत यमदैवताम्[2] ॥ ९४ ॥
वन्देत पश्चिमामाशां ततो वरुणदैवताम्[3] ।
चतुर्थीम्[4]उत्तरामाशां वन्देत धनदाश्रयाम् ॥ ९५ ॥
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत् ।
दक्षिणेन च[5] कर्तव्यं विक्षेपपरिवर्तनम् ॥ ९६ ॥
प्राङ्मुखस्तु ततः कुर्यात्पुरुषस्त्रीनपुंसकैः[6] ।
त्रिपदीं[7] सूत्रभृद्रुद्रब्रह्मोपेन्द्राभिवादनम्[8] ॥ ९७ ॥
दक्षिणं तु पदं पुंसो वामं[9] स्त्रीपदम्[10]उच्यते ।
पुनर्[11]दक्षिणमेव स्यान्नाभ्युत्क्षिप्तं नपुंसकम् ॥ ९८ ॥
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम् ।
यस्यां[12] लघूनि कार्याणि केवलं नैधनं गुरु ॥ ९९ ॥
पादे त्वतिजगत्यां हि सा ध्रुवा परिवर्तनी ।
नपुंसकपदेनापि तथैवाम्बुजसंभवम् ॥ १०० ॥
परिवर्तनमेवं स्यात्तस्यान्ते प्रविशेत्ततः ।
चतुर्थकारः[13] पुष्पाणि प्रगृह्य विधिपूर्वकम् ॥ १०१ ॥
यथावत्तेन कर्तव्यं पूजनं जर्जरस्य तु ।
कुतपस्य[14] च सर्वस्य सूत्रधारस्य चैव हि ॥ १०२ ॥
तस्य भाण्डसमैः[15] कार्यस्तज्ज्ञैर्गति[16]परिक्रमः ।
न तत्र गानं कर्तव्यं तत्र स्तोभक्रिया[17] भवेत् ॥ १०३ ॥

---

१. '°देवताम्' क-ख-का. २. '°देवताम्' क-ख-का. ३. '°देवताम्' क-ख-का. ४. 'चतुर्थीं' क-ख. ५. 'तु' क-ख. ६. 'नपुंसकौ' क-ख. ७. 'त्रिपाद्या सूत्रधृक् रुद्रब्रह्मोपेन्द्राभिवन्दनम्' का. ८. '°भिवादिनीम्' क-ख. ९. 'नृणां' का. १०. 'स्त्रीणां प्रकीर्तितम्' का. ११. 'दक्षिणं तु पदं ज्ञेयं' का. १२. एतत्पद्यं क-ख-का-पुस्तकेषु नास्ति. १३. 'चतुष्प्रकार–' का. १४. 'भाण्डस्यैव च' का. १५. 'भाण्डगतः' का. १६. 'गीतिपरिक्रमः' क-ख-का. १७. 'स्नानक्रिया' क-ख.; 'स्तोभानां शुष्काक्षराणां क्रिया गानमित्यर्थः' इत्यभिनवभारती.

चतुर्थ[1]कारपूजां तु स कृत्वान्तर्हितो भवेत् ।
ततो गेहावकृष्टा तु चतुरस्रा स्थिरा[2] ध्रुवा[3] ॥ १०४ ॥
गुरुप्राया तु सा कार्या तथा चैवार्घ[4]पाणिका ।
स्थायिवर्णाश्रयोपेता[5] कलाष्टकविनिर्मिता[6] ॥ १०५ ॥
[7]चतुर्थं पञ्चमं चैव सप्तमं चाष्टमं तथा ।
लघूनि पादे पङ्क्त्यां तु सावकृष्टा ध्रुवा स्मृता ॥ १०६
सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः ।
नान्दीं[8] पदै[9]र्द्वादशभि[10]रष्टभिर्वाप्यलंकृताम् ॥ १०७ ॥
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा ।
जितं सोमेन[11] वै राज्ञा शिवं[12] गोब्राह्मणाय च ॥ १०८ ॥
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशा[13]स्त्वेमां महाराज पृथिवीं च ससागराम् ॥ १०९ ॥
राष्ट्रं प्रवर्धतां चैव रङ्गस्या[14]शा समृध्यतु ।
प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभावितः ॥ ११० ॥
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥ १११ ॥
नान्दीपदान्तरेष्वेषु ह्येवं[15]मस्त्विति नित्यशः ।
वन्देतां सम्यगुक्ताभिर्वाग्मिनौ पा[16]रिपार्श्वकौ[17] ॥ ११२ ॥
एवं नान्दी विधातव्या य[18]थावल्लक्षणान्विता ।
ततः शु[19]ष्कावकृष्टा स्याज्ज[20]र्जरश्लोकदर्शिका ॥ ११३ ॥

१. 'चतुर्थकारः' क-ख.; 'चतुष्प्रकारपूजां तु निष्क्रामेत् संप्रयुज्य हि' का. २. 'स्थिरा' क-ख-का. ३. 'धवा' (?) क-ख. ४. 'चैवावपाणिका'. ५. '°पेतां' क-ख-का. ६. '°विनिर्मिताम्' क-ख-का. ७. 'श्लोकोऽयं क-ख-का-पुस्तकेषु नास्ति. ८. 'नान्दी' का. ९. 'ततः' का. १०. 'अष्टाभिः' का. ११. 'सामेन (?)' क-ख. १२. 'आरोग्यं भोग एव च' का. १३. 'प्रशास्त्विमां' का. १४. 'रङ्गश्चायं समृद्ध्यताम्' का. १५. 'देवमायेति' क-ख. १६. 'गीर्भिस्तौ' का. १७. 'पारिपार्श्विकौ' ब. १८. 'यथोक्ता लक्षणैर्मया' का. १९. 'शुष्कापकृष्टा' का. २०. '°दर्शकाः' क-ख.; 'दर्शिता' का.

नव गुर्वक्षराण्यादौ षड् लघूनि गुरुत्रयम् ।
[1]शुष्कावकृष्टा तु भवेत्कला ह्यष्टौ प्रमाणतः ॥ ११४ ॥

यथा—[2]दिग्ले दिग्ले झण्टु झण्टु जम्बुकवलितक ते [3]तेन्नाम् ।

कृत्वा शुष्कावकृष्टां तु यथावद्द्विजसत्तमाः ।
ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ॥ ११५ ॥
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ।
[4]राज्ञो वा यत्र भक्तिः स्यादथवा [5]ब्राह्मणस्तवम् ॥ ११६ ॥
[6]गदित्वा जर्जरश्लोकं रङ्गद्वारे च [7]यः स्मृतः ।
[8]पठेदन्यं पुनः श्लोकं जर्जरस्य वि[9]नाशनम् ॥ ११७ ॥
जर्जरं [10]नमयित्वा तु ततश्चारीं प्रयोजयेत् ।
[11]पारिपार्श्वकयोश्च [12]स्यात्पश्चिमेनापसर्पणम् ॥ ११८ ॥
[13]अड्डिता चात्र कर्तव्या ध्रुवा [14]मध्यलयान्विता ।
चतुर्भिः संनिपातै[15]श्च [16]चतुरस्रा प्रमाणतः ॥ ११९ ॥
आद्यमन्त्यं चतुर्थं च पञ्चमं च तथा गुरु ।
[17]यस्यां ह्रस्वानि शेषाणि सा ज्ञेया [18]त्वड्डिता बुधैः ॥ १२० ॥
[19]अस्याः प्रयोगं वक्ष्यामि यथा पूर्वं महेश्वरः ।
सहोमया क्रीडितवान्नानाभावविचेष्टितैः ॥ १२१ ॥
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य जर्जरं च तुलाधृतम् ॥ १२२ ॥

---

१. 'कलाश्चाष्टौ प्रमाणेन पादैर्ह्यष्टादशाक्षरैः' का. २. 'दिह्ले दिह्ले दिह्ल दिह्ले जम्बूकवलितक ते ते च (?)' क-ख.; 'झण्डे झण्डे दिह्लग् दिग्ले जम्बुकवलितकत्तेत्तेनाम्' का. ३. 'ते तेजाः' ब., ४. 'राज्ञो भक्तिश्च यत्र स्यात्' का. ५. 'ब्रह्मणः स्तवः' का. ६. 'नन्दित्वा' का. ७. 'यत्स्मृतम्' बा. ८. 'पठेसाल' क.; 'पठेदस्य' ख. ९. 'प्रकाशनम्' का. १०. 'मानयित्वा' का. ११. 'पारिपार्श्विकयोश्च' ब. १२. 'पश्चिमा(मे?) नापि' क-ख.; १३. 'अडिता' क-ख. १४. 'मध्यलयाश्रिता' क-ख. १५. 'तु' का. १६. 'चतुरश्रा' ब.; 'चतुरस्रं' का. १७. 'यस्यां तु जायते पादे सा भवेदड्डिता ध्रुवा' का. १८. 'लड्डिता' क-ख. १९. 'अस्यां' क-ख.

वामपल्लवहस्तेन पादैस्तालान्तरस्थितैः ।
गच्छेत्पञ्चपदीं चैव [1]सविलासाङ्गचेष्टितैः ॥ १२३ ॥
वामवेधस्तु कर्तव्यो विक्षेपो [2]दक्षिणस्य च ।
[3]शृङ्गाररससंयुक्तां पठेदार्यां विचक्षणः ॥ १२४ ॥
चारीश्लोकं [4]गदित्वा तु कृत्वा च परिवर्तनम् ।
तैरेव च पदैः कार्यं [5]पश्चिमेनापसर्पणम् ॥ १२५ ॥
[6]पारिपार्श्वकहस्ते तु न्यस्य जर्जरमुत्तमम् ।
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि ॥ १२६ ॥
[7]चतुरस्रा [8]ध्रुवा [9]तत्र तथा द्रुतलयान्विता ।
चतुर्भिः संनिपातैश्च कला [10]त्वष्टौ प्रमाणतः ॥ १२७ ॥
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु ।
लघु शेषं [11]ध्रुवापादे चतुर्विंशतिके भवेत् ॥ १२८ ॥
[यथा—[12]पादतलाहतपातितशैलं क्षोभितभूतसमग्रसमुद्रम् ।
ताण्डवनृत्तमिदं प्रलयान्ते [13]पातु जगत्सुखदायि हरस्य ॥१२९॥]
भाण्डोन्मुखेन कर्तव्यं पादविक्षेपणं ततः ।
सूचीं [14]कृत्वा [15]पुनः कुर्याद्विक्षेपपरिवर्तनम् ॥ १३० ॥
अतिक्रान्तैः सललितैः [16]पादैर्द्रुतलयान्वितैः ।
त्रितालान्तर[17]मुत्क्षेपैर्गच्छेत्पञ्चपदीं ततः ॥ १३१ ॥
[तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च ।
[18]तत्रैव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् ॥ १३२ ॥

---

१. 'विलासाङ्गविचेष्टितैः' क-ख. २. 'दक्षिणेन तु' का. ३. 'ततः शृङ्गारसंयुक्तं पठेच्छ्लोकं विचक्षणः' का. ४. 'विदित्वा' का. ५. 'प्राङ्मुखेनापसर्पणम्' का. ६. 'पारिपार्श्विक-' ब.; 'पारिपार्श्वकयोर्हस्ते' का. ७. 'चतुरश्रा' ब. ८. '...वा तत्र' क-ख. ९. 'यत्र तथा द्रुतलयाश्रया' का. १०. 'ह्यष्टौ' ब. ११. 'ध्रुवायोगे त्रैष्टुभं चरणे तथा' का. १२. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १३. 'पातु हरस्य सदा सुखदायि' का. १४. 'दत्वा' का. १५. 'ततः' क-ख. १६. 'पादैर्द्रुतलयाश्रितैः' का. १७. 'उत्क्षिप्तैः' का. १८. 'सार्धं पद्यमेकं' क-ख-पुस्तकयोर्नास्ति.

पुनः पदानि त्रीण्येव गच्छेत्प्राङ्मुख [1]एव तु ।
ततश्च वामवेधः स्याद्विक्षेपो दक्षिणस्य च ॥ १३३ ॥
ततो रौद्ररसश्लोकं [2]पादसंहरणं पठेत् ।
तस्यान्ते तु त्रिपद्याथ व्याहरेत्[3]पारिपार्श्वकौ ॥ १३४ ॥
तयोरागमनं कार्यं गानं [4]नर्कुटकं बुधैः ।
तथा च भारतीभेदे त्रिगतं संप्रयोजयेत् ॥ १३५ ॥
विदूषकै[5]स्त्वेकपदां सूत्रधारस्मितावहाम् ।
असंबद्धकथाप्रायां कुर्यात्कथनिकां [6]ततः ॥ १३६ ॥
वितण्डां गण्डसंयुक्तां [7]नालीकं च प्रयोजयेत् ।
कस्तिष्ठति जितं केनेत्यादिकाव्यप्ररूपिणीम् ॥ १३७ ॥
[8]पारिपार्श्वि(र्श्व ?)कसंजल्पो विदूषकविदूषितः ।
स्थापितः सूत्रधारेण त्रिगतं संप्रयुज्यते ॥ १३८ ॥
[9]प्ररोचना च कर्तव्या सिद्धेनोपनिमन्त्रण[10]म् ।
रङ्गसिद्धौ पुनः काव्यं काव्यवस्तुनिरूपणम् ॥ १३९ ॥
[11]सर्वमेव विधिं कृत्वा सूचीवेधकृते[12]रथ ।
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः ॥ १४० ॥
[13]एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ।
[14]चतुरस्रो द्विजश्रेष्ठा[15]स्त्र्यस्रं वा विनिबोधत ॥ १४१ ॥]
अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि ।
[16]तालप्रमाणं विक्षिप्तं केवलं तु विशेषकृत् ॥ १४२ ॥

---

१. 'च' का. २. 'पदसंहरणां' क-ख-का. ३. 'पारिपार्श्विकौ' ब.; 'पारिपार्श्वकः' का. ४. 'नकुटकं' क-ख.; 'नकुटके' का. ५. '°त्रेकपदां' क-ख. ६. 'तथा' का. ७. 'नामिकां' का. ८. श्लोकोऽयं क-ख-का-पुस्तकेषु नास्ति. ९. 'प्ररोचने' क-ख.; 'प्ररोचनाथ' का. १०. '°पनिमन्त्रणा' का. ११. 'एवं' का. १२. '°कृतैरथ' का. १३. 'एवमेष' का. १४. 'चतुरश्रो' ब. १५. 'त्र्यस्रं वापि निबोधत' क-ख.; 'त्र्यस्रश्चापि निबोधत' का.; 'त्र्यश्रं वापि निबोधत' ब. १६. 'साल' क.; 'तालप्रमाण-संक्षिप्तं' का.

[1]शम्यां तु द्विकला कार्या तालो ह्येककलस्तथा।
पुनश्चैककला [2]शम्यां संनिपातः कलाद्वयम् ॥ १४३ ॥
अनेन हि प्रमाणेन कलाताललयान्वितः।
कर्तव्यः पूर्वरङ्गस्तु त्र्यस्रो[3]ऽभ्युत्थापनादिकः ॥ १४४ ॥
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु।
यस्यास्तु [4]जायते पादे सा त्र्यस्रोत्थापिनी [5]ध्रुवा ॥ १४५ ॥
वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च।
संक्षिप्तान्य[6]त्र कार्याणि [7]त्र्यस्रं नृत्तप्रवेदिभिः ॥ १४६ ॥
वाद्यगीतप्रमाणेन कुर्याद[8]ङ्गविचेष्टितम्।
विस्तीर्णमथ [9]संक्षिप्तं [10]द्विप्रमाणविनिर्मितम् ॥ १४७ ॥
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः।
[11]चतुरस्रे परावर्ते पाताः स्युः षोडशैव तु ॥ १४८ ॥
त्र्यस्रे [12]द्वादशपातास्तु भवन्ति करपादयोः।
एतत्प्रमाणं [13]विज्ञेयमुभयोः पूर्वरङ्गयोः ॥ १४९ ॥
केवलं [14]परिवर्ते तु [15]गमने त्रिपदी भवेत्।
दिग्वन्दने पञ्चपदी [16]चतुरस्रे विधीयते ॥ १५० ॥
आचार्यबुद्ध्या कर्तव्यस्त्र्यस्र[17]स्तज्ज्ञैः प्रमाणतः।
[18]तस्मान्न लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः ॥ १५१ ॥

---

१. 'शम्पा' क-ख.; 'शम्पाकृद् द्विकलः कार्यस्ताल एककलस्तथा' का. २. 'शम्या' क-ख. ३. 'त्र्यस्रोऽप्युत्थापनादिकः' ब. ४. 'जागते' ब. ५. 'त्र्यश्रोत्थापिनी' ब.; 'त्र्यस्रोत्थापनी' का. ६. 'एक' का. ७. 'त्र्यश्र' ब.; 'त्र्यस्रे' का. ८. 'कृतिविचेष्टितम्' का. ९. '°अथवा क्षिप्तं' क-ख. १०. 'प्रमाणं च विनिर्मितम्' का. ११. 'चतुरश्रे' ब.; 'चतुरस्रे परिक्रान्ते पादाः स्युः षोडशैव हि' का. १२. 'त्र्यस्रे' ब.; 'त्र्यस्रे तु द्वादशपदा भवन्ति करपादाजाः' का. १३. 'निर्दिष्टं' का. १४. 'क (के?) वलं' क-ख. १५. 'गगने'(?) का. १६. 'चतुरश्रे' ब. १७. 'त्र्यस्रस्तत्त्वैः' क-ख.; 'त्र्यस्रस्तज्ज्ञैः' ब. १८. 'तस्मात्तल्लक्षणं' क-ख.

[1]एवमेष प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः ।
त्र्यस्रश्च[2] चतुरस्रश्च शुद्धो भारत्युपाश्रयः ॥ १५२ ॥
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः ।
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ॥ १५३ ॥
वृत्ते[3] ह्युत्थापने विप्राः कृते च परिवर्तने ।
चतुर्थकारदत्ताभिः सुमनोभिरलंकृते ॥ १५४ ॥
उदात्तगानैर्गन्धर्वैः परिगीते[6] प्रमाणतः ।
देवदुन्दुभयश्चैव निनदेयुर्भृशं ततः ॥ १५५ ॥
शुद्धाः कुसुममालाभिर्विकिरेयुः समन्ततः ।
अङ्गहारैश्च देव्यस्ता उपनृत्येयुरग्रतः ॥ १५६ ॥
यस्ताण्डवविधिः प्रोक्तो नृत्ते पिण्डी समन्ततः ।
रेचकैरङ्गहारैश्च न्यासोपन्यासंयुतः ॥ १५७ ॥
नान्दीपदानां मध्ये तु एकैकस्मिन्पृथक्पृथक् ।
प्रयोक्तव्यो[9] विधिः सम्यक्चित्रभावमभीप्सुभिः ॥ १५८ ॥
एवं कृत्वा यथान्यायं शुद्धं[11] चित्रं प्रयत्नतः ।
[12]ततः परं प्रयुञ्जीत नाटकं लक्षणान्वितम् ॥ १५९ ॥
[[13]ततस्त्वन्तर्हिताः सर्वा भवेयुर्दिव्ययोषितः ।
निष्क्रान्तासु च सर्वासु नर्तकीषु ततः परम् ॥ १६० ॥
पूर्वरङ्गे प्रयोक्तव्यमङ्गजातमतः परम् ।
प्रस्तावनां कृतः कुर्यात्काव्यप्रख्यापनाश्रयाम् ॥ १६१ ॥

---

१. इतः प्रभृति श्लोकद्वयं का-पुस्तके नास्ति. २. 'त्र्यश्रश्च चतुरश्च' ब. ३. 'नृत्ये' क-ख. ४. 'चतुष्प्रकार' का. ५. '°रलंकृताः' क-ख. ६. 'परिणीते' क-ख.; 'परिगीतैः' का. ७. 'देव्यश्च वासापन्न्यासंयुताः' क-ख.; 'देव्यश्च व्यासापन्यासंयुताः' का. ८. अयं श्लोकः क-ख-का-पुस्तकेषु नास्त्येव । इतः पूर्वं श्लोकचतुर्थपादे 'व्यासापन्यास–' इत्यादि 'न्यासोपन्यास–' इत्यादि भवितुमर्हति. ९. 'बुधैः' क-ख. १०. 'चित्रो लक्षणसंयुतः' का. ११. 'शुद्धन्चित्रं' क-ख. १२. श्लोकार्धमेतत् का-पुस्तके नास्ति. १३. सार्धश्लोकोऽयं क-ख-पुस्तकयोर्नास्ति.

एवं शुद्धो भवेच्चित्रः[1] पूर्वरङ्गो विधानतः[2] ।
कार्यो नातिप्रसङ्गोऽत्र नृत्त[3]गीतविधिं प्रति ॥ १६२ ॥
गीतवाद्ये[4] च नृत्ते च प्र[5]वृत्तेऽतिप्रसङ्गतः ।
खेदो भवेत्प्रयोक्तॄणां प्रेक्षकाणां तथैव च ॥ १६३ ॥
खिन्नानां रसभावेषु स्पष्टता नोपजायते ।
ततः शेषप्रयोगस्तु न रागजनको भवेत् ॥ १६४ ॥
[ल[6]क्षणेन विना बाह्यलक्षणाद्विस्तृतं भवेत् ।
लोकशास्त्रानुसारेण तस्मान्नाट्यं प्रवर्तते ॥ १६५ ॥]
[7]त्र्यस्रं वा चतुरस्रं वा शुद्धं चित्रमथापि वा ।
प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुगः ॥ १६६ ॥
[दे[8]वपार्थिवरङ्गाणामाशीर्वचनसंयुताम् ।
कवेर्नामगुणोपेतां वस्तूपक्षेपरूपिकाम् ॥ १६७ ॥
लघुवर्णपदोपेतां वृत्तैश्चित्रैरलंकृताम् ।
अन्तर्यवनिकासंस्थः कुर्यादाश्रावणां ततः ॥ १६८ ॥
आश्रावणावसाने च नान्दीं कृत्वा ससूत्रधृत् ।
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः ।]
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ॥ १६९ ॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
प्रविश्य रङ्गं तैरेव सूत्रधा[9]रपदैर्व्रजेत् ॥ १७० ॥
स्थापकस्य प्रवेशे तु कर्तव्यार्थानुगा ध्रुवा ।
[10]त्र्यस्रा वा चतुरस्रा वा तज्ज्ञैर्मध्यलयान्विता ॥ १७१ ॥

---

१. 'चित्रं पूर्वरङ्गविधानतः' का. २. इतोऽग्रे का-पुस्तके 'एवमेषः प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः । त्र्यस्रश्च चतुरस्रश्च शुद्धो भारत्युपाश्रयः ॥ एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः । चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ॥' इति पद्यद्वयी समधिका. ३. 'गीतनृत्यविधिं' का. ४. 'गीते वाद्ये' का. ५. 'विबुधे' क-ख. ६. श्लोकोऽयं क-ख-का-पुस्तकेषु नास्ति. ७. 'त्र्यश्रं वा चतुरश्रं वा' ब. ८. 'सैषा श्लोकत्रयी' क-ख-का-पुस्तकेषु नास्ति. ९. 'सूत्रधारपदं' का. १०. 'त्र्यश्रा वा चतुरश्रा वा' ब.; 'चतुरश्राथवा त्र्यस्रा तत्र मध्यलयाश्रिता' का.

[1]कुर्यादनन्तरं चारीं देवब्राह्मणसंश(शंसि)नीम् ।
सुवाक्यमधुरैः श्लोकैर्[2]नानातालालयान्वितैः ।
प्रसाद्य रङ्गं विधिवत्कवेर्नाम [3]च कीर्तयेत् ॥ १७२ ॥
[[4]उद्घातकादि कर्तव्यं काव्योपक्षेपणाश्रयम् ।]
[5]दिव्ये दिव्याश्रयो भूत्वा मानुषे मानुषाश्रयः ॥ १७३ ॥
[[6]दिव्यमानुषसंयो[7]गे दिव्यो वा मानुषोऽपि वा ।
[8]मुखबीजानुसदृशं नानामार्गसमाश्रयम् ॥ १७४ ॥]
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् ।
प्रस्ताव्यैवं तु निष्क्रामेत्[9]काव्यप्रस्तावकस्ततः ॥ १७५ ॥
[10]एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ।
य इमं पूर्वरङ्गं तु विधिनैव [11]प्रयोजयेत् ॥ १७६ ॥
नाशुभं प्राप्नुयात्किंचित्स्वर्गलोकं च गच्छति ।
[12]यश्चापि विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ॥ १७७ ॥
प्राप्नोत्यपचयं घोरं तिर्यग्योनिं च गच्छति ।
न तथाग्निः प्रदहति प्रभञ्जनसमीरितः ॥ १७८ ॥
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ।
[13]इत्येषोऽवन्तिपाञ्चालदाक्षिणात्या[14]न्ध्र[15]मागधैः ॥ १७९ ॥
कर्तव्यः पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः ।
एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः ॥ १८० ॥
[16]भूयः किं कथ्यतां सम्यङ् नाट्यवेदप्रयोक्तृभिः ।
[ [17]पुनश्चित्रे तथा मिश्रे शुद्धे चैव ब्रवीम्यहम् ॥ १८१ ॥

१. 'कुर्यादन्तरचारीं च' क-ख-का. २. 'नानाभावरसान्वितैः' का. ३. 'कवेर्नामानुकीर्तयेत्' का. ४. पद्यार्धमेतत् क-ख-का-पुस्तकेषु नास्ति. ५. 'दिव्यो दिव्याश्रयैर्भूत्वा मानुषो मानुषाश्रयैः ।' का. ६. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ७. '°संयोगो' का. ८. 'मुखं' का. ९. 'काव्यप्रस्तावको द्विजः' का. १०. 'एवमेव' क-ख. ११. 'प्रपूजयेत्' का. १२. 'यश्चेयं' का. १३. 'इत्योषो'(?) ब.; 'इत्येवा–' का. १४. 'दाक्षिणात्योड्र' का. १५. '°मागधः' क-ख. १६. पद्यार्धमेतत् का-पुस्तके नास्ति. १७. इतःप्रभृत्यध्यायसमाप्तिं यावत् क-ख-पुस्तकयोः पाठो नास्ति। ब-पुस्तके च प्रक्षिप्तत्वेन वर्तन्ते श्लोका एते.

यथा योज्या ध्रुवाः पञ्च तथा वक्ष्यामि तत्त्वतः ।
[1]आदावुत्थापनी कार्या परिवर्तस्तथा भवेत् ॥ १८२ ॥
[2]अवकृष्टाङ्किता चैव विक्षिप्ता चैव पञ्चमी ।
एवं पञ्च ध्रुवा ज्ञेया उपोहनसमन्विताः ॥ १८३ ॥
कर्तव्यास्तु प्रयत्नेन पूर्वरङ्गे [3]प्रयोक्तृभिः ।
अतः परं प्रवक्ष्यामि [4]ह्युपोहनविधिक्रियाम् ॥ १८४ ॥
उत्थापनस्याष्टकलं परिवर्तस्य षट्कलम् ।
अवकृष्टं पुनः कार्यं कलाभिः पञ्चभिर्युतम् ॥ १८५ ॥
ध्रुवायामङ्कि[5]तायां च चतुष्कलमथापि [6]च ।
क्षिप्तायां चैव विज्ञेयं कलात्रयसमन्वितम् ॥ १८६ ॥
एवं ह्युपोहनानां तु प्रमाणं समुदाहृतम् ।
गुरुलाघवसंयुक्तं कलातालसमन्वितम् ॥ १८७ ॥
[7]पूर्वरङ्गं सदा ज्ञेयं [8]चित्रमार्गं ह्युपोहनम् ।
चित्रे चैत्राः कला ज्ञेया मिश्रे वार्तिकमाश्रिताः ॥ १८८ ॥
शुद्धे दक्षिणमार्गेण [9]प्रयोक्तव्याः प्रयोक्तृभिः ।
चतस्रो गीतयः कार्या मागधी ह्यर्धमागधी ॥ १८९ ॥
[10]संभाविता तथा चैव पृथुला च प्रकीर्तिता ।
मागधी [11]त्वथ कर्तव्या [12]त्वथवा त्वर्धमागधी ॥ १९० ॥
पूर्वरङ्गे भवेच्चित्रे [13]चित्रमार्गसमाश्रिता ।
यथा मिश्रस्तु योक्तव्यः [14]पूर्वरङ्गे भवेदिह ॥ १९१ ॥
मिश्रे संभाविता कार्या तदा वार्तिकमाश्रिता ।
शुद्धे च पृथुला कार्या दक्षिणं मार्गमाश्रिता ॥ १९२ ॥

---

१. 'उत्थापनी ततः कार्या परिवर्ता' का. २. 'अपकृष्टासिता चैव' का. ३. 'पूर्वरङ्ग-प्रयोक्तृभिः' का. ४. 'हि' इति नास्ति का-पुस्तके. ५. 'अङ्किकायां च' का. ६. 'वा' का. ७. 'पूर्वरङ्गे' का ८. 'चित्रमार्गे' का. ९. 'प्रयोक्तव्या' का. १०. 'संभावितं' का. ११-१२. 'तु' इति नास्ति का-पुस्तके. १३. 'चित्रमार्गे च मागधी' का. १४. 'पूर्वरङ्गो' का.

अतः परं प्रवक्ष्यामि गुरुलाघवतः क्रियाम् ।
उपोहनक्रियायां तु यथा योज्यं प्रयोक्तृभिः ॥ १९३ ॥
दिग्ले दिग्ले पुनः कार्यमन्ते झण्टुं[1] सदा बुधैः ।
मध्ये लघ्वक्षराणि स्युः षोडशैव तु नित्यशः ॥ १९४ ॥
एवं ह्युपोहनं कृत्वा तथा वस्तु समाचरेत् ।
उत्थापन्यां प्रयोगेऽस्मिन्[2] कलाकालसमन्वितम्[3] ॥ १९५ ॥
अक्षराणां कलायास्तु गुरुलाघवमेव च ।
पूर्वं तु कथितं यस्मात्तस्मान्नाभिहितं भवेत्[4] ॥ १९६ ॥
यथा—देवं विभुं त्रिभुवनाधिपतिं कैलासपर्वतगुहाभिरतम् ।
शैलेन्द्रराजतनयादयितं मूर्ध्ना नतोस्मि पुरनाशकरम्[5] ॥ १९७ ॥
एवमुत्थापनी कार्या[6] पूर्वरङ्ग[7]प्रयोक्तृभिः ।
अतोऽन्यत्परिवर्ताया लक्षणं संविधीयते ॥ १९८ ॥
अस्यास्तूपोहनं कार्यं षट्कलं परिसंख्यया ।
आदौ दिग्ले द्विरुक्तस्तु[8] अन्ते झण्टुं[9] सदा भवेत् ॥ १९९ ॥
मध्ये लघ्वक्षराण्येव द्वादशैव प्रयोजयेत् ।
वस्तुनोत्र प्रवक्ष्यामि गुरुलघ्वक्षरक्रमम् ॥ २०० ॥
द्वे चादौ[10] च चतुर्थं च अष्टमं दशमं तथा ।
चतुर्दशं पञ्चदशं पादे गुर्वक्षराणि तु ॥ २०१ ॥
सा ध्रुवा परिवर्ताख्या त्रिलया त्रियतिस्तथा ।
परिवर्तास्तुचत्वारः पाणयस्त्रय एव च ॥ २०२ ॥
चतुर्भिः संनिपातैस्तु द्वात्रिंशत्कलिकान्विता ।
पूर्वरङ्गे प्रयोक्तव्यः परिवर्तः प्रयोक्तृभिः ॥ २०३ ॥
यथा—चन्द्रार्धभूषणजटं वरं[11] वृषभकेतुं
कैलासपर्वतनिवासिनं[12] सुरवरिष्ठम् ।

---

१. 'झण्डं' का. २. 'प्रयोगोऽस्ति' का. ३. 'समन्वितः' का. ४. 'पुनः' का. ५. 'त्रिपुरान्तकरम्' का. ६. 'एवमुत्थापनी कार्या' का. ७. 'पूर्वरङ्गे' का. ८. 'त्रिरुक्तिस्तु' का. ९. 'झण्डं' का. १०. 'द्वौ पादौ' का. ११. 'परं वृषनिकेतनं' का. १२. 'निवासं' का.

शैलाधि[1]राजतनयाप्रियं प्रमथनाथं
मूर्ध्ना नतोऽस्मि त्रिपुरान्तकं परमयोगि[2][न]म् ॥ २०४ ॥

अ[3]वकृष्टामिदानीं तु कथ्यमानां निबोधत ।
अस्यास्तूपोहनं कार्यं कलाभिः पञ्चभिर्युतम् ॥ २०५ ॥

दिग्ले दिग्ले पु[4]नश्चान्ते झ[5]ण्टुमस्य प्रयोजयेत् ।
अष्टावेव तु कार्याणि मध्ये लघ्वक्षराणि तु ॥ २०६ ॥

तृ[6]तीयं चैव षष्ठे तु नवमैकादशे तथा ।
पादे पञ्चदशं चैव षोडशं च भवेद्गुरु ॥ २०७ ॥

अ[7]ष्टषष्टिगणैः पादैर[8]वकृष्टविधिर्बुधाः ।
चतुर्भिः संनिपातैश्च पाणिभिस्त्रिभिरेवच ॥ २०८ ॥

यथा—वरदं स[9]गणं त्रिपुरा[10]न्तकं वृषभकेतुं
गजचर्मपटं विषमेक्षणं भु[11]वननाथम् ।
भु[12]जगाभरणं जगतां हि[13]तं भुवनयोर्निं
प्रणतोऽस्मि भवन्तमुमापतिं त्[14]वसितकण्ठम् ॥ २०९ ॥

तृतीयं चैव षष्ठं च गुरु[15]पादे त्रयोदशम् ।
चतुर्गुणसमायुक्ता सा कार्या त्वड्डि[16]ता ध्रुवा ॥ २१० ॥

तत्राप्युपोहनं कार्यं चतुष्कलसमन्वितम् ।
अड्डितायाः प्रयोगज्ञैरन्ते झ[17]ण्टुं विभूषितम् ॥ २११ ॥

दिग्ले दिग्ले ततश्चैव का[18]र्यमन्ते सदा बुधैः ।
चत्वार्येव तु कार्याणि म[19]ध्ये लघ्वक्षराणि तु ॥ २१२ ॥

---

१. 'शैलराजतनयाप्रियं' का. २. 'परमयोगिनम्' का. ३. 'अप्रकृष्टा' का. ४. 'पुनश्चायं' का. ५. 'झण्डं' का. ६. 'तृतीयश्चैव षष्ठं तु' का. ७. 'अष्टषष्ठगुणैः' का. ८. 'अपकृष्टाविधिं' का. ९. 'सहगणं' का. १०. 'त्रिपुरान्तकरं' का. ११. 'त्रिभुवन-नाथं' का. १२. 'भुजङ्गाभरणं' का. १३. 'महितं' का. १४. का-पुस्तके 'तु' इति नास्ति. १५. 'पादत्रयोदशं' का. १६. 'खड्डिका' का. १७. 'झण्डविभूषितम्' का. १८. 'कार्यं मानं' का. १९. 'मध्यलघ्वक्षराणि तु' का.

यथा—प्रवरं[1] वरदं प्रणमत सततं गजचर्मपटं मुनिजनसहितम् ।
उमया[2] सहितं भुजगवलयिनं प्रणतोऽस्मि शिवं त्रिभुवनसंहितम्[3] २१३

प्रयोज्या त्वङ्किता[4] ह्येवं पूर्वरङ्गे यथार्थतः ।
अतःपरं प्रवक्ष्यामि विक्षिप्तायास्तु लक्षणम् ॥ २१४ ॥
तृतीयं चैव षष्ठं च नवमं दशमं तथा ।
गुर्वक्षराणि पादे तु यस्यां विक्षिप्तका तु सा ॥ २१५ ॥
दिग्ले[5] त्रिभिर्गुणैर्युक्ताः पाता[6]स्तस्य भवन्ति हि ।
त्रिकलं चापि निर्दिष्टमुपोहनमतः परम् ॥ २१६ ॥
दिग्ले दिग्ले पुनः कार्यमन्ते झण्टुं[7] प्रयोक्तृभिः ।
लघ्वक्षरैर्विहीनं तु विक्षिप्तोपोहनं भवेत् ॥ २१७ ॥

यथा—त्रिपुरान्तकरं बहुलीलं उमया[8] सहितं बहुरूपम् ।
भुजगाभरणं त्रिपुरान्तं[9] प्रणमामि सदा परमीशम् ॥ २१८ ॥

एवं सर्वा ध्रुवा[10] कार्या युग्मौजकृतगीतिकाः[11] ।
आचार्यबुध्या कर्तव्या पूर्वरङ्गे यथाविधि ॥ २१९ ॥
एवं वा कथितं सम्यक् पूर्वरङ्गे[12] त्रिधा मया ।
किमन्यत् संप्रवक्ष्यामि भूयोऽभीष्टं[13] द्विजोत्तमाः ॥ २२० ॥

इति श्री[14]भारतीये नाट्यशास्त्रे [15]पूर्वरङ्गविधानं नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

पूर्वरङ्गविधिं श्रुत्वा पुनराहुर्महत्तमाः ।
[16]भरतं मुनयः सर्वे प्रश्नान्[17] पञ्चाभिधत्स्व नः ॥ १ ॥

---

१. 'वरदं वरदं प्रणमं' का. २. 'उमया सहितं' इति त्रुटितं का-पुस्तके. ३. '°महितं' का. ४. 'ह्यङ्किता त्वेवं' का. ५. 'दिग्लैः' का. ६. 'पादाः' का. ७. 'झण्डं' का. ८. 'उमासहितं' का. ९. 'त्रिपुरान्तकं' का. १०. 'ध्रुवा' का. ११. '°गीतिका' का. १२. 'पूर्वरङ्गः' का. १३. 'यद्वामीष्टं' का. १४. 'श्री' इति नास्ति का-पुस्तके. १५. 'पूर्वः' इति नास्ति का-पुस्तके. १६. 'मुनयो भरतं सर्वे पञ्च प्रश्नान् प्रवीहि नः' का. १७. 'प्रश्नमेद्यं(?)वदस्व नः' क-ख.

ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः ।
रसत्वं केन वै[1] तेषामेतदाख्यातुमर्हसि ॥ २ ॥
भावाश्चैव[2] कथं प्रोक्ताः किं वा ते भावयन्त्यपि ।
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् ॥ ४ ॥
अहं वः[3] कथयिष्यामि निखिलेन तपोधनाः ।
संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम् ॥ ५ ॥
न शक्यमस्य[4] नाट्यस्य गन्तुमन्तं कथंचन ।
कस्माद्बहुत्वाद्भावानां शिल्पानां वाप्यनन्ततः[5] ॥ ६ ॥
एकस्यापि न वै शक्यमन्तं[6] ज्ञानार्णवस्य हि ।
गन्तुं[7] किं पुनरन्येषां ज्ञानानामर्थतत्त्वतः ॥ ७ ॥
किंत्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम्[8] ।
नाट्यस्यास्य प्रवक्ष्यामि रसभावादिसंग्रहम् ॥ ८ ॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥ ९ ॥
रसा भावा ह्यभिनया धर्मी[9] वृत्तिप्रवृत्तयः ।
सिद्धिस्वरास्तथातोद्यं[10] गानं रङ्गश्च[11] संग्रहः ॥ १० ॥
[उपचारस्तथा[12] विप्रा माण्डपश्चेति सर्वशः ।
त्रयोदशविधो ह्येष ह्यादिष्टो नाट्यसंग्रहः ॥ ११ ॥]
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः ।
सूत्रतः सा[13] तु विज्ञेया कारिकार्थप्रदर्शिनी[14] ॥ १२ ॥

---

१. 'वा' का. २. 'भावाश्चैव हि ये प्रोक्ताः किं वा ते भावयन्ति हि' 'भावाश्चापि कथं प्रोक्ताः किं च ते भावयन्ति हि' क-ख. ३. 'च' क-ख-का. ४. 'इय' का. ५. 'चाप्यनन्ततः' का. ६. '°मन्तकाना(?)' का. ७. 'गन्तुं पुनः किं सर्वेषां भावानाम्'. ८. '°गूढार्थं' का. ९. 'धर्मिवृत्तिप्रवृत्तयः' का. १०. 'सिद्धिः' ब. ११. 'रङ्गस्य' क-ख.; 'रङ्गं च' का. १२. पद्यमिदं क-ख-का-पुस्तकेषु नास्त्येव. ब-पुस्तकेऽपि प्रक्षिप्तत्वेन वर्तते. १३. 'सानुमन्तव्या' क-ख. १४. 'प्रयोगिनी' का.

नानानामाश्रयोत्पन्नं निर्घण्टु[1]निगमान्वितम् ।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥ १३ ॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकः[2] ।
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते[3] ॥ १४ ॥
संग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः[4] ।
विस्तरं तस्य वक्ष्यामि सनिरुक्तं[5] सकारिकम् ॥ १५ ॥
शृङ्गारहास्यकरुणा[6] रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ[7] चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ १६ ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ।
पुनश्च भावान्वक्ष्यामि स्थायिसंचारिसत्त्वजान् ॥ १७ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ १८ ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः[8] ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १९ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ २० ॥
सुप्तं विबोधो[9]ऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ २१ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ २२ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गो[10]ऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ २३ ॥

---

१. 'निघण्टुं' क-ख-का. २. '°सूचकम्' का. ३. 'तद्विदुर्बुधाः' का. ४. 'द्विजोत्तम' क-ख. ५. 'सनिरक्तं' क. ६. '°करुणरौद्र' का. ७. 'संज्ञाश्चे–' क-ख. ८. 'मदश्रमः' ब. ९. 'प्रबोधो' का. १०. 'स्वरसादो' का.

आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा ।
चत्वारोऽभिनया ह्येते वि[1]ज्ञेया नाट्यसंश्रयाः ॥ २४ ॥
लोकधर्मी नाट्यधर्मी ध[2]र्मीति द्विविधः स्मृतः ।
भारती सात्वती चैव कैशिक्यारभटी तथा ॥ २५ ॥
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् ।
आवन्ती दाक्षिणात्या च तथा चैवो[3]ड्रमागधी ॥ २६ ॥
प[4]ञ्चालमध्यमा चेति विज्ञेयास्तु प्रवृत्तयः ।
दै[5]विकी मानुषी चै[6]व सिद्धिः स्याद्द्विविधैव तु[7] ॥ २७ ॥
शा[8]रीराश्चैव वैणाश्च सप्त षड्जादयः स्वराः[9] ।
ततं चैवावनद्धं च घनं सुषिरमेव च ॥ २८ ॥
चतुर्विधं च[10] विज्ञेयमातोद्यं लक्षणान्वितम् ।
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् ॥ २९ ॥
घनस्तु तालो विज्ञेयः सुषिरो वंश एव च ।
प्रवेशाक्षेपनि[11]ष्क्रामप्रासादिकमथान्तरम् ॥ ३० ॥
गानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम्[12] ।
[13]चतुरस्रो विकृष्टश्च रङ्गस्त्र्य[14]स्रश्च कीर्तितः ॥ ३१ ॥
एवमेषोऽल्पसूत्रार्थो निर्दिष्टो नाट्यसंग्रहः ।
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ॥ ३२ ॥

तत्र रसानेव तावदादा[15]वभिव्याख्यास्यामः । नहि रसादृते [16]कश्चिदर्थः प्रवर्तत इति ।

---

१. 'येषु नाट्यं प्रतिष्ठितं' क-ख. २. 'धर्मी तु' का. ३. '°न्ध्रमागधी' क-ख. '°ढ्रमागधी' ब. ४. 'पाञ्चाली मध्यमा चैव ज्ञेया नाट्यप्रवृत्तयः।' का. ५. 'दैवीति' क-ख. ६. 'चेति' क-ख. ७. 'च' का. ८. 'शारीरा वैणवाश्चैव' का. ९. 'निषादर्षभगान्धारमध्यपञ्चमधैवताः' इति पद्यार्धमधिकं ब-पुस्तकेऽत्र. १०. 'तु' क-ख. ११. 'निष्कामप्रासारिकमथापरम्' का. १२. इतोग्रे ब-पुस्तके—'उत्तमाधममध्या च प्रकृतिस्त्रिविधा स्मृता। बाह्याभ्यन्तरसंभूतमुपचारद्वयं भवेत् ॥' इति श्लोकोऽधिकः प्रक्षिप्तत्वेन. १३. 'चतुरश्रो' ब. १४. 'त्र्यश्रश्च' ब. १५. 'अभिधास्यामः' का. १६. 'कश्चिदप्यर्थः' का.

[1]तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ।

को [2]दृष्टान्तः । अत्राह—यथा हि[3] नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिर्भवति[4], [5]यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनै[6]रोषधिभिश्च षाडवादयो रसा निर्वर्तन्ते, तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति[7] । [8]अत्राह—रस इति कः पदार्थः । उच्यते[9] । आस्वाद्यत्वात् । [10]कथमास्वाद्यते रसः । [11]यथा हि[12] नानाव्यञ्जनसंस्कृतमन्नं[13] भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चा[14]धिगच्छन्ति तथा नानाभावाभिनय[15]व्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः, [16]हर्षादींश्चाधिगच्छन्ति तस्मान्नाट्यरसा [17]इत्यभिव्याख्याताः । अत्रानुवंश्यौ श्लोकौ भवतः—

यथा बहुद्रव्य[18]युतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना [19]भक्तं भक्तविदो जनाः ॥ ३३ ॥
भावाभिनयसंबद्धान्[20]स्थायिभावांस्तथा बुधाः ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥ ३४ ॥

अत्राह [21]किं रसेभ्यो भावानामभिनिर्वृत्ति[22]रुताहो भावेभ्यो रसानामिति । [23]उच्यते केषांचिन्मतं परस्परसंबन्धादेषा[24]मभिनिष्पत्तिरिति । तन्न । कस्मात् ।

---

१. 'तत्र' इति **का**-पुस्तके नास्ति. २. 'को वा दृष्टान्त इति चेत् । उच्यते' **का.** ३. 'हि' इति **क-ख-का**-पुस्तकेषु नास्ति. ४. 'भवति' इति **क-ख-का**-पुस्तकेषु नास्ति. ५. 'तथा नानाभावोपगमाद्रसनिष्पत्तिः । यथा गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधीभिश्च षड् रसा निवर्त्यन्ते एवं नानाभावोपहिता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति' इति **का**-पुस्तके. ६. 'व्यञ्जनौषधिभिश्च' **ब.** ७. 'इति' इति **का**-पुस्तके नास्ति. ८. 'ऋषय ऊचुः' **का.** ९. 'अत्रोच्यते' **का.** १०. 'कथमास्वाद्यो रसः' **क-ख-का.** ११. 'अत्रोच्यते' इत्यधिकं **का**-पुस्तके. १२. 'हि' इति **क-ख**-पुस्तकयोर्नास्ति. १३. 'अत्र' **का.** १४. 'हर्षादिव्याधि (?) गच्छन्ति' **क-ख.** 'हर्षादींश्चाप्यधिगच्छन्ति' **का.** १५. '°भिनव्यञ्जितान्यां गंगा सात्वापेतान् (?)' **क-ख.** १६. 'हर्षादींश्चाधिगच्छन्ति' इति **क-ख-का**-पुस्तकेषु नास्ति. १७. 'इत्यभिव्याख्यास्यामः' इत्यधिकमत्र **ब**-पुस्तके, 'इति व्याख्याताः ।' **का.** १८. '°सुतैः' **क-ख.** १९. 'भुक्तं भुक्तविदो' **का.** २०. '°संयुक्ताः स्थायिभावास्ततो' **का.** २१. 'किं रसेभ्यो भावानां निर्वृत्तिरुताथ परस्परसंबन्धादेषामभिनिर्वृत्तिरिति । दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिर्न रसेभ्यो भावानाम् ।' **क-ख.** २२. 'अभिनिर्वृत्तिः' **का.** २३. 'अत्र' **का.** २४. 'अभिनिर्वृतिः' **का.**

दृश्यते हि भावेभ्यो रसनामभिनिर्वृत्तिर्न[1] तु रसेभ्यो भावानामभिनिर्वृत्तिरिति ।

भवन्ति[2] चात्र श्लोकाः

नानाभिनयसंबद्धान्[3]भावयन्ति रसानिमान् ।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ३५ ॥
नानाद्रव्यैर्[4]बहुविधैर्व्यञ्जनं भाव्यते यथा ।
एवं भावा भावयन्ति रसानभिनयैः सह ॥ ३६ ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥ ३७ ॥
व्यञ्जनौषधिसंयोगो[5] यथान्नं स्वादुतां नयेत् ।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥ ३८ ॥
यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं यथा ।
तथा मूलं रसाः सर्वे तेभ्यो[6] भावा व्यवस्थिताः ॥ ३९ ॥

तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः—तेषामुत्पत्तिहेतवश्चत्वारो रसाः । तद्यथा[7] शृङ्गारो रौद्रो वीरो बीभत्स इति ।

अत्र[8]—

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च[9] करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥ ४० ॥
शृङ्गारानुकृतिर्या तु स हास्यस्तु[10] प्रकीर्तितः ।
रौद्रस्यैव[11] च यत्कर्म स ज्ञेयः करुणो रसः ॥ ४१ ॥
वीरस्यापि च यत्कर्म सोऽद्भुतः परिकीर्तितः ।
बीभत्सदर्शनं यत्र[12] ज्ञेयः[13] स तु भयानकः ॥ ४२ ॥

---

१. '°अभिनिर्वृत्तिरिति न तु रसेभ्यो भावानामभिनिर्वृतिरिति' **का.** २. 'तत्र श्लोकाः' **का.** ३. 'संबन्धान्' **का.** ४. अयं श्लोकः **क-ख**-पुस्तकयोर्नास्ति. ५. '°संयोगाद्यथा न स्वादुता भवेत्' **का.** ६. 'ततो' **क-ख.** 'तेषु' **का.** ७. 'तद्यथा' इति **क-ख**-पुस्तकयोर्नास्ति. ८. 'अत्र' इति **क-ख**-पुस्तकयोर्नास्ति । ९. 'रौद्रात्तु' **का.** १०. 'हास्य' इति संज्ञितः. ११. 'रौद्रस्यापि च यत् कर्म स ज्ञेयो(?)करुणो रसः' **का.** १२. 'यच्च' **क-ख-का.** १३. 'भवेत्'.

अथ वर्णाः[1]—

> श्यामो भवति[2] शृङ्गारः सितो हास्यः प्रकीर्तितः ।
> कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ॥ ४३ ॥
> गौरो वीरस्तु विज्ञेयः कृष्णश्चैवं[3] भयानकः ।
> नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥ ४४ ॥

अथाधिदैवतानि[4]—

> शृङ्गारो विष्णुदैवत्यो[5] हास्यः प्रमथदैवतः[6] ।
> रौद्रो रुद्राधिदैवत्यः[7] करुणो यमदैवतः ॥ ४५ ॥
> बीभत्सस्य[8] महाकालः कालदेवो[9] भयानकः ।
> वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥ ४६ ॥

एवमेतेषां रसानाम्[10]उत्पत्तिवर्णदेवतान्यभिव्याख्यातानि । इदानीं[11] विभावा-नुभावव्यभिचारिसंयुक्तानां[12] लक्षणनिदर्शनान्यभिव्याख्यास्यामः[13], स्थायिभा-वांश्च रसानामनुक्रमिष्याम[14] इति ।

तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः । यथा[15] यत्कि-ञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा[16] तच्छृङ्गारेणोपमीयते[17] । यस्ताव-दुज्ज्वलवेषः स[18] शृङ्गारवानित्युच्यते । यथा च[19] गोत्रकुलाचारोत्पन्नान्याप्तोप-देशसिद्धानि पुंसां नामानि भवन्ति[20] तथैवैषां[21] रसानां भावानां च नाट्याश्रि-तानां चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि भवन्ति[22] एवमेष[23]

---

१. 'वणा(र्णाः?) ना' ब. २. 'भवेत्तु' का. ३. 'कृष्णाश्चापि' का. ४. 'अथ दैवतानि' का. ५. 'विष्णुदेवस्तु' क-ख.; 'विष्णुदेवत्ये(त्यो?)' ब. ६. 'प्रथमदैवतः' क-ख. ७. 'रुद्राधिदेवस्तु' क-ख.; 'रुद्राधिदेवश्च' का. ८. 'बीभत्सश्च' क-ख. ९. 'कामदेवो' का. १०. 'रसानां' इति क-ख-पुस्तकयोर्नास्ति. ११. '[एषा तु]' इत्यधिकं ब-पुस्तके. १२. 'अनुभावविभावाव्यभिचारिसंयुक्तानां' क-ख. १३. 'लक्षण-दर्शनानि' का. १४. 'रसत्वमुपनेष्यामः' का. १५. '[यथा च]' इत्यधिकं ब-पुस्तके.; 'यथा' इति क-ख-पुस्तकोर्नास्ति. १६. '[भवति]' इत्यधिकं ब-पुस्तके. १७. 'अनुमीयते' का. १८. 'उज्ज्वलवेषवान्' क-ख. १९. 'च' इति क-ख-पुस्तकयोर्नास्ति. २०. 'भवन्ति' इति का-पुस्तके नास्ति. २१. 'तथैषां' क-ख. २२. '[भवन्ति]' ब; क-ख-पुस्तक-योस्तु 'भवन्ति' इति नास्ति. २३. 'तदेवमेष' का.

आचारसिद्धो हृद्योज्ज्वलवेषात्मकत्वाच्छृङ्गारो रस [1]इति । स च [2]स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः । तस्य द्वे अधिष्ठाने—संभोगः, विप्रलम्भश्च । तत्र संभोगस्तावद् ऋतुमाल्यानुलेपनालंकारेष्टजनविषयवर[3]भवनोपभोगोपवनगमनानुभवनश्रवण[4]दर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते । तस्य नयनचा[5]तुरीभ्रूक्षेपकटाक्ष[6]संचारललितमधुराङ्गहारवाक्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चा[7]सालस्योग्रजुगुप्सा[8]वर्जम् । विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रासुप्तस्वप्नवि[9]बोधव्याध्युन्मादापस्मारजाड्य[10]मरणादिभिरनुभावैरभिनेतव्यः । अत्राह—यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा [11]भवन्ति । अत्रोच्यते—पूर्वमेवाभिहितं संभोगविप्रलम्भकृतः शृङ्गार इति । वैशिकशास्त्रकारैश्च दशावस्थोऽभिहितः ता[12]श्च सामान्याभिनये वक्ष्यामः ।

करुणस्तु शापक्लेशवि[13]निपतितेष्टजन[14]विप्रयोगविभवनाशवध[15]बन्धसमुत्थो निरपेक्षभावः । औत्[16]सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भकृतः । एवमन्यः करुणोऽन्यश्च विप्रलम्भ इति । एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति । अपि च

सुखप्रायेष्टसंपन्न ऋतुमाल्यादिसेवकः ।
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः ॥ ४७ ॥

अपि [17]चात्र सूत्रानुबद्धे आर्ये भवतः—

'ऋतुमाल्यालंकारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥ ४८ ॥

---

१. '[इति]' इति ब-क-ख-का-पुस्तकेषु नास्ति. २. 'स्त्रीपुंसहेतुक उत्तमयुवतिप्रकृतिः' **का.** ३. 'भवनोपभोगवनगमना-' **ब.** ४. 'दर्शन ' इति **क-ख**-पुस्तकयोर्नास्ति. ५. 'चातुर्यभ्रूविक्षेप' **का.** ६. 'संचारि' **का.** ७. 'श्चास्यालस्यौ°' **ब.** ८. 'वर्गाः' **क-ख.**; 'वर्जाः' **ब.** ९. 'विबोध' **ब.** १०. 'जाड्य[मोह] मरणादिभिः' **ब.** ११. 'भवन्ति' इति नास्ति **क-ख**-पुस्तकयोः. १२. 'ताश्चावस्थाः' **का.** १३. 'विनिपातनेष्टजनविप्रयोग' **का.** १४. 'विप्रयोग°' इति **क-ख-ब**-पुस्तकेषु नास्ति. १५. 'बन्धनसमुत्थो' **का.** १६. 'कुशक्यचिन्ता' **क-ख.** १७. 'अत्र' इति **क-ख**-पुस्तकयोर्नास्ति.

नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
मधुरैश्चाङ्गविकारै[1]स्तस्याभिनयः प्रयोक्तव्यः ॥ ४९ ॥

[ इति शृङ्गाररसप्रकरणम् । ]

अथ हास्यो नाम हासस्थायिभावात्मकः । स च विकृतपरवेषालंकारधार्ष्ट्यलौल्यकु[2]हकासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिर्विभावैरुत्प[3]द्यते । तस्यौ[4]ष्ठनासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चा[5]वहित्थालस्यतन्द्रानिद्रा[6]स्वप्नप्रबोधासूयादयः । द्विविधश्चा[7]यम्—आत्मस्थः परस्थश्च । यदा स्वयं हसति तदात्मस्थः । यदा[8] तु परं हासयति तदा परस्थः । अत्रानुवंश्ये आर्ये भवतः—

'विपरीतालंकारैर्विकृताचाराभिधानवेषैश्च ।
विकृतै[9]रङ्गविकारैर्हसतीति रसः स्मृतो हास्यः ॥ ५० ॥
विकृता[10]चारैर्वाक्यैरङ्गविकारै[11]श्च विकृतवेषैश्च ।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः ॥ ५१ ॥'
स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः ।
षड्भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः ॥ ५२ ॥
स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम् ।
द्वौ द्वौ[12] भेदौ स्यातामुत्तमम[13]ध्याधमप्रकृतौ ॥ ५३ ॥

तत्र[14]—

स्मितहसिते ज्येष्ठा[15]नां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं ह्य[16]तिहसितं चापि विज्ञेयम् ॥ ५४ ॥

---

१. 'विहारैः' ब. २. 'कलहा°' का. ३. 'समुत्पद्यते' का. ४. 'तस्योष्ठ' ब, 'तस्यौष्ठदंशन' का. ५. 'आलस्यावहित्था'. ६. 'स्वप्नादयः' क-ख. ७. 'द्विविधो हास्यः' ८. 'यदा तु' ब.; 'यदापरं' का. ९. 'अर्थविशेषैः' का. १०. 'विकृताकारैः' का. ११. 'च' इति नास्ति का-पुस्तके. १२. 'द्वौ भेदौ' क-ख. १३. '°मध्यमाधम°' का. १४. 'तत्र' इति क-ख-का-पुस्तकेषु नास्ति. १५. 'श्रेष्ठानां' क-ख.; 'तथातिहसितं च' का. १६. 'अतिहसितं' क-ख.

अत्र श्लोकाः[1]—

ईषद्विकसितैर्[2]गण्डैः कटाक्षैः सौष्ठवान्वितैः।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत्॥ ५५॥
उत्फुल्लाननने[3]त्रं तु गण्डैर्विकसितै[4]रथ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते॥ ५६॥

[अथ[5] मध्यानाम्—]

आकुञ्चिताक्षिगण्डं यत्सस्वनं म[6]धुरं तथा।
कालागतं सास्यरागं तद्वै विहसितं भवेत्॥ ५७॥
उत्फुल्लनासिकं यत्तु[7] जिह्मदृष्टिनिरीक्षितम्[8]।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत्॥ ५८॥

[अ[9]धमानाम्—]

अस्थानहसितं य[10]त्तु साश्रुने[11]त्रं तथैव च।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत्॥ ५९॥
संरब्धसा[11]श्रुनेत्रं च विकृ[12]ष्टस्वरमुद्धतम्।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत्॥ ६०॥
हास्य[13]स्थानानि यानि स्युः कार्योत्पन्नानि नाटके।
उत्तमाधममध्यानामेवं तानि प्रयोजयेत्॥ ६१॥
इत्ये[14]ष स्वसमुत्थस्तथा परसमुत्थितश्च[15] विज्ञेयः।
द्विविधस्त्रिप्रकृतिगतस्त्र्य[16]वस्थभावो रसो हास्यः॥ ६२॥

[इति हास्यरसप्रकरणम्।]

---

१. 'अत्र श्लोकाः' इति क-ख-पुस्तकयोर्नास्ति. २. 'विहसितैः' क-ख-का. ३. '°नेत्रैस्तु' का. ४. 'विहसितैः' का. ५. 'अथ मध्यानाम्' इति क-ख-पुस्तकयोर्नास्ति. ६. 'सस्वरं' का. ७. 'यच्च' का. ८. 'निरीक्षणम्' का. ९. 'अधमानाम्' इति क-ख-पुस्तकयोर्नास्ति. १०. 'यत्र' का. ११. 'सास्रनेत्रं' का. १२. 'विकृष्ट' ख. १३. 'हास°' का. १४. का-पुस्तके—'एवमात्मसमुत्थं च तथा परसमुत्थितम्। द्विविधस्त्रिप्रकृतिकः षड्भेदोऽथ रसः स्मृतः॥' इति वर्तते. १५. 'परसमुत्थश्च' ख. १६. '°त्रवस्थभावो' क-ख.

अथ करुणो नाम शोकस्थायिभावप्रभवः । स च शापक्लेशविनिपतितेष्टजनविप्रयोगविभवनाशवधबन्धविद्रवोपघात[1]व्यसनसंयोगादिभिर्विभावैः समुपजायते । तस्या[2]श्रुपातपरिदेवनमुखशोषणवैवर्ण्यस्रस्तगात्रतानिःश्वासस्मृतिलोपादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदग्लानि[3]चिन्तौत्सुक्यावेगभ्रममोहश्रमभयविषाददैन्यव्याधिजडतोन्मादा[4]पस्मारत्रासालस्यमरणस्तम्भवेपथुवैवर्ण्याश्रु[5]स्वरभेदादयः । अत्रार्ये भवतः—

इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवा[6]द्वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥ ६३ ॥
सस्व[7]नरुदितैर्मोहागमै[8]श्च परिदेवितैर्विलपितैश्च ।
अभिनेयः करुणरसो देहायासाभिघातैश्च ॥ ६४ ॥

[ इति करुणरसप्रकरणम् । ]

अथ रौद्रो नाम क्रोधस्थायिभावात्मको रक्षोदानवोद्धतमनुष्यप्रकृति[9]ः सङ्ग्रामहेतुकः । स च क्रोध[10]धर्षणाधिक्षेपा[11]वमानानृतवचनो[12]पघातवाक्पारुष्या[13]भिद्रोहमात्सर्यादिभिर्विभावैरुत्पद्यते[14] । तस्य च ताडनपाटनपीडनच्छेदन[15]प्रहरणाहरणशस्त्रसंपातसंप्रहाररुधिराकर्षणाद्यानि[16] कर्माणि । पुनश्च रक्तनयनस्वेद[17]भ्रु[18]कुटीकरणावष्टम्भदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावा[19]श्चास्य—असंमोहोत्सा[20]हावेगामर्षचपलतौग्र्य[21]गर्वविकृतेक्षणस्वेदवेपथुरोमाञ्चगद्गदादयः[22] । अत्राह—यदभिहितं रक्षोदानवा[23]दीनां रौद्रो

---

१. 'स्पर्शनसंयोगादिभिः' क-ख. २. 'अस्य चाश्रुपातन' का. ३. 'चिन्तौत्सुक्यमोहश्रम' क-ख.; 'चिन्तौत्सुक्यमोहभ्रम' का. ४. '°पस्मारालस्य' क-ख. ५. 'वैवर्ण्याश्र' ब. ६. 'संश्रयाद्वापि' का. ७. 'श्वसनरुदितैः' क-ख-का. ८. 'मोहोद्गमैश्च' का. ९. 'मनुष्यप्रभवः' का. १०. 'क्रोधाधर्षणा' क-ख. ११. '°धिक्षेपानृत' क-ख. १२. 'वचनवाक्पारुष्य' का. १३. 'वाक्पारुष्यद्रोह' का. १४. 'समुपजायते' का. १५. 'छेद्यप्रहरण' क-ख.; 'च्छेदनभेदनप्रहरणा°' का. १६. 'रुधिरास्रकर्षणाद्यानि कार्याणि' का. १७. 'स्वेद' इति क-ख. पुस्तकयोर्नास्ति, ब. पुस्तके तु संशोधकवर्धितः. १८. 'भ्रुकुटीकरदन्तौष्ठपीडन' का.; 'भ्रुकुटीकरणाद°' ब. १९. 'व्यभिचारिणश्चास्य' का. २०. '°संमोहोत्साहवेगामर्ष°' का. २१. 'चपलतौग्र्यस्वेदवेपथु' क-ख-का.; 'चपलतौग्र्यगर्व [ विकृतेक्षण ] स्वेदवेपथु' ब. २२. 'रोमाञ्चादयः' क-ख. २३. 'राक्षसादीनां' का.

रसः किमन्येषां नास्ति[1] । उच्यते—अस्त्यन्येषामपि रौद्रो रसः[2] किं त्वधि[3]कारोऽत्र गृह्यते । ते हि स्वभावत एव रौद्राः । कस्मात्[4] । बहुबाहवो बहुमुखाः प्रोद्धूतविकीर्णपिङ्गलशिरोजा[5] रक्तोद्वृत्तविलोचना भीमासितरूपिणश्चैव । यच्च किंचित्समारभन्ते स्वभावेन चेष्टितं[6] वागङ्गादिकं[7] तत्सर्वं रौद्रमेवैषाम्[8] । शृङ्गारश्च तैः प्रायशः प्रसभं सेव्यते[9] । तेषां चानुकारिणो[10] ये पुरुषास्तेषामपि संग्राम[11]संप्रहारकृतो रौद्रो रसो[12]ऽनुमन्तव्यः । अत्रानुवंश्ये आर्ये भवतः—

युद्धप्रहारघातन[13]विकृतच्छेदनविदारणैश्चैव ।
संग्रामसंभ्रमाद्यै[14]रेभिः संजायते रौद्रः ॥ ६५ ॥
नानाप्रहरण[15]मोक्षैः शिरःकबन्धभुजकर्तनैश्चैव ।
एभिश्चार्थविशेषैरस्या[16]भिनयः प्रयोक्तव्यः ॥ ६६ ॥
इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः ।
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः ॥ ६७ ॥

[ इति रौद्ररसप्रकरणम् । ]

अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः । स चासंमोहाध्यवसायनयवि[17]नय[18]बलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते । तस्य स्थैर्य[19]धैर्यशौर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य धृतिमति[20]गर्वावेगौग्र्यामर्षस्मृतिरोमाञ्च[21]प्रतिबोधादयः । अत्रार्ये[22] रसविचारमुखे—

---

१. 'नास्तीति' का. २. 'रसः' इति नास्ति का-पुस्तके. ३. 'किं चा°' का. ४. 'कस्मात्' इति का-पुस्तके नास्ति. ५. 'विकर्णटपिङ्गल' का. ६. 'किंचिदारम्भे स्वभावचेष्टितं' क-ख.; 'किंचित्समारम्भान्ते स्वभावचेष्टितं' का. ७. 'वागङ्गादिकं वा' का. ८. 'रौद्रमेवेति' का. ९. का-पुस्तके 'शृङ्गारश्च तैः प्रायशः प्रसभं सेव्यते' इति नास्ति. १०. 'चानुगामिनो' का. ११. 'संग्राम' इति का-पुस्तके नास्ति. १२. 'रौद्ररसो' का. १३. 'युद्धप्रहारपातन' क-ख.; 'सत्त्वप्रहारघातन' का. १४. 'संग्रामसंभ्रमोत्थैः' का. १५. 'नानाप्रहरणसंकुल' का. १६. 'तस्याभिनयः' का. १७. ख-पुस्तके 'विनय' इति नास्ति. १८. 'नयविनयबहुल' का. १९. क-ख-पुस्तकयोः 'धैर्य' इति नास्ति.; 'स्थैर्यशौर्यधैर्य' का. २०. 'धृतिमानगर्वा°' क-ख. २१. 'रोमाञ्चादयः' क-ख-का. २२. 'अत्रानुवंश्ये आर्ये भवतः' का.

उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात्[1] ।
विविधादर्थविशेषाद्वीररसो[2] नाम संभवति ॥ ६८ ॥
स्थितिधैर्यवीरगर्वैरुत्साहपराक्रमप्रभावैश्च[3] ।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥ ६९ ॥

[ इति वीररसप्रकरणम् । ]

अथ भयानको नाम भयस्थायिभावात्मकः । स च विकृतरवसत्त्वदर्श[4]-नशिवोलूकत्रासोद्वेगशून्यागारारण्यगमनस्वजनवधबन्धदर्शनश्रुतिकथादिभि[5][6]-र्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणनयनचपलपुलकमुखवैवर्ण्यस्वरभेदा[7]-दिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य—स्तम्भस्वेदगद्गदरोमाञ्चवे-पथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेगचापलजडतात्रासापस्मारमरणादयः[8][9] ।
अत्रार्याः[10]—

विकृतरवसत्त्वदर्शनसङ्ग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात्कृतकश्च भयानको ज्ञेयः ॥ ७० ॥
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः ।
सन्नमुखशोषहृदयस्पन्दनरोमोद्गमैश्च[11] भयम् ॥ ७१ ॥
एतत्स्वभावजं स्यात्सत्त्वसमुत्थं[12] तथैव कर्तव्यम् ।
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैः[13] कार्यम् ॥ ७२ ॥
करचरणवेपथुस्तम्भगात्रसंकोचहृदयकम्पेन ।
शुष्कौष्ठतालुकण्ठैर्भयानको[14] नित्यमभिनेयः ॥ ७३ ॥

[ इति भयानकरसप्रकरणम् । ]

---

१. '°दविस्मयामोहात्' ब. २. 'विविधार्थविशेषात्' का. ३. 'स्थितिधैर्यवीरगर्वैः' क-ख.; 'स्मृतिधैर्यवीर्यशौर्योत्साह' का. ४. 'विकृतरस' ब. ५. 'शून्यारण्य' क-ख. ६. 'बन्धन' का. ७. 'नयनचपलमुख' क-ख.; 'नयनचलनपुलकमुख' का. ८. 'चप-लतात्रासा°' क-ख. ९. 'जडता' इति क-ख-का. पुस्तकेषु नास्ति. १०. 'अत्रा-नुवंश्या आर्या भवन्ति' का. ११. 'सान्त्वमुख' क-ख. १२. 'सान्त्व' क-ख. १३. 'मुहुवेष्टितैः' क-ख.; 'मृदुचेष्टितैश्च' का. १४. 'शुष्कोष्ठ' ब.

अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः । स चाहृद्याप्रशस्ताप्रिया-[1]वेक्षानिष्टश्रवण[2]दर्शनोद्वेजनपरिकीर्तनादिभिर्विभावैरुत्पद्यते । तस्य [3]च सर्वाङ्ग-संहार[4]मुखविकूणनोल्लेखननिष्ठीवनोद्वेजनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । [5]भावाश्चास्य—[6]अपसारोद्वेगावेगमोहव्याधिमरणादयः । अत्रार्ये भवतः—

[7]अनभिमतदर्शनेन च [8]गन्धरससस्पर्शशब्ददोषैश्च ।
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥ ७४ ॥
[9]मुखनेत्रविकूणनया नासाप्रच्छादनावनमितास्यैः ।
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः ॥ ७५ ॥

[ इति बीभत्सरसप्रकरणम् । ]

[10]अथाद्भुतो नाम विस्मयस्थायिभावात्मकः । स च दिव्यजन[11]दर्शनेप्सित-मनोरथावाप्त्यु[12]पवनदेवकुलादिगमनसभाविमा[13]नमायेन्द्रजालसंभावनादिभिर्वि-भावैरुत्पद्यते । तस्य नयनविस्ता[14]रानिमेषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्[15]षसाधुवाददान-प्रबन्ध[16]हा[17]हाकारबाहुवदनचेलाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । [18]भावाश्चास्य—[19]स्तम्भाश्रुस्वेदगद्गदरोमाञ्चावेगसंभ्रम[20]प्रहर्षचपलतोन्मादधृति-जडताप्रलयादयः । अत्रानुवंश्ये आर्ये भवतः—

यत्त्वतिशयार्थयुक्तं वाक्यं [21]शिल्पं च कर्म रूपं [22]वा ।
[23]तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ॥ ७६ ॥

---

१. 'प्रिया चोक्ष्या' ब. २. 'दर्शनकीर्तनादिभिः' क-ख.; 'दर्शनपरिकीर्तनादिभिः' का. ३. 'च' इति नास्ति क-ख-का-पुस्तकेषु. ४. 'सर्वाङ्गहारमुखनेत्रविघूर्णन-हृल्लेखनिष्ठीवनोद्वेजनादिभिः' का. ५. 'व्यभिचारिभावाश्चास्य' का. ६. 'अपस्मारावेग' क-ख.; 'अपस्मारवेग' का. ७. 'अनभिहित°' का. ८. 'गन्धरससस्पर्शदोषैश्च' क-ख.; 'रसगन्धस्पर्शशब्ददोषैश्च' का. ९. 'मुखनेत्रविघूर्णननयननासाप्रच्छादना°' का. १०. क-ख-पुस्तकयोः 'अथ' इति नास्ति. ११. '°वाप्त्युत्तमवनदेवकुलादिगमनासंभा-व्यमानमायेन्द्रजाल' क-ख.; 'दिव्यदर्शनेप्सित' क-ख-का. १२. '°वाप्त्युत्तमवनदेवकु-लादिगमनासभाविमानमहिन्द्रजाल' का. १३. 'संभाव्यमान' ब. १४. '°निमिष' का. १५. 'प्रदानबन्ध' का. १६. 'झांकारचेलाङ्गुलि' क.; 'डाकारचेलाङ्गुलि' ख. १७. 'हा-हाकारकरचरणाङ्गुलि' का. १८. 'व्यभिचारिभावाश्चास्य' का. १९. 'अश्रुस्तम्भ' का. २०. 'संभ्रमजडताप्रलापा भवतः' क-ख.; 'संभ्रमजडताप्रलयादयः' का. २१. 'शीलं' का. २२. 'च' का. २३. 'एभिस्त्वर्थविशेषै रसोऽद्भुतो नाम विज्ञेयः' का.

स्पर्शग्रहोल्लु[1]कसनैर्हाहाहारैश्च साधुवादैश्च ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥ ७७ ॥

[ इत्यद्भुतरसप्रकरणम् । ]

शृङ्गारं त्रिविधं विद्याद्वाङ्नेपथ्यक्रियात्मकम् ।
अङ्गनेपथ्यवाक्यैश्च हास्यरौद्रौ [2]त्रिधा स्मृतौ ॥ ७८ ॥
धर्मोपघातजश्चैव [3]तथार्थापचयोद्भवः ।
तथा शोककृतश्चैव करुणस्त्रिविधः स्मृतः ॥ ७९ ॥
दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥ ८० ॥
व्याजाच्चैवापराधाच्च वित्रासितकमेव च ।
पुनर्भयानकं [4]चैव विद्यात्त्रिविधमेव हि ॥ ८१ ॥
बीभत्सः क्षोभणः[5] शुद्ध उद्वेगी स्याद्[6]द्वितीयकः ।
[7]विष्ठाक्रिमिभिरुद्वेगी [8]क्षोभणो रुधिरादिजः ॥ ८२ ॥
दिव्यश्चानन्दजश्चैव द्विधा ख्यातोऽद्भुतो रसः ।
[9]दिव्यदर्शनजो दिव्यो हर्षादानन्दजः स्मृतः ॥ ८३ ॥[10]

[ अथ शमो नाम शमस्थायिभावात्मको मोक्षप्रवर्तकः । स तु तत्त्वज्ञानवैराग्याशयशुद्ध्यादिभिर्विभावैः समुत्पद्यते । तस्य यमनियमाध्यात्मध्यानधारणोपासनसर्वभूतदयालिङ्गग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदस्मृतिधृतिसर्वाश्रमशौचस्तम्भरोमाञ्चादयः । अत्रार्याः श्लोकाश्च भवन्ति—

---

१. 'स्पर्शग्रहोत्कहसनैः' का.; 'स्पर्शग्रहाल्लुकुत्सनैः हाहाकारैः.........' क-ख.; 'साह्लादं धूननमुल्लूकसनम्' इत्यभिनवभारती. २. 'तथा' क-ख. ३. 'तथात्वपचयोद्भव' का. ४. 'चापि' का. ५. 'क्षोभजः' का. ६. 'तृतीयकः' का. ७. 'विष्ठाकमिति' क.; 'विष्ठाक्रमिति' ख. ८. 'क्षोभजो' का. ९. 'दिव्यदर्शनतो' ब. १०. इतः प्रभृति ब-पुस्तके कोष्ठनिबद्धोऽधिकः पाठः । क-ख-का-पुस्तकेषु न सन्ति शान्तरसप्रतिपादकाः श्लोका गद्यभागश्च.

मोक्षाध्यात्मसमुत्थस्तत्त्वज्ञानार्थहेतुसंयुक्तः ।
नैःश्रेयसोपदिष्टः शान्तरसो नाम संभवति ॥
बुद्धीन्द्रियकर्मेन्द्रियसंरोधाध्यात्मसंस्थितोपेतः ।
सर्वप्राणिसुखहितः शान्तरसो नाम विज्ञेयः ।
न यत्र दुःखं न सुखं न द्वेषो नापि मत्सरः ।
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः ॥
भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः ।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते ॥
स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते ।
पुनर्निमित्तापाये च शान्त एवोपलीयते ॥
एवं नवरसा दृष्टा नाट्यज्ञैर्लक्षणान्विताः । ]

[ इति शान्तरसप्रकरणम् । ]

एवमेते रसा ज्ञेयास्त्वष्टौ[1] लक्षणलक्षिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् ॥ ८४ ॥

इति[2] श्रीभारतीये नाट्यशास्त्रे रसाध्यायः षष्ठः ।

---

## सप्तमोऽध्यायः ।

भावानिदानीं व्याख्यास्यामः[3] । अत्राह[4]—भावा इति कस्मात् । किं भव[5]न्तीति भावाः, किं वा[6] भावयन्तीति भावाः[7] । उच्यते—वागङ्गसत्त्वोपेतान्काव्यार्थान्भावयन्तीति भावा इति[8] । भू इति करणे धातुः[9] तथा च[10] भावितं

---

१. 'नव' ब. २. 'इति भारतीये नाट्यशास्त्रे रसविकल्पो नाम षष्ठोऽध्यायः ।' का. ३. 'वक्ष्यामः' क-ख-का. ४. 'अत्राह भावा इति कस्मात् । किं भवन्तीति भावाः' इति क-ख. पुस्तकयोर्नास्ति. ५. 'किं भवन्तीति भावाः ।' इति ख-पुस्तकेऽपि नास्ति. ६. 'वा' इति क-ख-पुस्तकयोर्नास्ति. ७. 'भावाः' इति क-ख-पुस्तकयोर्नास्ति. ८. 'इति' इति क-ख-का-पुस्तकेषु नास्ति. ९. 'भू इति करणे धातुः' इति का-पुस्तके नास्ति. १०. 'तथाच' इति क-ख-पुस्तकयोर्नास्ति.; का-पुस्तके तु—'भाव इति कारणसाधनं यथा भावितो वासितः कृत इत्यनर्थान्तरम् ।'.

[1]वासितं कृतमित्यनर्थान्तरम् । लोकेऽपि [2]च [3]सिद्धमहो [4]ह्यनेन गन्धेन रसेन वा सर्वमेव [5]भावितमिति । [6]तच्च व्याप्त्यर्थम् । श्लोकाश्चात्र भवन्ति—

> [7]विभावैराहृतो [8]योऽर्थो ह्यनुभावैस्तु गम्यते ।
> वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥ १ ॥
> वागङ्गमुख[9]रागेण [10]सत्त्वेनाभिनयेन च ।
> कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥ २ ॥
> नानाभिनयसं[11]बद्धान्भावयन्ति रसानिमान् ।
> यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ३ ॥

[12]अथ विभाव इति कस्मात् । उच्यते । विभावो [13]नाम विज्ञानार्थः । [14]विभावः कारणं निमित्तं हेतुरिति पर्यायाः । [15]विभाव्यन्तेऽनेन वागङ्गसत्त्वा[16]भिनया इति विभावः । [17]यथा विभावितं विज्ञातमित्य[18]नर्थान्तरम् ।

अत्र श्लोकः—

> बहवोऽर्था विभाव्यन्ते वागङ्गाभि[19]नयाश्रयाः ।
> अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥ ४ ॥

अथानुभाव इति कस्मात् । उच्यते । [20]अनुभाव्यतेऽनेन वागङ्गसत्त्वकृतोऽभिनय इति । अत्र श्लोकः—

---

१. 'वासितं' इति क-ख-का-पुस्तकेषु नास्ति. २. 'च' इति का-पुस्तके नास्ति. ३. 'सिद्धम्' क-ख. ४. 'ह्याननगन्धेन' क-ख.; 'ह्यन्योन्यगन्धेन' का. ५. 'इति' इति का-पुस्तके नास्ति. ६. 'उच्चव्याप्तर्थं' क-ख.; 'अपि च' का. ७. 'विभावेनोद्धृतो' क-ख.; 'विभावेनाहृतो' का. ८. 'योऽर्थस्त्वनुभावैश्च' क-ख.; 'योऽर्थस्त्वनुभावेन' का. ९. '°रागैश्च' का. १०. 'सान्त्वनाभिनयन' क-ख. ११. 'संबन्धान्' का. १२. 'अथ' इति क-ख-का-पुस्तकेषु नास्ति. १३. 'नाम' इति क-ख-का-पुस्तकेषु नास्ति. १४. 'विभाव' इत्यादि क-ख-पुस्तकयोर्नास्ति. १५. 'विभाव्यते' ब. १६. '°भिनय इति विभावः' ब. १७. 'यथा' इति क-ख-पुस्तकयोर्नास्ति. १८. 'इत्यर्थान्तरम्' का. १९. '°भिनयाश्रिताः' का. २०. 'यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम् ।' क-ख.; 'यदयमनुभावयति नानार्थाभिनिष्पन्नो वागङ्गसत्त्वैः कृतोऽभिनय' इति का.

[1]वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते।
[2]शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्[3]ततः स्मृतः॥ ५॥

[4]'एवं ते विभावानुभावसंयुक्ता भावा इति व्याख्याताः। अतो ह्येषां भावानां सिद्धिर्भवति। तस्मादेषां भावानां वि[5]भावानुभावसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः—तत्र विभावानुभावौ लोकप्रसिद्धौ। लोकस्वभा[6]वानुगतत्वाच्च त[7]योर्लक्षणं नोच्यतेऽतिप्रसङ्ग[8]निवृत्त्यर्थम्। [9]भवति चात्र श्लोकः—

लोकस्वभावसंसिद्धा लोकयात्रानुगा[10]मिनः।
[11]अनुभावा विभावाश्च ज्ञेयास्त्वभि[12]नये बुधैः॥ ६॥

तत्राष्टौ भावाः स्थायिनः। त्रयस्त्रिंशद्व्यभिचारिणः। अष्टौ सात्त्विका [13]इति त्रिभेदाः। एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः। एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते। [14]भवति चात्र श्लोकः—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।
शरीरं व्याप्यते तेन [15]शुष्कं काष्ठमिवाग्निना॥ ७॥

अत्राह—[16]यदि काव्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाश[17]द्भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसाः, [18]तत्कथं स्थायिन एव [19]भावा रसत्वमाप्नुवन्ति[20]। उच्यते—यथा हि समानलक्षणास्तुल्यपाणिपादोदर[21]शरीराः

१. 'वागङ्गसत्त्वाभिनयैर्यस्मादर्थो विभाव्यते' इति क-ख. २. 'वागङ्गोपाङ्ग' क-ख-का. ३. 'इति' क-ख. ४. 'एवं ते' इत्याद्यारभ्य 'सिद्धिर्भवति' इत्यन्तं पाठः क-ख-का-पुस्तकेषु नास्ति. ५. 'एवमेतेषां' क-ख.; 'एतेषां' का. ६. 'लोकस्वभावोपगतत्वात्' क-ख-का. ७. 'अनयोः' क-ख.; 'चैषां' का. ८. 'निवृत्त्यर्थः' क-ख.; 'निवृत्त्यर्थं च' का. ९. 'भवति च' इति क-ख-पुस्तकयोर्नास्ति. १०. '°यायिनः' का. ११. 'अनुभावविभावाश्च' का. १२. 'अभिनयैः' क-ख-का. १३. 'इति त्रिभेदाः' इति क-ख-पुस्तकयोर्नास्ति. 'इति भेदाः' इति का. १४. 'भवति च' इति ख-पुस्तके नास्ति. १५. 'शुष्ककाष्ठं' क-ख. १६. 'यदान्यान्यार्थसंभूतैः' क-ख.; 'यदान्योन्यार्थसंश्रितैः' का. १७. 'एकोनपञ्चाशता' क-ख. १८. 'कथमिदानीमेते स्थायिनोऽष्टौ' का. १९. 'भावभावाः' ख. २०. 'इति' इत्यादिकं क-पुस्तकेऽत्र. २१. 'पादोदरसमानाः' का.

समानाङ्गप्रत्यङ्गा[1] अपि[2] पुरुषाः कुल[3]शीलविद्याकर्मशिल्पविचक्षणत्वा[4]द्राज-त्वमाप्नुवन्ति तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति तथा विभावानु-भावव्यभिचारिणः स्थायिभावानुपाश्रिता[5] भवन्ति । [6]बह्वाश्रयत्वात्स्वामिभूताः[7] स्थायिनो भावाः । [8]तद्वत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान्गुणतया[9] आश्र-यन्ते[10] [11]परिजनभूता व्यभिचारिणो भावाः । [12]अत्राह को दृष्टान्त इति । यथा नरेन्द्रो बहुजनपरिवारोऽपि सन्[13] स एव नाम लभते नान्यः सुमहानपि पुरुषस्तथा विभावानुभावव्यभिचारिपरिवृतः[14] स्थायी[15] भावो रसनाम लभते[16] ।

[17]भवति चात्र श्लोकः—

> यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
> एवं हि सर्वभावानां भावः स्थायी महानिह ॥ ८ ॥

[18]लक्षणं खलु पूर्वमभिहितमेषां[19] रससंज्ञकानां निदर्शनं[20] तु । इदानीं [21]भावसामान्यलक्षणमभिधास्यामः । तत्र[22] स्थायिभावान् वक्ष्यामः ।

[23]रतिर्नाम प्रमोदात्मिका[24] [25]ऋतुमाल्यानुलेपनाभरणभोजन[26]वरभवनानुभव-

---

१. 'समानप्रत्ययाः' का. २. 'अपि पुरुषाः' इति क-ख-पुस्तकयोर्नास्ति. ३. '°शील°' इति क-ख-पुस्तकयोर्नास्ति. ४. '°विचक्षणत्वयुक्ता' का. ५. 'उपास्रुता' क. ६. 'इत्या-श्रयत्वात्' का. ७. 'स्वामिभूताश्च' का. ८. 'तद्वत् स्थायिनि वपुषि गुणीभूताः' का.; 'तत्स्थानीय' का. ९. 'गुणवत्तया' का. १०. 'श्रयन्ते' का. ११. [ स्थायिभावा रसत्वमाप्नुवन्ति ] इत्यधिकः पाठो ब-पुस्तकेऽत्र. १२. 'अत्राह' इति का-पुस्तके नास्ति. 'अत्राह को दृष्टान्त इति' क-ख-पुस्तकयोर्नास्ति. १३. 'सन्' इति का-पुस्तके नास्ति. १४. 'परिष्कृतः' क-ख. १५. 'स्थायिभावो रसती' क-ख. १६. 'नरेन्द्रवत्' इति का-पुस्तकेऽधिकः पाठः । १७. 'भवति चात्र श्लोक' इति क-ख-पुस्तकयोर्नास्ति. १८. क-ख-पुस्तकयोरत्र 'हासो नाम' इत्याद्यग्रेतनः पाठः 'अभिनेयः सपण्डितैः' इत्यन्तोऽत्र संनिविष्टः । ततश्च 'रतिर्नामेत्यादि' पाठः, 'लक्षणं खलु' इत्यादिसंदर्भश्च क-ख-पुस्तकयोर्नास्त्येव. १९. 'एतेषां' का. २०. 'निदर्शनं तु' इति का-पुस्तके नास्ति. २१. 'इदानीं तु' का. २२. 'तत्रादौ स्थायिभावान् व्याख्यास्यामः' का. २३. 'अत्र रतिर्नास्ति.' का. २४. 'प्रमोदात्मिका' इति क-ख-पुस्तकयोर्नास्ति. का-पुस्तके तु 'आमोदात्मको भावः.' २५. 'ऋतुमाल्यालेपना°' क-ख. २६. '°भोजनवरभावानुभवना' क-ख.; '°प्रियजनपरभवनानुभवना°' का.

नाप्रातिकूल्यादिभिर्विभावैः समुत्पद्यते[1] तामभिनयेत् । [2]स्मितवदनमधुरकथन-भ्रूक्षेपकटाक्षादिभिरनुभावैः ।

[3]अत्र श्लोकः—

इष्टार्थविषयप्राप्त्या रतिः[4] समुपजायते ।
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ॥ ९ ॥

[5]हासो नाम—परचेष्टानुकरणकुहका[6]संबद्धप्रलापपौरोभाग्यमौर्ख्या[7]दिभिर्विभावैः समुत्पद्यते । तमभिनयेत् पूर्वोक्तैर्हसितादिभिरनुभावैः[8] ॥

भवति चात्र श्लोकः—

परचेष्टानुकरणाद्धासः समुपजायते ।
स्मितहासातिहसितैरभिनेयः स पण्डितैः ॥ १० ॥

शोको नाम—इष्टजनवियोगविभवनाशवधबन्ध[9]दुःखानुभव[10]नादिभिर्विभावैः समुत्पद्यते[11] । तस्याश्रु[12]पातपरिदेवित[13]विलपितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपतन[14]सस्वनरुदिताक्रन्दितदीर्घनिःश्वसितजडतोन्मादमोहमरणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । रुदितमत्र त्रिविधम्—आनन्दजमार्तिजमीर्ष्यासमुद्भवं[15] चेति । [16]भवन्ति चात्रार्याः—

[17]हर्षोत्फुल्लकपोलं सानुस्मरणादपाङ्गविसृता[18]स्रम् ।
रोमाञ्चगात्रमनिभृत[19]मानन्दसमुद्भवं भवति ॥ ११ ॥

---

१. 'उत्पद्यते' क-ख. २. 'स्मितमधुरवचन' क-ख.; 'स्मितवचनमधुरवचन' का. ३. 'भवति चात्र' क-ख-का. ४. 'रतिरित्युपजायते' क-ख-का. ५. 'तत्र हासो नाम' क-ख.; 'अथ हासो नाम' का. ६. 'कुहक' इति क-ख-का-पुस्तकेषु नास्ति. ७. 'सौख्यादिभिरनुभावैरुत्पद्यते' इति क-ख-का. ८. 'अनुभावैः' इति क-ख-का-पुस्तकेषु नास्ति. ९. 'बन्धन' क-ख. १०. 'दुःखानुभावादिभिः' क-ख. ११. 'उत्पद्यते' क-ख-का. १२. 'अस्रपात' ब. १३. 'विलपितपरिदेवित' क-ख-का. १४. 'भूमिपाताक्रन्दितदीर्घनिःश्वसितादिभिः' क-ख.; 'भूमिपाताक्रन्दितविचेष्टितदीर्घनिःश्वसितजडतोन्माद—'इत्यादि का. १५. 'ईर्ष्याकृतं चेति' क-ख.; 'ईर्ष्यासमुद्भवं चेति.' का. १६. 'तत्र—इति' क-ख.; 'तत्रार्याः' का. १७. [आनन्देर्ष्यातिकृतं त्रिविधं रुदितं सदा बुधैर्ज्ञेयम् । तस्य त्वभिनययोगात् विभावगतितः प्रवक्ष्यामि ॥] इति कोष्ठनिबद्धा प्रक्षिप्तरूपत्वेनाधिकार्या ब-पुस्तके. १८. 'निसृतास्रं' क-ख. १९. 'रोमाञ्चपुलकसंकुलं' क-ख.; 'रोमाञ्चाञ्चितगण्डरोदनं' का.

पर्यस्तविमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम् ।
भूमिनिपा[1]तनिवर्तितविलपितमित्यार्तिजं भवति ॥ १२ ॥
प्रस्फुरितो[2]ष्ठकपोलं सशिरःकम्पं तथा सनिःश्वा[3]सम् ।
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति ॥ १३ ॥
[4]स्त्रीनीचप्रकृतिष्वेवं[5] शोको व्यसनसंभवः ।
धैर्येणोत्तममध्यानां नीचानां रुदितेन च ॥ १४ ॥

क्रोधो नाम—आधर्षणा[6]क्रुष्टकलहविवादप्रतिकूलादिभिर्विभावैः स[7]मुत्पद्यते । अस्य[8] विकृष्टनासापुटोद्वृत्तनयनसंदष्टोष्ठपुटगण्डस्फुरणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

रिपुजो गुरुजश्चैव प्रणयिप्रभवस्तथा ।
भृत्यजः कृतकश्चेति क्रोधः पञ्चविधः स्मृतः ॥ १५ ॥
भ्रु[9]कुटीकुटिलोत्कटमुखसंदष्टोष्ठः[10] स्पृशन्करेण करम् ।
क्रु[11]द्धः स्वभुजप्रेक्षी शत्रौ[12] निर्यन्त्रणं रुष्येत् ॥ १६ ॥
किंचिदवाङ्मुखदृष्टिः[13] सास्रः[14] खेदापमार्जनपरश्च ।
अव्यक्तोल्बणचेष्टो गुरौ विनय[15]यन्त्रितो रुष्येत् ॥ १७ ॥

---

१. 'भूमिनिपातविवर्तित' क-ख.; 'भूमिनिपातितचेष्टित°' का. २. 'प्रस्फुरितौष्ठ' क-ख-का. ३. 'सनिःस्वानम्' क-ख. ४. का-पुस्तके–'कारणमपेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः । वीररसान्तरचारी कार्यः कृतको भवेच्छोकः ॥ भवति श्लोकः—' इत्यधिकः पाठः. ५. 'स्त्रीनीचप्रकृतिष्वेव' । क-ख.; 'स्त्रीनीचप्रकृतिर्ह्येष' का. ६. 'आधर्षणाक्षुण्णविवादकलह°' क-ख. ७. 'उत्पद्यते' क-ख-का. ८. 'तमभिनयेदुत्फुल्लनासापुटोद्धृतनयनसंदष्टौष्ठपुटगल्लस्फुरणादिभिः' क-ख.; 'तमभिनयेत् उत्फुल्लनासापुटोद्धतनयनसंदष्टौष्ठपुटगण्डस्फुरणादिभिरनुभावैः ।' का. ९. '······कुटिलोत्कटमुखः' क-ख.; 'भ्रुकुटिकुटिलोत्कटमुखः' का. १०. 'संदष्टौष्ठः' क-ख-का. ११. 'धृष्टः' क-ख.; 'स्पृष्टभुजशिरवक्षाः' क. १२. 'शत्रोर्नियन्त्रणं रुष्येत्' क-ख.; 'शत्रोर्विनियन्त्रणं कुप्येत्' का. १३. 'दृष्टिं' क-ख. १४. 'किंचित्स्वेदापमार्जनपरस्य' क-ख.; 'किंचित्स्वेदापमार्जनपरं च' का. १५. 'गुरोर्विनायययन्त्रितो' (?) क-ख.; 'गुरोर्विनियन्त्रणं' का.

अल्पतरप्रविचारो [1]विकिरन्नश्रूण्यपाङ्गविक्षेपैः ।
[2]संभ्रुकुटीस्फुरितोष्ठः प्रणयोपगतां प्रियां रुष्येत् ॥ १८ ॥
[3]अथ परिजने [4]तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः ।
विप्रेक्षणैश्च विविधै[5]रभिनेयः क्रूरतारहितः ॥ १९ ॥
कारणमपेक्षमाणः प्रायेणाया[6]सलिङ्गसंयुक्तः ।
वीरर[7]सान्तरचारी [8]कार्यः कृतको भवति कोपः ॥ २० ॥

उत्साहो नाम—उत्तमप्रकृतिः । स चाविषादशक्तिधैर्य[9]शौर्यादिभिर्विभावैरुत्पद्यते । तस्य [10]स्थैर्यधैर्यात्यागवैशार[11]द्यादिभि[12]रनुभावैरभिनयः प्रयोक्तव्यः । अत्र श्लोकः—

असंमोहादिभिर्व्यक्तो व्यवसाय[13]नयात्मकः ।
उत्साहस्त्वभिनेयः स्यादप्र[14]मादोत्थितादिभिः ॥ २१ ॥

भयं नाम—स्त्रीनीचप्रकृतिकम् । गुरुराजापराध[15]श्वापदशून्यागाराटवीपर्वत[16]गहनगजाहिदर्शननिर्भर्त्सन[17]कान्तारदुर्दिननिशान्धकारो[18]लूकनक्तंचरारावश्रवणादिभिर्विभावैः समुत्प[19]द्यते । तस्य प्रकम्पि[20]तकरचरणहृदयकम्पनस्तम्भमुख[21]शोषजिह्वापरिले[22]हनस्वेदवेप[23]थुत्रासपरि[24]त्राणान्वेष[25]णधावनोत्क्रुष्टादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

---

१. 'विरहन्' क-ख. २. 'सभ्रूकुटिस्फुरितोष्ठां प्रणयोपगतां प्रियां रुष्येत्' क-ख.; 'सभ्रुकुटीस्फुरिदौष्ठः प्रणयाभिगतां प्रियां रुष्येत्' का. ३. 'यः परिजने' का. ४. 'नु' क-ख. ५. 'तस्याभिनयः प्रयोक्तव्यः' का.; 'उभयरसान्तरचारी' ब. ६. 'प्राये-णास' क-ख. ७. 'द्विरसान्तरसंचारी' क-ख. ८. 'कार्ये कृतको भवेद्दोषः' क-ख.; 'कार्यः कृतको भवेद्दोषः' का. ९. 'शौर्यत्यागादिभिः' का. १०. 'तस्य धैर्यात्याग-वैशारद्यादिभिः' क-ख.; ११. 'तस्य धैर्यत्यागारम्भवैशारद्यादिभिः' का. १२. 'अनु-भावैः' इति क-ख-पुस्तकयोर्नास्ति. १३. 'व्यवसायमयात्मकः' क-ख. १४. 'त्वभिने-योऽसावप्रमादक्रियादिभिः' क-ख-का. १५. 'श्वापद' इति क-ख-का-पुस्तकेषु नास्ति. १६. '°गहनगजाहि' इति क-ख-का-पुस्तकेषु नास्ति. १७. 'कान्तार' इति का-पुस्तके नास्ति. १८. 'काकोलूक' क-ख-का. १९. 'उत्पद्यते' क-ख-का. २०. 'प्रवेपित' क-ख-का. २१. 'शोषण' का. २२. 'परिलेह' का. २३. 'त्रास' इति क-ख-का-पुस्तकेषु नास्ति. २४. 'परिलाभान्वेषण' का. २५. 'धावनोत्क्रुष्टोत्कटादिभिः' ख.

अत्र श्लोकाः—

गुरुराजापराधेन रौद्राणां चापि दर्शनात् ।
श्रवणादपि घोराणां भयं मोहेन जायते ॥ २२ ॥
गात्रकम्पन[1]वित्रासैर्वक्त्रशोषणसंभ्रमैः ।
वि[2]स्फारितेक्षणैः कार्यमभिनेय[3]क्रियागुणैः ॥ २३ ॥
[4]सत्त्ववित्रासनोद्भूतं भयमुत्पद्यते नृणाम् ।
स्रस्ताङ्गाक्षिनिमेषैस्त[5]दभिनेयं तु नर्तकैः ॥ २४ ॥

अत्रा[6]र्या—

[7]करचरणहृदयकम्पैः स्तम्भनजिह्वोपलेहमुखशोषैः ।
स्रस्तसुविषण्णगात्रैर[8]स्याभिनयः प्रयोक्तव्यः ॥ २५ ॥

जुगुप्सा नाम—स्त्रीनीचप्रकृति[9]का । सा[10] चाहृद्य[11]दर्शनश्रवणपरिकीर्तनादिभिर्विभावैः समुत्पद्यते । तस्याः सर्वाङ्गसंको[12]चननिष्ठीव[13]नमुखवि[14]कूणनहृल्लेखादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

भवति[15] चात्र श्लोकः—

नासाप्रच्छादनेने[16]ह गात्रसंकोचनेन च ।
[17]उद्वेजनैः सहृल्लेखैर्जुगुप्सामभिनिर्दिशेत् ॥ २६ ॥

---

१. 'गात्रादिकम्पवित्रासैः' का. २. 'विष्फारितेक्षणैः' का. ३. 'अभिनेयः' का. ४. 'तत्र' का. ५. '°निमेषैश्च व्यभिनेयस्तु' का. ६. 'अत्रार्या भवति' इति ब. पुस्तकेऽधिकम्. ७. 'करचरणहृदयकम्पैर्मुखशोषणवदनलेहनस्तम्भैः । संभ्रान्तवदनवेपथुसंत्रासकृतैरभिनयोऽस्य ॥' इति ब-पुस्तके. ८. 'अस्य' का. ९. 'स्त्रीनीचप्रकृतिः' क-ख. १०. 'या' इति का. ११. 'चाहृद्यश्रवणदर्शनादिभिर्विभावैरुत्पद्यते' क-ख-का. १२. 'संकोच' ब. १३. 'निष्ठोनिज' (?) क-ख. १४. 'विघूर्णन' का. १५. 'पठ्यपि च' क-ख.; 'भवत्यत्रापि श्लोकः' का. १६. '°नापि' का. १७. 'उत्तमेनावरैः साध्यः प्रहर्षपुलकादिभिः' क-ख.; 'उद्वेजनैश्च हृल्लेखैर्जुगुप्सामपि निर्दिशेत्' का.

विस्मयो[1] नाम—मायेन्द्रजालमानुष्यकर्मातिशयचित्रपुस्तशिल्पविद्याशया-[2]दिभिर्विभावैः समुत्पद्यते । तस्य नयनविस्तारानिमेषप्रेक्षितभ्रूक्षेपरोमहर्षण-[3]शिरःकम्पसाधुवादादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

भवति चात्र श्लोकः—

> कर्मातिशयनिर्वृत्तो विस्मयो हर्षसंभवः ।
> सिद्धिस्थाने त्वसौ साध्यः प्रहर्षपुलकादिभिः ॥ २७ ॥

एवमेते[4] स्थायिनो भावा रससंज्ञाः प्रत्यवगन्तव्याः ।

व्यभिचारिण[5] इदानीं व्याख्यास्यामः[6] अत्राह—व्यभिचारिण इति कस्मात् । उच्यते[7]—वि–अभि इत्येतावुपसर्गौ, चरगतौ[8] धातुः । विविधमा-[9]भिमुख्येन रसेषु चरन्तीति व्यभिचारिणः । वागङ्गसत्त्वोपेतान्[10] प्रयोगे रसं नयन्तीति[11] व्यभिचारिणः । अत्राह—कथं नयन्तीति—उच्यते—लोकसिद्धान्त[12] एषः—यथा[13] सूर्य इदं नक्षत्रमम्मुं वासरं नयतीति । न च तेन बाहुभ्यां स्कन्धेन वा नीयते । किंतु लोकप्रसिद्धमेतत् । यथेदं[14] सूर्यो नक्षत्रं[15] दिनं वा नयतीति । एवमेते[16] प्रयोगं नयन्तीति व्यभिचारिण इत्यवगन्तव्या नाम । त[17] इह संग्रहाभिहितास्त्रयस्त्रिंशद्व्यभिचारिणो भावास्तान् वर्णयिष्यामः[18] ।

---

१. 'विस्मयो नाम' इत्यारभ्य 'प्रहर्षपुलकादिभिः' इत्यन्तः पाठः क-ख-पुस्तकयोर्नास्ति. २. 'मानुषकर्मातिशयविचित्रवपुस्तच्छिल्पातिशयाद्यैर्विभावैरुत्पद्यते' इति का. ३. '°निमिषप्रेक्षणभ्रूविक्षेपणरोमहर्षस्वेदसाधुवादादिभिः' का. ४. 'एवमेते स्थायिभावाः प्रत्यवगन्तव्याः' क-ख-का. ५. 'व्यभिचारिण इदानीं व्याख्यास्यामः अत्राह–' इति क-ख-पुस्तकयोर्नास्ति. ६. 'वक्ष्यामः' का. ७. 'उच्यन्ते' का. ८. 'चरतौ धातुः' क-ख.; 'चर इति गत्यर्थो धातुः' ब. ९. 'धात्वर्थवागङ्गसत्त्वोपेतान् विविधमभिमुखेन' का. १०. 'चरन्ति नयन्तीत्यर्थः' क-ख-का. ११. 'इति' इति क-ख-का-पुस्तकेषु नास्ति. १२. 'लोकसिद्धान्त एषः' इति क-ख-का-पुस्तकेषु नास्ति. १३. 'यथा सूर्य इदं दिनं नक्षत्रं वा नयतीति' ब. १४. 'यथायं' का. १५. 'नक्षत्रमिदं वा' क-ख-का. १६. 'एवमेते व्यभिचारिण इत्यवगन्तव्याः' क-ख-का. १७. 'त इह' इत्यारभ्य 'वर्णयिष्यामः' इति पर्यन्तं क-ख-पुस्तकयोर्नास्ति. का-पुस्तके तु–'प्रतिव्यभिचारिणस्त इमे एवं गृहीतास्त्रयस्त्रिंशद्भावाः । तान् वर्णयिष्यामः' १८. 'वर्तयिष्यामः' ब.

तत्र[1] निर्वेदो नाम—दारिद्र्यव्याध्यवमानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैः समुत्पद्यते[3] । स्त्रीनीचकुसत्त्वानां रुदितनिःश्वसितोच्छ्वसितसंप्रधारणादिभिरनुभावैस्तमभिनयेत् । भवति[5] चात्र श्लोकः—

दारिद्र्येष्टवियोगाद्यैर्[6]निर्वेदो नाम जायते ।
संप्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् ॥ २८ ॥

अत्रानुवंश्ये आर्ये भवतः—

इष्टजनस्य वियोगाद्[7]दारिद्र्याद्व्याधितस्तथा दुःखात् ।
ऋद्धिं परस्य दृष्ट्वा निर्वेदो नाम संभवति ॥ २९ ॥
बाष्पपरिप्लुतनयनः पुनश्च[9] निश्वासदीनमुखनेत्रः ।
योगीव ध्यानपरो[10] भवति हि निर्वेदवान्पुरुषः ॥ ३० ॥

ग्लानिर्नाम—वान्तविरिक्तव्याधिततपोनियमोपवासमनस्तापातिशैथ्य[11]मद्नमद्यसेवनातिव्यायामाध्वगमनक्षुत्पिपासानिद्राच्छेदादिभिर्विभावैः[12] समुत्पद्यते। तस्याः क्षामवाक्यनयनकपोलोदरमन्द[13]पदोत्क्षेपणवेपनानुत्साहतनुगात्रवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

वान्तविरिक्त[14]व्याधिषु तपसा जरसा च जायते[15] ग्लानिः ।
कार्श्येन साभिनेया मन्दभ्रमणेन[16] कम्पेन ॥ ३१ ॥

---

१. 'अत्र' का. २. 'दारिद्र्यशापमाना' क-ख.; 'दारिद्र्योपगमाधिक्षेपाक्रुष्ट' का. ३. 'उत्पद्यते' का. ४. तमभिनयेद्रुदितं–' इति क-ख.; 'स्त्रीनीचप्रकृतीनां तमभिनयेत् रुदितविनिश्वसितोच्छ्वसितप्रतारणादिभिरनुभावैः' का. ५. 'भवति च' इति ब. पुस्तके नास्ति. ६. 'वियोगेषु' क-ख.; 'नियोगैश्च' का. ७. '°विप्रयोगात्' क-ख-का. ८. 'परवृद्धिं वा' क-ख-का. ९. 'पुनः पुनः श्वास–' क-ख. १०. 'ध्यानरतो' क-ख. ११. 'तापातिपानमदनसेवना–' क-ख.; 'तापातिपानमद्यसेवा–' का. १२. क-पुस्तके तु–'निद्राच्छेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अथ तस्याः क्षामवाक्य–' इत्यादिपाठो नास्त्येव. १३. 'मन्दमन्दोपरामानुत्साहतनुगात्रवैवर्ण्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः' का. १४. 'विरक्त' का. १५. 'च विजायते' क-ख. १६. 'मन्दक्रमणेन' क-ख.; 'मन्दक्रमणानुकम्पेन' का.

गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसंचारैः ।
श्लथभावेनाङ्गानां[1] मुहुर्मुहुर्निर्दिशेद् ग्लानिम् ॥ ३२ ॥

शङ्का नाम—संदेहात्मिका[2] स्त्रीनीचप्रभवा । चौर्याभिग्रहण[3]नृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते[4] । तस्या[5] मुहुर्मुहुरवलोकनावगुण्ठन[6]मुखशोषणजिह्वापरिलेहनमुखवैवर्ण्य[7]स्वरभेदवेपथुशुष्कोष्ठकण्ठायाससाधर्म्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

[8]चौर्यादिजनिता शङ्का प्रायः कार्या भयानके ।
प्रियव्य[9]लीकजनिता तथा शृङ्गारिणी मता ॥ ३३ ॥

[10]अत्राकारसंवरण[11]मपि केचिदिच्छन्ति[12] । तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् । अत्रार्ये भवतः[13]—

द्विविधा शङ्का कार्या ह्यात्मसमुत्था च परसमुत्था च ।
या तत्रा[14]त्मसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ॥ ३४ ॥
किंचित्प्रवेपिताङ्गस्त्वधोमुखो[15] वीक्षते च पार्श्वानि ।
गुरु[16]सज्जमानजिह्वः श्यावास्यः[17] शङ्कितः पुरुषः ॥ ३५ ॥

असूया नाम—नानापराधद्वेषपरैश्वर्यसौभाग्यमेधा[18]विद्यालीलादिभिर्विभावैः समुत्पद्यते[19] । तस्याश्च परिषदि दोषप्रख्यापन[20]गुणोपघाते[21]र्ष्याचक्षुःप्रदानाधो-

---

१. 'श्लथभावाचाङ्गानां' का. २. 'संदेहात्मिका स्त्रीनीचप्रभवा' इति क-ख-का-पुस्तकेष्वत्र नास्ति. ३. 'चौर्याभिग्रह' क-ख.; 'चौर्याद्यभिग्रहण' का. ४. इतोऽग्रे क-ख-का-पुस्तकेषु 'संदेहात्मिका स्त्रीनीचानाम्' अत्र वर्तते. ५. 'साच' क-ख-का. ६. '°वकुण्ठन' ब.; '°वकुण्ठित' का. ७. 'मुखवर्णभेदवेपथुशुष्कौष्ठकण्ठवायससाधर्म्यादिभिरनुभावैरभिनीयते' क-ख.; 'मुखवैवर्ण्यवेपनशुष्कौष्ठकण्ठावसादादिभिरनुभावैरभिनीयते ।' का. ८. 'अत्र श्लोकः' इत्यधिकमत्र का-पुस्तके. ९. '......त्रिव्यालीकजनिता' क-ख. १०. 'तत्र' का. ११. '°संवरममीच्छन्तीति' केचित् ब. १२. 'च' इत्यधिकं क-ख-पुस्तकयोः. १३. 'भवतः' इति नास्ति क-ख-पुस्तकयोः. १४. 'तत्र परसमुत्था' क-ख. १५. 'तथोन्मुखो' क-ख. 'मुहुर्मुहुः' का. १६. 'सगुरु' (?) क-ख. १७. 'श्यामास्यः' क-ख.; 'श्यावास्यः' (?) का. १८. 'सौभाग्यलीलाविद्यादिभिः' का. १९. 'उत्पद्यते' क-ख-का. २०. 'दोषप्रख्यापनं' का. २१. 'गुणोपघातचक्षुःप्रदाना' क-ख.; 'गुणोपघातनाचक्षुःप्रदानाधोमुखभ्रुकुटिक्रियावज्ञान°-' का.

मुखभ्रुकुटीक्रियावज्ञा[1]नकुत्सनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्ये भवतः—

परसौभाग्येश्वरतामेधालीलासमुच्छ्रया[2]न्दृष्ट्वा ।
उत्पद्यते ह्यसूया[3] कृतापराधो भवेद्यश्च[4] ॥ ३६ ॥

भ्रुकुटिकुटिलोत्कटमुखैः[5] सेर्ष्याक्रोधपरिवृत्तनेत्रैश्च[6] ।
गुणनाशनविद्वेषैस्तत्राभिनयः[7] प्रयोक्तव्यः ॥ ३७ ॥

मदो[8] नाम—मद्योपयोगादुत्पद्यते । स च त्रिविधः पञ्चविधभावश्च[9] । अत्रार्या भवन्ति—

ज्ञेयस्तु[10] मदस्त्रिविधस्तरुणो मध्यस्तथावकृष्टश्च ।
करणं पञ्चविधं स्यात्तस्याभिनयः प्रयोक्तव्यः ॥ ३८ ॥
कश्चिन्मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित् ।
परुषवचनाभिधायी कश्चित्कश्चित्तथा स्वपिति ॥ ३९ ॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः ।
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ॥ ४० ॥
स्मितवदनमधुररागो हृष्टतनुः[11] किंचिदाकुलितवाक्यः ।
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः[12] ॥ ४१ ॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः ।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः ॥ ४२ ॥
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः[13] सुबीभत्सः ।
गुरुसज्जमानजिह्वो निष्ठीवति[14] चाधमप्रकृतिः ॥ ४३ ॥

---

१. '°वज्ञात' क-ख. २. 'समुच्छ्रयं' का. ३. 'अभिनेतव्यासूया' क-ख. ४. 'यस्तु' क-ख. ५. '°मुखसेर्ष्या°' का. ६. 'परिवर्तिभिश्चित्रैः' क-ख.; 'परिवृत्तवक्राद्यैः' क-ख. ७. 'तस्याः कार्यः सदाभिनयः' क-ख.; '°रस्याभिनयः प्रयोक्तव्यः' का. ८. 'अथ मदो नाम' का.; 'उच्यते' क.; 'उष्यते' ख. ९. 'पञ्चविभावश्च' ब. १०. 'त्रिविधस्तु मदः कार्यः' क-ख-का. ११. 'रागोद्धृष्टतनुः' क-ख.; 'धृष्टतनुः' का. १२ 'सुकुमारो' क-ख. १३. 'हतश्च च्छर्दित' क-ख. १४. 'निष्ठंचति (?) मध्यमप्रकृतिः' क-ख.

रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः[1] स्यात् ॥ ४४ ॥
संत्रा[2]साच्छोकाद्वा भयात्[3]प्रहर्षाच्च कारणोपगतः ।
उत्क्रम्यापि हि कार्यो मदप्रणाशै[5]स्तथा तज्ज्ञैः ॥ ४५ ॥
एभिर्भावविशेषैर्मदो द्रुतं संप्रणाशमुपयाति ।
अभ्युदय[6]सुखैर्वाक्यैस्तथैवं[7] शोकः क्षयं याति ॥ ४६ ॥

श्रमो नाम—अ[8]ध्वव्यायामसेवनादिभिर्विभावैः समुत्प[9]द्यते । तस्य[10] गात्रपरिमर्दनसंवाहननिःश्वसितविजृम्भितमन्दपदोत्क्षेपणनयनवदनविकूणनसीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या—

[11]नृत्ताध्वव्यायामान्नरस्य संजायते श्रमो नाम ।
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४७ ॥

आलस्यं नाम—खेद[12]व्याधिगर्भस्वभावश्रमसौहित्यादिभिर्विभावैः समुत्पद्यते स्त्रीनीचानाम् । तदभिनयेत्सर्वकर्म[13]ानभिलाषशयनासन[14]निद्रातन्द्रीसेवनादिभिरनु[15]भावैः । अत्रार्या—

आलस्यं त्वभिनेयं [16]खेदोपगतं स्वभावजं वापि ।
आहारवर्जितानामारम्भाणामनारम्भात् ॥ ४८ ॥

---

१. 'प्रविष्टस्य ते' (?) क-ख. २. 'सत्रासात्' क-ख. ३. 'भयाच्च हर्षाच्च' क-ख.; 'भयप्रकर्षाच्च' का. ४. 'वक्रोक्त्यापि हि' क-ख.; 'उद्यम्यापि हि' का. ५. 'तथोनज्ञैः' (?) क-ख. ६. 'अभ्युदयैमुखै' (?) क-ख. ७. 'यथैव शोकाः क्षयं यान्ति' ब. ८. 'अर्थं' क-ख.; 'अध्वगति' क-ख. ९. 'उत्पद्यते' का. १०. 'तस्य गात्रसंवाहननिश्वसितमुखविकूणनविजृम्भणाङ्गमर्दमन्दपादोत्क्षेपणादिभिरनुभावैरभिनयः प्रयोक्तव्यः' क-ख.; 'तस्य गात्रसंवाहननिःश्वसितमुखविघूर्णनजृम्भणाङ्गमर्दनमन्दपादोत्क्षेपणनयनविघूर्णनसीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः' का. ११. सेयमार्या क-ख-पुस्तकयोर्नास्त्येव. का-पुस्तके च 'अध्वगतिव्यायामैः' इति पाठभेदः. १२. 'स्वभावखेदश्रमव्याधिसौहित्यगर्भादिभिः' क-ख.; 'स्वभावखेदव्याधिसौहित्यगर्भादिभिर्विभावैः' का. १३. '°विद्वेष°' क-ख.; '°प्रद्वेष°' का. १४. '°तन्द्रीनिद्रा°' क-ख.; '°तन्द्रा निद्रा°' का. १५. 'अनुभावैः' इति क-ख-पुस्तकयोर्नास्ति. १६. 'खेदव्याधिस्वभावजं वापि' का.

दैन्यं नाम—दौर्गत्यमन[1]स्तापादिभिर्विभावैः समुत्पद्यते[2]। [3]तस्याधृतिशिरोरोग[4]गात्रगौरवान्यमनस्कतामृजापरिवर्जनादिभिरनुभावैरभिनयः प्रयोक्तव्यः। अत्रार्या—

> [5]चिन्तौत्सुक्यसमुत्था[6] दुःखाद्या भवति दीनता पुंसाम्।
> सर्व[7]मृजापरिमार्जनैर्विविधै[8]रभिनयस्तस्य ॥ ४९ ॥

चिन्ता नाम—ऐश्वर्य[9]भ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैः समुत्पद्यते[10]। तामभिनयेन्निःश्वसितो[11]च्छ्वसितसंतापध्यानाधोमुखचिन्तनकार्श्यादिभिरनुभावैः। अत्रार्ये [12]भवतः—

> [13]ऐश्वर्यभ्रंशेष्टद्रव्यक्षयजा जनिता बहुप्रकारा तु।
> [14]हृदयवितर्कोपगता [15]चिन्ता नृणां समुद्भवति ॥ ५० ॥
> [16]सोच्छ्वासैर्निःश्वसितैः संतापैश्चैव हृदयशून्यतया।
> अभिनेतव्या चिन्ता मृजाविहीनै[17]र्धृत्या च ॥ ५१ ॥

मोहो नाम—दैवोपघातव्यसना[18]भिघातव्याधि[19]भयावेगपूर्ववैरानुसरणादिभिर्विभावैः समुत्पद्यते[20]। तस्य निश्चैतन्य[21]भ्रमणपतना[22]घूर्णनादर्शनादिभिर[23]नुभावैरभिनयः प्रयोक्तव्यः।

---

१. 'मनः संतापादिभिः' का. २. 'उत्पद्यते' का. ३. 'तच्चावृत्तिशिरोगात्रगौरवमृजापरिवर्जनादिभिरनुभावैरभिनेतव्यम्' क-ख. ४. '°गात्रस्तम्भमनःस्तम्भमृजापरिवर्णनादिभिरनुभावैरभिनयः प्रयोक्तव्यः' का. ५. 'वित्तौत्सुक्य' क-ख. ६. '°समुत्थाद् दुःखाद्वा दीनता भवेत् पुंसाम्' का. ७. 'सर्वमृजानां परिमार्जनैश्च' क-ख.; 'सर्वमृजापरिहारैः' का. ८. 'विविधैरभिनयोऽस्याः' क-ख. 'विविधोऽभिनयो भवेत्तस्य' का. ९. 'भ्रंशेष्ट°' क-ख.; 'भ्रष्टेष्ट' का. १०. 'समुत्पद्यते' क-ख. ११. 'उच्छ्वसित' इति क ख-पुस्तकयोर्नास्ति. १२. 'भवतः' इति क-ख-पुस्तकयोर्नास्ति. १३. 'ऐश्वर्ये द्रव्यापहारे' इति क-ख-पुस्तकद्वयेऽप्यशुद्धैवेयमार्या. 'ऐश्वर्येष्टद्रव्यापहार' का. १४. 'हृदयौत्सुक्यौपगता चिन्ता तु' का. १५. 'चिन्ता' इति क-ख-पुस्तकयोस्त्रुटितम्' १६. 'सोच्छ्वसितैर्निःश्वसितैः' क-ख. १७. 'मृजाविहीनेन धृत्या च' क-ख. १८. 'व्यसनव्याधिभयावेगपूर्ववैरस्मरणादिभिः' का. १९. '°व्याधि°' इति क-ख-पुस्तकयोर्नास्ति. २०. 'उत्पद्यते' क-ख. २१. 'निश्चेष्टिताङ्गभ्रमणापतनघूर्णनदर्शनादिभिः' का. २२. 'घूर्णनदर्शनादिभिः' क-ख. २३. 'अनुभावैः' इति क-ख-पुस्तकयोर्नास्ति.

अत्र [1]श्लोकस्तावदार्या च—

> अस्थाने तस्करान्दृष्ट्वा त्रासनैर्वा [2]पृथग्विधैः ।
> तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥ ५२ ॥
> [3]व्यसनाभिघातभयपूर्ववैरै[4]स्सरणरोगजो मोहः ।
> सर्वेन्द्रियसंमोहात्त[5]स्याभिनयः प्रयोक्तव्यः ॥ ५३ ॥

स्मृतिर्नाम—सुखदुःखकृतानां भावानामनुसरणम् । सा [6]च स्वास्थ्य-[7]जघन्यरात्रिनिद्राच्छेदसमानदर्शनो[8]दाहरणचिन्ताभ्यासादिभिर्विभावैः [9]समुत्पद्यते । [10]तामभिनयेच्छिरःकम्पनावलोकनभ्रूसमुन्नमनादिभिरनुभावैः । [11]अत्रार्ये—

> [12]सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम् ।
> चिरविस्मृतं स्मरति यः स्मृतिमानिति वेदितव्योऽसौ ॥ ५४ ॥
> स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसंभवा स्मृतिर्निपुणैः ।
> शिरउद्वाहनकम्पै[13]र्भ्रूक्षेपैः साभिनेतव्या ॥ ५५ ॥

धृतिर्नाम—[14]शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्य[15]धिकमनोरथार्थ-लाभ[16]क्रीडादिभिर्विभावैः [17]समुत्पद्यते । [18]तामभिनये[19]त्प्राप्तानां विषयाणामुपभोगादप्राप्तातीतो[20]पहतविनष्टानामननुशोचनादिभिरनुभावैः । [21]अत्रार्ये—

---

१. 'भवत्यपि च' इति क-ख-पुस्तकयोः; 'अत्र श्लोकः' इति का. २. 'विविधैरपि' इति ब. ३. 'अत्रार्या' इत्यधिकमत्र क-ख-का-पुस्तकेषु ४. 'भयपूर्वरसस्मरणजो भवति मोहः' क-ख.; 'भयपूर्ववैरसंस्मरणजो भवति मोहः' का. ५. 'त्वस्याभिनयः' क-ख. 'अस्याभिनयः' का. ६. 'सा च' इति क-ख-का-पुस्तकेषु नास्ति. ७. 'स्वास्थ्याजघन्यरात्र (?)' क-ख. ८. '°दर्शनतोदाहरण' ९. 'उत्पद्यते' क-ख-का. १०. 'तमभिनयेत्' ब. ११. 'अत्रार्ये भवतः' ब.; 'अत्र श्लोकार्ये भवतः' इति का. १२. 'सुखदुःखमतिक्रान्तं तथा मतिविभावितम् । विस्मृतं च यथा वृत्तं स्मरेद्यः स्मृतिमानसौ' ॥ इति का-पुस्तके. १३. 'भ्रूक्षेपैः साभिनेतव्या' क-ख.; 'भ्रूविक्षेपैः साभिनेतव्या' का. १४. 'शौर्य°' इति क-ख. पुस्तकयोर्नास्ति. १५. 'अधिकार्थलाभ' का. १६. 'विविधक्रीडादिभिः' का. १७. 'उत्पद्यते' का. १८. 'तमभिनयेत्' ब. १९. 'प्राप्य मां' (?) क.; 'प्राप्थ मां' ख. २०. '°पहृत' क-ख. २१. 'अत्रार्ये भवतः' ब.

विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविषादाद्यै रहिता तु सदा प्रयोक्तव्या ॥ ५६ ॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
[1]अप्राप्तैश्च न शोको यस्यां हि भवेद्धृतिः सा तु ॥ ५७ ॥

व्रीडा नाम—अकार्यकरणात्मिका । सा[2] च गुरुव्यतिक्रमणा[3]वज्ञानप्रतिज्ञा[4]निर्वहणपश्चात्तापादिभिर्विभावादिभिः समुत्पद्यते[5] । तां निगूढ[6]वदनाधोमुखचिन्[7]तनोर्वीलेखनवस्त्राङ्गुलीयकस्[8]पर्शननख[9]निस्तोदनादिभिरनुभावैरभिनयेत् । अत्रार्ये[10]—

किंचिदकार्यं कुर्वन्[11]नेवं यो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित[12] इति वेदितव्योऽसौ ॥ ५८ ॥
लज्जानिगूढवदनो भूमिं विलिखन्[13]नखांश्च विनिक्रुन्तन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडित[14]ः कुर्यात् ॥ ५९ ॥

चपलता नाम—रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूलादिभिर्विभावैः सं[15]मुत्पद्यते । तस्याश्च वाक्पारु[16]ष्यनिर्भर्त्सन[17]संप्रहारवधबन्धनताडनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्या[18]—

अविमृश्य तु यः (यस्तु ?) कार्यं पुरुषो वध[19]ताडनं समारभते ।
अविनिश्चितकारित्वात्स तु[20] खलु चपलो बुधैर्ज्ञेयः ॥ ६० ॥

---

१. 'अप्राप्तेन हि शोको' का. २. 'सा च' इति क-ख-का-पुस्तकेषु नास्ति. ३. 'गुरुव्यतिक्रमणा च ज्ञान' इति क-ख-पुस्तकयोः. ४. 'प्रतिज्ञानानिर्वहणकृतप्रत्यादिष्टपश्चात्तापादिभिर्विभावैरुत्पद्यते' का. ५. 'भावैरुत्पद्यते' क-ख. ६. 'गूढ°' क-ख. ७. 'विचिन्तनविलेखन' क-ख.; 'चिन्तनोर्वीलेखन' का. ८. 'संस्पर्शन' का. ९. 'नखनिकृन्तनादिभिः' ब-का. १०. 'अत्रार्ये 'भवतः' ब-का. ११. 'कुर्वाण एव' क-ख.; 'कुर्वन् यो हि नरो' का. १२. 'व्रीडित' ब. १३. 'नखांश्च विनिकुञ्चन्' क-ख.; 'नखैश्च विनिकृन्तन्' का. १४. 'व्रीलितः' ब. १५. 'उत्पद्यते' क-ख-का. १६. 'वाक्पारुष्यादिभर्त्सनसंप्रहारवधबन्धनताडनज्ञापनादिभिः' का. १७. '°वधबन्धनसंप्रहारताडनादिभिः' ब. १८. 'अत्रार्या भवति' ब. १९. 'वधबन्धनादिकं' का. २०. 'स हि' क-ख.

हर्षो नाम—मनोरथलाभेष्टजनसमागमनमनःपरितोषदेवगुरुराजभर्तृप्रसा-
दभोजनाच्छादनधनलाभोपभोगादिभिर्विभावैः समुत्पद्यते[2] । तमभिनयेन्नयन-
वदनप्रसादप्रियभाषणालिङ्गन[3]कण्टकितपुलकितास्रस्वेदादिभिरनुभावैः ।

अत्रार्ये[4]—

अप्राप्ये प्राप्ये[5] वा लब्धेऽर्थे प्रियसमागमे वापि ।
हृदयमनोरथलाभे हर्षः संजायते पुंसाम् ॥ ६१ ॥
[नयन[6]वदनप्रसादप्रियभाषालिङ्गनैश्च रोमाञ्चैः ।
ललितैश्चाङ्गविहारैः स्वेदाद्यैरभिनयस्तस्य ॥ ६२ ॥]

आवेगो नाम—उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणप्रकृति[7]व्य-
सनाभिघातादिभिर्विभावैः समुत्पद्यते[8] । तत्रोत्पात[9]कृतो नाम विद्युदुल्कानि-
र्घातप्रपतन[10]चन्द्रसूर्योपरागकेतुदर्शन[11]कृतः । तमभिनयेत्सर्वाङ्गस्त्र[12]स्तवैमनस्य-
मुखवैवर्ण्यविषादविस्मयादिभिः । वातकृतं पुनरवगुण्ठ[13]नाक्षिप[14]रिमार्जनवस्त्र-
संग्रहणत्वरितगमनादिभिः[15] । वर्षकृतं[16] पुनः सर्वाङ्गसंपिण्डन[17]प्रधावनछन्नाश्रय[18]-
मार्गणादिभिः । अग्निकृतं नाम[19] धूमाकुल[20]नेत्रताङ्गसंकोचनविधूननातिक्रा-
न्तो[21]पक्रान्तादिभिः । कुञ्जरोद्भ्रमणकृतं नाम[22] त्वरितापसर्पणचपलगमनभयस्त-

---

१. '°लाभेप्सितावा(व ?)भीष्टजनसमागत (म) मनुः पुलकितपरितोष°' क-ख.; '°लाभेप्सिताभीष्टजनसमागममनःपरितोष°' का. २. 'उत्पद्यते' क-ख-का. ३. '°प्रिय-भाषणाकटिकत ( कण्ठकित ? ) मुकुलिताश्रुस्वेदादिभिरनुभावैः' क-ख.; '°प्रियभाषण-लिङ्गनकण्टकितास्रस्वेदोद्गमनललितताडनादिभिरनुभावैः' का. ४. 'अत्रार्या' क-ख. ५. 'प्राप्ते वाप्राप्ते वा' क-ख.; 'प्राप्ते वाप्राप्ये वा का. ६. 'सेयमार्या क-ख. पुस्तकयोर्नास्त्येव. ७. '°श्रवणनयनाभिघातादिभिः' का. ८. 'उत्पद्यते' क-ख-का. ९. 'धवोपोत (?)' क-ख. १० 'प्रतपन' क-ख-का. ११. '°दर्शनादिभिर्विभावै-रुत्पद्यते' का. १२. 'स्रस्तविषण्णवैमनस्यमुखवैवर्ण्यविस्मयादिभिः' का. १३. '°अव-कुण्ठन°' ब. १४. '°नाक्षिमर्दनवस्त्रसंगूहन' क-ख-का. १५. 'अनुभावैः ।' इत्यधिकमत्र का. पुस्तके. १६. 'वर्षाकृतं' क-ख.; 'वर्षाकृतं नाम' का. १७. 'संपीडन' ब. १८. 'छत्राश्रयणादिभिः' क-ख-का. १९. 'तु' इति क-ख-का-पुस्तकेषु. २०. 'धूमा-कुला तत्रताङ्ग (?)संवेग' क-ख.; 'धूमाकुलनेत्रसंकुचनाङ्गसंवेग'. २१. '°तिक्रान्ताप-क्रान्तादिभिः' क-ख.; '°तिक्रान्तपादादिभिः' का. २२. 'अपि' क-ख-का.

म्भवेपथुपश्चादवलोकनविस्मयादिभिः । प्रियश्रवणकृतं नामा[1]भ्युत्थानालिङ्गनवस्त्राभ[2]रणप्रदानाश्रुपुलकितादिभिः । अप्रियश्रवणकृतं [3]नाम [4]भूमिपतनविषमविवर्तनपरिधानविलापनाक्रन्दनादिभिः । प्रकृतिव्यसन[5]कृतं सहसोपसर्पणशस्त्रचर्मवर्मधारणगजतुरगरथारो[6]हणसंप्रधा[7]रणादिभिः ।

ए[8]वमष्टविकल्पोऽयोमावेगः संभ्रमात्मकः ।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः ॥ ६३ ॥

अत्रार्ये[9] भवतः ।

अप्रियनिवे[10]दनाद्वा सहसा ह्यभि[11]धारितारिवचनेन ।
[12]शस्त्राक्षेपात्रासादावेगो नाम संभवति ॥ ६४ ॥
अप्रियनिवेदनाद्यो विषादुभावाश्रयोऽनुभावोऽस्य ।
[13]सहसारिदर्शनाच्चेत्प्रहरणपरि[14]घट्टनैः कार्यः ॥ ६५ ॥

जडता नाम—सर्वकार्याप्रतिपत्तिः । इष्टानिष्टश्रवणदर्शनव्याध्यादिभिर्विभावैः समुत्पद्यते । तामभिनयेदक[15]थनाभिभाषणतूष्णींभा[16]वानिमेषनिरीक्षणपरवशत्वादिभिरनुभावैः । अत्रार्या भवति[17]—

इष्टं वानिष्टं वा सुखदुःखे वा न[18] वेत्ति यो मोहात् ।
तूष्णीकः परवशगो भ[19]वति स जडसं[20]ज्ञितः पुरुषः ॥ ६६ ॥

---

१. 'तु' क-ख-का. २. '°प्रोद्यता' क-ख-का. ३. 'अपि' क-ख-का-पुस्तके तु नामापि नास्ति, अपिरपि नास्ति. ४. 'उच्चपतनचलनपरिवर्तितपरिधावितविलापाक्रन्दादिभिः' क-ख.; 'भूमिपतनपरिदेविতविषयपरिवर्तिकपरिधावितविलापरुदितादिभिः' का. ५. 'व्यसनकृतं तु सहसोपक्रमणशस्त्रधर्मधरणवेपनगज°' क-ख.; 'व्यसनाभिघातकृतं तु सहसोपक्रमणशस्त्रवर्मधारणगज' का. ६. 'रथरोहण' क-ख. ७. 'संप्रहरणादिभिः' का. ८. 'इत्येषोऽष्टविधो ज्ञेयः' क-ख-का. ९. 'भवतः' इति क-ख. पुस्तकयोर्नास्ति. १०. 'अप्रियनिवेदनादिश्रवणादवधारितवचनस्य' (?) का. ११. 'ह्यवधीरि-[तस्य ?] वचनस्य' क-ख. १२. 'शस्त्रक्षेपत्रासात्' क-ख-का. १३. 'सहसा निदर्शनं चेत्, प्रहरणपरिघट्टनं कार्यम्' का. १४. 'परिदेवनं कार्यम्' क-ख. १५. 'अकथनाभाषण' क.; 'कथनाभाषण°' ख-का. १६. '°भावाप्रतिभनिमेष°' का. १७. 'भवति' इति क-ख-का-पुस्तकेषु नास्ति. १८. 'वेत्ति न ये' ख. १९. 'स भवति' क-ख-का. २०. 'जडसंज्ञक' क-ख-का.

गर्वो नाम—ऐश्वर्यकुलरूपयौवनविद्या[1]बलधनलाभादिभिर्विभावैः समुत्पद्यते । [2]तस्यासूया[3]वज्ञाधर्षणानुत्तर[4]दानासंभाषणाङ्गावलोकनविभ्रमापहसनवाक्[5]पारुष्यगुरु[6]व्यतिक्रमणाधिक्षेपवचनविच्छेदादिभिरनुभावैरभि[7]नयः प्रयोक्तव्यः । भवति चात्रार्या[8]—

> विद्या[9]वाप्ते रूपादैश्वर्याद[10]र्थं धनागमाद्वापि ।
> गर्वः खलु[11] नीचानां दृष्टयङ्गविचालनैः[12] कार्यः ॥ ६७ ॥

विषादो नाम—कार्यानिस्तरण[13]दैवव्यापत्तिसमुत्थः । तमभिनयेत्सहायान्वेषणोपायविचिन्तनोत्साहविघात[14]वैमनस्यनिःश्वसितादिभिरनुभावैरुत्तममध्यमानाम् । अधमानां तु परि[15]धावनालोकनमुखशोषणसृक्कपरिलेहननिद्रा[16]निःश्वसितध्यानादिभिरनुभावैः । अत्रार्या[17]श्लोकौ—

> कार्यानिस्तरणा[18]द्वा चौर्याभिग्रहणराजदोषाद्वा ।
> दैवादिष्टो[19] योऽर्थस्तदसंप्राप्तौ विषादः स्यात् ॥ ६८ ॥

> विचित्रो[20]पायचिन्ताभ्यां कार्य[21]मुत्तममध्ययोः ।
> निद्रा[22]निःश्वसितध्यानैरधमानां तु दर्शयेत् ॥ ६९ ॥

---

१. 'विद्याबलादिभिः' क-ख. २. 'तं' क-ख. ३. 'असूया' इति का-पुस्तके नास्ति. ४. '°दानाभाषणा°' क-ख.; 'दानसंभाषणांसावलोकन' का. ५. '°वाक्°' इति क-ख-पुस्तकयोर्नास्ति. ६. 'गुरुव्यतिक्रमणाधिक्षेपादिभिः क-ख. 'गुर्वतिक्रमा-(म?) णाधिक्षेपादिभिः' का. ७. 'अभिनयेत्' क-ख. ८. 'अत्रार्या' का.; 'अत्रार्या भवति' ब. ९. 'विद्यायौवनरूपात्' का. १०. 'अथवा' ब. ११. 'स च' क-ख. १२. 'विचारणैः' क-ख-का. १३. 'कार्यानिरण' (?) क-ख.; 'कार्यारम्भानिस्तरण' का. १४. 'निर्घातवैमनस्यादिभिरुत्तममध्यमानाम्' क.; 'निर्वालवैनामनस्या' (?) ख. १५. 'विपरिधावनावलोकनमुखशोषणसृक्क' क-ख. १६. 'निद्राश्वसितध्यानादिभिः' क-ख-का. १७. 'अत्रार्ये' क-ख.; 'अत्रार्या श्लोकश्च' का. १८. 'कार्यालिस्तरणकृतचौर्याभिकृतराजदोषाद्यैः°' क-ख.; 'कार्यानिस्तरणकृतशौर्यादिग्रहणराजदोषाद्यैः' का. १९. 'दैवादर्थविवर्ते भवति विषादः सदा पुंसाम्' का. २०. 'वैचित्र्योपाय' ब. २१. 'कार्य' क-ख. २२. 'भिश्वमत' (?) क-ख.

औत्सुक्यं नाम—इष्टजनवियोगानुस्मरणो[1]द्यानदर्शनादिभिर्विभावैरुत्पद्यते । [2]तस्य दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्रा[3]शयना[4]भिलाषादिभिरभिनयः प्रयोक्तव्यः[5] । अत्रार्या [6]भवति—

इष्टजनस्य वियोगादौत्सुक्यं जायते ह्यनुस्मृत्या ।
चिन्तानिद्रातन्द्रा[7]गात्रगुरुत्वैरभिनयो [8]ह्यस्य ॥ ७० ॥

निद्रा नाम—दौर्बल्यश्रमक्लममदालस्यचिन्तात्याहारस्वभावादिभिर्विभावैः समुत्पद्यन्ते[9] । तामभिनयेद्वदनगौरवशरीरा[10]वलोकननेत्र[11]घूर्णनविजृम्भणमान्द्योच्छ्वसितसन्नगात्रलाक्षिनिमीलनादिभिरनुभावैः । [12]अत्रार्ये भवतः—

आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च ।
रात्रौ जागरणादपि निद्रा पुरुषस्य संभवति ॥ ७१ ॥
[13]तस्या मुखगौरवगात्र[14]प्रतिलोलननयनमीलनजडत्वैः ।
जृम्भणगात्रविमर्दैरनुभावैरभिनयः [15]प्रयोक्तव्यः ॥ ७२ ॥

अपस्मारो नाम—दे[16]वयक्षनागब्रह्मराक्षसभूतप्रेतपिशाचग्रहणा[17]नुसरणोच्छिष्टशून्यागारसेवनाशुचिकालान्तरा[18]परिपतनव्याध्यादिभिर्विभावैः समुत्पद्यते । तस्य [19]स्फुरितनिःश्वसितोत्कम्पितधावनपतनस्वेद[20]स्तम्भनवदनफेनजिह्वापरिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । [21]अत्रार्ये भवतः—

---

१. '°उद्यानदर्शन°' इसि क-ख-पुस्तकयोर्नास्ति. २. 'तद्' क-ख. ३. 'तन्द्री' ब. ४. '°अभिलाषा°' इति क-ख-पुस्तकयोर्नास्ति. ५. 'अभिनयेत्' क-ख. ६. 'भवत्यपि च' क-ख.; 'अत्रार्या' का. ७. 'तन्द्री' ब. ८. 'हि' इति क-ख-ब-पुस्तकेषु नास्ति. ९. 'उत्पद्यते' क-ख-का. १०. 'शरीरालालन' क-ख.; 'गात्रपरिलोडन' का. ११. 'घूर्णनविजृम्भणगात्रमर्दोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसर्वेक्रियासंमोहादिभिः' क-ख.; 'विघूर्णनजृम्भणगात्रविमर्दनोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसंमोहनादिभिः' का. १२. 'अत्रान्तरे आर्ये' क-ख. १३. 'तां' क-ख. १४. '°गात्रपरिलोलनयनमीलनजन्वैः (?)' क-ख.; '°गात्रैर्नयननिमीलनविघूर्णनजडत्वैः' का. १५. अभिनयेत्प्राज्ञः' क-ख. १६. 'देवनागयक्षब्रह्मराक्षसपिशाचादीनां' क-ख.; 'देवनागयक्षराक्षसपिशाचादीनां' का. १७. 'ग्रहणोच्छिष्ट°' क-ख.; 'ग्रहणादनुस्मरणाद्' का. १८. 'कालान्तरापातधातुवैषम्यादिभिर्विभावैरुत्पद्यते' क-ख.; 'कान्तारातिपातधातुवैषम्यादिभिर्विभावैरुत्पद्यते' का. १९. 'स्फुरितकम्पितनिःश्वसित' क-ख.; 'दुरितकम्पितनिःश्वसित' का. २०. 'स्वेदस्तम्भवदन°' क-ख.; 'स्वेदवदनफेनहिक्काजिह्वा' का. २१. 'भवति चात्र' क-ख.

भूत[1]पिशाचग्रहणानुस्मरणोच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशुचे[2]श्च भवे[3]त्यपस्मारः ॥ ७३ ॥

सहसा भूमौ पतनं प्रवेपनं[4] वदन[5]फेनमोक्षश्च ।
निःसंज्ञ[6]स्योत्थानं रूपाण्येतान्यपस्मारे[7] ॥ ७४ ॥

सुप्तं नाम—[8]निद्राभिभवः; इन्द्रियविषयोपगमनमोहनक्षितितलशयनप्रसारणानुकर्षणादिभिर्विभावैः समुत्पद्यते । निद्रासमुत्थं तदु[9]च्छ्वसितसन्नगात्राक्षिनिमीलनसर्वेन्द्रियसंमोह[10]नोत्स्वप्नायितादिभिरनुभावैरभिनयेत् ।

अत्रा[11]र्ये भवतः—

निद्राभिभवेन्द्रियोपरमणमोहनैर्भवेत्सुप्तम् ।
अक्षिनिमीलोच्छ्वसनैः स्वप्नायितजल्पितैः कार्यः ॥ ७५ ॥

सोच्छ्वा[12]सैर्निःश्वासैर्मन्दाक्षिनिमील[13]नेन निश्चेष्टः ।
सर्वेन्द्रियसंमोहात्सुप्तं स्वप्नैश्च युञ्जीत ॥ ७६ ॥

विबोधो नाम—आहार[14]परिणामनिद्राच्छेदस्वप्ना[15]न्ततीव्रशब्दस्पर्शाश्रवणादिभिर्विभावैः समुत्पद्यते[16] । त[17]मभिनयेज्जृम्भणाक्षिपरिमर्दनशयनमोक्षणादिभिरनुभावैः । अत्रार्या भवति—

---

१. 'भूतप्रेतपिशाच°' क-ख.; 'भूतपिशाचस्मरणग्रहणानुच्छिष्ट' का. २. '°अशुचिषु च' क-ख. ३. 'भवेद् ह्यपस्मारः' का. ४. 'प्रकम्पनं' क-ख-का. ५. 'वदने' (?) क-ख. ६. 'निःसंज्ञाभ्युत्थानं' का. ७. 'अपस्मारस्य' क-ख. ८. 'निद्राभिभवः' इत्यारभ्य 'समुत्पद्यते' इत्यन्तं पाठः क-ख-का-पुस्तकेषु नास्ति. ९. 'तदुच्छ्वसितनिःश्वसित' क-ख-का. १०. 'संमोहस्वप्नायितादिभिः' क-ख.; 'संमोहोत्स्वप्नादिभिः' का. ११. 'अत्रार्या' का.; सेयमार्या क-ख-का-पुस्तकेषु नास्ति. क-ख-पुस्तकयोः 'अत्रार्या' इति नास्ति. १२. 'निःश्वासैः सोरा (च्छ्वा ?) सैः' क-ख. १३. 'निमीलने' क-ख. १४. 'निद्राच्छेदाहारपरिणाम' क-ख.; 'निद्राच्छेदाहारविपरिणाम' का. १५. 'स्वप्नान्तशब्दस्पर्शादिभिः' क-ख.; 'दुःस्वप्नतीव्रशब्दरूपादिभिः' का. १६. 'उत्पद्यते' क-ख-का. १७. 'तं जृम्भणाक्षिविमर्दनशयापाक्षणाङ्ग (?) चलनभुजाक्षेपाङ्गुलित्रोटनादिभिरभिनयेत्' क-ख.; 'तं जृम्भणक्षिमर्दनशयनमोक्षाङ्गवदनभुजावक्षेपणाङ्गुलित्रोटनादिभिरनुभावैरभिनयेत्' का.

आहारविपरिणामाच्छब्दस्पर्शादिभिश्च संभूतः ।
प्रतिबोधस्त्वभिनेयो जृम्भणव[1]दनाक्षिपरिमर्दैः ॥ ७७ ॥

अमर्षो नाम—विद्यैश्वर्य[2]बलाधिकैरधिक्षिप्तस्या[3]वमानितस्य वा समुत्पद्यते । [4]तमभिनयेच्छिरःकम्पनप्रस्वेदनाधोमुखचिन्तनध्यानाध्यवसायोपायसहायान्वेषणादिभिरनुभावैः । [5]अत्र श्लोकौ—

आक्षिप्तानां सभामध्ये वि[6]द्यैश्वर्यबलाधिकैः ।
नृणामुत्साह[7]संयोगादमर्षो नाम जायते ॥ ७८ ॥
उत्साहाध्यवसायाभ्यामधोमुखविचिन्त[8]नैः ।
शिरःप्रकम्प[9]स्वेदाद्यैस्तं प्रयुञ्जीत पण्डितः ॥ ७९ ॥

अवहित्थं नाम—आकारप्रच्छादनात्मकम् । तच्च लज्जाभ[10]यापजयगौरवजैह्म्यादिभिर्विभावैः समु[11]त्पद्यते । तस्यान्यथाकथना[12]वलोकितकथाभङ्गकृ[13]तकधैर्यादिभिरनुभावैरभि[14]नयः प्रयोक्तव्यः । अत्र [15]श्लोको भवति—

धार्ष्ट्यजैह्म्यादिसंभूतमवहित्थं [16]भयात्मकम् ।
तच्चागणनया कार्यं [17]नातिचोत्तरभाषणात् ॥ ८० ॥

उ[18]ग्रता नाम—चौर्याभिग्रहणनृपापराधासत्प्रलापादिभिर्विभावैः समुत्पद्यते[19] । तां च वधबन्धनताडननिर्भर्त्सनादिभिरनुभावैरभिनयेत् ।

---

१. 'वलनाक्षि' का. २. '°धनबलाधिकैः' क-ख-का. ३. '°अपमानितस्य' क-ख. ४. 'तं शिरःकम्पनप्रस्वेदाधोमुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरभिनयेत्' क-ख.; 'तस्य शिरःकम्पनस्वेदाधोमुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।' का. ५. 'भवति चात्र' क-ख. ६. 'विद्याशौर्यबलाधिकैः' ब. ७. '°संपन्नो ह्यमर्षो' क-ख-का. ८. 'विचिन्तितैः' क-ख. ९. 'प्रकम्पप्रस्वेदाः' क-ख. १०. '°अपजय' इति क-ख-पुस्तकयोर्नास्ति. ११. 'उत्पद्यते' क-ख-का. १२. 'विलोकित' क-ख-का. १३. '°कृतैरनुभावैः' का. १४. '°अनुभावैः' इति क-ख-पुस्तकयोर्नास्ति. १५. 'भवति चात्र' क-ख.; 'अत्र श्लोकः' का. १६. 'भयानकम्' क-ख-का. १७. 'तानि' क-ख-का. १८. 'अथोग्रता' क-ख-का. १९. 'उत्पद्यते' का.

अत्रार्या[1] भवति—

चौर्याभिग्रह[2]योगान्नृपापराधात्तथोग्रता[3] भवति।
वधबन्ध[4]ताडनादिभिरनुभावैरभिनयस्तस्याः॥ ८१॥

मतिर्नाम—नानाशास्त्र[5]विचिन्तनोहापोहादिभिर्विभावैः समुत्पद्यते[6]। ताम-भिनयेत् शिष्योपदेशार्थ[7]विकल्पनसंशयच्छेदादिभिरनुभावैः। भवति चात्र श्लोकः—

नानाशास्त्रार्थबोधेन[8] मतिः संजायते नृणाम्।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत्॥ ८२॥

व्याधिर्नाम—वातपित्तकफसंनिपातप्रभवः। तस्य ज्वरादयो विशेषाः। ज्वरस्तु[9] द्विविधः—सशीतः सदाहश्च। तत्र[10] सशीतो नाम[11] प्रवेपितसर्वाङ्गोत्कम्प-ननिकुञ्चना[12]भ्यभिलाषरोमाञ्चहनुवलननासाविकूणनमुखशोषणपरिदेवितादि-भिरनुभावैरभिनेयः[13]। सदाहो नाम[14] विक्षिप्ताङ्ग[15]करचरणभूम्यभिलाषानुलेपनशी-तैला[16]भिलाषपरिदेवनमुखशोषोत्क्रुष्टादिभिरनुभावैः। ये चान्ये[17] व्याधयस्तेऽपि खलु मुखविकूर्णन[18]गात्रस्तम्भ[19]स्रस्ताक्षिनिःश्वसनस्तनितोत्क्रुष्टवेपनादिभिरनुभावै-रभिनेयाः। अत्र[20] श्लोको भवति—

---

१. 'भवति चात्र' क-ख.; 'अत्रार्या' का. २. 'चौर्यग्रहणनिरोधात्' का., 'चौर्याभि-ग्रहणवशात्' ब. ३. 'अथोग्रता' ब.; 'ततोग्रता' का. ४. '°बन्धन' क-ख. ५. '°शास्त्रचिन्तनो°' क-ख.; '°शास्त्रार्थचिन्तनो°' का. ६. 'उत्पद्यते' क-ख-का. ७. 'शिष्ये वेदेशार्थ' (?) क-ख. ८. 'सुनिष्पन्ना' क-ख. 'विनिष्पन्ना' का. ९. 'तु खलु' का. १०. 'सशीतस्तावत्' का. ११. 'नाम' इति क-ख-पुस्तकयोर्नास्ति. १२. '°त्कम्प-नहेतुचलनास्यविकूणनमुखशोषणरोमाञ्चास्रपरिदेवितादिभिः' क-ख.; '°त्कम्पनकुञ्चितहनु-चलननासाविघूर्णनमुखशोषणरोमाञ्चास्रानेकपरिदेवनादिभिरनुभावैरभिनयः प्रयोक्तव्यः' का. १३. 'अभिनयेत्' ब. १४. 'सदाहस्तु' क-ख.; 'सदाहः पुनः' का. १५. '°विक्षिप्तवस्त्रकरचरण°' का. १६. 'शीताभिलाषपरिदेविताक्रुष्टादिभिः' क-ख.; 'शीताभिलाषपरिदेवितोत्क्रुष्टादिभिः' का. १७. '°ऽन्येऽपि' का. १८. 'विघूर्णन' का. १९. '°स्तम्भस्तनिताक्रुष्टवेपनादिभिरभिनेयाः' क-ख.; 'स्तम्भनिश्वसनस्तनितो-त्क्रुष्टवेपनपरिदेवनादिभिरनुभावैरभिनेयाः' का. २०. 'अत्र श्लोकः' क-ख-का.

सामान्यतस्तु[1] व्याधीनां कर्तव्योऽभिनयो बुधैः ।
स्रस्ताङ्गगात्रविक्षेपैस्तथा मुखविकूणनैः[2] ॥ ८३ ॥

उन्मादो नाम-इष्टजनवियोगविभवनाशाभिघात[3]वातपित्तश्लेष्मप्रकोपादिभिर्विभावैरुत्पद्यते[4] । तम[5]निमित्तहसितरुदितोत्कुष्टासंब[6]द्धप्रलापश[7]यितोपविष्टोत्थितप्रधावित[8]नृत्तगीतपठितभस्मपांसव[9]धूलनतृणनिर्माल्य[10]कुचेलचीरघटकपालशरावाभरण[11]धारणोपभोगैरनेकै[12]श्चानवस्थितैश्चेष्टानुकरणादिभिरनुभावैरभिनयेत् ।

अत्रार्ये[13] भवतः—

इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात् ।
विविधाच्चित्त[14]विकारादुन्मादो नाम संभवति ॥ ८४ ॥
अनिमित्तहसित[15]रुदितोपविष्टगीतप्रधावितोत्कुष्टैः ।
अन्यैश्च विकारकृतैरुन्मादं संप्रयुञ्जीत ॥ ८५ ॥

मरणं नाम—व्याधिजमभिघातजं च । तत्रा[16]न्त्र[17]यकृच्छूलदोषवैषम्यगण्ड[18]पिटकज्वर[19]विषूचिकादिभि[20]र्यदुत्पद्यते तद्व्याधिप्रभवम् । अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथ[21]पशुयानपातविनाशप्रभवम् ।

[22]एतयोरभिनयविशेषान्वक्ष्यामः—तत्र [23]व्याधिजं नाम विषण्णगात्रव्यायताङ्गविचेष्टितनिमीलितनयनं हिक्काश्वासोपेतनमनवेक्षितपरिजनमव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत् । अत्र श्लोको [24]भवति—

---

१. 'समासतस्तु' क-ख. २. 'रुजा मुखविघूर्णनैः' का. ३. 'व्यसनाभिघात' का. ४. 'समुत्पद्यते' क-ख. ५. 'तमपनिमित्त' ब. ६. '°ष्टाबद्धप्रलाप' क-ख.; '°ष्टासंबन्ध' का. ७. 'शयनो°' क-ख-का. ८. '°प्रचितनृत्त' क-ख. ९. 'पांश्ववधूलन' का. १०. '°वधूलननिर्माल्यवीरघटवक्त्रशरावाभरणस्पर्शनोपभोगैरन्यैश्चाव्यस्थितावष्टा (?) करणादिभिरनुभावैरभिनयेत्' क-ख. ११. '°भारणा (?) धारणो°' का. १२. '°रन्यैश्चानवहितचेष्टाकरणादिभिरनुभावैरभिनयेत्' का. १३. 'भवति चात्र' क-ख. १४. 'पित्तविकारात्' क-ख-का. १५. '°रुदितहसितो' ब. १६. 'आन्त्रयकृच्छूल' इति क-ख-पुस्तकयोर्नास्ति. १७. 'यदान्त्र°' का. १८. 'गण्डपिण्डकाज्वर°' का. १९. 'विचर्चिकादिभिः' क-ख. २०. 'यद्' इति क-ख-का-पुस्तकेषु नास्ति. २१. '°पशु°' इति क-ख-का-पुस्तकेषु नास्ति. २२. 'एतेष्विदानीम्' क-ख. २३. 'व्याधिजं विषण्णगात्रं व्यपेताङ्गविचेष्टितं निमीलितनयनं हिक्काश्वासोत्पतनमनपेक्षित°' क-ख.; 'विषण्णगात्रमप्यायताङ्गविचेष्टितं निमीलितनयनं हिक्काश्वासोत्पतनमनपेक्षितं°' का. २४. 'भवति' इति क-ख-का-पुस्तकेषु नास्ति.

व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः ॥ ८६ ॥

अभिघातजे तु नानाप्रकारा अभिनयविशेषाः[1] । यथा—शस्त्रक्षते तावत्सहसाभूमिपतनवेपन[2]स्फुरणादिभिरभिनयः प्रयोक्तव्यः । अहिदष्टे[3] विषपीतयोर्विषवेगो यथा—कार्श्यवेपथुविदाह[4]हिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः । अत्रानुवंश्यौ[5] श्लोकौ भवतः—

कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुर्भवेत्[6] ।
दाहं[7] तृतीये हिक्कां च[8] चतुर्थे संप्रयोजयेत् ॥ ८७ ॥
फेनं च पञ्चमे कुर्यात्षष्ठे[9] स्कन्धस्य भञ्जनम् ।
जडतां सप्तमे कुर्यादष्टमे मरणं तथा[10] ॥ ८८ ॥

अत्रार्या[11] भवति—

श्वापदगजतुरगरथो[12]द्भवं तु पशुयानपतनजं वापि ।
शस्त्रक्षतवत्कुर्यादनवेक्षितगात्र[13]संचारम् ॥ ८९ ॥
इत्येवं[14] मरणं ज्ञेयं नानावस्थान्तरात्मकम् ।
प्रयोक्तव्यं बुधैः सम्यग्यथाभावाङ्ग[15]चेष्टितैः ॥ ९० ॥

त्रासो नाम—विद्युदुल्काशनिपातनिर्घाताम्बुधर[16]महासत्त्वपशुरवादिभिर्विभावैरुत्पद्यते । तं[17] संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापादिभिरनुभावैरभिनयेत् । अत्र[18] श्लोको भवति—

---

१. 'नानाभिनयविशिष्टाः' क-ख.; 'नानाप्रकाराभिनयविशेषाः' का. २. 'विकम्पन' क-ख.; 'भूमिपतनादिभिरनुभावैः' का. ३. 'अहिदष्टे विषपीते नानाविषवेगैर्यथा' क-ख.; 'अहिदष्टे तु विषपीते वा विषवेगे यथा' का. ४. 'दाह' क-ख-का. ५. 'अनुवंश्यौ' इति ब-पुस्तके नास्ति. ६. 'वेपथुस्तथा' क-ख.; 'वेपथुं तथा' का. ७. 'दाहः' क-ख. ८. 'तु' का. ९. 'स्यात् षष्ठे स्कन्धभञ्जनम्' क-ख.; 'षष्ठे तु स्कन्धभञ्जनम्' का. १०. भवेत्' ब. ११. 'अत्रार्या भवति' इत्यधिकं ब-पुस्तके. १२. 'रथ' इति का-पुस्तके नास्ति. १३. 'अनक्षतगात्रसंचारं' क-ख. १४. 'इत्येतन्मरणं प्रोक्तं' क-ख.; 'इत्येवं मरणं ज्ञेयं' का. १५. 'वागङ्गचेष्टितैः' का.; 'भावा... चेष्टितैः' ब. १६. 'अम्बुदरवसत्त्वदर्शनपश्वारवादिभिः' का. १७. 'तमभिनयेत्' ब.; 'तं' इति का-पुस्तके नास्ति. १८. 'भवति चात्र' क-ख.; 'अत्र श्लोकः' का.

महाभैरवनादाद्यै[1]स्त्रासैः[2] समुपजायते ।
स्रस्ताङ्गा[3]क्षिनिमेषैश्च तस्य त्वभिनयो भवेत् ॥ ९१ ॥

वितर्को नाम—संदेहविमर्षविप्र[4]तिपत्त्यादिभिर्विभावैरुत्पद्यते । तमभिनयेद्विविधविचारितप्रश्न[5]संप्रधारणमन्त्रसंगूहनादिभिरनुभावैः । अत्र[6] श्लोको भवति—

विचारणादिसंभू[7]तः संदेहातिशया[8]त्मकः ।
वितर्कस्त्व[9]भिनेयो वै शिरोभ्रूक्षेप[10]कम्पनैः ॥ ९२ ॥

एवमेते[11] त्रयस्त्रिंशद्व्यभिचारिणो भावा[12] देशकालावस्थानुरूप्येणात्मगतपरमध्यस्था उत्तममध्यमाधमैः स्त्रीपुंसैः स्वप्रयोगवशादुपपाद्या इति ।

त्रयस्त्रिंशदिमे भावा[13] विज्ञेया[14] व्यभिचारिणः ।
सात्त्विकांस्तु पुनर्भावान्प्रवक्ष्या[15]म्यनुपूर्वशः ॥ ९३ ॥

अत्राह—किमन्ये भावाः सत्त्वेन[16] विना[17]भिनीयन्ते यस्मा[18]दुच्यते एते सात्त्विका इति । अत्रोच्यते एवमेतत्[19] कस्मात्—इह[20] हि सत्त्वं नाम मनःप्रभवम् । तच्च समाहितमनस्त्वादुत्पद्यते[21] । मनःसमाधा[22]नाच्च सद्यो निर्वृतिरिति । तस्य च[23] योऽसौ स्वभावो रोमा[24]ञ्चाश्रुवैवर्ण्यादिलक्षणो यथाभावोप-

१. '°नादाद्यै' क-ख. २. 'त्रासात्' क-ख. ३. 'स्रस्ताङ्गार्धनिमेषाद्यैः' का. ४. 'विप्रत्ययादिभिरनुभावैः..................' क-ख. 'विप्रत्ययादिभिर्विभावैरुत्पद्यते' का. ५. '°संज्ञासंप्रहारणमन्त्र°' का. ६. 'भवति चात्र' क-ख.; 'अत्र श्लोकः' का. ७. 'संभूतैः' क-ख. ८. 'स संदेहो त्रयात्मकः' (?) क-ख.; 'संदेहजननात्मकः' का. ९. 'वितर्कः सोऽभिनेयस्तु' ब.; वितर्कस्त्वभिनेयः स्यात्' का. १०. '°पक्षकम्पनैः' का. ११. 'एवमेते' इत्यारभ्य 'उपपाद्या इति' इत्यन्तं पाठः क-ख-पुस्तकयोर्नास्ति. १२. 'विभावा देशकालावस्थानुगतमध्यमाधमोत्तमैः स्त्रीनपुंसकैः पुरुषप्रयोगवशादुत्पाद्या इति' का. १३. '°अमी भावाः' क-ख. १४. 'सुविज्ञेयाः प्रयोक्तृभिः' क-ख. १५. 'व्याख्यास्यामि' का. १६. 'सात्त्वत (?)' क-ख. १७. 'नाभिनीयन्ते' क-ख.; 'विनाभिधीयन्ते' का. १८. 'येनैते सात्त्विका उच्यन्ते' क-ख.; 'यत एत सात्त्विका इत्युच्यन्ते' का. १९. 'एवमेतत् कस्मात्' इति क-ख-का-पुस्तकेषु नास्ति. २०. 'हि' इति का-पुस्तके नास्ति. २१. 'उच्यते' ब. २२. 'मनसः समाधौ सत्त्वनिष्पत्तिर्भवतीति' ब.; 'मनसः समाधानाच्च सत्त्वनिर्वृत्तिर्भवति' का. २३. 'च' इति क-ख-पुस्तकयोर्नास्ति. २४. 'रोमाञ्चाश्वादिकृतः स न शक्यतेऽन्यमनसा' क-ख.; 'स्तम्भस्वेदरोमाञ्चास्रवैवर्ण्यादिको न दृश्यते मनसा' का.

गतः स न शक्योऽन्यमनसा कर्तुमिति । लोकस्वभावानुकरणाच्च[1] नाट्यस्य सत्त्वमीप्सितम् । को[2] दृष्टान्तः । इह हि नाट्यधर्मप्रवृत्ताः[3] सुखदुःखकृतो[4] भावास्तथा सत्त्वविशुद्धाः[5] कार्या यथा स्वरूपा भवन्ति । दुःखं[6] नाम रोदनात्मकं तत्कथमदुःखितेन,[8] सुखं च[7] प्रहर्षात्मकमसुखितेनाभिनेयम्[9] । एतदेवास्य सत्त्वं[10] यद्दुःखितेन सुखितेन वा[11]श्रुरोमाञ्चौ प्रदर्शयितव्याविति[12] कृत्वा सात्त्विका भावा इत्यभिव्याख्याताः[13] । तत्र इमे[14]—

> स्तम्भः[15] स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ[16] वेपथुः ।
> वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः[17] ॥ ९४ ॥

अत्रार्याः—तत्र

> क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः ।
> व्यायामक्लमघर्मैः[18] स्वेदः संपीडनाच्चैव ॥ ९५ ॥
> हर्षभयरोगविस्मय[19]विषादरोषादि[20]संभवः स्तम्भः ।
> शीतभयहर्षरोषस्पर्शजरासंभवः[21] कम्पः ॥ ९६ ॥
> आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात्[22] ।
> अनिमेषप्रेक्षणतः[23] शीताद्रोगाद्भवेदश्रु[24] ॥ ९७ ॥

---

१. '°करणत्वाच्च नान्यस्य' का. २. 'अत्राह को दृष्टान्त इति चेत् । अत्रोच्यते' का. ३. 'नाट्यधर्मांप्रवृत्ताः' ब.; 'नाट्यधर्मैः प्रवृत्तः' का. ४. 'सुखदुःखकृता भावाः' ब.; 'सुखदुःखकृतो भावः' का. ५. 'सत्त्वविशुद्धाधिष्ठितः कार्यो यथास्वरूपो भवति' का. ६. 'तत्र दुःखं' का. ७. 'च' इति का-पुस्तके नास्ति. ८. 'तत्कथमसुखितेन' क-ख. ९. 'अभिनयेत्' ब.; 'अभिनेतुं शक्यते इति सत्त्वमभीप्सितमिति कृत्वा सात्त्विको नाम इति भावः ।' का. १०. '[सर्वं] दुःखितेन' ब. ११. '°स्वरोमाञ्चौ' ब. १२. 'दर्शयितव्यौ क-ख.; 'दर्शयितव्याविति व्याख्यातम् ।' का. १३. 'इत्यभिव्याख्या' क-ख. १४. 'तत्र' इति क-पुस्तके नास्ति.; 'इमे' इति क-ख-पुस्तकयोर्नास्ति. १५. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. १६. 'स्वरसादोऽथ' का. १७. 'स्मृताः' का. १८. '°धर्मात्' क-ख-का. १९. 'शोकविस्मय' क-ख. २०. 'रोगवशसंभवः' क-ख.; 'मदरोषसंभवः' का. २१. 'जरारोगजः' क-ख. २२. 'जृम्भणभयाच्च' का. २३. 'शोकानिमिषप्रेक्षणशीताद्रोगात् भवेदस्रम्' का. २४. 'भवेदास्रम्' ब.

शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् ।
स्पर्शभयशीतहर्षैः[1] क्रोधाद्रोगाच्च रोमाञ्चः ॥ ९८ ॥
स्वरभेदो[2] भयहर्षक्रोधजरा[3]रौक्ष्यरोगमदजनितः ।
श्रममूर्च्छामदनिद्राभिघातमोहादिभिः प्रलयः ॥ ९९ ॥
एवमेते बुधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः ।
कर्म चैषां प्रवक्ष्यामि रस[4]भावानुभावकम् ॥ १०० ॥
व्यजन[5]ग्रहणाच्चापि खेदापनयनेन च ।
खेदस्या[6]भिनयो योज्यस्तथा वाताभिलाषतः ॥ १०१ ॥
[7]निश्चेष्टो निष्प्रकम्पश्च स्थितः[8] शून्यजडाकृतिः ।
स्कन्नगात्र[9]तया चैव स्तम्भं त्व[10]भिनयेद्बुधः ॥ १०२ ॥
वेपनात्स्फुरणात्कम्पाद्वेपथुं संप्रदर्शयेत्[11] ।
स्वरभेदं तथा चैव भिन्नगद्गदनिस्वनैः[12] ॥ १०३ ॥
मुहुःकण्टकित[13]त्वेन तथोल्लुकसनेन च ।
रोमाञ्चस्त्वभिनेयो वै गात्रसंस्पर्शनेन च ॥ १०४ ॥

---

१. '°हर्षात्' क-ख-का. २. 'स्वरसादो' का. ३. '°जरारोगमदजनितः' क-ख.; '°ज्वररोगमदजनितः' का. ४. 'ह्यनुभावानुभावकम्' क-ख-का. ५. 'व्यञ्जक°' क-ख.; 'व्यञ्जन' का. ६. 'खेद एवाभिनेतव्यः' ब-का. ७. ब-पुस्तके श्लोकानां पौर्वापर्य-मत्र वर्तते यथा—

'निःसंज्ञो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः । स्कन्नगात्रतया चैव स्तम्भं त्वभिनयेद्बुधः ॥
व्यजनग्रहणाच्चैव खेदापनयनेन च । खेद एवाभिनेतव्यस्तथा वाताभिलाषतः ॥
मुहुः कण्टकितत्वेन तथोल्लुकसनेन च । पुलकेन च रोमाञ्चं गात्रस्पर्शेन दर्शयेत् ॥
स्वरभेदोऽभिनेतव्यो भिन्नगद्गदनिस्वनैः । वेपनात् स्फुरणात् कम्पाद्वेपथुं संप्रदर्शयेत् ॥
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः । वैवर्ण्यमभिनेतव्यं प्रयत्नात्तद्धि दुष्करम् ॥
बाष्पाम्बुप्लुतनेत्रत्वान्नेत्रसंमार्जनेन च । मुहुरश्रुकणापातैरास्रं त्वभिनयेद्बुधः ॥
निश्चेष्टो निष्प्रकम्पत्वादव्यक्तश्वसितादपि । महीनिपतनाच्चापि प्रलयाभिनयो भवेत् ॥'
श्लोकेष्वेतेषु पाठभेदोऽप्यवलोकनीयः ।

८. 'स्मितशून्यजडाकृतिः' का. ९. 'निःसंज्ञस्तब्धगात्रं च' का. १०. 'सत्वभिनयेद्बुधः (?)' क-ख. ११. 'संप्रदर्शयेत्' क-ख-का. १२. 'विस्वरैः' क-ख. १३. 'भिन्नकण्टकितत्वेन' क-ख.

नेत्रसंमार्जनैर्बाष्पैरश्रु चाभि[1]नयेद्बुधः
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः ॥ १०५ ॥
वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम् ।
[2]महीनिपतनाच्चापि प्रलयाभिनयो भवेत् ॥ १०६ ॥

एकोनपञ्चाशदि[3]मे यथावद्भावाख्यै[4]रवस्था [5]गदिता मया वः ।
भूयश्च [6]ये यत्र रसे नियोज्यास्ताञ्श्रोतुमर्हन्ति च विप्रमुख्याः ॥१०७॥

[7]अत्र [8]श्लोकाः—

ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा ।
सुप्तं निद्रावहित्थं च शृङ्गारे वे[9]पथुस्तथा ॥ १०८ ॥
आलस्यो[10]ग्रजुगुप्साभिर्भावैस्तु परिवर्जिताः ।
उद्भावयन्ति शृङ्गारं सर्वे भावाः स्वसंज्ञया ॥[11] १०९ ॥
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा ।
सुप्तं निद्रावहित्थं च हास्ये भा[12]वाः प्रकीर्तिताः ॥ ११० ॥
निर्वेदश्चै[13]व चिन्ता च दैन्यं ग्लान्या[14]स्रमेव च ।
जडता मरणं चैव व्याधि[15]श्च करुणे स्मृ[16]ताः ॥ १११ ॥

---

१. 'त्वभिनयेद्' का. २. इतः पूर्वं क-ख-पुस्तकयोः 'निश्चेष्टो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः' इति पद्यार्धं वर्तते । 'महीनिपतनाच्चापि' का. ३. 'अमी' क-ख. ४. '°स्त्यवस्था (?) क-ख. ५. 'ह्युदिता मयेह' ब. ६. 'एषां च ये' क-ख.; 'येषां च ये' का. ७. 'अत्र श्लोकाः इति' क-ख-का-पुस्तकेषु नास्ति. ८. 'अत्र' ब-पुस्तके निम्नलिखितश्लोका अधिकाः—
[शङ्का व्याधिस्तथा ग्लानिश्चिन्तासूया भयं तथा । विस्मयश्च वितर्कश्च स्तम्भश्चपलता तथा ॥
रोमाञ्चहर्षौ निद्रा च तथोन्मादमदावपि । स्वेदश्चैवावहित्थं च प्रलयो वेपथुस्तथा ॥
विषादश्रमनिर्वेदा गर्वावेगौ धृतिः स्मृतिः । मतिर्मोहो विबोधश्च सुप्तमौत्सुक्यलज्जिते ॥
क्रोधामर्षौ च हासश्च शोकोऽपस्मार एव च । दैन्यं च मरणं चैव रतिरुत्साहसंयुता ॥
त्रासवैवर्ण्यरुदितैः स्वरभेदः शमोऽपि च । जडता च तथा षट् च चत्वारिंशत्प्रकीर्तिताः ॥]
९. 'वै पुनस्तथा' क-ख. १०. 'जुगुप्साख्यैरेवं भावैस्तु वर्जिताः' ब. ११. अत्र ब-पुस्तके—
[यथावसरमेते हि स्थायिसंचारिसत्त्वजाः । उद्दीपयन्ति शृङ्गारं रसमासाद्य संज्ञितम् ॥]
इत्यधिकम्. १२. 'हास्यभावाः' क-ख. १३. 'निर्वेदाश्चैव' क-ख. १४. 'दैन्यं ग्लान्यस्रमेव च' क-ख.; 'दैन्यग्लान्यस्रमेव च' का. १५. 'चाकरुणा (?) क-ख. १६. 'रसे' का.

असंमोहस्तथोत्साह आवेगो हर्ष एव च ।
मतिश्चैव तथोग्रत्वममर्षो[1] मद एव च ॥ ११२ ॥
रोमाञ्चः स्वरभेदश्च[2] क्रोधोऽसूयौ[3] धृतिस्तथा ।
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति वै ॥ ११३ ॥
[4]गर्वोऽसूया तथोत्साह आवेगो मद एव च ।
क्रोधश्चपलता हर्षो रौद्रे चोग्रत्वं[5]मेव च ॥ ११४ ॥
[6]स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ।
त्रासश्च मरणं चैव वैवर्ण्यं च भयानके ॥ ११५ ॥
अपस्मारस्तथोन्मादो विषादो[7] मद एव च ।
मृत्युर्व्याधिर्भयं[8] चैव भावा बीभत्ससंश्रिताः ॥ ११६ ॥
स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा ।
आवेगो जडता हर्षो मूर्च्छा चैवाद्भुताश्रयाः[9] ॥ ११७ ॥
ये त्वेते सात्त्विका भावा नानाभिनयसंश्रिताः[10] ।
रसेष्वेतेषु सर्वेषु[11] ते ज्ञेया[12] नाट्ययोक्तृभिः ॥ ११८ ॥
न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः[13] ।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा[14] ॥ ११९ ॥
[ [15]बहूनां [16]समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥ १२० ॥
[17]दीपयन्तः प्रवर्तन्ते ये पुनः स्थायिनं रसम् ।
ते तु संचारिणो ज्ञेयास्ते हि स्थायित्वमागताः ॥ १२१ ॥

१. 'अमर्षादय एव च' क-ख.; 'हर्ष उन्माद एव च' का. २. 'प्रतिबोधश्च' क-ख-का. ३. 'क्रोधासूये' क. ४. पद्यमिदं ब-पुस्तके नास्ति. ५. 'तूग्रत्वमेव च' का. ६. 'वेपथुः स्वरभेदश्च रोमाञ्चो गद्गदस्तथा । स्तम्भश्च मरणं स्वेदो वैवर्ण्यं च भयानके ॥' इति ब-पुस्तके. ७. 'व्यञ्जनो नाम एव च' क-ख. ८. 'मृत्युव्याधी' का. ९. 'चैवाद्भुते रसे' ब. १०. 'नानालाभसमाश्रयाः' क-ख. ११. 'सर्वेति (?) ते' क-ख. १२. 'विज्ञेया' का. १३. 'प्रयोगजम्' क-ख. १४. 'च' क-ख. १५. इतःप्रभृति कोष्टकबद्धानि १२७ यावत् पद्यानि क-ख-पुस्तकयोर्न सन्ति. १६. 'सर्वेषां समवेतानां' का. १७. पद्यमेतत् का-पुस्तके नास्ति.

विभावानुभावयुक्तो[1] ह्यङ्गवस्तुसमाश्रयः ।<br>
संचारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत् ॥ १२२ ॥<br>
स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः ।<br>
संचार्याकारमात्रेण स्थायी यस्मादवस्थितः[2] ॥ १२३ ॥<br>
( ये त्वेते सात्त्विका भावा नानाभिनययोजिताः ।<br>
रसेष्वेतेषु सर्वेषु ते ज्ञेया नाट्यकोविदैः ॥ १२४ ॥ )<br>
न ह्येकरसजं काव्यं नैकभावैकवृत्तिकम् ।<br>
विमर्दे रागमायाति प्रयुक्तं हि प्रयत्नतः ॥ १२५ ॥<br>
भावा वापि रसा वापि प्रवृत्तिर्वृत्तिरेव वा ।<br>
बीभत्साद्भुतशान्तानां त्रैविध्यं नात्र कथ्यते ॥ १२६ ॥<br>
षण्णां रसानां त्रैविध्यं नानाभावरसान्वितम् ।<br>
सत्त्वप्रयोजितो ह्यर्थः प्रयोगोऽत्र विराजते ।<br>
विदित्वा हि विराजन्ते लोके चित्रं[3] हि दुर्लभम् ॥ १२७ ॥]<br>
नानाभावार्थसंपन्नाः[4] स्थायिसत्त्वाभिचारिणः[5] ।<br>
पुष्पावकीर्णाः[6] कर्तव्याः काव्येषु हि रसा[7] बुधैः ॥ १२८ ॥<br>
[8]सर्वेषां समवेतानां रूपं यस्य भवेद्बहु ।<br>
स मन्ततो (व्यो?) रसः स्थायी शेषाः संचारिणो मताः ॥ १२९ ॥<br>
एवं[9] रसाश्च भावाश्च व्यवस्था[10] नाटके स्मृताः ।<br>
य एवमेताञ्जानाति स गच्छेत्सिद्धिमुत्तमाम् ॥ १३० ॥

इति श्रीभारतीये नाट्यशास्त्रे भावव्यञ्जनो[11] नाम सप्तमोऽध्यायः ।

---

१. 'युतो' का. २. 'व्यवस्थितः' का. ३. अत्र 'चित्राणि न विरज्यन्ते लोके चित्रं हि दुर्लभम् । विमर्दो रागमायाति प्रयुक्तमपि यत्नतः ॥' इत्येकमेव पद्यं का. पुस्तके ब. पुस्तकस्य शेषपद्यानां स्थाने. ४. 'नानार्थभावसंपन्नाः' क-ख.; 'नानार्थभावनिष्पन्नाः' का. ५. 'स्थायिभावा विचालिनः' क-ख.; 'स्थायित्वविचारिणः' का. ६. 'पुंसावकीर्णाः' का. ७. 'सत्त्वरसाश्रये' का. ८. पद्यमिदं ब-का-पुस्तकयोः १२० श्लोकत्वेन पूर्वमेवागतम्. ९. 'एवं रसानां भावानां व्यवस्थानमिह स्मृतम्' ब. १०. 'व्यवस्था' का. ११. 'भावविकल्पो' ब.

अष्टमोऽध्यायः ।

ऋषय[1] ऊचुः—

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः ॥ १ ॥
नाट्ये कतिविधः कार्यस्तज्ज्ञै[2]रभिनयक्रमः ।
कथं चा[3]भिनयो ह्येष कतिभेदश्च[4] कीर्तितः ॥ २ ॥
सर्वमेतद्यथातत्त्वं कथयस्व[5] महामुने ।
यो यथाभिनयो यस्मिन्योक्तव्यः सिद्धिमिच्छता ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान्प्रति ॥ ४ ॥
अहं वः कथयिष्यामि निखिलेन तपोधनाः ।
यस्मादभिनयो ह्येष विधिवत्समुदाहृतः ॥ ५ ॥

यदुक्तं चत्वारोऽभिनया इति तान्वर्तयिष्यामः । अ[6]भिनय इति कस्मा- दु[7]च्यते अभीत्युपसर्गः । 'णीञ्' प्रापणार्थो[8] धातुः । अस्या[9]च्प्रत्ययान्तस्याभि- नय इ[10]ति रूपं सिद्धम् । एतच्च धा[11]त्वनुवचनेनावधार्यं भवति । अत्र श्लोकौ—

अभिपूर्वस्तु णीञ्धातुरा[12]भिमुख्यार्थनिर्णये ।
यस्मात्प्रयोगं[13] नयति तस्मादभिनयः स्मृतः ॥ ६ ॥
विभावयति यस्माच्च नानार्थान्हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥ ७ ॥
चतुर्विधश्चैष भ[14]वेन्नाट्यस्याभिनयो द्विजाः ।
अनेकभेदब[15]हुलं नाट्यम[16]स्मिन्प्रतिष्ठितम् ॥ ८ ॥

---

१. 'ऋषयः ऊचुः' का-पुस्तके नास्ति. २. 'तर्कैः' क-ख. ३. 'वा' का. ४. 'च' का. ५. 'भगवन् वक्तुमर्हसि' का. ६. 'अत्राह' इत्यधिकं का. पुस्तके. ७. 'अत्र' इत्यधिकं का. पुस्तके. ८. 'प्रापणार्थका' का. ९. 'अस्याभिनीत्येवं व्यवस्थितस्य' इत्यधिकं का-पुस्तके १०. 'इत्येवं' का. ११. 'त्वर्थवचनेनोपधार्यम्' क-ख. १२. 'पुरा' क-ख. १३. 'यस्मात् पदार्थान् नयति' का. १४. 'भावान्' क-ख. १५. 'बाहुल्यं' का. १६. 'ह्यस्मिन्' का.

आङ्गिको वाचिकश्चैव [1]ह्याहार्यः सात्त्विकस्तथा।
ज्ञेयस्त्वभिनयो विप्राश्चतुर्धा परिकल्पितः॥ ९॥
सात्त्विकः पूर्वमुक्तस्तु भावैश्च[2] सहितो मया।
अङ्गाभिनयमेवादौ [3]गदतो मे निबोधत॥ १०॥
त्रिविधस्त्वाङ्गिको ज्ञेयः[4] शारीरो मुखजस्तथा।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः॥ ११॥
शिरोहस्तकटीवक्षःपार्श्वपादसमन्वितः।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः॥ १२॥
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि॥ १३॥
[5]अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः॥ १४॥
आङ्गिकस्तु भवेच्छाखा [6]ह्यङ्कुरः सूचना भवेत्।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम्॥ १५॥
मुखजेऽभि[7]नये विप्रा नानाभावरसा[8]श्रये।
शिरसा प्रथमं कर्म गदतो मे निबोधत॥ १६॥
आकम्पितं कम्पितं च धुतं विधुतमेव च।
परिवाहितमा[9]धूतमवधूतं तथाञ्चितम्॥ १७॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम्।
लोलितं चेति[10] विज्ञेयं त्रयोदशविधं शिरः॥ १८॥
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत्।
[11]द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः॥ १९॥
संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा।
निर्दे[12]शावाहने चैव भवेदाकम्पितं शिरः॥ २०॥

---

१. 'प्रादार्यः' का. २. 'तु' का. ३. 'प्रादौ' का. ४. 'दृष्टः' का. ५. 'अस्य' का. ६. 'हि' इति का-पुस्तके नास्ति. ७. 'मुखानभिनये' क-ख. ८. 'न समाश्रये'. ९. '°हितोद्वाहितक' का. १०. 'चैव'. ११. 'हृतम्' क-ख. १२. 'निर्देशे वाहने' का.

रोषे वितर्के विज्ञाने प्रतिज्ञाने[1] च तर्जने ।
पृच्छा[2]तिशयवाक्येषु शिरः कम्पितमिष्यते ॥ २१ ॥
शिरसो रेचनं यत्तु शनैस्तद्धुतमुच्यते[3] ।
द्रुतमारेचनादेतद्विधुतं च[4] भवेच्छिरः ॥ २२ ॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥ २३ ॥
शीतग्रस्ते भयार्ते च त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं च[5] भवेच्छिरः ॥ २४ ॥
पर्यायशः[6] पार्श्वगतं शिरः स्यात्परिवाहितम् ।
आधूत[7]मुच्यते तिर्यक्सकृदुद्वाहितं[8] च यत् ॥ २५ ॥
साधने विस्मये हर्षे स्मृते[9] वामर्षिते तथा ।
विचारे निह्नुते[10] चैव लीलायां परिवाहितम् ॥ २६ ॥
गर्वात्मदर्शने[11] चैव पार्श्वस्थोर्ध्व[12]निरीक्षणे ।
आधूतं[13] तु शिरो ज्ञेयमात्मसंभावनादिषु ॥ २७ ॥
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
संदेशावाहनालापसंज्ञादिषु तदिष्यते ॥ २८ ॥
किंचित्पार्श्वानतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्च्छिते मत्ते[14] चिन्तायां[15] हनुधारणे ॥ २९ ॥
उत्क्षिप्त[16]बाहुशिखरं निकुञ्चितशिरोधरम् ।
निहञ्चितं शिरो[17] ज्ञेयं स्त्रीणामेतत्प्रयोजयेत् ॥ ३० ॥
गर्वे विलासे ललिते विब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते स्तम्भे[18] माने निहि(ह?)ञ्चितम् ॥ ३१ ॥

---

१. 'प्रतिज्ञातेऽथ' का. २. 'व्याध्यमर्षणयोश्चैव' का. ३. 'इष्यते' का. ४. 'तु' का. ५. 'तु' का. ६. 'पर्यायतः' का. ७. 'सकृदुद्वाहितं चोर्ध्वमुद्वाहितमिति स्मृतम्' का. ८. 'उद्वादितं' क-ख. ९. 'स्थिते चा°' का. १०. 'विहृते' का. ११. 'गर्वेच्छादर्शने' का. १२. 'तथा चोर्ध्व°' का. १३. 'मार्त (?)' १४. 'सचिन्ते दुःखिते भवेत्' का. १५. '°शिरसस्तथाञ्चितशिरोधरः' का. १६. 'उद्वाहितं तु कर्तव्यम्' का. १७. 'तु विज्ञेयम्' का. १८. 'स्तम्भमाने' का.

परावृत्तानुकरणात्परावृत्तं शिरः स्मृतम् ।
तत्स्यान्मुखापहरणे पृष्ठतः[1] प्रेक्षणादिषु ॥ ३२ ॥
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।
प्रांशुदिव्यार्थ[2]योगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥ ३३ ॥
अधोमुखं[3]स्थितं चापि शिरः प्राहुरधोमुखम्[4] ।
लज्जायां च प्रणामे च दुःखे चाधोगतं भवेत् ॥ ३४ ॥
सर्वतो लोलनाच्चापि शिरः स्यात्परिलोलितम् ।
मूर्च्छाव्याधिमदावेश[5]ग्रहनिद्रादिषु स्मृतम् ॥ ३५ ॥
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रयाः[6] ।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३६ ॥
त्रयोदशविधं ह्येतच्छिरःकर्म[7] मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥ ३७ ॥
कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥ ३८ ॥
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता[8] भयान्विता ।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥ ३९ ॥
शून्या च मलिना चैव श्रान्ता[9] सललिता तथा ।
म्लाना[10] च शङ्किता चैव विषण्णा मुकुला तथा ॥ ४० ॥
कुञ्चिता चाभितप्ता[11] च जिह्मा सललिता तथा ।
वितर्कितार्धमुकुला विभ्रान्ता विप्लुता तथा ॥ ४१ ॥
आकेकरा विकोशा च त्रस्ता च[12] मदिरा तथा ।
षट्त्रिंशद्दृष्टयो ह्येता नामतोऽभिहिता[13] मया ॥ ४२ ॥
अस्य दृष्टिविधानस्य नानाभावरसा[14]श्रितम् ।
लक्षणं संप्रवक्ष्यामि यथाकर्म प्रयोगतः ॥ ४३ ॥

---

१. 'पृच्छतः' का. २. 'दिव्यास्त्र°' का. ३. 'अधोमुखं' का. ४. 'अधोगतम्' का. ५. '°वेगगृह°' का. ६. 'संश्रिताः' का. ७. 'शिरकर्म' का. ८. 'दम्भा' का. ९. 'जिह्मा' क-ख. १०. 'ग्लाना' का. ११. 'साभिमाना' का. १२. '°थ' का. १३. 'निहिता' का. १४. '°रसाश्रयम्' का.

हर्षप्रसादजनिता[1] कान्तात्यर्थं समन्मथा ।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥ ४४ ॥
प्रोद्वृत्तनिष्टब्धपुटा [2]स्फुरदुद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं[3] भीता ज्ञेया भयानके ॥ ४५ ॥
क्रमादाकुञ्चितपुटा [4]सविभ्रान्ताल्पतारका ।
हास्या[5]दृष्टिस्तु कर्तव्या कुहकाभिनयं प्रति ॥ ४६ ॥
पतितोर्ध्वपुटा [6]सास्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥ ४७ ॥
या चा[7]कुञ्चितपक्ष्माग्रा साश्चर्योद्वृ[8]त्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥ ४८ ॥
क्रूरा रूक्षारुणोद्[9]वृत्तनिष्टब्धपुटतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥ ४९ ॥
निकुञ्चितपुटापाङ्गा [10]घृणोपप्लुततारका ।
संश्लिष्ट[11]स्थिरपक्ष्मा च बीभत्सा दृष्टिरिष्यते ॥ ५० ॥
[12]नासाग्रसक्तानिमिषा तथाधोभागचारिणी ।
आकेकरपुटा चैव शान्ता दृष्टिर्भवेदसौ ॥ ५१ ॥
[13]रसजा दृष्टयो ह्येता विज्ञेया लक्षणान्विताः ।
अतः परं लक्षयिष्ये स्थायिभावसमाश्रयाः ॥ ५२ ॥
व्याकोशमध्या मधुरा स्मरता[14]राभिलाषिणी ।
[15]सानन्दाश्रुकृता दृष्टिः [16]स्निग्धैवं रतिभावजा ॥ ५३ ॥
चला हसित[17]गर्भा च विशत्तारा[18]भिलाषिणी ।
किंचिदाकुञ्चिता हृष्टा[19] दृष्टिर्हासे प्रकीर्तिता ॥ ५४ ॥

---

१. '°तकोपामर्षं' क-ख. २. 'प्रस्फुरद्वृत्ततारका' का. ३. '°र्थमीता.' ४. 'विभ्रान्ताकुलतारका' का. ५. 'स्याद्दृष्टिस्तु प्रकर्तव्या' का. ६. 'साश्रा' का. ७. 'त्वाकुञ्चित' का. ८. '°द्धत' का. ९. 'रुणोवृत्त' का. १०. 'वृणो°' क-ख. ११. 'स्मित°' का. १२. पद्यमिदं का-पुस्तके नास्ति. १३. 'रजसा' क-ख. १४. 'स्मिततारामिलाषिणः' क-ख. १५. 'सानन्दभ्रूकृता' क-ख. १६. 'स्निग्धेयं' का. १७. 'वलाहद्धततारका' का. 'सितसर्गं वै' क-ख. १८. 'विश्वतारानिमेषिणी' का. १९. 'दृष्टिः हृष्टा' का.

अर्धस्रस्तोत्तरपुटा रुद्धतारा जलाविला।
मन्दसंचारिणी दीना सा शोके दृष्टिरिष्यते ॥ ५५ ॥
रूक्षा स्थिरोद्वृत्तपुटा निष्टब्धोद्वृत्ततारका।
कुटिलभ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधेऽभिधीयते ॥ ५६ ॥
संस्थिते तारके यस्याः स्थिरा विकसिता तथा।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसंभवा ॥ ५७ ॥
विस्फारितोभयपुटा भयकम्पिततारका।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ५८ ॥
संकोचितपुटन्यासा दृष्टिर्मीलिततारका।
लक्ष्योद्देशात्समुद्विग्ना जुगुप्सायां जुगुप्सिता ॥ ५९ ॥
भृशमुद्वृत्ततारा या हृष्टोभयपुटाञ्चिता।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥ ६० ॥
स्थायिभावाश्रया ह्येता दृष्टयो लक्षिता मया।
संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम् ॥ ६१ ॥
समतारा समपुटा निष्कम्पा शून्यदर्शना।
बाह्यार्थग्राहिणी क्षामा शून्या दृष्टिः प्रकीर्तिता ॥ ६२ ॥
[ प्रस्यन्दमानपक्ष्मान्ता नात्यर्थमुकुलैः पुटैः।
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका ॥ ६३ ॥
श्रमप्रम्लापितपुटा क्षामाकाञ्चितलोचना।
स्रस्ता पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥ ६४ ॥ ]
किंचिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया।
त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा ॥ ६५ ॥

---

१. 'ईषत्°' का. २. 'किंचित् संरब्धतारका' का. ३. 'सशोका' क-ख. ४. '°द्धत-पुटा' का. ५. '°द्धततारका' का. ६. 'कुटिला' का. ७. 'विधीयते' का. ८. '°व्योमा (?)' क-ख. ९. 'पक्ष्मोद्देशान्' का. १०. 'विमलोद्धततारा च' का. ११. 'नष्टो°' क-ख. १२. '°न्विता' का. १३. '°स्रजा' का. १४. 'लक्षिता दृष्ट्यो' का. १५. 'ध्याया' (?) क-ख. १६. 'कोष्ठकबद्धा श्लोकद्वयी' क-ख-पुस्तकयोर्नास्ति. १७. '°धोमुखतार' का.

म्लानभ्रूपुटपक्ष्मा[1] च[2] शिथिला मन्दचारिणी ।
क्रमप्रविष्टतारा च ग्लाना[3] दृष्टिस्तु[4] सा स्मृता ॥ ६६ ॥
किंचिच्चला[5] स्थिरा किंचिदुन्नता[6] तिर्यगायता ।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥ ६७ ॥
विषादविस्तीर्णपुटा पर्यस्तान्ता[7]निमेषिणी ।
किंचिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥ ६८ ॥
स्फुरदा[8]श्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता ।
सुखी[9](ख)मीलिततारा च मुकुला दृष्टिरुच्यते[10] ॥ ६९ ॥
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
संनि[11]कुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥ ७० ॥
मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
संतापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥ ७१ ॥
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ७२ ॥
मधुरा कुञ्चितान्ता च सभ्रूक्षेपा च[12] सस्मिता ।
समन्मथविकारा[13] च दृष्टिः सा ललिता स्मृता ॥ ७३ ॥
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविचारा च दृष्टिरेषा[14] वितर्किता ॥ ७४ ॥
अर्धव्याकोशपक्ष्मा[15] च ह्लादार्धमुकुलैः पुटैः ।
स्मृतार्धमुकुला दृष्टिः किंचिल्लुलिततारका ॥ ७५ ॥
[16]अनवस्थिततारा च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥ ७६ ॥

---

१. 'ग्लान' का. २. 'या' का. ३. 'ग्वाना'(?) क-ख. ४. 'सदोद्धृता' का. ५. 'काला' क-ख. ६. 'किंचिदुत्तुङ्गा किंचिदायता' का. ७. 'पर्यस्तारा' का. ८. 'स्फुटिताश्लिष्ट°' का. ९. 'सुखोन्मीलित°' का. १०. 'दृश्यते' का. ११. 'सनि°' का. १२. '°थ' का. १३. '°विकासा' का. १४. '°रिष्टा' का. १५. '°तारा' का. १६. 'विभ्रान्ततारका या तु विभ्रान्तपुटदर्शना' का.

पुटौ प्रस्फुरितौ यस्या[1] निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥ ७७ ॥
आकुञ्चितपुटापाङ्गा संगतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥ ७८ ॥
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरिष्यते[2] ॥ ७९ ॥
[3]त्रासोद्वृत्तपुटा या तु तथोत्कम्पिततारका[4] ।
अनवस्थितसंचारा दृष्टिर्मध्यमदे भवेत् ॥ ८० ॥
[ [5]संत्रासोत्फुल्लमध्या[6] च त्रस्ता दृष्टिरुदाहृता ।
व्याघूर्णमानमध्या या क्षामान्ताञ्चितलोचना ॥ ८१ ॥
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ।
किंचिदाकुञ्चितपुटा ह्यनवस्थिततारका ॥ ८२ ॥ ]
सनिमेषानिमेषा च किंचिद्दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ॥ ८३ ॥
इत्येवं लक्षिता ह्येताः[7] षट्त्रिंशद्दृष्टयो मया ।
रसजा भावजाश्चासां विनियोगं निबोधत ॥ ८४ ॥
रसजास्तु[8] रसेष्वेव स्थायिषु स्थायिदृष्टयः ।
शृणुत[9] व्यभिचारिण्यः संचारिषु यथा स्थिताः[10] ॥ ८५ ॥
शून्या दृष्टिस्तु चिन्तायां स्तम्भे[11] चापि प्रकीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥ ८६ ॥
श्रान्ता श्रमार्तौ खेदे च लज्जायां लज्जिता तथा ।
अपस्मारे तथा व्याधौ म्लाने[12] म्लाना[13] विधीयते ॥ ८७ ॥

---

१. 'यस्य' (?) का. २. '°रुच्यते' का. ३. 'शसो°' (?) क-ख. ४. 'त्रासोत्कम्पित' का. ५. इतोऽग्रे कोष्ठनिबद्धा श्लोकद्वयी क-ख-पुस्तकयोर्नास्ति. ६. 'तथा चलितपक्ष्मा' का. ७. 'ह्येताः' इति गलितं का-पुस्तके. ८. 'रसजा तु' क-ख. ९. 'शृणुध्वं' का. १०. 'यथाहिताः' का. ११. '°मभितसा' का. १२. 'व्यानम्लानमाना' क-ख. १३. 'ग्लाने ग्लाना' का.

शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु मुकुला दृष्टिरिष्यते ॥ ८८ ॥
कुञ्चितासूयतानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥ ८९ ॥
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता ॥ ९० ॥
आह्लादेष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे संभ्रमे विभ्रमे तथा ॥ ९१ ॥
विप्लुता चापलो[1]न्माददुःखार्तिमरणादिषु ।
आकेकरा दुरालोके विच्छेदप्रेक्षितेषु च ॥ ९२ ॥
विबोधगर्वामर्षौ[2]ग्र्यमतिषु स्याद्वि[3]कासिता ।
त्रस्ता त्रासे भवेद्दृष्टिर्मदिरा च मदेष्विति ॥ ९३ ॥
षट्त्रिंशद्दृष्टयो ह्येता यथावत्समु[4]दाहृताः ।
रसजानां तु दृष्टीनां भावजानां तथैव च ।
तारापुटभ्रुवां कर्म गदतो मे निबोधत ॥ ९४ ॥
भ्रमणं वलनं पातश्चलनं संप्रवेशनम् ।
निवर्तनं समुद्वृ[5]त्तं निष्क्रामः प्राकृतं तथा ॥ ९५ ॥
पुटा[6]न्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ।
चलनं गमनं त्र्यस्तं पातनं स्रस्तता तथा ॥ ९६ ॥
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तःप्रवेशनम् ।
वि[7]वर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः ॥ ९७ ॥
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु[9] स्वभावजम् ।
[8]अथैषां रसभावेषु विनियोगं निबोधत ॥ ९८ ॥
भ्रमणं चलनोद्वृत्ते निष्क्रामो वीररौद्रयोः ।
निष्क्रामणं संचलनं कर्तव्यं हि भयानके ॥ ९९ ॥

---

१. 'न्मादे°'. २. 'विबोधामर्षगर्वोग्र्यमतिषु' का. ३. 'विकोशिता' का. ४. 'प्रतिपादिता' का. ५. '°त्त°' का. ६. 'पयस्तं' का. ७. 'विकर्तनं' क-ख. ८. 'तथैषां' का. ९. 'तु' का.

हास्यबीभत्सयोश्चापि [1]प्रवेशनमिहेष्यते ।
[2]पातनं करुणे कार्यं निष्कामणमथाद्भुते ॥ १०० ॥
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् ।
स्वभावसिद्धमेवैतत्कर्म लोकक्रियाश्रयम् ॥ १०१ ॥
एवं [3]रसेषु भावेषु [4]ताराकर्माणि योजयेत् ।
[5]अथात्रैव प्रवक्ष्यामि प्र[6]कारान्दर्शनस्य तु ॥ १०२ ॥
समं [7]साच्यनुवृत्ते [8]च ह्यालोकितविलोकिते ।
प्रलोकितोल्लोकिते [9]वाप्यवलोकितमेव च ॥ १०३ ॥
समतारं च सौम्यं च यद्दृष्टं तत्समं स्मृतम् ।
[10]पक्ष्मान्तर्गततारं यत्र्यस्रं [11]साचीकृतं तु तत् ॥ १०४ ॥
[12]रूपनिर्वर्णनायुक्तमनुवृत्तमिति [13]स्मृतम् ।
सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते ॥ १०५ ॥
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम् ।
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः ॥ १०६ ॥
इत्येष दर्शनविधिः सर्वभावरसाश्रयः ।
ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ॥ १०७ ॥
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ।
विवर्तितं [14]स्फुरितं पिहितं [15]सवितालितम् ॥ १०८ ॥
[16]विश्लेषः पुटयोर्यस्तु स [17]तून्मेषः प्रकीर्तितः ।
[18]समागमो निमेषः स्या[19]दायामः प्रसृतं भवेत् ॥ १०९ ॥
आकुञ्चितं कुञ्चितं स्यात्समं स्वाभाविकं स्मृतम् ।
विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा ॥ ११० ॥

---

१. 'प्रवेश–' क-ख. २. 'पपात' का. ३. 'सर्वेषु' का. ४. 'ताराकर्म' का. ५. 'तथा तत्रैव वक्ष्यामः' का. ६. 'प्रकारं' का. ७. 'सव्ये' का. ८. 'च आलो°' का. ९. 'चावलोकितमेव च'. १०. 'पक्षा' क-ख. ११. 'साचीकृतं' का. १२. 'रूपनिर्वापणायुक्तं' का. १३. 'स्फुटम्' का. १४. 'सस्फुरितं' का. १५. 'सवितात्रयम्' क-ख. १६. 'विश्लेषैः' क-ख. १७. 'तु' इति नास्ति क-ख-पुस्तकयोः. १८. 'समागतो' का. १९. '°यामस्तु प्रसारितम्' का.

[1]स्थगितं विहितं प्रोक्तमाहतं तु वितालितम्[2] ।
अथैषां रसभावेषु विनियोगं निबोधत ॥ १११ ॥

क्रोधे विवर्तितं[3] कार्यं निमेषोन्मेषणैः सह ।
विस्मयार्थे[4] च हर्षे च वीरे[5] च प्रसृतं स्मृतम् ॥ ११२ ॥

[6]अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ।
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं[7] तथा[8] ॥ ११३ ॥

सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनादिषु[9] ।
नेत्ररोगे च पिहितमभिघाते वितालितम्[10] ॥ ११४ ॥

[11]इत्येषु रसभावेषु तारकापुटयोर्विधिः ।
[12]कार्यानुगतमस्यैव भ्रुवोः कर्म निबोधत ॥ ११५ ॥

[13]उत्क्षेपः [14]पातनं चैव भ्रुकुटी चतुरं भ्रुवोः ।
कुञ्चितं रेचितं कर्म [15]सहजं चेति सप्तधा ॥ ११६ ॥

भ्रुवो[16]रुद्गतिरुत्क्षेपः सममेकैकशोऽपि वा ।
[17]सममेकैकशोऽप्येव पातनं स्यादधोगति ॥ ११७ ॥

भ्रुवोर्मूलसमुत्क्षेपाद्भ्रुकुटी परिकीर्तिता ।
चतुरं किंचिदुच्छ्वासान्[18]मधुरायतयोर्भ्रुवोः ॥ ११८ ॥

एकस्या उभयोर्वापि मृदु[19]भङ्गेन कुञ्चितम् ।
एकस्या एव ललितादुत्क्षेपाद्[20]रेचितं भ्रुवः ॥ ११९ ॥

सहजातं तु [21]सहजं कर्म स्वाभाविकं स्मृतम् ।
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ॥ १२० ॥

---

१. 'छादितं पिहितं' क-ख. २. 'विलोलितम्' का. ३. '°तः कार्यः' क-ख. ४. '°यार्थेषु°' का. ५. 'वीर्ये चैव प्रसारितम्' का. ६. 'अदृष्टदर्शने' क-ख. ७. 'स्फुटितं' क-ख. ८. 'भवेत्' का. ९. 'वर्षाजनादिषु' क-ख. 'वर्षाशनार्थिषु' का. १०. 'वितानिते' क-ख. ११. 'इत्येवं' का. १२. 'कार्येऽनुगत°' का. १३. 'उक्षेपं' का. १४. 'tाननं' क-ख. १५. 'चैव' का. १६. 'उन्नतिः' का. १७. 'एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम्' का. १८. 'मधुरा आयता' क-ख. १९. 'भङ्गो निकुञ्चितः' क-ख. २०. '°रचित' का. २१. 'सहज' क-ख.

कोपे वि[1]तर्के हेलायां लीलादौ सहजे तथा ।
दर्शने श्रवणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥ १२१ ॥
[2]उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि ।
[3]असूयितजुगुप्सायां हासे घ्राणे च पातनम् ॥ १२२ ॥
क्रोधस्थानेषु दीप्तेषु योजयेद्भ्रुकुटीं बुधः ।
शृङ्गारे ललिते सौम्ये स्पर्शे च चतुरं भवेत् ॥ १२३ ॥
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ।
[4]निकुञ्चितं तु कर्तव्यं नृत्ये योज्यं तु रेचितम् ॥ १२४ ॥
अनाविद्धेषु भावेषु विद्यात्स्वाभाविकं बुधः ।
इत्येता[5] दृष्टयः प्रोक्ता नासाकर्म निबोधत ॥ १२५ ॥
नता मन्दा विकृष्टा च सोच्छ्वासा च[6] विघूर्णिता ।
[7]स्वाभाविकी चेति बुधैः षड्विधा नासिका स्मृता ॥ १२६ ॥
[ [8]नता मन्दा विकृष्टा च सोच्छ्वासा च विघूर्णिता ।
स्वाभाविका चेति बुधैः षड्विधा नासिका स्मृता ॥ १२७ ॥]
नता मुहुः श्लिष्टपुटा मन्दा तु निभृता [9]मता ।
[10]विकृष्टोत्फुल्लितपुटा सोच्छ्वासाकृष्टमारुता ॥ १२८ ॥
वि[11]घूर्णिता संकुचिता समा [12]स्वाभाविका स्मृता ।
[ [13]नासिकालक्षणं ह्येतद्विनियोगं निबोधत ॥ १२९ ॥
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता । ]
निर्वेदौत्सुक्यचिन्तासु मन्दा शोके [14]प्रकीर्तिता ॥ १३० ॥
विकृष्टा तीव्रग[15]न्धोर्ध्वश्वासरोषभयार्तिषु ।
सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ॥ १३१ ॥

---

१. 'वितर्कौ' क-ख. २. 'उत्क्षेपे' का. ३. 'असूयते' का. ४. 'विकुञ्चितं' का. ५. 'इत्येवं तु भ्रुवः' का. ६. '°नुविकूणिता' क-ख. ७. 'स्वाभाविका' का. ८. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ९. 'स्मृता' का. १०. 'विकृष्टा पुल्लितपुटा' क-ख. ११. 'विकूणिता' क-ख. १२. 'स्वाभाविकी' क-ख. १३. इदमपि पद्यं क-ख-पुस्तकयोर्नास्ति. १४. 'तु कीर्तिता' का. १५. '°गन्धा च' क-ख.

[1]विघूर्णितोक्ता [2]हास्ये च जुगुप्सायामसूयिते ।
स्वाभाविकाशेषभावेष्वित्येवं नासिका स्मृता ॥ १३२ ॥
क्षामं फुल्लं च पूर्णं च कम्पितं कुञ्चितं समम् ।
षड्विधं [3]गण्डमुद्दिष्टं तस्य लक्षणमुच्यते ॥ १३३ ॥
क्षामं त्ववनतं ज्ञेयं फुल्लं विकसितं भवेत् ।
उन्नतं पूर्ण[4]मत्रोक्तं कम्पितं स्फुरितं भवेत् ॥ १३४ ॥
स्यात्कुञ्चितं संकुचितं समं प्राकृतमुच्यते ।
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ॥ १३५ ॥
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमेवं च ।
पूर्णमुत्[6]साहगर्वेषु [7]रोषहर्षेषु कम्पितम् ॥ १३६ ॥
कुञ्चितं च सरोमाञ्चं [8]कम्पे [9]शीते भये ज्वरे ।
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ॥ १३७ ॥
[10]विवर्तनं कम्पनं च विसर्गो विनिगूहनम् ।
[11]संदष्टकं [12]समुद्गश्च षट्कर्माण्यधरस्य तु ॥ १३८ ॥
[13]विघूर्णनं विवर्तस्तु वेपनं कम्पनं स्मृतम् ।
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् ॥ १३९ ॥
[14]संदष्टको द्विजैर्दष्टः [15]समुद्वृत्तं समुद्गकः ।
[16]इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत ॥ १४० ॥
असूयावेदना[17]लज्जालस्यादिषु विवर्तनम् ।
[18]कम्पनं कोपशीतार्तिभयरोगजयादिषु ॥ १४१ ॥

---

१. 'विकूणनार्तौ' क-ख. २. 'हास्येषु' का. ३. 'दिष्टमस्य' क ख. ४. '°मात्रोक्तं' क-ख. ५. '°मिष्यते' का. ६. '°उच्छाह' क-ख. ७. 'रोम°' क-ख. ८. 'स्पर्शे' का. ९. 'शीतभये' क-ख. १०. 'विकर्तनं' क-ख.; 'विवर्तने' का. ११. 'संदष्टकं' क-ख. १२. 'समुद्गगं' का. १३. 'विकूणनं विवर्तैस्तु' क-ख. १४. 'संदष्टकं द्विजैर्दष्टं' क-ख. १५. 'समुद्गः सहिता गतिः' का. १६. 'इत्यष्टौ' क-ख. १७. '°वज्ञा' क-ख.; 'लज्जावस्यादिषु' का. १८. 'कम्पनं वेपनं शीतज्वररोषभयादिषु' का.

स्त्रीणां विलासे बिब्बोके विसर्गः[1] सुरते स्मृतः ।
विनिगूहनमायासे संदष्टं[2] क्रोधकर्मसु[3] ॥ १४२ ॥
समुद्गस्त्वनुकम्पायां[4] चुम्बने चाभिनन्दने ।
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ॥ १४३ ॥
कुट्टनं खण्डनं छिन्नं[5] चिकितं[6] लेहनं समम् ।
दष्टं[7] च दन्तक्रियया चिबुकं त्विह लक्ष्यते[8] ॥ १४४ ॥
कुट्टनं दन्तसंघर्षः[9] संस्फोटः[10] खण्डनं मुहुः ।
छिन्नं तु गाढसंश्लेषश्चिकितं[11] दूरमुद्यतम् ॥ १४५ ॥
लेहनं जिह्वया लेहः किंचिच्चेष्टः[12] समं भवेत् ।
दन्तैर्दष्टे[13]ऽधरे दष्टमि[14]त्येषां विनियोजनम् ॥ १४६ ॥
भयशीतज्वरव्याधिग्रस्तानां[15] कुट्टनं भवेत् ।
जप्या[16]ध्ययनसल्लापभक्षयोगे च खण्डनम् ॥ १४७ ॥
छिन्नं व्याधौ[17] भये शीते[18] व्यायामे रुषिते[19] क्षिते ।
जृम्भणे चिकितं[20] कार्यं तथा[21] लेह्ये च लेहनम् ॥ १४८ ॥
समं स्वभावभावेषु संदष्टः[22] क्रोधकर्मसु ।
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया ॥ १४९ ॥
[ विधुतं[23] विनिवृत्तं च निर्भ(र्भु)ग्नं भुग्नमेव च ।
निवृत्तं (विवृतं ?) च तथोद्वाही(हि ?) कर्माण्यत्रास्यजानि तु १५०

---

१. 'विसर्गो रज्जने तथा' का. २. 'संदष्टं' क-ख. ३. 'क्रोधकर्मणि' का. ४. '°तिकम्पाङ्गधूनने चाभिनन्दने' क-ख. ५. 'दन्तचिकितं' क-ख. ६. 'चुक्षितं' का. ७. 'दष्टं' क-ख. ८. 'भक्ष्यते' क-ख. ९. 'संहर्षः' क-ख. १०. 'संस्फोटं' क-ख. ११. 'चुक्षितं दूरविच्युतिः' का. १२. 'किंचिल्लेषः' क-ख. १३. 'दष्टे' क-ख. १४. 'दष्टं' क-ख. 'दष्ट इत्ये°' का. १५. 'स्वस्तानां' क-ख. १६. 'जपा......यनं संतापभक्षायातेषु' क-ख. १७. 'व्याधिभये' क-ख. १८. 'शीतेष्वायामे' क-ख. १९. 'कूजिते-मृते' क-ख. २०. 'चुक्षितं' का. २१. 'तथालोक्ये' क-ख. २२. 'संदष्टं' क-ख. २३. 'विधुतं' इत्यादयोऽष्टौ श्लोकाः क-ख-पुस्तकयोर्न सन्ति.

व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ।
अवाङ्मुखं च निर्भुग्नं व्याभुग्नं किंचिदायतम् ॥ १५१ ॥
विश्लिष्टोष्ठं च विवृतमुद्वास्यु(ह्यु ?)त्क्षिप्तमेव च ।
विनिवृत्तमसूयायामीर्ष्याक्रोधकृतेन च ॥ १५२ ॥
अवज्ञाविहृतादौ च स्त्रीणां कार्यं प्रयोक्तृभिः ।
विधुतं वारणे चैव नैवमित्येवमादिषु ॥ १५३ ॥
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ।
भुग्नं लज्जान्विते योज्यं यती(ति ?)नां तु स्वभावजम् ॥ १५४ ॥
निर्वेदौत्सुक्यचिन्तासु तथा च विनिमन्त्रणे ।
विवृत्तं ( तं? ) चापि विज्ञेयं हास्यशोकभयादिषु ॥ १५५ ॥
स्त्रीणामुद्वाहलीलायां गर्वे गच्छत्वनादरे ।
एवं नामेति कार्यं च कोपवाक्ये विचक्षणैः ॥ १५६ ॥
समं साचि(ची ?)कृताद्युक्ता यच्च दृष्टिविकल्पितम् ।
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुगं मुखम् ॥ १५७ ॥ ]
अथातो मुखरागस्तु[1] चतुर्धा स च कीर्तितः ।
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ॥ १५८ ॥
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ।
मध्यस्थादिषु भावेषु मुखरागः[2] प्रयोक्तृभिः ॥ १५९ ॥
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ।
वीररौद्रमदाद्येषु रक्तः स्यात्करुणे तथा ॥ १६० ॥
भयानके सबीभत्से श्यामं संजायते मुखम् ।
एवं भावरसार्थेषु मुखरागं प्रयोजयेत् ॥ १६१ ॥
शाखाङ्गोपाङ्गसंयुक्तः कृतो ह्यभिनयः शुभः ।
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ॥ १६२ ॥
शारीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ।
द्विगुणां लभते शोभां रात्राविव निशाकरः ॥ १६३ ॥

१. 'मुखरागश्च चतुर्धा परिकीर्तितः' का. २. '°रागप्रयोक्तृभिः' क-ख.

नयनाभिनयोऽपि स्यान्नानाभावरसा[1]न्वितः ।
मुखरागान्वितो यस्मा[2]न्नाट्यमत्र प्रतिष्ठितम् ॥ १६४ ॥
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसं[3]युतम् ।
तथा भावरसोपेतं मुखरागं प्रयोजयेत् ॥ १६५ ॥
इ[4]त्येवं मुखरागस्तु प्रोक्तो भावरसाश्रयः ।
अतःपरं प्रवक्ष्यामि ग्रीवा[5]कर्म द्विजोत्तमाः ॥ १६६ ॥
समा ना(न)तो[6]न्नता ऽयस्रा रेचिता कुञ्चिताञ्चिता ।
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः ॥ १६७ ॥
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ।
नता न[7]तास्यालंकारबन्धे कण्ठावलम्बने ॥ १६८ ॥
उन्नताभ्युन्नतमुखी ग्रीवा चोर्ध्वनिवेशने ।
ऽयस्रा पा[8]र्श्वगता चैव स्कन्धभा[9]रे च दुःखिते ॥ १६९ ॥
रेचिता विधुतभ्रान्ता हावे मथननृत्तयोः ।
कुञ्चिता[10]कुञ्चिते मूर्ध्नि [11]धारिते गलरक्षणे ॥ १७० ॥
अ[12]ञ्चितापसृतोद्बन्धकेशकर्षोच्चदर्शने ।
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभङ्गे च वीक्षणे ॥ १७१ ॥
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ।
इत्यादिलोकभावार्था ग्रीवा[13]भङ्गैरनेकधा ॥ १७२ ॥
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि हि[14] ।
शिरसः कर्मणा कर्म ग्रीवायाः सं[15]प्रवर्तते ॥ १७३ ॥
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ।
अङ्गकर्माणि शेषाणि वद[16]तो मे निबोधत ॥ १७४ ॥

इति श्रीभारतीये नाट्यशास्त्रे उपाङ्गा[17]भिनयो नामाष्टमोऽध्यायः ।

---

१. '°रसस्फुटः' क-ख. २. 'यथानेत्रं प्रतिष्ठितम्' क-ख. ३. '°संयुते' क-ख. ४. 'इत्येष' क-ख. ५. 'ग्रीवाकर्माणि वै द्विजाः' का. ६. 'चोन्नता' क-ख. ७. 'तता' क-ख. ८. 'ग्रैवेयोर्ध्वादिदर्शने' क-ख. ९. '°रेऽथ' का. १०. 'गदिता' क-ख. ११. 'भारिते' क-ख. १२. '°तापसृताबद्धकेशाकर्षे च' क-ख. १३. 'ग्रीवाभेदैः' क-ख. १४. 'च' का. १५. 'संप्रवर्त्यते' क-ख. १६. 'गदतो' का. १७. 'उपाङ्गविधानं' का.

## नवमोऽध्यायः ।

एवमेतच्छिरोनेत्र[1]भ्रूनासोष्ठकपोलजम्[2] ।
कर्मलक्षणसंयुक्तमपाङ्गानां मयोदितम् ॥ १ ॥
[3]हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं संप्रवक्ष्यामि विनियोगं च तत्त्वतः ॥ २ ॥
हस्तानां तु[4] प्रवक्ष्यामि कर्म नाट्यप्रयोगजम्[5] ।
यथा येनाभिनेयं च गदतो[6] मे निबोधत ॥ ३ ॥
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥ ४ ॥
मुष्टिश्च शिखराख्यश्च[7] कपित्थः खटकामुखः[8] ।
सूच्यास्यः पद्मकोषश्च तथा[9] वै सर्पशीर्षकः ॥ ५ ॥
[10]मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः ।
[11]लाङ्गूलोत्पलपद्मश्च चतुरो भ्रमरस्तथा ।
हंसास्यो हंसपक्षश्च संदंशो मुकुलस्तथा ॥ ६ ॥
ऊर्णनाभस्ताम्रचूडश्च[12]तुर्विंशदिमे कराः ।
असंयुताः संयुताश्च गदतो मे निबोधत ॥ ७ ॥
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ।
खटका[13] वर्धमानश्च हि[14]त्सङ्गो निषधस्तथा ॥ ८ ॥
[15]दोलः पुष्पपुटश्चैव तथा मकर एव च ।
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ॥ ९ ॥

---

१. '॰नेत्रे' क-ख. २. 'कपोलकम्' क-ख. ३. श्लोकोऽयं क-ख-पुस्तकयोरत्र नास्ति परमेकश्लोकोत्तरमस्ति. ४. 'च' का. ५. 'प्रयोजकम्' क-ख. ६. 'तन्मे निगदतः शृणु' का. ७. 'शिखराभ्यश्च' क-ख. ८. 'कटका॰' का. ९. 'सर्परामृगशीर्षकः' क-ख. १०. 'पद्यार्धमिदं क-ख-पुस्तकयोर्नास्ति. ११. 'काङ्गूलकोषं (?) क-ख. १२. 'चतुर्विंशतिकीर्तिताः' इति क-ख. १३. 'कटका' का. १४. 'हि' इति का-पुस्तके नास्ति. १५. 'दोलपुष्पपुटाश्चैव' क-ख.

एते तु[1] संयुता हस्ता मया प्रोक्तास्त्रयोदश ।
नृत्तहस्तानतश्चो[2]र्ध्वं गदतो मे निबोधत ॥ १० ॥
चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ।
स्वस्तिकौ विप्रकीर्णौ चाप्यरालख[3]टकामुखौ ॥ ११ ॥
अविद्धवक्रौ सूच्यास्यौ[4] रेचितावर्धरेचितौ ।
उत्तानाव[5]ञ्चितौ चैवं[6] पल्लवौ च तथाकरौ ॥ १२ ॥
नितम्बावपि[7] विज्ञेयौ केशबन्धौ तथैव च ।
लताख्यौ[8] च तथा प्रोक्तौ करिहस्तौ तथैव च ॥ १३ ॥
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ।
ज्ञेयौ गरुडपक्षौ च हंसपक्षौ[9] तथैव च ॥ १४ ॥
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा[10] ।
उरोमण्डलिनौ चैव उरःपार्श्वोर्ध्वमण्डले ॥ १५ ॥
मुष्टिकः[11] स्वस्तिकश्चापि नलिनीपद्मकोषकौ[12] ।
अलपल्लवोल्बणौ च ललितौ वलितौ तथा ॥ १६ ॥
चतुःषष्टिकरा ह्येते नामतोऽभिहिता मया ।
यथालक्षणमेतेषां[13] कर्माणि च निबोधत ॥ १७ ॥
प्रसारिताग्राः[14] सहिता यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ १८ ॥
एष प्रहारपाते प्रतापने नोदने प्रहर्षे च ।
गर्वेऽप्यहमिति[15] तज्ज्ञैर्ललाटदेशस्थितः[16] कार्यः ॥ १९ ॥

---

१. 'ससंयुता' क-ख. २. 'च' इति क-ख-पुस्तकयोर्नास्ति. 'चाप्परालावटकामुखौ' क-ख. ३. 'कटका°' का. ४. 'सूच्यास्यौ' का. ५. '............चैव' क-ख. ६. 'चापि' का. ७. 'नितम्बौ चापि' का. ८. 'संप्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च' का. ९. 'दण्डपक्षावतः परम्' क-ख. १०. 'तथा' इति क-ख-पुस्तकयोस्त्रुटितम्. ११. 'मुष्टिकः स्वस्ति' इति गलितं क-ख-पुस्तकयोः; 'स्वस्तिकं' का. १२. '°नौ पद्मकोपकौ' क-ख. १३. 'अथ लक्षण' का. १४. 'प्रसारिताः समाः सर्वाः' क-ख. १५. 'गर्वेष्वह°' क-ख. १६. 'ललाटदेशोत्थितः कार्यः' क-ख.

एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥ २० ॥
'[1]स्वस्तिकविच्युतिकरणात् पल्लवपुष्पोपहारशष्पाणि ।
विरचितमुर्वीसंस्थं यद्द्रव्यं तच्च निर्देश्यम् ॥'
स्वस्तिकवि[2]च्युतिकरणात्पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृतं पाल्यं छन्नं निबिडं च गोप्यं च ॥ २१ ॥
अस्यैव चाङ्गुलीभिस्त्वधोमुखप्रस्थितोत्थित[3]चलाभिः ।
वायूर्मिवेगवेलाक्षोभौ[4]श्चोद्यश्च कर्तव्यः ॥ २२ ॥
उत्साहनं बहु [5]तथा महाजनप्रांशुपुष्कर[6]प्रहतिम् ।
पक्षोत्क्षेपाभिनयं रेचकक[7]रणेन कुर्वीत ॥ २३ ॥
[8]परिघृष्टतलस्थेन तु धौतं मुदितं प्रमृष्टपि[9]ष्टे च ।
पुनरेव शैलधारणमु[10]त्पाटनमेव चाभिनयेत् ॥ २४ ॥
एवमेव प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
अतःपरं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥ २५ ॥
पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥ २६ ॥
आवाहनमवतरणं विसर्जनं [11]वारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥ २७ ॥
माङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ संनिवेशश्च ।
उष्णीषमुकुटधारणनासास्यश्रोत्रसंवरणम् ॥ २८ ॥
अस्यैव चाङ्गुलीभ्यामधोमुख[12]प्रस्थितोत्थितचलाभ्याम् ।
[13]लघुमुख[14]पवनस्रोतो[15]भुजगभ्रमरादिकान्कुर्यात् ॥ २९ ॥

---

१. आर्येयं नास्ति क-ख-पुस्तकयोः २. 'विद्युति' (?) का. ३. '°चलिताभिः' क-ख. ४. '°क्षोभ°' का. ५. 'महत्' का. ६. 'प्रहतम्' का. ७. '°करणैः प्रयुञ्जीत' का. ८. 'परिमृष्ट°' का. ९. 'पिष्ठे' का. १०. '°उद्घाटन–' का. ११. 'धारणं' क-ख. १२. 'प्रस्थितौ स्थितचलाभ्याम्' का. १३. 'लघुचट' का. १४. 'पतनश्रोतो' क-ख. १५. 'भुजगतभ्रमणादिकान्' का.

अश्रु[1]प्रमार्जन[2]तिलकविरोचन[3]लोचना[4]लभनकं च ।
त्रिपताकानामिकया[5] स्पर्शन[6]मलिकस्य कर्तव्यम् ॥ ३० ॥
स्वस्तिकौ[7] त्रिपताकौ तु गुरूणां पादवन्दनम् ।
विच्युतौ चलितावस्थौ कर्तव्यौ नृपदर्शने ॥ ३१ ॥
तिर्यक्स्वस्तिकसंबद्धौ स्यातां तौ गृहदर्शने ।
तपस्विदर्शने कार्या(र्यौ?) चोर्द्ध्वौ चापि पराङ्मुखौ ॥ ३२ ॥
परस्पराभिमुखौ च (चैव?) कर्तव्यौ द्वारदर्शने ।
उत्तानाधोमुखौ कार्यावग्रे च कुस्य(च)संस्थितौ ॥ ३३ ॥
वडवानलसंक्रामे मकराणां च दर्शने ।
अभिनेयास्त्वनेनैव वानरप्लवनोर्मयः ॥ ३४ ॥
पततश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः ।
तन्मुखप्रसृताङ्गुष्ठः कार्यो बालेन्दुदर्शने ।
पराङ्मुखस्तु कर्तव्यो याने नृणां प्रयोक्तृभिः ॥ ३५ ॥
त्रिपताके यदा हस्ते[8] भवेत्पृष्ठावलोकिनी ।
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः ॥ ३६ ॥
पथिकचरण[9]रचनरञ्जनरङ्गणं[10]करणान्यधोमुखेनैव ।
ऊर्ध्वमुखेन तु कुर्याद्दृष्टं शृङ्गं च लेखं च ॥ ३७ ॥
पतनमरणव्यतिक्रमपरिवृत्त[11]वितर्कितं तथा न्यस्तम् ।
भिन्नवलितेन[12] कुर्यात्कर्तर्यास्याङ्गुलीययुगलेन[13] ॥ ३८ ॥
यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत्[14] ।
सोऽर्धचन्द्र[15] इति ख्यातः करः कर्मास्य वक्ष्यते ॥ ३९ ॥

१. 'अस्तु' क-ख. २. 'प्रमार्जनं' क-ख. ३. 'विरचनं' क-ख. ४. 'रोचना' क-ख. ५. 'नामिकया' क-ख. ६. 'दर्शनमलकस्य कार्यश्च' का. ७. 'स्वस्तिकौ त्रिपताकौ' इत्यारभ्य 'याने नृणां प्रयोकृभिः' इत्यन्तं सार्धश्लोकपञ्चकं का-पुस्तके नास्ति. ८. 'हस्तः' क-ख. ९. 'पथिचरण' का. १०. '°गमनकरणान्य°' का. ११. 'परिवर्ति' क-ख. १२. '°वलितेच' क-ख. १३. '°ङ्गुलीमुखेन' क-ख. १४. 'चापरम्' का. १५. '°र्धचन्द्रोहि विज्ञेयः' का.

एतेन बालतरवः शशिलेखाकम्बुकलशवलयानि ।
निर्घाटन[1]मायस्तं[2] मध्यौपम्यं च पीनं च ॥ ४० ॥
र[3]सनाजघनकटीनामाननतलपत्रकुण्डलादीनाम् ।
कर्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ॥ ४१ ॥
आद्या धनुर्लता कार्या कुञ्चिताङ्गुष्ठकस्तथा ।
शेषा भिन्नोर्ध्ववलिता ह्यराले[4]ऽङ्गुलयः करे ॥ ४२ ॥
एतेन सत्त्वशौण्डीर्य[5]धृतिकान्तिदिव्यगाम्भीर्यम् ।
आशीर्वादाश्च तथा भावाहित[6]संज्ञकाः कार्याः ॥ ४३ ॥
एतेन पुनः स्त्रीणां केशानां संग्रह[7]स्तथोत्कर्षः ।
सर्वाङ्गिकं तथैव च निर्वर्णन[8]मात्मनः कार्यम् ॥ ४४ ॥
कौतुकविवाहयोगं[9] प्रदक्षिणेनैव[10] संप्रयोगं च ।
अङ्गुल्यग्रस्वस्तिकयोगात्परिमण्डलेनैव ॥ ४५ ॥
प्रादक्षिण्यं परिमण्डलं च कुर्यान्महाजनं चैव ।
यच्च[11] महीतलनिहितं[12] द्रव्यं तच्चाभिनेयं स्यात् ॥ ४६ ॥
[13]आवाहने निवापे निन्दाक्षेपाद्यनेकवचनेच ।
खेदस्य चापनयने गन्धघ्राणे शुभे[14] चैव ॥ ४७ ॥
त्रिपताकहस्तजानि तु[15] पूर्वं यान्यभिहितानि कर्माणि ।
तानि[16] स्वरानुयोगात् स्त्रीभिः सम्यक् प्रयोज्यानि ॥ ४८ ॥
अरालस्य यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
शुकतुण्ड[17]स्तु स करः कर्म चास्य निबोधत ॥ ४९ ॥

---

१. 'निघटनं' का. २. 'मीयस्तं' (?) क-ख. ३. 'रशना' का. ४. 'ह्यरालाङ्गुलयः स्मृताः' का. ५. 'शौण्डीर्यं' का-ख. ६. 'भावाभिनयससंज्ञकाः' का. ७. 'संग्रहोत्कर्षौ' का. ८. 'निर्वहणम्' का. ९. 'योगं' क-ख. १०. 'प्रदक्षिणेनैव संप्रयोगश्च' का. ११. 'यच्च' क-ख. १२. '°रचित°' क-ख. १३. क-ख-पुस्तकयोस्तु—

'आवाहननिर्वाहणनिर्माणे चाप्यनेकवचः ।
खेदस्य चापनयनगन्धघ्राणे शुभे चैव ॥'

१४. 'शुभा चैव' का. ५१. 'हि' का. १६. 'तान्यथ गलयोगे' क-ख. १७. 'शुकतुण्डः स कर' क-ख.

एतेन त्वभिनेयं [1]नाहं न त्वं न कृत्यमिति [2]चार्थे ।
आवाहने [3]विसर्गे धिगिति वचने च सावज्ञम् ॥ ५० ॥
अङ्गुल्यो यस्य हस्तस्य [4]तलमध्येऽग्रसंस्थिताः ।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥ ५१ ॥
एष प्रहारे व्यायामे निर्गमे हस्त[5]पीडने ।
संवाहनेऽसियष्टीनां [6]कुन्तदण्डग्रहे तथा ॥ ५२ ॥
अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते ।
हस्तः स शिखरो नाम [7]तथा ज्ञेयः प्रयोक्तृभिः ॥ ५३ ॥
[8]रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्र[9]मोक्षणं चैव ।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ॥ ५४ ॥
अस्यैव शिखराख्यस्य मुखे[10]ऽङ्गुष्ठनिपीडिता ।
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ॥ ५५ ॥
असिचापचक्रतोमरकुन्तगदाशक्तिवज्र[11]बाणानि ।
शस्त्राण्यभिनेयानि तु कार्यं सत्यं च [12]पथ्यंच ॥ ५६ ॥
उत्क्षिप्त[13]वक्रा तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य तदासौ [14]खटकामुखः ॥ ५७ ॥
होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं च व्यञ्जनकम् ।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥ ५८ ॥
आयातदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव ।
स्रग्दामधारणं खलु वस्त्रान्तालम्बनं चैव ॥ ५९ ॥
मन्थानशरा[15]कर्षण[16]पुष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्ज्वा[17]कर्षस्त्रीदर्शनमेव कार्यं च ॥ ६० ॥

---

१. 'चाहं' क-ख. २. 'चार्ये' क-ख. ३. 'विसर्गेच' क-ख. ४. 'तलमाध्यग्रसंस्थिताः' क-ख. ५. 'पीडने तथा' क-ख. ६. 'दण्डकुन्तग्रहे' क-ख. ७. 'तदा' का. ८. 'पुस्तकद्वयेऽपि त्रुटिचिह्नं नास्ति.' क-ख. ९. '°मोक्षणे' क-ख. १०. 'ध्यङ्गुष्ठकनिपीडिता' क-ख. ११. '°वर्गाणि' क-ख. १२. 'पथ्यं च' तथ्यं च' क-ख. १३. '°चक्रा' का. १४. 'कटकामुखः' का. १५. 'कषर्णं' क-ख. १६. 'पुष्यश्च' क-ख. १७. '°कर्षण' का.

खटकाख्ये[1] यदा हस्ते तर्जनी संप्रसारिता[2] ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ ६१ ॥
अस्या[3] विविधान्योगान्वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनत[4]लोलकम्पितविजृम्भितोद्वाहितचलोयाः[5] ॥ ६२ ॥
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव ।
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादाश्च[6] ॥ ६३ ॥
बालोरगपल्लव[7]धूपदीपवल्लीलताशिखण्डाश्च ।
परिपतनवक्रमण्डलमभिनेयार्न्यू[8]र्ध्वलोलितया ॥ ६४ ॥
भूयश्चोर्ध्वे[9]विरचिता तारा घोणैकदण्डयष्टिषु च ।
विनता च तथा कार्या दंष्ट्रिषु[10] तथास्ययोगेन ॥ ६५ ॥
पुनरपि मण्डलगतयः सर्वग्रहणं तथैव लोकस्य ।
प्रणतीकृता च कार्या[11] ध्यायेदर्थे च दिवसे च ॥ ६६ ॥
वदनाभ्यासे कुञ्चितविजृम्भिता वाक्यरूपणे कार्या ।
[12]................................ ॥ ६७ ॥
श्रवणाभ्यासे वक्रा विजृम्भणे वाक्यरूपणे च मुखे ।
सेति वादति (?) च योज्या प्रसारितोत्कम्पितोत्ताना ॥ ६८ ॥
कार्या प्रकम्पिता रोषदर्शने खेदमार्जने[13] चैव ।
कुन्तलक[14]कुण्डलाङ्गदगण्डाश्रयेसंश्रये[15]ऽभिनये ॥ ६९ ॥
गर्वेऽहमिति ललाटे रिपुनिर्देशे [16]तथैव च क्रोधे ।
कोऽसाविति निर्देशेऽर्थं[17] कर्णकण्डूयने चैव ॥ ७० ॥
संयुक्तासंयोगे कार्या विश्लेषिता वियोगे च ।
कलहे स्वस्तिकयुक्ता परस्परोत्पीडिता बन्धे ॥ ७१ ॥

---

१. 'कटकाख्ये' का. २. 'सुप्रसारिता' क-ख. ३. 'अस्य विविधान् प्रयोगान्' क-ख. ४. 'ऊर्ध्वनस°' क-ख. ५. '°वलेपाः' क-ख. ६. 'साधुवादाश्च' क-ख. ७. '°बल्ल्यवधूम°' क-ख. ८. '°भिनेयं चोर्ध्वे' का. ९. '°र्ध्वे विरचिततारा' क-ख. १०. 'दंष्ट्रिषु च' क-ख. ११. 'कार्या ह्याये दीर्घे च ध्यायेदर्थं च' ख. १२. अत्र त्रुटितो ग्रन्थ इति प्रतिभाति. १३. 'खेदरूपणे चैव' का. १४. 'कुन्तलकुण्डल' का. १५. '°मण्डनाभिनये' का. १६. 'तथैव च क्रोध' क-ख. १७. 'च' क-ख.

द्वाभ्यां तु वाम[1]पार्श्वे दक्षिणतो दिननिशावसानानि ।
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत ॥ ७२ ॥
पुन[2]रपि च भ्रमिताग्रा रूपशिलावर्तयन्त्रशैलेषु ।
परिवेषणे तथैव हि कार्या चाधोमुखी नित्या ॥ ७३ ॥
श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपेण ।
शक्रस्याभ्युत्थानात्तज्ज्ञैस्तिर्यक्स्थिता कार्या ॥ ७४ ॥
द्वाभ्यां प्र[3]दर्शयेन्नित्यं संपूर्णं चन्द्रमण्डलम् ।
श्लिष्टा ललाटे शक्रस्य [4]कार्या ह्युत्तानसंश्रया ॥ ७५ ॥
परिमण्डलभ्रमितया मण्डलयोर्दर्शयेच्च चन्द्रस्य ।
हरनयने च ललाटे शक्रस्य तिर्यगुत्ताना ॥ ७६ ॥
यस्याङ्गुल्यस्तु विरलाः[5] सहाङ्गुष्ठेन कुञ्चि[6]ताः ।
ऊर्ध्वा ह्य[7]संगताग्राश्च स भवेत्पद्मकोषकः ॥ ७७ ॥
बिल्वकपित्थफलानां ग्रहणं कुचदर्शनं च नारीणाम् ।
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु ॥ ७८ ॥
दे[8]वार्चनबलिहरणे समु[9]द्गके साग्रपिण्डदाने च ।
कार्यः पुष्पप्रकरश्च प[10]द्मकोषेण हस्तेन ॥ ७९ ॥
मणिब[11]न्धश्लिष्टाभ्यां प्रविरलचलिताङ्गुलीयुतकराभ्याम् ।
कार्योपवर्तिताभ्यां विकसितकमलोत्पलाभिनयः ॥ ८० ॥
अङ्गुल्यः संहताः[12] सर्वाः सहाङ्गुष्ठेन यस्य च[13] ।
तथा निम्नतलश्चैव स तु [14]सर्वशिराः करः ॥ ८१ ॥

---

१. 'वामगमनं' क-ख. २. श्लोकद्वयी क-ख-पुस्तकयोर्नास्ति ३. 'संदर्शयेत्' का. ४. कार्योत्थानं' का. ५. 'विरला' क-ख. ६. 'कुञ्चिता' क-ख. ७. 'ह्यसंगतास्ताश्च' क-ख. ८. 'देवार्चने' क-ख. ९. 'संगूहे' का. १०. 'पद्मकोशेन' का. ११. क-ख-पुस्तकयोर्लेखकादिदोषाच्छन्दोभङ्गदूषितोऽयं पाठः—

मणिबन्धनविश्लिष्टविरलचलिताङ्गुलिकराभ्याम् ।
कार्ये विवर्तिताभ्यां विकमलोत्पलाभिनयः ॥ एवमन्यत्रापि ज्ञेयम्.

१२. 'सहिताः' का. १३. 'च' क-ख. १४. 'सर्वेशिरः' का.

एष सलिलप्रदाने भुजगगतौ तोयसेचने चैव ।
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु ॥ ८२ ॥
अधोमुखीनां सर्वासामङ्गुलीनां समागमः ।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेन्मृगशीर्षकः ॥ ८३ ॥
इह सांप्रतमस्त्यद्य [1]शक्यश्चेल्लालनेऽक्षपाते च ।
[2]स्वेदापमार्जनेषु च [3]कुंड्ड(ट्ट?)मिते [4]प्रचलिते तु भवेत् ॥ ८४ ॥
[5]त्रेताद्विसंस्थिता मध्या तर्जन्य[6]ङ्गुष्ठका यदा ।
[7]अङ्गुलेऽनामिका वक्रा तथा [8]चोर्ध्वकनीयसी ॥ ८५ ॥
[9]एतेन तरुणफलरूपणानि नानाविधानि च लघूनि ।
कार्याणि [10]रोषजानि स्त्रीवचनान्यङ्गुलिक्षेपैः ॥ ८६ ॥
मरकतवै[11]डूर्यादीनां निदर्शनं कार्यम् ।
ग्राह्यं विडालपदमिति चैव प्रयोगेषु ॥ ८७ ॥
आवर्तिन्यः करतले यस्याङ्गुल्यो भवन्ति हि ।
[12]पार्श्वागतविकीर्णाश्च स [13]भवेदलपल्लवः ॥ ८८ ॥
प्रतिषेधकृते योज्यैः[14] कस्य त्वं नास्ति शून्यवचनेषु ।
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः ॥ ८९ ॥
तिस्रः[15] प्रसारिता यत्र तथा चोर्ध्वा कनीय[16]सी ।
तासां म[17]ध्ये स्थितोऽङ्गुष्ठः स[18] करश्चतुरः स्मृतः ॥ ९० ॥
[19]नयविनयनियम[ सु ?]निपुणबालातुरसत्त्वकैतवार्थेषु ।
[20]वाक्ये युक्ते पथ्ये सत्ये प्रथमे च विनियोज्यः ॥ ९१ ॥

---

१. 'वशक्तेश्चोल्लालने' क-ख. २. 'श्वेद' क-ख. ३. 'कुट्टिमिते' का. ४. 'प्रचलितस्तु' क-ख. ५. 'त्रेताग्नि॰' क-ख. ६. '॰ङ्गुष्ठकास्तथा' का. ७. 'कांगूले (?)' क-ख. ८. 'चोर्ध्वा' का. ९. 'एतेन तरुणफलानि नानाविधानि च लघूनि कार्याणि' का. १०. 'रोषजाति' का. ११. 'वैदूर्यादीनां' का. १२. 'पार्श्वगता विकीर्णाश्च' का. १३. 'भवेदलपद्मकः' का. १४. 'योज्यं तिकस्य' क-ख. १५. 'विस्रः (?)' क-ख. १६. 'कनीयसाम्' क-ख. १७. 'मध्यस्तथाङ्गुष्ठः' क-ख. १८. 'करश्चतुरकः स्मृतः' क-ख. १९. 'नयननिपुणसमसुनिपुणबालातुरशाठ्यकैतवार्थेषु' का. २०. 'वोक्तो मध्ये पुत्रे पद्ये प्रशमे च विनियोज्यः' क-ख.

एकेन द्वाभ्यां वा किंचिन्मण्डलकृतेन हस्तेन[1] ।
विवृत[2]विवारितरचितं वितर्कितं[3] लज्जितं चैव ॥ ९२ ॥
नयनौपम्यं[4] पद्मदलरूपणं हरिणकर्णनिर्देशम्[5] ।
संयुक्त[6]करेणैव[ च ? ]चतुरेणैतानि कुर्वीत ॥ ९३ ॥
लीलां रतिं[7] रुचिं स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं (च[8])
संज्ञामाशां[9] प्रणयं विचारणं संगतं[10] शौचम् ॥ ९४ ॥
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् ।
प्रश्नं[11] वार्तायुक्तिं वेषं मृदुशाड्वलं[12] स्तोकम् ॥ ९५ ॥
विभवाविभवौ सुरतं गुणागुणौ यौवनं दारान्[13] ।
नानावर्णांश्च तथा चतुरेणैवं प्रयुञ्जीत ॥ ९६ ॥
सितमूर्ध्वेन तु कुर्याद्रक्तं पीतं च मण्डलकृते[14] च ।
परिमृदितेन तु नीलं वर्णांश्चतुरेण हस्तेन ॥ ९७ ॥
मध्यमाङ्गुष्ठसंदंशो[15] वक्रौ[16] चैव प्रदेशिनी ।
ऊर्ध्व[17]मन्ये प्रकीर्णे च अङ्गुल्यो[18] भ्रमरे करे ॥ ९८ ॥
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् ।
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपूरश्च ॥ ९९ ॥
विच्युत[19]श्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
बालालापे च शीघ्रे च तालें[20] विश्वासने तथा ॥ १०० ॥
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः ।
भवेयुर्हंसवक्रस्य शेषे द्वे संप्रसारिते ॥ १०१ ॥

---

१. 'हस्तदण्डेन' का. २. 'विधृतविचरितचरितं' का. ३. 'विवर्जितं' का. ४. 'नयनोपम्यं' क-ख. ५. 'कर्णनिर्देशः' क-ख. अत्र 'हरिण' इति क-ख-पुस्तकयोर्नास्ति. ६. 'संयुतकरणेनैवातुरेणैतानि' क-ख. ७. 'लीलारतिं' क; 'लीलारती' ख. ८. 'च' इत्यधिकं प्रतिभाति ९. '°भासां' क-ख. १०. 'संततं' क-ख. ११. 'प्रशमं वार्तायुक्तिम्' का. १२. 'शाड्वलं' का. १३. 'गृहान् दारान्' का. १४. 'मण्डलकरेण' का. १५. 'संदेशो' क-ख. १६. 'वक्रे चैव' का. १७. 'ऊर्ध्वमान्य°' क-ख. १८. 'द्व्यङ्गुलौ' का. १९. 'विद्युतश्च सहजश्च' क-ख. २०. 'तालविश्वासने' क-ख.

श्लक्ष्णाल्पशिथिललाघवनिःसारार्था[1] मृदुत्वयोगे च ।
कार्योऽभिनयविशेषः किंचित्प्रस्पन्दिताग्रेण ॥ १०२ ॥
समाः प्रसारितास्तिस्रस्तथा चोर्ध्वा कनीयसी ।
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः ॥ १०३ ॥
एष[2] च निवापसलिले दातव्ये गन्ध[3]संश्रये चैव ।
कार्यः प्रतिग्रहार्घ[4]मानभोजनार्थेषु विप्राणाम् ॥ १०४ ॥
आलिङ्गने महास्तम्भनिदर्शने रोमहर्षणे चैव ।
स्पर्शेऽनु[5]लेपनार्थे योज्यः संवाहने चैव ॥ १०५ ॥
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः ।
कार्या[6] यथा रसाः स्युर्दुःखे हनुधारणे चैव ॥ १०६ ॥

तर्जन्यङ्गुष्ठसंदंशो[7] ह्यरालस्य यथा भवेत् ।
आभुग्नतलमध्यश्च[8] स संदंश इति स्मृतः ॥ १०७ ॥
संदंशस्त्रिविधो ज्ञेय[9]स्त्वग्रजो मुखजस्तथा ।
तथा पार्श्वगतश्चैव रसभावोपबृंहितः ॥ १०८ ॥
पुष्पावचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम् ।
शल्या[10]कर्षग्रहणापकर्षणे चाग्र[11]संदंशः ॥ १०९ ॥
वृन्तात्पुष्पोद्धरणं[12] [13]वर्तिशलाकादिपूरणं चैव ।
धिगिति च वचनं रोषान्[14]मुखसंदंशस्य कर्माणि ॥ ११० ॥
यज्ञो[15]पवीतधारणवेधनगुणसूक्ष्मबाणलक्ष्ये[16]षु ।
[17]योगे ध्याने स्तोके संयुक्त[18]करस्तु कर्तव्यः ॥ १११ ॥

---

१. '°र्था मृदुतयोगेच' क-ख '°र्था मृदुतत्त्वयोगेषु' का. २. 'एष विधिः' का. ३. 'गज्ञ संश्रये' का. ४. 'वमन' ख. ५. '°नुभेपनार्थे' क-ख. ६. 'यथारसं स्याद्' का. ७. 'संदेहस्त्वरालस्यं यदा' ब-ख. ८. '°मध्यस्थः' क-ख. ९. 'ज्ञेयो अग्रतो' का. १०. 'शिल्पावयवग्रहणे प्रकर्षणे' क-ख. ११. '°ज्ञसंदंशः' क-ख. १२. 'उद्धारणं' क-ख. १३. 'चति (?)' क. चिति' ख. १४. 'रोषे' क-ख. १५. 'यज्ञे पवीतधारण' क-ख. 'यज्ञोपवीतनिधन°' का. १६. 'लक्षेषु' का. १७. 'योगेऽध्ययने' का. योगस्थाने का. १८. 'संयुतकरणस्तु' क-ख.

[1]पेलवकुत्सासूयास[2]दोषवचने च[3] वामहस्तेन ।
[4]किंचिद्विवर्तिताग्रः प्रयुज्यते पार्श्वसंदंशः ॥ ११२ ॥
आलेख्यनेत्ररञ्जनवितर्कवृन्त[5]प्रवालरचनं[6] च ।
निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः ॥ ११३ ॥
[7]समानताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
ऊर्ध्वा हंसमुखस्यैव स भवेन्[8]मुकुलकः करः ॥ ११४ ॥
देवार्चनबलिकरणे पद्मोत्पलमु[9]कुलरूपणे चैव ।
वि[10]टचुम्बने च कार्यो वि[11]कुत्सिते विप्रकीर्णे च ॥ ११५ ॥
भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु ।
मुकुलितकुसुमेषु तथा तज्ज्ञैरेष प्रयोक्तव्यः ॥ ११६ ॥
पद्मकोषस्य हस्तस्य [12]ह्यङ्गुल्यः कुञ्चिता यदा ।
ऊर्णनाभः स विज्ञेयः केशचौर्यग्र[13]हादिषु ॥ ११७ ॥
शिरःकण्डूयने चैव कुष्ठव्याधिनिरूपणे ।
सिंह[14]व्याघ्रेष्वभिनयः प्रस्तरग्रहणे तथा ॥ ११८ ॥
मध्यमाङ्गुष्ठसंदंशो वक्रा चैव प्रदेशिनी ।
शेषे तलस्थे कर्तव्ये [15]ताम्रचूडे कराङ्गुली ॥ ११९ ॥
वि[16]च्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
[17]तालेष्विषवसिते चैव शीघ्रार्थे संज्ञितेषु च ॥ १२० ॥
[ [18]तथा कलासु काष्ठासु निमेषे तु क्षणे तथा ।
एष एव करः कार्यो बलालापनिमन्त्रणे ॥ १२१ ॥]

---

१. 'पेशल°' का. २. 'सदूष°' क-ख. ३. '°च' क-ख. ४. 'किंचिद्विवर्तितकराग्रः' का. ५. '°वृत्त°' क-ख. ६. '°रचनेषु' का. ७. 'समागताग्राः' क-ख. ८. 'मुकुलः' का. ९. '°मुकुद°' क-ख. १०. 'विदचुम्बने' क-ख. ११. 'विकुशिते विप्रकीर्णस्य' क-ख. १२. 'अङ्गुल्यः' का. १३. 'गृहादिषु' का. १४. 'सिंहव्याघ्राद्यभिनयः' का. १५. 'ताम्रचूलकरेङ्गुली' क-ख. १६. 'व्युत्पन्नश्च' क-ख. १७. 'ताले विश्वासमे' का. १८. एष श्लोकः क-ख-पुस्तकयोर्नास्ति.

[1]अङ्गुल्यः सं[2]युता वक्रा उपर्यङ्गुष्ठपीडिताः[3] ।
प्रसारिता कनिष्ठा च ताम्रचू[4]डः करः स्मृतः ॥ १२२ ॥
शतं सहस्रं ल[5]क्षं च करेणैकेन दर्शयेत् ।
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान्विप्रुषस्तथा ॥ १२३ ॥[6]
असंयुताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।
अधुना संयुतान्हस्तान् ग[7]दतो मे निबोधत ॥ १२४ ॥
पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।
देवतानां गुरूणां च मित्राणां चाभिवादने ॥ १२५ ॥
देवतानां शिरः[8]स्थस्तु गुरूणामास्यसंस्थितः ।
वक्षःस्थश्चैव मित्राणां शे[9]षे त्वनियमो भवेत् ॥ १२६ ॥
उभाभ्या[10]मपि हस्ताभ्यामन्योन्यं पार्श्वसंग्रहात् ।
हस्तः कपोतको नाम कर्म चास्य निबोधत ॥ १२७ ॥
[11]एषोऽभिनयाभिगमे प्रणामकरणे गुरोश्च संभाषे ।
शीते भये च कार्यो वक्षःस्थः [12]कम्पितः स्त्रीभिः ॥ १२८ ॥
अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु ।
एतावदिति [13]च कार्यो भेदाङ्गीकृत्यमिति [14]चार्थे ॥ १२९ ॥
अङ्गुल्यो यस्य हस्तस्य [15]ह्यन्योन्या[16]न्तरनिःसृताः ।
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते ॥ १३० ॥
एष मदनाङ्गमर्दे [17]सुप्तोत्थितजृम्भणे [18]बृहद्देहे ।
[19]अनुधारणे च योज्यः शङ्खग्रहणेऽ[20]र्थतत्त्वज्ञैः ॥ १३१ ॥

---

१. 'अथवा' इत्यधिकं क-ख-पुस्तकयोः २. 'संहिता' का. ३. '°पीडिता' क-ख. ४. 'ताम्रचूलकरः स्मृतः' क-ख. ५. 'लक्षादि कनकं चापि' क-ख. ६. 'इति' इत्यधिकं' क-ख-पुस्तकयोः. ७. 'नादितो' क-ख. ८. 'शिरस्कंस्तु' क-ख. ९. 'स्त्रीणां कार्यो यथेप्सितः' क-ख. १०. '°मभिहस्ताभ्यां' क-ख. ११. 'द्विषद्भियाभ्युपगमे' का. १२. 'कल्पितः' का. १३. 'च' इति नास्ति क-ख-पुस्तकयोः. १४. 'वा थ' क-ख. १५. 'हि' इति नास्ति का-पुस्तके. १६. '°न्तराति स्मृतः' क-ख. १७. 'सुप्तोत्थ-विजृम्भणे' का. १८. 'व्रह द्वेहे'(?)का. १९. 'हनुधा' २०. 'च तत्त्वज्ञैः' का.

मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ १३२ ॥
स्वस्तिकविच्युतिकरणाद्[2] दिशो घनाः[3] खं वनं समुद्राश्च ।
ऋतवो मही तथान्यद्[4] विस्तीर्णं चाभिनेयं[5] स्यात् ॥ १३३ ॥
कटकः[6] कटकैर्न्यस्तः कटको[7] वर्धमानकः ।
शृङ्गारार्थेषु योक्तव्यः प्रणामकरणे तथा ॥[8] १३४ ॥
अरालौ तु विपर्यस्तावुत्तानौ[9] वर्धमानकौ ।
उत्सङ्ग इति विज्ञेयः कार्यः[10] सिंहावलोकिते[11] ॥ १३५ ॥
[[12] सनिष्पेषकरश्चैव रोषेऽमर्षेऽपि च स्मृतः ।
निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृतो भवेत् ॥ १३६ ॥
गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम् ।
दक्षिणे चापि वामस्य कूर्पराभ्यन्तरं न्यसेत् ॥ १३७ ॥
स चापि दक्षिणो हस्तः सम्यङ् मुष्टीकृतो भवेत् ।
इत्येष निषधो हस्तः कर्म चास्य निबोधत ॥ १३८ ॥
एतेन मदगर्वसौष्ठवौत्सुक्यविक्रमाटोपाः ।
अभिमानावष्टम्भः स्तम्भस्थैर्यादयः कार्याः ॥ १३९ ॥

---

१. 'वर्धमानकौ' का. २. '°करणा' क-ख. ३. 'धना' का. ४. 'तथार्यं' का. ५. 'वाभिनेयं' क-ख. ६. 'खटकः खेटके न्यस्तः' क-ख. ७. 'खटका' क-ख. ८. अत्र 'अन्ये' 'मुकुदोत्पलवृन्तेषु कर्तव्यच्छत्रधारणे' इति इत्यधिकं क-ख-पुस्तकयोः ९. 'विपर्यस्तात्' क-ख. १०. 'उत्तानावूर्धमानतौ' का. ११. 'सर्शस्य ग्रहणे करः' का. १२. 'सनिष्पेषकरश्चैव' इत्यादारभ्य 'प्रयोक्तव्याभिघट्टने' इत्यन्तं श्लोकपञ्चकं क-ख-पुस्तकयोर्नास्ति परं श्लोकद्वयमत्राधिकं क-ख-पुस्तकयोः—

मुकुलं तु यदा हस्तं कपित्थः परिवेष्टयेत् ।
स मन्तव्यस्तदा हस्तो निषे(ष?)धो नाम नामतः ॥ १३१ ॥

अग्रे का. पुस्तके तु–'वर्धमानः सविज्ञेयः कर्म चास्य निबोधत ।'

संग्रहपरिग्रहो धारणं च समयश्च सत्यवचनं च ।
संक्षेपः (प) [तस्तु] (हौ) संक्षिप्तं (प्त ?) निपीडितेनाभिनेतव्यम् ॥

अथवा—

ज्ञेयो वै निषधो नाम हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्याभिघट्टने ॥ १४० ॥ ]
अंसौ प्रशिथिलौ मुक्तौ पताकौ तु[1] प्रलम्बितौ ।
यदा भवेतां करणे स दोल इति संज्ञितः ॥ १४१ ॥
संभ्रमविषाद[2]मूर्च्छितमदाभिघाते तथैव चावेगे ।
व्याधिप्लुते च शस्त्र[3]क्षते च कार्योऽभिनययोगः १४२ ॥
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः ।
द्वितीयः पार्श्व[4]संश्लिष्टः स तु पुष्पपुटः स्मृतः ॥ १४३ ॥
[5]धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि ।
[6]ग्राह्याण्युपनेयानि च तोयानयनाप[7]नयने च ॥ १४४ ॥
पताकौ तु यदा हस्ता[8]दू (वू?)र्ध्वाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ तदा स मकरः करः ॥ १४५ ॥
सिंहव्यालद्वीपि[9]प्रदर्शनं नक्रमकरमत्स्यानाम् ।
ये चान्ये क्रव्यादा [10]अभिनेयास्तेऽर्थयोगेन ॥ १४६ ॥
कूर्परां[11]संचितौ हस्तौ यदास्तां सर्पशीर्षकौ ।
गजदन्तः स[12] तु करः कर्म चास्य निबोधत ॥ १४७ ॥
एष च[13] वधूवराणामुद्वाहे चातिभारयोगे[14]न ।
[15]स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव ॥ १४८ ॥
शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
शनैरधोमुखाविद्धौ सोऽ[16]वहित्थ इति स्मृतः ॥ १४९ ॥

---

१. 'प्रविलम्बितौ' का. २. '°विषदे' क-ख. ३. 'शत्रुक्षते' का. ४. '°सुश्लिष्टः' का. ५. 'धान्यजलपुष्पभक्ष्याण्यनेकनानाविधानियुक्तेन,' का. ६. 'ग्राहाण्यु°' क-ख. ७. '°पनयनं' क-ख. ८. 'हस्ताद्' क-ख. 'हस्तौ मूर्द्धा' का. ९. '°द्विपददर्शने' का. १०. 'ह्यभिनेयास्तेन हस्तेन' का. ११. 'कूर्परसंचितौ' क-ख. १२. 'स विज्ञेयः' का. १३. 'च' इति क-ख-पुस्तकयोर्नास्ति. १४. '°योगे च' का. १५. 'स्तम्भे' का. १६. '°विद्धोऽसावहित्थ' क-ख.

दौर्बल्ये[1] निःश्वसिते गात्राणां दर्शने तनुत्वे[2] च ।
उत्कुण्ठिते [च?] तज्ज्ञैर[3]भिनययोगश्च कर्तव्यः ॥ १५० ॥
मुकुलस्तु[4] यदा हस्तः कपित्थपरिवेष्टितः ।
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥ १५१ ॥
संग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च ।
संक्षेपतस्तु संक्षिप्तविपीडितेनाभिनेतव्यम् ॥ १५२ ॥
ज्ञेयो[6] वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्यो विघाटने ॥ १५३ ॥
उक्ताश्चैते[7] द्विविधा ह्यसंयुक्ताः संयुताश्च संक्षेपात् ।
अभिनयकरा[8]स्तु ये त्विह तेऽन्यत्रा[9]प्यर्थतः साध्याः ॥ १५४ ॥
अन्यैरप्युक्तम्[10]—'आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय वस्तुतः[11] ।
स्वयं वितर्क्य[12] कर्तव्यं हस्ताभिनयनं बुधैः ॥' इति ॥ १५५ ॥
नास्ति कश्चित्तथा हस्तो नाट्याभिनयनं[13] प्रति ।
यस्य संदृश्यते[14] रूपं बहुशस्तन्मयोदितम् ॥ १५६ ॥
अन्ये चाप्यर्थसंयुक्ता लौकिका ये करास्त्विह ।
छन्दतस्ते[15] प्रयोक्तव्या[16] रसभावविचेष्टितैः ॥ १५७ ॥
देशं कालं प्रयोगं चाप्य[17]र्थयुक्तिम्[18]वेक्ष्य च ।
हस्ता ह्येते प्रयोक्तव्या नृणां[19] स्त्रीणां विशेषतः ॥ १५८ ॥
सर्वेषामेव हस्तानां यानि कर्माणि सन्ति[20] वै[21] ।
तान्यहं संप्रवक्ष्यामि[22] रसभावकृतानि तु ॥ १५९ ॥

---

१. 'दैन्यस्य' क-ख. २. 'ननु त्वे' क-ख. ३. 'उत्कण्ठिता न तज्ज्ञैः°' क. ख. ४. '°स्तु' का. ५. 'एषा पद्यद्वयी' क-ख. पुस्तकयोः पूर्वमेव १३१, १३२ श्लोकत्वेन विन्यस्ता. ६. 'विज्ञेयो' का. ७. 'ह्येते' का. ८. '°करा ये त्विह' का. ९. 'ह्यत्रा' का. १०. 'अन्यैरप्युक्तं' इति नास्ति का. पुस्तके. ११. 'तत्पुनः' का. १२. 'वितर्कात्' का. १३. 'नाट्यार्थाभिनयं' का. १४. 'यद् दृश्यते' का. १५. 'छन्दस्तेऽपि' क-ख. १६. 'नियोक्तव्या' का. १७. 'अपि' इति नास्ति का-पुस्तके. १८. '°अर्थमुक्तिं' क-ख. १९. 'स्त्रीणां नृणां' का. २०. 'हन्ति' क-ख. २१. 'हि' का. २२. 'सप्त वक्ष्यामि' क-ख.

उत्कर्षणं विकर्षणं तथा व्यांकर्षणं[1] पुनः ।
परिग्रहश्चाप्याह्वानं[2] ताडनं तर्जनं तथा ॥ १६० ॥
संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा ।
विक्षेपधूनने चैव विसर्गस्तर्जनं[3] तथा ॥ १६१ ॥
छेदनं भेदनं चैव स्फोटनं[4] मोहनं तथा ।
ताडनं चेति विज्ञेयं तज्ज्ञैः कर्मकरान्प्रति ॥ १६२ ॥
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधि ।
नेत्रभ्रूमुखरागाद्यैः[5] कर्तव्या व्यञ्जिता बुधैः[6] ॥ १६३ ॥
करणं कर्मस्थानं प्रकारयुक्तिं[7] क्रियां च समवेक्ष्य[8] ।
हस्ताभिनयः कार्यस्तज्ज्ञैर्लोकोपचारेण[9] ॥ १६४ ॥
उत्तमानां कराः कार्या ललाटक्षेत्रचारिणः[10] ।
वक्षःस्थाश्चैव मध्यानामधमानामधोगताः ॥ १६५ ॥
ज्येष्ठे[11] स्वल्पप्रचाराः स्युर्मध्ये मध्यविचारिणः[12] ।
लोकक्रियास्वभावेन नीचैरप्यर्थसंश्रयाः ॥ १६६ ॥
अथ वान्यादृशं[13] प्राप्य प्रयोगं कालमेव च ।
विपरीताश्रया[14] हस्ताः प्रयोक्तव्या बुधैर्नरैः ॥ १६७ ॥
विषण्णे मूर्च्छिते भीते[15] जुगुप्साशोकपीडिते ।
ग्लाने सुप्ते[16] विहस्ते च निश्चेष्टे तन्द्रिते जडे[17] ॥ १६८ ॥
व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते ।
मत्ते[18] प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥ १६९ ॥

---

१. 'चैवापकर्षणम्' का. २. 'परिग्रहो निग्रहश्च आह्वानं नोदनं तथा' का. ३. 'विसर्गस्तदनन्तरम्' का. ४. 'छिन्धि(द्र ?) विस्फोटनं तथा' क-ख. ५. '°रागैश्च' का. ६. 'व्यञ्जितायुधैः' क-ख. ७. 'प्रचारयुक्तिं' क-ख. ८. 'संप्रेक्ष्य' का. ९. 'तज्ज्ञैः' 'यो' का. वा. १०. 'ललाटा' क-ख. ११. 'येऽष्ट' क-ख. १२. 'कुर्वीत मध्यमैः' क-ख. १३. 'चान्यदशप्राप्यं' क-ख. १४. 'विपरीतक्रिया' क-ख. १५. 'हीने' क-ख. १६. 'स्वप्ने' क-ख. १७. 'जडे' क-ख. १८. 'मत्तप्रमत्ते' क-ख.

[ हि[1]मवर्षगते बन्धे हरिणप्लवसंश्रिते ।
खम्रायिते च संभ्राते नखसंस्फोटने तथा ] ॥ १७० ॥
[2]न हस्ताभिनयः कार्यः कार्यः सत्त्वसमाश्रयः ।
तथा[3]कारविशेषश्च नानाभावरसान्वितः ॥ १७१ ॥
[4]यथा व्यग्रावुभौ हस्तौ तत्र [5]दृष्टिविलोकनैः ।
[6]वाचिकाभिनयं का ( कु )र्याद्विरामैरर्थदर्शकैः ॥ १७२ ॥
[7]उत्तानः पार्श्वगश्चैव तथाधोमुख एव च ।
प्रचारस्त्रिविधोऽङ्गानां नाट्यनृत्तसमाश्रयः ॥ १७३ ॥
[8]उत्तानो वर्तुलस्त्र्यस्रः स्थितोऽधोमुख एव च ।
पञ्च प्रकारा हस्तस्य नाट्य[9]नृत्तसमाश्रयाः ॥' इति ॥ १७४ ॥
एवं ज्ञेयाः करा ह्येते नानाभिनयसं[10]श्रिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि [11]करान्नृत्तसमाश्रयान् ॥ १७५ ॥
[12]वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ [13]खटकामुखौ ।
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥ १७६ ॥
हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति विज्ञेयावथवा ताल[14]वृन्तकौ ॥ १७७ ॥
चतुर[15]स्रस्थितौ हस्तौ हंसपक्षकृतौ तथा ।
तिर्यक्स्थितौ [16]चाभिमुखौ ज्ञेयौ तलमुखाविति ॥ १७८ ॥
तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ ।
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ ॥ १७९ ॥

---

१. पद्यमेतत् **क-ख**-पुस्तकयोर्नास्ति. २. 'तथा हस्ताभिनयः कार्यः सत्त्वस्य संग्रहः' **का.** ३. 'काकुविशेषश्च' **क-ख.** ४. 'यन्नाट्यग्रादुभौ' **क-ख.** ५. 'यत्र दृष्टिविलोकितैः' **का.** ६. एतत् पद्यार्धं **का**-पुस्तके नास्त्येव. ७. **का**-पुस्तके तु–'उत्तालोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च । हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा'. ॥ ८. एतत्पद्यं **का.** पुस्तके नास्ति. ९. '°नूल' **क-ख.** १०. 'संज्ञकाः' **क-ख.** ११. 'हस्तान्' **का.** १२. 'वक्षस्थो°' **का.** १३. 'कटकामुखौ' **का.** १४. 'वृन्तके' **क-ख.** १५. '°प्रस्थितौ' **क-ख.** १६. 'वा' **क-ख.**

[1]अलपल्लवसंस्थानावूर्ध्वास्यौ पद्मकोषकौ ।
अरालख[2]टकाख्यौ [3]वाप्यरालखट[4]कामुखौ ॥ १८० ॥

[5]अन्ये तु, ‘तथैवं मणिबन्धान्ते ह्यरालविच्युतावुभौ ।
ज्ञेयौ प्रयोक्तृभिर्नित्यमरालखटकाविति ॥’ इति ॥ १८१ ॥

भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ ।
पराङ्मुखत[6]र्यांविद्धौ ज्ञेयावाविद्धवक्रकौ ॥ १८२ ॥
हस्तौ तु सर्पशिरसौ [7]मध्यस्थाङ्गुष्ठकौ यदा ।
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ॥ १८३ ॥

[8]अन्यैः, ‘सर्पशीर्षौ यदा हस्तौ भवेतां स्वस्तिकस्थितौ ।
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा ॥’ इति ॥ १८४ ॥

रेचितौ [9]चापि विज्ञेयौ हंसपक्षोद्धृतभ्रमौ ।
प्रसारितोत्तानतलौ रेचिताविति [10]संस्थितौ ॥ १८५ ॥
चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ।
विज्ञेयौ नृत्ततत्त्वज्ञैरर्धरेचित[11]संज्ञकौ ॥ १८६ ॥
अञ्चितौ कूर्परांसौ तु त्रि[12]पताकाकृतौ करौ ।
किंचित्तिर्यग्ग[13]तावेतौ स्मृतावुत्तानवञ्चितौ ॥ १८७ ॥
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ ।
[14]बाहुशीर्षाद्विनिष्क्रान्तौ नि[15]तम्बाविति कीर्तितौ ॥ १८८ ॥
केशदेशाद्विनिष्क्रान्तौ [16]पारिपार्श्वस्थितौ तथा ।
विज्ञेयौ केशबन्धाख्यौ करावाचार्यसंमतौ ॥ १८९ ॥
तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च ।
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति ॥ १९० ॥

---

१. ‘अलपवसंस्थानात्तूद्वास्यौ’ क-ख. २. ‘°कटका’ का. ३. ‘तु’ क-ख. ४. ‘कटका’ का. ५. ‘पद्यमिदं’ का-पुस्तके नास्ति. ६. ‘°तलाविद्धौ’ क-ख. ७. ‘मध्यमा°’ क-ख. ८. ‘पद्यमिदं का-पुस्तके नास्ति. ९. ‘वापि’ क-ख. १०. ‘संज्ञितौ’ क-ख. ११. ‘संज्ञितौ’ क-ख. १२. ‘त्रिपताकौ करौ कृतौ’ का. १३. ‘तिर्यगललावेतौ’(?)क-ख. १४. ‘बहुशेषाद्’ क-ख. १५. ‘नित्यं वार्चित’(?)क-ख. १६. ‘पारिपार्श्वोत्थितौ’ क-ख.

समुन्नतो लताहस्तः पार्श्वात्पार्श्वं विलोलितः ।
त्रिपताकोऽपरः कर्णे [1]करिहस्तः प्रकीर्तितः ॥ १९१ ॥
‘[2]कटिशीर्षनिविष्टौ द्वौ त्रिपताकौ यदा करौ ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभिः ॥ १९२ ॥
तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ ।
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥ १९३ ॥
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ ।
तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥ १९४ ॥
ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात् ।
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ॥ १९५ ॥
उद्वेष्टितो भवेदेको द्वितीयश्चा[3]पवेष्टितः ।
भ्रामितावुर[4]सः स्थाने [5]ह्युरोमण्डलिनौ स्मृतौ ॥ १९६ ॥
अ[6]लपल्लवकरावुरोर्धभ्रमणक्रमात् ।
पार्श्वावर्तश्च विज्ञेयावुरःपार्श्वार्धमण्डलौ ॥ १९७ ॥
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा ।
[7]खटकाख्यकृतौ स्यातां मुष्टिकस्वस्तिकौ तदा ॥ १९८ ॥
पद्मकोषौ यदा हस्तौ [8]व्यावृत्तपरिवर्तितौ ।
नलिनीपद्मकोषौ तु तदा ज्ञेयौ प्रयोक्तृभिः ॥ १९९ ॥
करावुद्वेष्टिताग्रौ तु प्रविधायालपल्लवौ ।
ऊर्ध्वप्रसारिताविद्धौ विज्ञेया[9]वुल्बणावपि ॥ २०० ॥
[10]अथावेष्टितमेकं स्यादुद्वेष्टितमथापरम् ।
[11]व्यावर्तितं तृतीयं तु चतुर्थं परिवर्तितम् ॥ २०१ ॥
[पल्लवौ च शिरोदेशे संप्राप्तौ ललितौ स्मृतौ ।
कूर्परस्वस्तिकगतौ लताख्यौ ललिताविति ॥ २०२ ॥

१. ‘करिहस्तौ प्रकीर्तितौ’ का. २. ‘करिहस्त’ क-ख. ३. ‘°श्च विवेष्टितः. ४. ‘°वुरसंस्थाने’ क ख. ५. का-पुस्तके ‘हि’ इति नास्ति. ६. ‘अलपल्लवकारालावुरोर्ध्वभ्रमणक्रमात्’ का. ७. ‘कटकाख्यौ तु तौ’ का. ८. ‘व्यावर्त’ का. ९. ‘कर्तव्यादुल्बणावपि’ का. १०. ‘अपवेष्टित’ क. ११. ‘व्यावृतितं’ क-ख.

वियुताः संयुताश्चैव नृत्तहस्ताः प्रकीर्तिताः ।
अतः परं प्रवक्ष्यामि करणं हस्तसंश्रयम् ॥ २०३ ॥
सर्वेषामेव हस्तानां नाट्यहस्ते निदेशिभिः ।
विज्ञातव्या प्रयत्नेन करणं तु चतुर्विधम् ॥ २०४ ॥]
आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ।
अभ्यन्तरेण[1] करणं तदावेष्टितमुच्यते ॥ २०५ ॥
उद्वेष्ट्यन्ते[2] यदाङ्गुल्यस्तर्जन्याद्या[3] बहिर्मुखम् ।
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते ॥ २०६ ॥
आवर्त्यन्ते[4] कनिष्ठाद्या ह्यङ्गुल्योऽभ्यन्तरेण[5] तु ।
यथाक्रमेण[6] करणं तद्व्यावर्तितमुच्यते ॥ २०७ ॥
उद्वर्त्यन्ते[7] कनिष्ठाद्या बाह्यतः[8] क्रमशो यदा ।
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम् ॥ २०८ ॥
नृत्तेऽभिनययोगे च पाणिभिर्वर्तनाश्रयैः ।
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत् ॥ २०९ ॥
तिर्यक्[9] तथोर्ध्वसंस्थो ह्यधोमुखश्चाञ्चितोपविध(द्ध)स्तु ।
मण्डलगतिस्तथा स्वस्तिकश्च पुष्टानुसारी च ॥ २१० ॥
उद्वेष्टितप्रसारित इत्येते वै स्मृताः प्रकारास्तु ।
बाह्वोरिति करणगता विज्ञेया निव(न)र्तकैर्नित्यम् ॥ २११ ॥
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये हृदयोद[र]पार्श्वकर्माणि ॥ २१२ ॥[10]

---

१. 'अत्यन्तरेण' क-ख. २. 'आवेष्ट्यन्ते' क-ख. ३. 'तर्जन्या बहिर्मुखाः' का. ४. 'आवर्तन्ते' का. ५. 'हि' इति क-ख-पुस्तकयोर्नास्ति. ६. 'यत्तु' का. ७. 'उद्वर्तन्ते' का. ८. 'बाह्यशः' का. ९. का-पुस्तके तु—

तिर्यगूर्ध्वगतं चैव तथाधोमुख एव च ।
आविद्धश्चापविद्धश्च मण्डलस्वस्तिकस्तथा ॥
अञ्चितः कुञ्चितश्चैव पृष्ठगश्चेति चोदितः ।
बाहुप्रकारो दशधा नाट्यनृत्तप्रयोक्तृभिः ॥

१०. का-पुस्तकेऽत्रैवाध्यायसमाप्तिरेवं वर्तते—

इति भारतीये नाट्यशास्त्रे हस्ताभिनयो नाम नवमोऽध्यायः ।

आभुग्नमथ निर्भुग्नं[1] तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव ह्युरः पञ्चविधं स्मृतम् ॥ २१३ ॥
निम्नमुन्नतपृष्ठं च व्याभुग्नं संश्लथं[2] क्वचित् ।
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत ॥ २१४ ॥
संभ्रमविषादमूर्च्छाशोकभयव्याधिहृदयशिल्पेषु ।
कार्यं शीतस्पर्शे[3] वर्षे लज्जान्विते[4]ऽर्थवशात् ॥ २१५ ॥
स्वच्छं[5] च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् ।
उरोनिर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥ २१६ ॥
स्तम्भे मानग्रहणे विस्मयदृष्टे च[6] सत्यवचने च ।
अहमिति च दर्पवचने गर्वोत्सेके[7] च[8] कर्तव्यम् ॥ २१७ ॥[9]
हसितरुदितादिसंभ्रमभयश्रमव्याधिपीडितार्थेषु ।
नानाभावोपगतं कार्यमुरोनाट्ययोगेषु ॥ २१८ ॥
दीर्घनिश्वसिते[10] चैव जृम्भणामोटने तथा ।
विक्षो(व्वो)के च पुनः स्त्रीणां तद्विज्ञेयं[11] प्रयोक्तृभिः ॥ २१९ ॥
ऊर्ध्वक्षेपैरुरो यत्र[12] निरन्तरकृतैः कृतम् ।
प्रकम्पितं तु तज्ज्ञेयमुरो[13] नाट्यप्रयोक्तृभिः[14] ॥ २२० ॥
उद्वाहितमूर्ध्वगतमुरो[15] ज्ञेयं प्रयोक्तृभिः[16] ।
दीर्घोच्छ्वासोऽत्र[17] चालोकजृम्भणादिषु चेष्यते ॥ २२१ ॥

---

१. 'अभुग्नमप्यनिर्भुग्नं' क-ख. २. 'व्याभुग्नां संश्लेथं' क-ख. ३. 'तेन सर्शे' क-ख. ४. 'लज्जायिते' का. ५. 'स्तब्धं च निम्नपृष्ठं च' का. ६. 'तु' का. ७. 'गर्वोत्साहे तु' का. ८. 'तु' का. ९. क-ख-पुस्तकयोरधिकम् (आर्यं, पुनः केचित् क्षेपकोऽयम् ।) १०. का-पुस्तके पद्यमिदं नास्ति. ११. 'विगुणयं' क-ख. १२. 'यत्तु' का. १३. 'विज्ञेयं' का. १४. क-ख-पुस्तकयोस्तु—

'हसितरुदितेषु कार्यं श्रमे भये श्वासकाशयोश्चैव ।
हिक्कादुःखे च तथा नाट्यज्ञैरर्थवेगेन ॥'

१५. 'ऊर्ध्वकृतं क-ख. १६. 'प्रयोगतः' का. १७. 'दीर्घोच्छ्वसनता' का.

सर्वैरेवाङ्गविन्यासैश्चतुरस्रकृतैः कृतम् ।
उरः [1]समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥ २२२ ॥
एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अतः [2]परं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥ २२३ ॥
[3]नतं समुन्नतं चैव प्रसारितविवर्तिते ।
तथा[4]पसृतमेवं तु पार्श्वयोः कर्म पञ्चधा ॥ २२४ ॥
[5]कटी भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांसं च किंचित्पार्श्वं नतं स्मृतम् ॥ २२५ ॥
[6]तस्यैव चापरं पार्श्वं विपरीतं तु युक्तितः ।
कटीपार्श्वभुजांसैश्चाप्युन्नतैरुन्नतं भवेत् ॥ २२६ ॥
[7]आयामनादुभयतः पार्श्वयोः स्यात्प्रसारितम् ।
[8]परिवर्तित्रिकस्यापि विवर्तितमिहेष्यते ॥ २२७ ॥
[9]विवर्तितोपनयनाद्भवेदपसृतं पुनः ।
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥ २२८ ॥
[10]उपसर्पे नतं कार्यमुन्नतं चापसर्पणे ।
प्रसारितं प्रहर्षादौ [11]परिवृत्ते विवर्तितम् ॥ २२९ ॥
विनिवृत्ते त्वपसृतं [12]पार्श्वमर्थवशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥ २३० ॥
क्षामं खल्वं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षाम नतं खल्वं पूर्णमाध्मातमुच्यते ॥ २३१ ॥
क्षामं [13]हास्येऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि [14]श्रान्ते क्षुधार्ते खल्वमिष्यते ॥ २३२ ॥

---

१. 'ससौष्ठवैरङ्गैः' का. २. 'ऊर्ध्वं' का. ३. 'नतं मुन्नतं प्रसारित°' क-ख. ४. 'तथा प्रसृतमेतत्तु' का. ५. 'कटिर्भवेत्तु व्याभुग्ना' का. ६. 'नतस्यैवापरं' क-ख. ७. 'आयामत्वाद्' क-ख. ८. 'परिवर्तात्रिकस्य' क-ख. ९. 'विवर्तनोपनयनात्' क-ख. १०. 'उपसार्ये' क-ख. ११. 'परिवर्तौ' का. १२. 'पार्श्वनर्थ° (?)' क-ख. १३. 'हासे च' का. १४. 'भ्रान्ते' क-ख.

पूर्णमुच्चलितं[1] स्थूले व्याडि(धि)तन्द्राशनादिषु[2] ।

अन्ये तु[3], 'क्षामं खल्लं समं पूर्णमुदरं स्याच्चतुर्विधम् ।
इत्येतदुदरस्योक्तं[4] कर्म कट्या[5] निबोधत ॥' इति ।

छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ॥ २३३ ॥
उद्वाहिता चेति[6] कटी नाट्ये नृत्ते[7] च पञ्चधा ।
कटीमध्यस्य वलनाच्छिन्ना[8] संपरिकीर्तिता ॥ २३४ ॥
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता ।
सर्वतो भ्रमणाच्चापि[9] विज्ञेया रेचिता कटी ॥ २३५ ॥
तिर्यग्गता गताक्षिप्ता[10] कटी ज्ञेया प्रकम्पिता ।
नितम्बपार्श्वोद्वहनाच्छनैरुद्वाहिता[11] कटी ॥ २३६ ॥
पुनश्चासां[12] प्रवक्ष्यामि विनियोगप्रयोजनम् ।
छिन्ना व्यायामसंभ्रान्तव्यावृत्तप्रेक्षणादिषु[13] ॥ २३७ ॥
निवृत्तावर्तने चैव रेचिता भ्रमणादिषु[14] ।
कुब्जवामननीचानां[15] गतौ कार्या प्रकम्पिता ॥ २३८ ॥
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु[16] च ।
कम्पनं वलनं[17] चैव स्तम्भनोद्वर्तने तथा ।
विवर्तनं[18] च पञ्चैतान्यूरुकर्माणि कारयेत् ॥ २३९ ॥
नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तरा[19]ज्जानु यत्र तद्वलनं स्मृतम् ॥ २४० ॥
[स्तम्भनं[20] चापि विज्ञेयमपवृत्तक्रियात्मकम् ।
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् ॥ २४१ ॥]

---

१. '°मुच्छ्वासिते' क-ख. २. 'व्याधितान्यशतादिषु' क-ख. ३. 'अन्ये तु–' इति क्षामं खल्लमित्यादि च पद्यार्धं का-पुस्तके नास्ति. ४. '°दुदरं प्रोक्तं' का. ५. 'कट्याः कर्म' का. ६. 'चैव' का. ७. 'नाट्यनृत्ते' का. ८. 'चलनात्' क-ख. ९. 'नमनात्' क-ख. १०. 'क्षिप्रकटी ज्ञेया सा वै प्रकम्पिता' क-ख. ११. '°द्वहनच्छनै' क-ख. १२. 'कटीकर्म मया प्रोक्तं विनियोगं निबोधत' का. १३. '°क्षेपणादिषु' क-ख. १४. 'भ्रमणेषु च' का. १५. 'कुब्ज (?)' का. १६. 'लाजगतेषु च' क-ख. १७. 'चलनं' क-ख. १८. 'निवर्तनं' का. १९. '°भ्यन्तरं जातु' क-ख. २०. 'पद्यमिदं' क-ख-पुस्तकयोर्नास्ति.

पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्र[1] निवर्तनम् ।
गतिष्वधमपात्राणां भये[2] चापि हि कम्पनम् ॥ २४२ ॥
वलनं[3] चैव कर्तव्यं स्त्रीणां स्वैरपरिक्रमे[4] ।
साध्वसे च विषादे च स्तम्भनं [5]संप्रयोजयेत् ॥ २४३ ॥
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः ।
विवर्तनं च[6] कर्तव्यं संभ्रमादिपरिभ्रमे[7] ॥ २४४ ॥
यथार्दर्शनमन्यच्च लोकाद्ग्राह्यं प्रयोक्तृभिः ।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घयोस्तु[9] निबोधत ॥ २४५ ॥
आवर्तितं नतं क्षिप्तमुद्वाहितमथापि वा ।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥ २४६ ॥
वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः ।
पादो यत्र व्रजेद्विप्रास्तदावर्तितमुच्यते ॥ २४७ ॥
(केचित्[10]) 'जङ्घास्वस्तिकयोगेन क्रमादावर्तितं लये(भवे)त् ।
जानुनः कुञ्चनाच्चैव[11] नतं ज्ञेयं प्रयोक्तृभिः ॥ २४८ ॥
विक्षेपाच्चापि[12] जङ्घायाः क्षिप्तमित्यभिधीयते ।' इति ।
केचित्[13], क्षेपकोऽयम् ।
नतं स्याज्जानुनमनात्क्षिप्तं विक्षेपणाद्बहिः ।
उद्वाहितं च विज्ञेयमूर्ध्वमुद्वाहनादिह[14] ॥ २४९ ॥
प्रतीपनयनं यत्तु[15] परिवृत्तं तदुच्यते ।
आवर्तितं प्रयोक्तव्यं संभ्रमातिपरिक्रमे[16] ॥ २५० ॥
नतं चापि हि कर्तव्यं स्थानासनगमादिषु[17] ।
क्षिप्तं[18] व्यायामयोगेषु ताण्डवे च[19] प्रयुज्यते ॥ २५१ ॥

---

१. 'तेऽस्तुविवर्तनम्' क-ख. २. 'भवेच्चापि' क-ख. ३. 'चलनं' क-ख. ४. '°परिक्रमम्' क-ख. ५. 'तु प्रयो°' का. ६. 'तु' का. ७. '°परिक्रमे' क-ख. ८. 'तथा दर्शन' क-ख. ९. 'जङ्घायास्तु' का. १०. 'केचित्' इत्यारभ्य पद्यार्धमिदं का-पुस्तके नास्ति. ११. 'कुञ्चनं वापि' का. १२. 'विक्षेपं चैव' का. १३. 'केचित्' इत्यारभ्येदमपि पद्यार्धं का-पुस्तके नास्ति. १४. 'अपि' का. १५. 'यत्तत्' का. १६. 'विदूषकपरिक्रमे' क-ख. १७. 'गतादिषु' का. १८. 'क्षिप्रं' क-ख. १९. 'यं (?)' का.

तथा चोद्वाहितं कार्य[1]मविद्धगमनादिषु ।
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ॥ २५२ ॥
इत्ये[2]वं जङ्घयोः कर्म पादयोश्च[3] निबोधत ।
उद्घट्टि[4]तं समं चैव तथाग्रतलसंचरः ।
अञ्चितः कुञ्चि[5]तः सूचीपादः षोढा प्रकीर्तितः ॥ २५३ ॥
स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते ।
यस्य पादस्य करणे भवेदुद्घट्टि[6]तस्तु सः ॥ २५४ ॥
अयमुद्घट्टि[7]तकरणेष्वनुकरणार्थं[8] प्रयोगमासाद्य ।
द्रुतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः ॥ २५५ ॥
स्वभावरे[9]चितो भूमौ स[10]मस्थानश्च यो भवेत् ।
स[11]मः पादः स विज्ञेयः स्वभावाभिनयाश्रयः ॥ २५६ ॥
स्थि[12]रैः स्वभावाभिनये नानाकरणसंश्रये ।
चलितश्च[13] पुनः कार्यो विक्षेपः पादरेचिते ॥ २५७ ॥
उत्क्षिप्ता तु भवेत्पार्ष्णिः[14] प्रसृतोऽङ्गुष्ठकस्तथा ।
अङ्गुल्यश्चा[15]ञ्चिताः सर्वाः पादो[16]ऽग्रतलसंचरः ॥ २५८ ॥
तोदन[17]निकुट्टने स्थितनिशुम्भने भूमिताडने भ्रमणे ।
विक्षे[18]पविविधरेचकपार्ष्णिक्षताग्रगमनमेतेन ॥ २५९ ॥
पार्ष्णिर्यस्य[19] स्थिता भूमा[20]वूर्ध्वमग्रतलं तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः स[21] पादोऽञ्चित उच्यते ॥ २६० ॥
पा[22]दाग्रस्थितसंचारे वर्तितोद्वर्तिते तथा ।

---

१. 'कुर्यात्' का. २. 'इत्येतत्' का. ३. 'तु' क-ख. ४. 'उद्घट्टित समग्रो यथा' क-ख. ५. 'कुञ्चितश्चैव पादः पञ्चविधः स्मृतः' का. ६. 'द्धटितस्तु' क-ख. ७. '°द्धटितं. ८. '°दा' का. ९. '°रचिते' का. १०. 'समस्थाने' का. ११. 'समपादः' क-ख. १२. 'स्थिरस्वभावा°' का. १३. 'चलिताश्च' का. १४. '°र्ष्णिरञ्चितो' का. १५. '°श्चाञ्चिताः' क-ख. १६. 'पादाग्रतलसंचरे' क-ख. १७. 'नोदननिकुट्टिते स्थित-निसुंभिते भूमिताडनभ्रमणे' का. १८. 'क-ख.पुस्तकयोस्तु विक्षिप्तभ्रान्तकारचका(?) स्वनेनाभिनेतव्याः ।' १९. 'यस्याञ्चिता' का. २०. 'भूमौ ऊर्ध्वाग्रतलं तथा' का. २१. 'संपादस्त्वञ्चितः स्मृतः' का. २२. 'पादाग्रतलसंचारे' का.

[१]अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ॥ २६१ ॥
[[२]उत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्यः कुञ्चितास्तथा ।
तथाकुञ्चितमध्यश्च स पादः कुञ्चितः स्मृतः ॥ २६२ ॥
उदात्तगमने चैव वर्तितोद्वर्तिते तथा ।]
[३]उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थि[४]तः ।

षड्[५]विधं वादितोऽन्ये ।

वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ॥ २६३ ॥
[६]नृत्तेऽन्तःपुरकरणे प्रयोगस्तस्य कीर्ति[७]तः ।
[८]अतिक्रान्तक्रमे चैव पादमेवं प्रयोजयेत् ॥ २६४ ॥
पादजङ्घोरुकरणं समं कार्यं प्रयोक्तृभिः ।
पादस्य करणं सर्वं जङ्घोरुकृतमिष्यते ॥ २६५ ॥
यथा पादः प्रवर्तेत त[९]थैवोरुः प्रवर्तते ।
[१०]तयोः समानकरणात्[११]पादचारी प्रयोजयेत् ॥ २६६ ॥
इत्येतदङ्गजं प्रोक्तं [१२]लक्षणं चैव कर्म हि ।
अतः परं प्रवक्ष्यामि [१३]चारीव्यायामलक्षणम् ॥ २६७ ॥

[१४]इति श्रीभारतीये नाट्यशास्त्रेऽङ्गाभिनयो नाम नवमोऽध्यायः ।

---

## [१५]दशमोऽध्यायः ।

[[१६]एवं पादस्य जङ्घाया ऊर्वोः कट्यास्तथैव च ।
समानकरणाच्चेष्टा सा चारीत्यभिधीयते ॥ १ ॥]

---

१. 'एष पादादृते कार्यो नानाभ्रमरकेषु च' का. २. इतःप्रभृति सार्धं पद्यं क-ख-पुस्तकयोर्नास्ति. ३. 'उत्क्षिप्तं तु भवेत् का. ४. 'संस्थिता' का. ५. का-पुस्तके नास्त्येतत्. ६. 'नृत्ते नूपुरकरणे' का. ७. 'कीर्त्यते' का. ८. पद्यार्धमिदं क-ख-पुस्तकयोर्नास्ति. ९. 'तथैवैताः' क-ख. १०. 'अनयोः' का. ११. 'पादचारी' क-ख. १२. 'कर्म चैव हि' का. १३. 'चारीघातनलक्षणम्' क-ख. १४. 'इति भारतीये नाट्यशास्त्रे शरीराभिनयो नाम दशमोऽध्यायः' का. १५. 'अथैकादशोऽध्यायः' का. १६. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति.

विधानोभयतश्चार्यो[1] व्यायच्छन्ति परस्परम् ।
यस्मादङ्गसमायुक्तस्तस्माद्व्यायाम उच्यते ॥ २ ॥
एकपाद[2]प्रचारो यः सा[3] चारीत्यभिधीयते ।
द्विपादक्रमणं[4] यत्तु[5] करणं नाम तद्भवेत् ॥ ३ ॥
करणानां समायोगः[6] खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥ ४ ॥
चारीभिः[7] प्रस्तुतं नृत्तं चारीभिश्चेष्टितं[8] यथा ।
चारीभिः[9] शस्त्रमोक्षश्च चार्यो[10] युद्धे च कीर्तिताः ॥ ५ ॥
यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संस्थितम्[11] ।
नहि चार्यो[12] विना किंचिन्नाट्येऽङ्गं संप्रवर्तते ॥ ६ ॥
तस्माच्चारीविधानस्य संप्रवक्ष्यामि लक्षणम् ।
या[13] यास्मिंश्च प्रयोक्तव्या नृत्ते युद्धे तथा[14] गतौ ॥ ७ ॥
समपादा स्थिता वार्ता शकटास्या तथैव च ।
अध्यर्धिका[15] चाषगतिर्विच्यवाचा तथापरा ॥ ८ ॥
एडका[16]क्रीडिता वद्धा[17] ऊरूद्वृत्ता[18] तथाड्डिता[19] ।
उत्स्यन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥ ९ ॥
समोत्सारित[20]मतल्ली च मतल्ली चेति[21] षोडश ।
एता भौम्यः[22] स्मृताश्चार्यः शृणुताकाशिकीः[23] पुनः ॥ १० ॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका[24] ॥ ११ ॥

१. 'नोपगताश्चार्यो व्यायामोटाः' क-ख. २. 'एकपादे' क-ख. ३. 'संचारी' क-ख. ४. 'प्रवणं' क-ख. ५. 'यस्तु' क-ख. ६. 'समायोगात् खण्डमित्य°' का. ७. 'चारिभिः' का. ८. 'चारिभिः' का. ९. 'चारिभिः' का. १०. 'चार्या युद्धेषु कीर्तिता' क-ख. ११. 'संज्ञितम्' का. १२. 'चार्या' क-ख. १३. 'ये' क-ख. १४. 'गतौ तथा' का. १५. 'अर्धिका वाषगति च चार्विभ्यश्चल' (?) क-ख. १६. 'एलका°' क-ख. १७. 'वर्धा' क-ख. १८. 'भूरुद्वृत्ता' क-ख. १९. 'तथाज्ञिता' क-ख. २०. 'समो-सरितवल्ली' क-ख. २१. 'चापि' का. २२. 'सौम्यस्थिताः क. २३. 'कौशिकीः' क-ख. २४. 'तथात्तपरपादिका'(?) क-ख.

दोलापादा[1] तथाक्षिप्ता व्याविद्धोद्वृ[2]त्तसंज्ञिते ।
विद्युद्भ्रा[3]न्ता ह्यला[4]ता च भुजङ्गत्रासिता तथा ॥ १२ ॥
मृगप्लुता च[5] दण्ड च भ्रमरी चेति षोडश ।
आकाशि[6]क्यः स्मृता ह्येता लक्षणं च निबोधत ॥ १३ ॥
पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा [7]स्मृता चारी विज्ञेया स्थानसंश्रया ॥ १४ ॥
भूमिघृष्टे[8]न पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनरुत्सार[9]येदन्यं स्थिता वार्ता तु सा स्मृता ॥ १५ ॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसंचरम् ।
उद्वाहितमुरः कृत्वा शकटा[10]स्यां प्रयोजयेत् ॥ १६ ॥
सव्यस्य पृ[11]ष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्यो[12]पसर्पणं चैव ज्ञेया साध्य[13]र्धिका बुधैः ॥ १७ ॥
पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी वा चाषगत्यां विधीयते ॥ १८ ॥
वीच्य[14]वाक् समपादायां विश्ले[15]षं संप्रयोजयेत् ।
निकुट्टयं[16]स्तथाग्रेण पादस्य धरणीतलम् ॥ १९ ॥
तलसंचरपादाभ्यामुत्प्लु[17]त्य प[18]तनं तु यत् ।
पर्यायत[19]श्च क्रियते एडका[20]क्रीडिता तु सा ॥ २० ॥
अन्योन्यजङ्घासंवेधात्कृ[21]त्वा तु स्वस्तिकं ततः ।
ऊरुभ्यां व[22]लनं यस्मात्सा बद्धा चार्युदीरिता ॥ २१ ॥

---

१. 'डोलापादा' का. २. 'आविद्धावृत्तसंज्ञके' क-ख. ३. 'विद्युत्क्रान्ता' क-ख. ४. 'ह्यलाका' क-ख. ५. 'दण्डपादा' क-ख. ६. 'आकौशिक्यः' क-ख. ७. 'तु सा' क-ख. ८. 'भूमिकृष्टेन' क-ख. ९. '°रुत्सादयेदन्यं' क-ख. १०. 'शकटास्यं' का. ११. 'मृष्टतो' क-ख. १२. 'तस्यापसर्पणं' क-ख. १३. 'साध्यर्चिका' क-ख. १४. 'एवं वा' क-ख. १५. 'विच्यां वां' क-ख. १६. 'न चात्रेण' क-ख. १७. 'उल्लत्य' क-ख. १८. 'पातनं' क-ख. १९. 'उपर्यधश्च' क-ख. २०. 'अलका°' २१. 'कृत्वा र स्वस्तिकं' क-ख. २२. 'चलनं' क-ख.

तलसंचरपादस्य पार्ष्णिर्बाह्योन्मुखी[1] यदा ।
जङ्घाञ्चिता तथोद्वृत्ता[2] ऊरुद्वृत्तेति सा स्मृता ॥ २२ ॥
अग्रतः पृष्ठतश्चापि[3] पादैस्तु[4] तलसंचरः ।
द्वितीयपादो[5] निर्घृष्टो यस्यां[6] स्यादञ्चिता[7] तु सा ॥ २३ ॥
शनैः पादो विवर्तेत[8] बाह्येनाभ्यान्तरेण च ।
यद्रेचकानुसारेण सा[9] चार्युत्स्यन्दिता[10] स्मृता ॥ २४ ॥
मुष्टिहस्तश्च[11] वक्षःस्थः करोन्यश्चे[12] प्रवर्तितः ।
तलसंचरपादश्च[13] जनिता चार्युदाहृता ॥ २५ ॥
पञ्चतालान्तरं पादं प्रसार्य स्यन्दितां[14] न्यसेत् ।
द्वितीयेन तु पादेन[15] तथापस्यन्दितामपि ॥ २६ ॥
तलसंचरपादाभ्यां[16] घूर्णमानापसर्पणैः[17] ।
समोत्तारितमतल्ली[18] व्यायामे समुदाहृता[19] ॥ २७ ॥
[ उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मचल्युदाहृता ॥ २८ ॥
एता भूम्यः[20] स्मृताश्चार्यो नियुक्तकरणाश्रयाः[21] ।
आकौशिकीनां[22] चारीणां संप्रवक्ष्यामि लक्षणम् ॥ २९ ॥
कुञ्चितं पादमुत्क्षिप्य[23] पुरतः संप्रसारयेत् ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ॥ ३० ॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वोत्थानगतिं[24] न्यसेत् ।
उद्धट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥ ३१ ॥

---

१. 'पार्ष्णिवाह्योन्मुखी' क-ख. २. 'तथोद्धृता' क-ख. ३. 'पृष्ठतो वापि' क-ख. ४. 'पादोऽग्रतल°' क-ख. ५. '°पादनिर्घृष्टो' क-ख. ६. 'यस्यां' क-ख. ७. 'स्याद-ञ्चिता' क-ख. ८. 'निवर्तेत' क-ख. ९. 'सा' इति त्रुटितं क-ख-पुस्तकयो. १०. '°त्सन्दिता' का. ११. 'पुष्टिहस्तश्च' क-ख. १२. 'करोत्यश्वप्रकीर्तितः' १३. 'तल' संचारपादश्च' क-ख. १४. 'संन्यतां' क-ख. १५. 'पार्श्वेन' क-ख. १६. 'संचार-का. १७. 'घूर्ण्यमाना°' क-ख. १८. 'समोसरितवल्ली च' क-ख. १९. 'समुदाहृताः' का. २०. 'भौम्यैः' क-ख. २१. 'निरुद्ध°' क-ख. २२. 'आकौशिकीनां' क-ख. 'आकाशकीनां' का. २३. पद्यमिदमधिकं का-पुस्तके. २४. 'जानुस्तनसमं' क-ख.

कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ।
द्वितीयं च क्रमात् [1]स्तब्धमूर्ध्वजानुः [2]प्रकीर्तिता ॥ ३२ ॥
[3]पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु ।
द्रुतं निपातयेद्भूमौ चारी नूपुरपादिका ॥ ३३ ॥
कुञ्चितं पादमुत्क्षिप्य जानुरूर्ध्वं प्रसारयेत् ।
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ॥ ३४ ॥
कुञ्चितं पादमुत्क्षिप्य [4]पार्श्वं पार्श्वं [5]तुं दोलयेत् ।
पातयेदञ्चितं चैव दोलपादा प्रकीर्तिता ॥ ३५ ॥
कुञ्चितं पादमुत्क्षिप्य [6]व्याक्षिप्य त्वञ्चितं न्यसेत् ।
जङ्घा स्वस्तिकसंयुक्ता [7]प्रक्षिप्ता नाम सा [8]स्मृता ॥ ३६ ॥
स्वस्तिकस्याग्रतः पादः कुञ्चितश्च [9]प्रसारितः ।
[10]निपतेदञ्चिताविद्ध आविद्धा नाम सा स्मृता ॥ ३७ ॥
पादमाविद्धमावेष्ट्य [11]समुत्क्षिप्य निपातयेत् ।
परिवृत्त्य द्वितीयं च [12]सोद्वृत्ता चार्युदाहृता ॥ ३८ ॥
पृष्ठतो वलितं पादं [13]शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥ ३९ ॥
[14]पृष्ठतः सर्वतः पादो [15]वलिताभ्यन्तरीकृतः ।
पार्ष्णि[16]प्रपतितश्चैव [17]ह्यलाता संप्रकीर्तिता ॥ ४० ॥
कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं [18]विवर्तयेत् ।
कटीजानु[19]विवर्ताच्च भुजङ्गत्रासिता भवेत् ॥ ४१ ॥

---

१. '°मस्तब्ध ऊर्ध्वं°' क-ख. २. 'प्रकीर्तितः' क-ख. ३. 'पृष्ठतो' इत्यारभ्य 'सा सूची परिकीर्तिता' इत्यन्तं श्लोकद्वयी का-पुस्तके नास्ति. ४. 'पार्श्वपार्श्वं' क-ख. ५. 'तु सा स्मृता' का. ६. 'आक्षिप्यं चाञ्चितं' का. ७. 'उत्क्षिप्ता' का. ८. 'भवेत्' का. ९. 'तु' क-ख. १०. 'निपातान्' क-ख. ११. 'समुत्पत्य' क-ख. १२. 'सा द्रुत्ता' (?) क-ख. १३. 'शरोद्धृष्टं' क-ख. १४. 'पृष्ठः प्रसारितः' का. १५. 'वलितो' क-ख. १६. '°प्रपादित°' क-ख. १७. 'हि' इति का-पुस्तके नास्ति. १८. 'प्रवर्तयेत्' का. १९. '°विवर्तेन' का.

[1]अतिक्रान्तक्रमं कृत्वा चो[2]त्प्लुत्य विनिपातयेत् ।
[3]जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया [4]हरिणीप्लुता ॥ ४२ ॥
नूपुरं चरणं कृत्वा पुरतः संप्रसारयेत् ।
क्षिप्तमाविद्धकरणं द[5]ण्डपादा तु सा स्मृता ॥ ४३ ॥
[6]अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्तयेत् ।
द्वितीयपादभ्रमणा[7]च्चलने भ्रमरी स्मृता ॥ ४४ ॥
[8]आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
धनुर्व[9]ज्रादिशस्त्राणां यो[10]क्तव्याः शस्त्रमोक्षणे ॥ ४५ ॥
अग्रगौ [11]पृष्ठगौ वापि [12]ह्यनुगौ वापि योगतः ।
पादयोस्तु द्वि[13]जौ हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥ ४६ ॥
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्ग[14]तिं कृत्वा [15]तथोपाङ्गानि योजयेत् ॥ ४७ ॥
[16]पादचार्या यथा पादो धरणीमेव गच्छति ।
एवं [17]हस्तं चरित्वा तु कटीदेशं समाश्रयेत् ॥ ४८ ॥
एता[18]श्चार्यो मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ।
स्था[19]नान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ॥ ४९ ॥
वैष्णवं समपादं च वै[20]शाखं मण्डलं तथा ।
प्रत्यालीढं त[21]थालीढं स्थानान्येतानि षण्नृणाम् ॥ ५० ॥
द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः समुत्थितस्त्वेकस्त्र्यस्र[22]पादस्थितोऽपरः ॥ ५१ ॥

---

१. 'अतिक्रान्तसमं' क-ख. २. 'समुत्प्लुत्य पातयेत्' का. ३. 'जङ्घाञ्चितो°' क-ख. ४. 'हरिणप्लुता' का. ५. 'दण्डपाता' क-ख. ६. 'अतिक्रान्तं समं' क-ख. ७. '°त्तलेन' का. ८. 'आकौशिक्यः' क-ख. ९. '°वज्रासि' क-ख. १०. 'योक्तव्या' क-ख.; 'प्रयोक्तव्या प्रयोक्तृभिः' का. ११. 'समगौ' का. १२. 'अनुगौ वापि' का. १३. 'द्विजहस्तै' का. १४. 'निर्गमं ज्ञात्वा' का. १५. 'तत्रोपाङ्गानि' का. १६. 'पादचार्यो' क-ख. १७. 'हस्तश्च-°' क-ख. १८. '°श्चार्या' का. १९. 'स्थानानि संप्रवक्ष्यामि' का. २०. 'वैशाषाखण्डलं' क-ख. २१. '°मलीढं' का. २२. 'त्र्यस्रःपक्ष°' का.

किंचिदञ्चितजङ्घं[1] च सौष्ठवाङ्गपुरस्कृतम्[2] ।
वैष्णवस्थानमेतद्धि विष्णुरेवा[3]धिदैवतम् ॥ ५२ ॥
स्थानेनानेन कर्तव्यः संलापस्तु स्वभावजः ।
नानाकार्यान्तरोपेतै[4]र्नृभिरुत्तममध्यमैः[5] ॥ ५३ ॥
अन्येऽपि[6], चक्रस्य मोक्षणे[7] चैव धारणे[8] धनुषस्तथा ।
धैर्योदात्ताङ्गलीलासु[9] तथा[10] क्रोधे प्रयोजयेत् ॥ ५४ ॥
इदमेव विपर्यस्तं प्रणयक्रोध इष्यते[11] ।
उपालम्भकृते चैव प्रकर्षाधिबलस्तथा[12] ॥ ५५ ॥
शङ्कासूयोग्रता[13]चिन्तामतिस्मृतिषु चैव हि ।
दैन्ये चपलतायां[14] च मन्त्राधिक्येषु[15] शक्तिषु ॥ ५६ ॥
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम्[16] ।
समपादे[17] समौ पादौ तालमात्रान्तरस्थितौ ॥ ५७ ॥
स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन विप्रमङ्गलधारणम्[18] ॥ ५८ ॥
रूपणं पक्षिणां चैव परं[19] कौतुकमेव च ।
ख(खः?)स्थानां स्यन्दनस्थानां विमानस्थायिनामपि ॥ ५९ ॥
लिङ्गस्थानां व्रतस्थानां[20] स्थानमेतत्तु कारयेत् ।
[ [21]तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत् ।
तालांस्त्रीनर्धतालांश्च निषण्णोरुं प्रकल्पयेत् ॥ ६० ॥
त्र्यस्रौ वक्षःस्थितौ[22] चैव तत्र पादौ[23] प्रयोजयेत् ।
वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ॥ ६१ ॥

---

१. 'जङ्घोऽसौ ' का. २. 'समन्वितः' का. ३. '°रत्रा°' का. ४. '°न्तरापेतो' का. ५. '°मध्यमे' क-ख. ६. 'अन्येऽपि' इति का-पुस्तके नास्ति. ७. 'मोक्षणं' का. ८. 'धारणा धनुषि स्थिते' क-ख. ९. 'धैर्यदानाङ्गलीलासु' का. १०. 'तथोद्दाह्य' क-ख. ११. 'प्रणयं कोप इच्छति' क-ख. १२. 'हर्षयो(?)द्वेगयोस्तथा' क-ख. १३. 'तथोक्तता' क-ख. १४. 'चपलतायोगे' का. १५. 'गर्वाभीष्टेषु' का. १६. 'योषितम्' का. १७. 'समस्तत्र' क-ख. १८. '°कारणम्' का. १९. 'वरं' क-ख. २०. 'प्रतस्थानां' क-ख. २१. पद्यमिदं का-पुस्तकेऽधिकम्. २२. 'पक्षस्थितौ' क-ख. २३. 'पदैः' क-ख.

स्थानेनानेन कर्तव्यमश्वानां[1] वाहनं बुधैः ।
व्यायामो निर्गमश्चैव स्थूलपक्ष[2]निरूपणम् ॥ ६२ ॥

केचिदन्येऽपि[3], शरासन[4]समुत्कर्षे व्यायामकृत[5] एव च ।
रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ॥ ६३ ॥

ऐन्द्रे[6] तु मण्डले पादौ चतुस्तालान्तरस्थितौ ।
त्र्यस्रौ वक्षःस्थितौ[7] चैव कटी जानू समौ[8] तथा ॥ ६४ ॥
धनुर्वज्राणि[9] शस्त्राणि मण्डलेन प्रयोजयेत् ।
वाहनं[10] कुञ्जरादीनां स्थूलपक्षिनिरूपणम् ॥ ६५ ॥
अस्यैव दक्षिणं पादं पञ्चतालान्प्रसार्य तु ।
आलीढं[11] स्थानकं कुर्याद्रुद्रश्चात्राधिदैवतम् ॥ ६६ ॥
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् ।
उत्तरोत्तरसंजल्पो[12] रोषामर्षकृतश्च[13] यः ॥ ६७ ॥
मल्लानां चैव संफेटः[14] शत्रूणां च निरूपणम् ।
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ॥ ६८ ॥
कुञ्चितं दक्षिणं कृत्वा वामं[15] पादं प्रसार्य च ।
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ॥ ६९ ॥
आलीढसंहितं[16] शस्त्रं प्रत्यालीढेन मोक्षयेत् ।
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ॥ ७० ॥
न्यायाश्चैव प्रयोक्तव्या[17]श्चत्वारः शस्त्रमोक्षणे ।
भारतः सात्वतश्चैव वार्षगण्योथ कैशिकः ॥ ७१ ॥

---

१. 'अश्वता' (?) क-ख. २. '°पक्षि°' का. ३. 'केचिदन्येऽपि' इति का-पुस्तके नास्ति. ४. 'शराणां च समुत्कर्षे' का. ५. '°कृतमेव च' का. ६. 'ऐन्द्रं तु मण्डलं' का. ७. 'पक्षकृतौ' क-ख. ८. 'कटिजानुसमा' क-ख. ९. 'धनुर्वज्रादिशास्त्राणां' का. १०. 'वहन' क-ख., 'वाहनं कुञ्जराणां तु' का. ११. 'आलीढस्थानकं' का. १२. 'संजल्पा' क-ख. १३. 'तु' क-ख. १४. 'संस्फोटः' क-ख. १५. 'वामपादं' क-ख. १६. '°सहितं' का. १७. 'हि विज्ञेयाः' का.

[1]भारते तु कटिच्छेदं पादच्छेदं तु सात्त्वते ।
[2]वक्षसो वार्षगण्ये तु शिरश्छेद्यं तु कैशिके ॥ ७२ ॥
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीस[3]मुत्थितैः ।
प्रवि[4]चाराः प्रयोक्तव्या नानाशस्त्रविमोक्षणे ॥ ७३ ॥
[5]न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्माद्यु[6]द्धानि नीयन्ते तस्मान्न्यायाः प्रवर्तिताः ॥ ७४ ॥
[7]वामहस्तेन निक्षिप्य खेटकं दक्षिणेन च ।
शस्त्रमादाय हस्तेन प्रविचार[8]मथाचरेत् ॥ ७५ ॥
प्रसार्य च करौ सम्यक्[9]पुनरावर्त्य चैव हि ।
खेटकं भ्रामयेत्पश्चात्[10]पार्श्वात्पार्श्वमथापि च ॥ ७६ ॥
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ।
[11]कपोलांसान्तरे [12]चापि शस्त्रस्यो[13]द्वेष्टनं तथा ॥ ७७ ॥
पुनश्च खड्गहस्तेन [14]ललितोद्वर्तितेन च ।
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ॥ ७८ ॥
एवं विचारः कर्तव्यो भारते शस्त्रमोक्षणे ।
सात्त्वते [15]च प्रवक्ष्यामि प्रविचारं यथाविधि ॥ ७९ ॥
स एवं प्रविचारस्तु खड्गखेटकयोः स्मृतः ।
केवलं पृष्ठतः [16]शस्त्रं कर्तव्यं खलु सात्त्वते ॥ ८० ॥
गतिश्च वार्षगण्येऽपि सात्त्वतेन क्रमेण तु ।
[17]खड्गखेटकयोश्चापि भ्रमणं संनिधीयते ॥ ८१ ॥
शिरःपरिगमादस्मि[18]स्तत्र शस्त्रं च केवलम् ।
उरस्यु[19]द्वेष्टनं कार्यं [20]शस्त्रस्यांशेऽथवा पुनः ॥ ८२ ॥

---

१. 'भारती कटिश्छेद्ये पादाश्छेद्ये तु सात्वते' (?) क-ख. २. 'वक्षसौ वर्षगणैस्तु' (?) क-ख. ३. '°मुपस्थितैः' क-ख. ४. 'प्रविचार्य प्रयोक्तव्यो' का. ५. 'न्यायं श्रितैः' का. ६. 'युद्धान्निवर्तन्ते' क-ख. ७. 'वामहस्ते विनिक्षिप्याक्षटाकं' क; 'प्रक्षरकं' ख. ८. '°मथारमेत्' क-ख. ९. 'पुनराक्षिप्य' का. १०. '°......त्पार्श्वे' क-ख. ११. 'कपोलस्यान्तरे' का. १२. 'वापि' क-ख. १३. '°द्वेष्टनं' का. १४. 'ललितोद्वेष्टितेन च' का. १५. 'तु' का. १६. 'शस्त्रं' का. १७. 'शस्त्रखेटकयोः' का. १८. 'तस्य शस्त्रस्य केवलम्' का. १९. '°द्वेष्ठनं' का. २०. 'शस्त्रस्याङ्गेन वा पुनः' का.

भारते प्रविचारो यः[1] कर्तव्यः स तु कैशिके[2] ।
विभ्रमश्च[3] तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ॥ ८३ ॥
प्रविचारा प्रयोक्तव्या[4] ह्येवमेतेऽङ्गलीलया ।
धनुर्वज्रासि[5]शस्त्राणां प्रयोक्तव्या विमोक्षणे ॥ ८४ ॥
न भेद्यं नापि च[6] च्छेद्यं न चापि रुधिरस्रुतिः ।
रङ्गे[7] प्रहरणं कार्यं न चापि व्यक्तघातनम् ॥ ८५ ॥
राज्ञा[8] मात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ।
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ॥ ८६ ॥
अङ्ग[9]सौष्ठवसंपन्नैरङ्गहारैर्विभूषितम् ।
व्यायामं कारयेत्सम्यग्लय[10]तालसमन्वितः ॥ ८७ ॥
सौष्ठवे[11] हि प्रयत्नस्तु कार्यो व्यायामवेदि[12]भिः ।
सौष्ठवं[13] लक्षणं प्रोक्तवर्त्मना क्रमयोजितम् ॥ ८८ ॥
शोभा सर्ववनित्यं (?) हि सौष्ठवं समुपाश्रिता ।
नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ॥ ८९ ॥
अचञ्चलमकुब्जं च[14] सन्नगात्रं तथैव च ।
नात्युच्चं[15] चलपातं च सौष्ठवाङ्गं प्रयोजयेत् ॥ ९० ॥
कटी कर्णसमा यत्र कूर्परो[16]ऽसशिरस्तथा ।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥ ९१ ॥
अत्र[17] नित्यं प्रपन्नो हि विषये मध्यमोत्तमैः ।
नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ॥ ९२ ॥

१. '°ऽयं' का. २. 'कैशिकैः' क-ख. ३. 'विभ्रमय्य' का. ४. '°श्च कर्तव्या' का. ५. 'वज्रादिशस्त्राणां' का. ६. 'तु' का. ७. 'रङ्गप्रहरणं' का. ८. 'संज्ञामात्रेण' का. 'राज्ञा मात्रेण' इत ऊर्ध्वमादशमाध्यायपरिसमाप्तेर्ग्रन्थः क-पुस्तके त्रुटितः. ९. 'अङ्गैः सौष्ठवसंयुक्तैः' का. १०. लयावा(?) लतसमन्वितम्' क-ख. ११. 'सौष्ठवेन तु यत्नस्तु १२. '°सेविभिः' का. १३. 'सौष्ठवं लक्षणं' इत्यारभ्य 'सौष्ठवं समुपाश्रिता' इत्यन्तं पद्यं का. पुस्तके श्लोकद्वयोत्तरं वर्तते. १५. 'चासन्नगात्रमथापि च' का. १४. 'नात्युच्चबलपादं च' क-ख. १६. '°सस्थितस्तथा' का. १७. पद्यमिदं का-पुस्तके नास्ति.

कटीनाभिवरौ[1] हस्तौ वक्षश्चैव समुन्नतम् ।
वैष्णवं स्थानमित्यङ्ग[2]चतुरस्रमुदाहृतम् ॥ ९३ ॥
परिमार्जनमादानं संधानं मोक्षणं तथा ।
धनुषस्तु प्रयोक्तव्यं[3] करणं तु चतुर्विधम् ॥ ९४ ॥
[संमार्जनं[4] परामर्श आदानं ग्रहणं क्रिया ।
संधानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ॥ ९५ ॥]
तैलाभ्यक्तेन गात्रेण यवागूमृदितेन[5] च ।
व्यायामं कारयेद्धीमान्भित्तावाकाशके[6] तथा ॥ ९६ ॥
योग्यायां मातृका भित्ति[7]स्तस्माद्भित्तिं[8] समाश्रयेत् ।
भित्तौ[9] प्रसारितायां तु व्यायामं कारयेन्नरम्[10] ॥ ९७ ॥
बलार्थं च निषेवेत नस्यं वस्तिविधिं[11] तथा ।
स्निग्धान्यशनिताथा[12]····रसकं पानकानि च ॥ ९८ ॥
आहाराधिष्ठिताः[13] प्राणाः प्राणे[14] योग्याः प्रतिष्ठिताः ।
तस्माद्योग्यप्रसिद्ध्यर्थ[15]माहारे यत्नवान्भवेत् ॥ ९९ ॥
अशुद्धकायं प्रक्लान्तमधीरं[16] क्षुत्पिपासितम् ।
अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ॥ १०० ॥
अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा ।
व्यायामं कारयेद्धीमान्नरमङ्गक्रियार्थिकम्[17] ॥ १०१ ॥
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः ।
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ॥ १०२ ॥

इति श्री[18]भारतीये नाट्यशास्त्रे चारीविधानो नाम दशमोऽध्यायः[19] ।

---

१. 'कटिनाभिखरौ' का. २. '°मित्यङ्गं' का. ३. 'प्रकर्तव्यं' का. ४. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ५. 'युवा श्वासोदितेन च' का. ६. '°काशिके तथा' का. ७. '°भीतिः' क-ख. ८. '°द्भीतिं' क-ख. ९. 'भित्सौ' (?) क-ख. १०. 'बुधः' का. ११. 'च त्रिविधं' क-ख. १२. पद्यार्धमिदं का. पुस्तके नास्ति । 'स्निग्धानशनजातांश्च' इत्युचितं प्रतिभाति. १३. 'आहारेऽधिष्ठिताः' का. १४. 'प्राणयोग्याः' क-ख. १५. 'योग्या-प्रसिद्ध्यर्थं' क-ख. १६. '°मतीव' का. १७. '°र्थिनम्' क-ख. १८. 'श्री' इति का-पुस्तके नास्ति. १९. 'एकादशोऽध्यायः ।' का.

ऐकादशोऽध्यायः ।[1]

एताश्चार्यो मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह मण्डलानि निबोधत ॥ १ ॥
अतिक्रान्तं विचित्रं च तथा ललितसंचरम्[2] ।
सूचीविद्धं दण्डपादविहृतालातके[3] तथा ॥ २ ॥
वामबन्धं[4] सललितं क्रान्तं चाकाशगामि[5] च[6] ।
भ्रमरास्कन्दिते स्यातामावर्तं[7] च ततः परम् ॥ ३ ॥
समाक्रन्दितमप्याहुरेडकाक्रीडितं[8][9] तथा ।
अड्डितं शकटास्यं[10] च तथाध्यर्धकमेव च ॥ ४ ॥
पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः ।
आद्यं[11] पादं च जनितं कृत्वोद्वाहितमाचरेत् ॥ ५ ॥
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ।
सूचीपादं[12] पुनश्चैव त्रिकं च परिवर्तयेत् ।
तथा दक्षिणमुद्धृत्य अलातं चैव वामकम् ॥ ६ ॥
परिच्छिन्नं तु कर्तव्यं बाह्यभ्रमरकेण हि ।
अतिक्रान्तं पुनर्वामं दण्डपादं च दक्षिणम् ॥ ७ ॥

---

१. 'अथ द्वादशोऽध्यायः' का. २. 'संवरम्' क-ख. ३. तथा 'दण्डं विवृत्तालातके' क. 'दण्डं परिवृत्तालातके' ख. ४. 'वामविद्धं' क-ख. ५. 'वाकाशका (गा) मि' क-ख. ६. 'तु' क-ख. ७. '°ते............ततः परम्' क-ख. त्रुटिचिह्नं पुस्तकद्वयेऽपि नास्ति. ८. क. पुस्तके 'समात्सरितं इति केनचिच्छोधितः पाठ उपलभ्यते 'समोसरितं' का. ९. '°एलका°' क-ख. १०. 'अण्डितं च शकास्यं च तथाध्यर्धमिति स्मृतम् ।' क-ख. ११. 'आद्यपादं तु तं कृत्वा उद्वाहितमथाचरेत् ।' का. १२. क-ख-पुस्तकयोस्तु—

'विज्ञेयमेतद्यायामेष्वतिक्रान्तं तु मण्डलम् ।
सूचीद(यु ?)ग्मपदं दद्यादपक्रान्तं च दक्षिणम् ॥
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
आस्यन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम् ।
भुजंगत्रासितं सव्यमतिक्रान्तं च दक्षिणम् ॥'

उ[1]द्धृतं दक्षिणं चैव ह्य[2]लातं चैव वामकम् ।
पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं तथा ॥ ८ ॥
विक्षेपो दक्षिणस्य[3] स्यादपक्रा[4]न्तं च वामकम् ।
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् ॥ ९ ॥
कृत्वोर्ध्ववामचरणमाद्यं सूचीं प्रयोजयेत् ।
अपक्रान्तः पुनर्वाम आ[5]द्यः पार्श्वगतो भवेत् ॥ १० ॥
[6]वामसूचीं पुनर्दद्यात् त्रिकं च परिवर्तयेत् ।
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तं च वामकम् ॥ ११ ॥
सूचीवामक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
[[7]पार्श्वक्रान्तं पुनश्चान्यो वामोऽतिक्रान्त एव च ॥ १२ ॥
सूचीमाद्यं पुनर्दद्यादतिक्रान्तं च वामकम् ।
परिच्छिन्नं च कर्तव्यं बाह्यभ्रमणकेन हि ॥ १३ ॥
एष चारीप्रयोगस्तु कार्यो ललितसंचरैः ।
सूचीवामपदं दद्यात् त्रिकं च परिवर्तयेत् ॥ १४ ॥
पा[8]र्श्वक्रान्तः पुनश्चान्यो वामोऽतिक्रान्त एव च ।]
पार्श्वक्रान्तं पुनश्चाद्यं सूचीविद्धे तु मण्डले ॥ १५ ॥
आद्यस्तु तद्गतो भूत्वा स च दण्डक्रमो भवेत् ।
वा[9]मं सूची(चीं ?) पुनर्दद्यात्त्रिकं च परिवर्तयेत् ॥ १६ ॥
त[10]द्धृत्तो दक्षिणश्च स्यादलातश्चैव वामकः ।
पार्श्वक्रान्तः पु[11]नश्चाद्यो भुजंगत्रासितस्तथा ॥ १७ ॥
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः ।
वा[12]मः सूची त्रि[13]कावर्त्तो दण्डपादे च[14] मण्डले ॥ १८ ॥

---

१. 'उद्वृत्तं' क-ख. २. 'अलान्तं' क-ख. ३. 'दक्षिणस्य' क-ख. ४. '०तिक्रान्तश्च वामकः' क-ख. ५. 'आद्यपार्श्वगतो' क-ख. ६. 'वामसूचीं पुनः कृत्वा' क-ख. ७. इतःप्रभृति कोष्ठकबद्धा श्लोकत्रयी का-पुस्तकेऽधिका. ८. 'जनितो' का. ९. 'वामसूचीं' का. १०. 'उद्वर्तो' का. ११. 'पुनश्चान्यो' का. १२. 'वामसूची' का. १३. 'त्रिकावर्ता' क-ख. १४. 'तु' का.

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
आस्कन्दितं च वामेन ह्यु[1]त्तम्भं दक्षिणेन च ॥ १९ ॥
अलातं वामकं पादं सूचीं दद्यात्तु दक्षि[2]णम् ।
पार्श्वक्रान्तं पुनर्वाम[3]माक्षिप्तो दक्षिणस्तथा ॥ २० ॥
स[4]मावर्त्य त्रिकं चैव दण्डपादं प्रसारयेत् ।
सू[5]चीं वामपदं पश्चात्त्रिकं तु परिवर्तयेत् ॥ २१ ॥
भुजंगत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ।
एष चारीप्रयोगस्तु विवृ[6]ते मण्डले भवेत् ॥ २२ ॥
सूचीमा[7]द्यं क्रमं द[8]द्यादपक्रान्तं च वामकम् ।
पा[9]र्श्वक्रान्तं पुनश्चाद्यो ह्यलातश्चैव वामकः ॥ २३ ॥
भ्रा[10]न्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
तत्संख्यं सप्तसंख्यं वा ललितैः पादविक्रमैः ॥ २४ ॥
अतिक्रान्तः पुनश्चाद्यो वामोऽतिक्रान्त एव च ।
पादभ्रमकर(रक ?)श्च स्यादलाते खलु मण्डले ॥ २५ ॥
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
आद्यो दण्डक्रमश्चैव सूचीपाद[11]स्तु वामकः ॥ २६ ॥
[12]कौर्यस्त्रिकविवर्तश्च पार्श्वक्रान्तश्च दक्षिणः ।
आक्षिप्तं वामकं कुर्यात् (द् ?) दण्डपादं तु दक्षिणम् ॥ २७ ॥
ऊरूद्वृत्तं च तेनैव कर्तव्यं दक्षिणेन तु ।
[13]सूचीवामक्रमश्चैव त्रिकं तु[14] परिवर्तयेत् ॥ २८ ॥
अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामः[15] कार्यो ललितसंचरः ॥ २९ ॥

---

१. 'उद्धत्तं' का. २. 'दक्षिणाम्' क-ख. ३. 'वामं आक्षिप्तो' क-ख. ४. 'परिवृत्य' का. ५. 'सूचीवामपदं' का. ६. 'विहृते' का. ७. '°माद्यक्रमं' का. ८. 'कृत्वा चापक्रान्तं' का. ९. 'पार्श्वक्रान्तस्ततश्चान्तोऽप्यलातश्चैव वामकः' का. १०. इतःप्रभृति सार्धं पद्यद्वयं का-पुस्तके नास्ति. ११. 'सूचीकार्यस्तु' क-ख. १२. एतत्पद्यं क-ख-पुस्तकयोर्नास्ति. १३. 'सूची वामकरं चैव' का. १४. 'च' का. १५. '°वामो वामबन्धे तु मण्डले' का.

एष[1] पादप्रचारस्तु ललिते मण्डले भवेत् ।
[[2]सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ॥ ३० ॥
पार्श्वक्रान्तः पुनश्चान्यो भुजङ्गत्रासितं तथा ।
अतिक्रान्तः पुनर्वाम ऊरूद्वृत्तं तथैव च ॥ ३१ ॥
अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामः कार्यो ललितसंज्ञकः ॥ ३२ ॥
एष पादप्रसारस्तु ललिते मण्डले भवेत् ।]
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ॥ ३३ ॥
पार्श्वक्रान्तं पुनश्चा[3]द्यं वामं पार्श्वक्रमं तथा ।
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥ ३४ ॥
[4]वामं सूचीं ततो दद्यादपक्रान्तं च दक्षिणम् ।
स्वभावगमने ह्येतन्मण्डलं संविधीयते ॥ ३५ ॥
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः ।
एतान्याकाशगामीनि ज्ञेयान्येवं दशैव तु ॥ ३६ ॥
अतःपरं प्रवक्ष्यामि भौमा[5]नामपि लक्षणम् ।
आद्य[6]स्तु जनितः कार्यो वामश्चास्कन्दितो भवेत् ॥ ३७ ॥
शकटास्यः पुनश्चा[7]द्यो वामश्चापि प्रसारितः ।
आद्यो भ्रमरकः कार्यस्त्रिकं तु[8] परिवर्तयेत् ॥ ३८ ॥
आक्रन्दितः पुनर्वामः शकटास्यश्च [9]दक्षिणः ।
वामः पृष्ठावसर्पी च दद्याद्भ्रमरकं तथा ॥ ३९ ॥
स एवास्कन्दितः [10]कार्य एतद्भ्रमरमण्डलम् ।

---

१. पद्यार्धमिदं का-पुस्तके नास्ति. २. इतोऽग्रे कोष्ठकबद्धा पद्यत्रयी का-पुस्तकेऽधिका. ३. '°श्चान्यं वामपार्श्वक्रमं तथा' का. ४. 'वामसूची' का. ५. 'भौमानाविह' का. ६. 'आद्यन्तु' का. ७. 'पुनश्चान्यो' का. ८. 'च' का. ९. 'दक्षिणे' क-ख. १०. '°कार्यस्त्वेतद्' का. क-ख-पुस्तकयोरत्र 'आद्यो भ्रमरमण्डलम्' इति श्लोकचतुर्थांशोऽधिकश्च.

आद्यो भ्रमरकः कार्यो वामश्चै[1]वाङ्कितो भवेत् ।
[2]कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः ॥ ४० ॥
ऊरूद्वृत्तः स एव स्याद्वामश्चैवापसर्पतः ।
कार्यस्त्रिकविवर्तश्च दक्षिणः स्कन्दितो भवेत् ॥ ४१ ॥
शकटास्यो भवेद्वामस्तथैवास्फोटनं भवेत् ।
एतदास्कन्दितं नाम व्यायामे [3]युद्धमण्डले ॥ ४२ ॥
आद्यं तु जनितं कृत्वा वामे[4]न तु निकुट्टनम् ।
शकटास्यः पुनश्चा[5]द्य ऊरूद्वृत्तः स एव [6]तु ॥ ४३ ॥
पृष्ठावसर्पी वामश्च स च चाषगतिर्भवेत् ।
[7]आस्कन्दितः पुनः सद्यः शकटास्यश्च वामकः ॥ ४४ ॥
आद्यो भ्रमरकश्चैव त्रिकं [8]तु परिवर्तयेत् ।
पृष्ठावसर्पी वामश्चेत्यावर्ते मण्डले भवेत् ॥ ४५ ॥
समपादं बुधः कृत्वा [9]स्थानं हस्तौ प्रसारयेत् ।
निरन्तरावूर्ध्वत[10]लावावेष्ट्योद्वेष्ट्य चैव हि ॥ ४६ ॥
कटीतटे विनिक्षिप्य आद्यमावर्तयेत्क्रमम् ।
[11]यथाक्रमं पुनर्वाममावर्तेन प्रसारयेत् ॥ ४७ ॥
[12]अनया…चेया (चार्या च अनया) भ्रान्त्वा पर्यायेणाथ मण्डलम् ।
समोसरि[13]तमेतच्च ज्ञेयं व्यायाममण्डलम् ॥ ४८ ॥
पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च ।
एलका[14]क्रीडितश्चैव [15]तूर्णैस्त्रिकविवर्तनम् ॥ ४९ ॥
सूचीविद्धा[16]पविद्धैश्च क्रमेणावृत्त्य मण्डलम् ।
एलकाक्रीडितं विद्यात् खण्ड[17]मण्डलसंज्ञितम् ॥ ५० ॥

---

१. 'श्चैवाङ्गितो' क-ख. २. 'कार्यस्त्रिकविवर्तश्च' इत्यादिपद्यद्वयी का-पुस्तके नास्ति. ३. 'युद्धमण्डलम्' का. ४. 'वामं चैव निकुट्टकम्' का. ५. '°श्चान्य' का. ६. 'च' का. ७. 'आस्कन्दितं पुनः सौख्यं' का. ८. 'च' का. ९. 'न च' क-ख. १०. 'निरन्तराद्वा… गतावा°' क-ख. ११. 'तथाक्रमं' का. १२. 'अनया…चेया' क-ख.; 'चानया चानया' का. १३. 'तु कार्यं' का. १४. '°क्रीडितैश्चैव' क-ख. १५. 'तूर्णे त्रिकविवर्तितैः' का. १६. '°पविद्धश्च' का. १७. '…खण्डलसंज्ञितम्' क-ख.; 'कण्डमण्डलसंज्ञितम्' क.

सव्यमुद्धट्टितं[1] कृत्वा तेनैवावृत्तमाचरेत्[2] ।
तेनैवास्कन्दितः[3] कार्यः शकटास्यश्च वामकः ॥ ५१ ॥
आद्यपृष्ठापसर्पी[4] च स च चाषगतिर्भवेत्[5] ।
अञ्चितश्च[6] पुनर्वाम आद्यश्चैवापसर्पितः ॥ ५२ ॥
वामो भ्रमरक  कार्य आद्यश्चास्कन्दितो भवेत् ।
तेनैवास्फोटनं कुर्यादेतदञ्चितमण्डलम् ॥ ५३ ॥
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् ॥ ५४ ॥
पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् ।
विज्ञेयं[7] शकटास्यं तु व्यायामे युद्धमण्डलम् ॥ ५५ ॥
आद्यस्तु[8] जनितो भूत्वा स एवास्कन्दितो भवेत् ।
अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः ॥ ५६ ॥
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
अध्यर्धमेतद्विज्ञेयं नियुद्धे चापि[9] मण्डलम् ॥ ५७ ॥
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
भुजंगत्रासितंश्चाद्य[10] एवमेव[11] च वामकः ॥ ५८ ॥
भुजंगत्रासितैर्भ्रान्त्वा पादैरपि[12] च मण्डलम् ।
पिष्टकुट्टं च[13] विज्ञेयं चारीभिर्मण्डलं[14] बुधैः ॥ ५९ ॥
सर्वैश्चाषगतैः[15] पादैः परिक्रम्य[16] च मण्डलम् ।
एतच्चाषगतं विद्यान्नियुद्धं[17] चापि मण्डलम् ॥ ६० ॥
नानाचारीसमुत्थानि मण्डलानि समासतः ।
उक्तान्यतः परं चैव समचारीं[18] नियोजयेत् ॥ ६१ ॥

---

१. 'उद्धटितं' का. २. '°वावर्त°' क. ३. '°स्कन्दितं कार्यं' का. ४. 'आद्यः पृष्ठावसर्पी च' क-ख. ५. 'वामे गतिः' क-ख. ६. इतःप्रभृति सार्धश्लोकद्वयी का-पुस्तके नास्ति. ७. पद्यार्धमिदं का-पुस्तके नास्त्येव. ८. 'आर्धं तु' का. ९. 'चारिमण्डलम्' का. १०. 'त्रासितं चान्य' का. ११. 'एष एव तु' का. १२. 'चारैरपि' का. १३. 'तु' का. १४. 'नियुद्धे चारिमण्डलं' का. १५. 'चापगतैः' का. १६. 'परिभ्राम्य' का. १७. 'नियुद्धे चारिमण्डलम्' का. १८. 'समचारीणि°' का.

समचारीप्रयोगो य[1]स्तत्समं नगमण्डलम् ।
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥ ६२ ॥
एतानि खण्डानि समण्डलानि युद्धे नियुद्धे प[2]रिचङ्क्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥ ६३ ॥

इ[3]ति श्रीभारतीये नाट्यशास्त्रे मण्डलकल्पनं नामैकादशोऽध्यायः ।

---

द्वा[4]दशोऽध्यायः ।

[[5] एवं व्यायामसंयोगे कार्यं मण्डलकल्पनम् ।
अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ।
त[6]त्रोपवाहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ॥ १ ॥
यथामार्गरसोपेतं प्रकृतीनां प्र[7]वेशने ।
ध्रुवायां सं[8]प्रवृत्तायां पटे चैवा[9]पकर्षिता ॥ २ ॥
कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ।
स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ॥ ३ ॥
समुन्नतं समं चैव चतुरस्रमुर[10]स्तथा ।
बाहुशीर्षे प्रसन्ने च [11]नात्युत्क्षिप्ते च कारयेत् ॥ ४ ॥
ग्रीवाप्रवे[12]शैः कर्तव्यो मयूराङ्कि[13]तमस्तकः ।
कर्णाद्द[14]ष्टाङ्गुलस्थे च बाहुशीर्षे प्रयोजयेत् ॥ ५ ॥
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ।
हस्तौ तथैव कर्तव्यौ कटि[15]नाभितटस्थितौ ॥ ६ ॥
दक्षिणो नाभिसंस्थस्तु वामः [16]कटितके(टे) स्थितः ।
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ॥ ७ ॥

---

१. 'यस्तमनाम...' क-ख. २. 'च परिक्रमे च' का. ३. 'इति भारतीयनाट्यशास्त्रे मण्डलविधानं नाम द्वादशोऽध्यायः समाप्तः' का. ४. 'अथ त्रयोदशोऽध्यायः' का. ५. श्लोकार्धमिदं क-ख-पुस्तकयोर्नास्ति. ६. 'तत्रोपवहनं' का. ७. 'प्रवेशनं' का. ८. 'संप्रयुक्तायां' का. ९. 'चैवावकर्षिते' का. १०. '°मुरस्तथा' का. ११. 'नात्युत्क्षिप्ते' क-ख. १२. 'ग्रीवाप्रदेशः' का. १३. 'मयूराञ्चितमस्तकः' का. १४. 'कर्णादष्टाङ्गुलिस्थे च' का. १५. 'कटी°' का. १६. 'कटितटस्थितः' का.

पादक्षेप[1]स्तु कर्तव्यः स्वप्रमाणविनिर्मितः ।
चतुस्तालो द्वितालश्चा[2]प्येकतालस्तथैव च ॥ ८ ॥
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ।
[3]द्वितालश्चैव मध्यानां तालः स्त्रीनीचसङ्गिनाम् ॥ ९ ॥
[[4]चतुष्कलोऽथ द्विकलस्तथा ह्येककलस्तथा ।]
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैककलः[5] पादो नीचानां संप्रकीर्तितः ॥ १० ॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं[6] बुधः ।
यथाप्रकृतिनाट्यज्ञो गतिमेवं प्रयोजयेत् ॥ ११ ॥
धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसंमतानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ १२ ॥
एष एव भुवि ज्ञेयः कलातालये विधिः ।
पुनर्गतिप्र[7]चारस्य प्रयोगं शृणुतानघाः ॥ १३ ॥
स्वभावे [8]तूत्तमगतौ कार्यं जानुकटीसमम् ।
युद्धचारीप्रयोगेषु पुनः [9]स्तनसमं भवेत् ॥ १४ ॥
पार्श्वक्रान्तैः सललितैः पादैर्वाद्यान्वितैरथ ।
रङ्गकोणो[10]न्मुखं गच्छेत्सम्यक्पञ्च पदानि तु ॥ १५ ॥
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च[11] ।
परिवृत्य द्वितीयं तु गच्छेत्कोणं ततः परम् ॥ १६ ॥
तत्रापि वामवेधस्तु विक्षेपो वृश्चिकेन च ।
ततो भाण्डोन्मुखो गच्छेत्तान्येव विपदानि च ॥ १७ ॥
एवं गतागतैः कृत्वा[12] पदानामेकविंशतिम् ।
वामवेधं ततः कुर्याद्विक्षेपं [13]दक्षिणस्य च ॥ १८ ॥

---

१. 'पादोत्क्षेपस्तु' का. २. 'अपि' इति का-पुस्तके नास्ति. ३. 'द्वितानेध्यैश्चैव मध्यानां तालस्त्री च लिङ्गिनाम्' क-ख. ४. पद्यार्धमिदं क-ख-पुस्तकयोर्नास्ति. ५. 'चैष कलः पातो' क-ख. ६. 'लयत्रयम्' क-ख. ७. 'गतिं' का. ८. 'स्वभावैरुत्तमगतौ' का. ९. 'जानुस्तन-समं' का. १०. '°न्मुखो' का. ११. 'तु' का. १२. 'कृत्वा' का. १३. 'दक्षिणेन च' ख.

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः ।
त्र्यस्र[1]स्त्रिकोणे चतुरस्ररङ्गे गतिप्रचारश्चतुरस्र एव ॥ १९ ॥

यः समैः सहितो गच्छेत्तत्र कार्यो लयाश्रयः ।
चतुष्कलोऽथ द्विकल[2]स्तथैवैककलः पुनः ॥ २० ॥
अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः ।
चतुष्कलमथो[3]र्ध्वं च तथा चैककलं पुनः ॥ २१ ॥
दैत्यदानवयक्षाणां नृपपन्नगरक्षसाम् ।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः ॥ २२ ॥
दिवौकसां तु स[4]र्वेषां मध्यमा गतिरिष्यते ।
तत्रापि यो[5]र्ध्ववां(गा?) ये तु तेषां देवैः समा गतिः ॥ २३ ॥

ऋषय ऊ[6]चुः—

यदा मनुष्या राजानस्तेषां देवगतिः कथम् ।
अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति ॥ २४ ॥
[इह[7] प्रकृतयो दिव्या तथा च दिव्यमानुषी ।
मानुषी चेति विज्ञेया नाट्यनृत्तक्रियां प्रति ॥ २५ ॥
देवा हि प्रकृतिर्दिव्या राजानो दिव्यमानुषी ।
या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता ॥ २६ ॥]
देवान्वी[8]जा(न्वया)स्तु राजानो वेदा(ध्या)त्मा[9][न?]स्तु कीर्तिताः ॥२७॥
एवं देवानुकरणो[10] देवो ह्यत्र न विद्यते ।
अयं विधिस्तु कर्तव्यः स्व[11]च्छन्दगमनं प्रति ॥ २८ ॥
संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते ।
[स[12]र्वासां प्रकृतीनां तु अवस्थान्तरसंश्रया ।

---

१. 'त्र्यस्रे' का. २. 'द्विकलो भवेदेककलः' का. ३. '°मथार्धं च' का. ४. 'सर्वेषां' इत ऊर्ध्वं 'देवगतिः' इतः प्राक् ख-पुस्तके पाठस्त्रुटितः. ५. 'यो द्वता'(?) क-ख. ६. 'अत्राह' का. ७. 'अत्र' का-पुस्तके श्लोकद्वयी समधिका. क-ख-पुस्तकयोस्तु 'अथ दिव्याः प्रकृतयो मानुषी या प्रकीर्तिता ।' एतच्छ्लोकार्धमेव. ८. 'देवान्वाजास्तु' का. ९. 'वेदाध्यात्मप्रकीर्तिताः' का. १०. '°रणे दोषो' का. ११. 'स्वयं द'(?) क-ख. १२. पद्यमिदं क-ख-पुस्तकयोर्नास्ति.

उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः ॥]
[1]चतुरर्धकलं [च] स्यात्तदर्धकलमेव च ॥ २९ ॥
अवस्थान्तरमासाद्य कुर्याद्गतिविचेष्टितम् ।
[[2]ज्येष्ठे चतुष्कलं ह्यत्र मध्यमे द्विकलं भवेत् ।
विकलं चोत्तमा यत्र नीचेष्वर्धकलं भवेत् ॥ ३० ॥
एवमर्धार्धहानिं तु कलानां संप्रयोजयेत् ।
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् ॥ ३१ ॥
मध्यगानां गतिर्या तु न तां नीचेषु योजयेत् ।]
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ॥ ३२ ॥
विस्मये चावहित्थे च तथौत्सुक्यसमन्विते ।
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ॥ ३३ ॥
ग[3]तिः स्थितलया कार्या विफलान्तरपातिना ।
अस्वस्थे कामिते चैव भये वित्रासिते तथा ॥ ३४ ॥
आवेगे चैव हर्षे च कार्यं य[4]च्च त्वरान्वितम् ।
अनिष्टश्रवणे चैव क्षेपे चा[5]द्भुतदर्शने ॥ ३५ ॥
अपि चात्ययिके कार्ये त[6]था चैवारिमार्गणे ।
अ[7]पराध्वानुसरणे श्वापदानुगते तथा ॥ ३६ ॥
ए[8]तेष्वेवं गतिं प्राज्ञो द्वि[9]कलां संप्रयोजयेत् ।
गतिः शृङ्गारिणी कार्या स्वच्छकामितसंभवा ॥ ३७ ॥
दूतीदर्शि[10]तमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
[11]सूचयन्वाभिनयनं कुर्यादर्थसमाश्रयम् ॥ ३८ ॥
[12]हृद्यैर्वस्त्रैस्तथा गन्धैर्धूपैश्चूर्णैश्च भूषितः ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥ ३९ ॥

---

१. 'चतुर्थ्यैककलं वा स्यात् तथार्धकलमेव च' का. २. सेयं सार्धश्लोकद्वयी क-ख-पुस्तकयोर्नास्ति. ३. 'पुनश्चिन्तान्विन्ते चैव गतिः कार्या चतुष्कला' इति का-पुस्तके. ४. 'यच्छ' क-ख. ५. 'कोपेर्ष्याद्भुतदर्शने' का. ६. 'दुःखिते शत्रुमार्गणे' का. ७. 'अमराद्वानुसरणे' क-ख. ८. 'ष्वेवं गतिः' का. ९. 'विकलां' का. १०. '°दर्शन°' क-ख. ११. 'सूचयश्चाप्यभिनयं' का. १२. 'हृद्यैर्गन्धैस्तथा वस्त्रैरलङ्कारैश्च भूषितः ।' का.

गच्छेत्सललितैः पादैरतिक्रान्तैः स्थितैस्तथा[1] ।
तथा सौष्ठवसंयुक्तैर्लयतालवशानुगैः[2] ॥ ४० ॥
पादयोरनुगौ वापि[3] हस्तौ कार्यौ प्रयोक्तृभिः ।
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ॥ ४१ ॥
विसर्जितजनः स्रस्तस्तथा दूतीसहायवान् ।
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ॥ ४२ ॥
वेलासदृशवस्त्रश्च सह दूत्या शनैस्तथा ।
व्रजेत्प्रच्छन्नकामैस्तु[4] पादैर्निःशब्दमन्दगैः ॥ ४३ ॥
शब्दे[5] शक्त्युत्सुकश्च स्यादवलोकनतत्परः ।
वेपमानशरीरश्च शङ्कितः प्रस्खलन्मुहुः ॥ ४४ ॥
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोगणान्[6] प्रति ।
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ॥ ४५ ॥
नेपथ्य[7]रौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ।
तथा स्वभावजश्चैव त्रिधा रौद्रः प्रकल्पितः[8] ॥ ४६ ॥
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ।
तथापि सहितै[9]स्तच्च रौद्रो नेपथ्यजस्तु सः ॥ ४७ ॥
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ।
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्तितः ॥ ४८ ॥
रक्ताक्षः[10] पिङ्गकेशश्च असितो विकृतस्वरः ।
रूक्षो[11] निर्भर्त्सनपरो रौद्रः[12] सोयं स्वभावजः[13] ॥ ४९ ॥
चतुस्तालान्तरोत्क्षिप्तैः पदैरुर्व्य[14]न्तरपातितैः ।
गतिरेवं प्रकर्तव्या तेषां ये चापि तद्विधाः ॥ ५० ॥

---

१. '°तिक्रान्तोत्थितस्तथा' का. २. '°तालसमन्वितैः' का. ३. 'हस्तौ नित्यं कार्यौ' का. ४. '°कामैस्तु' का. ५. 'शब्द···साक्ष्युत्सुकस्यात्' क-ख. ६. '°गणाप्रति' क-ख. ७. 'नैपथ्य' का. ८. 'प्रकीर्तितः' का. ९. 'शिरहस्तश्च' (?) का. १०. 'रक्ताक्ष' क-ख. ११. 'रूक्षे' का. १२. 'रौद्रे' क-ख. १३. 'सोऽप्यस्वभावजः' क-ख. १४. 'पादैस्त्वन्तरपातितैः' क-ख.

[1]अहृद्या तु मही यत्र श्मशानरणकश्मला ।
गतिं [2]तत्र प्रयुञ्जीत [3]बीभत्साभिनयं प्रति ॥ ५१ ॥
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ।
[4]एडकाक्रीडितैः पादैरुपर्युपरिपातितैः ॥ ५२ ॥
तेषामेवानुगैर्हस्तैर्[5]बीभत्सगतिरुच्यते ।
[6]तथा वीरे प्रकर्तव्या पदविक्षेपसंयुता ॥ ५३ ॥
[7]द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला ।
पार्श्वक्रान्तैर्[8]द्रुताविद्धैः सूचीविद्धैस्तथैव च ॥ ५४ ॥
कालाकालगतैः पादैरावेगे योजयेद्गतिम् ।
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ॥ ५५ ॥
[मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ।
विस्मये चैव हर्षे च विक्षिप्य पदविक्रमान् ॥]
आसाद्य तु [9]रसं हास्यमेता[10]श्चान्याश्च योजयेत् ।
पुनश्च [11]करुणे कार्या गतिः स्थिरपदैरथ ॥ ५६ ॥
बाष्पाम्बुरुद्धनयनः स्रस्तगात्रस्तथैव च ।
उत्क्षिप्तपातितकरस्तथा सस्वनरोदनः ॥ ५७ ॥
[12]गच्छेत्तथा विद्धकायः प्रत्यग्रगतिसंश्रये ।
एषा स्त्रीणां प्रयोक्तव्या [13]नीचसत्त्वे तथैव ॥ ५८ ॥
उत्तमानां तु कर्तव्या सधैर्या [14]बाष्पसंगता ।
निःश्वासैरायतो[15]त्सृष्टैस्तथैवोर्ध्वनिरीक्षितैः ॥ ५९ ॥

---

१. 'आद्या' क-ख. २. 'अत्र किंचित्' क-ख. ३. 'बीभत्सानुनयं' का. ४. 'एलका········उप°' क-ख. ५. 'बीभत्सा गतिरिष्यते का. ६. 'तथा········ विक्षेपसंयुक्ता' क-ख. ७. 'द्रुता प्रहरणाविद्धा' का. ८. 'तथाविद्धैः' का. ९. 'परं' क-ख. १०. '°मेतच्चान्यच्च' क-ख. ११. 'करणे' क-ख. १२. 'गच्छेत्तया···धिकया प्रत्यग्रहणसंश्रये' क-ख. १३. 'नीचसस्तथैव च' क-ख. १४. 'सधैर्यं' का. १५. '°तोत्कृष्टै°' का.

न तत्र[1] सौष्ठवं कार्यं न प्रमाणं[2] तथाविधम् ।
उर:पाद[3]गतोत्साहः शोकव्या[4]मूढचेतनः ।
नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ॥ ६० ॥
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया ।
विघूर्णितशरीरा च गतिस्तू[5]र्णपदैरथ ॥ ६१ ॥
शीतेन चाभिभूतस्य वर्षेणाभि[6]हतस्य च ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ॥ ६२ ॥
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ।
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च ॥ ६३ ॥
द[7]न्तोष्ठस्फुरणं चैव चिबुकस्य प्र[8]कम्पनम् ।
कार्यं[9] शनैश्च गन्तव्यं शीताभिनयने गतौ ॥ ६४ ॥
तथा भयानके चैव गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ ६५ ॥
विस्फारिते च[10]ले नेत्रे विधुतं च शिरस्तथा ।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकितैः[11] ॥ ६६ ॥
द्रुतैः पूर्ण[12]पदैश्चैव बद्ध्वा हस्तं कपोतकम् ।
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ॥ ६७ ॥
एषा[13]नुकरणे कार्या तर्जने त्रासने तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं रवम्[14] ॥ ६८ ॥
ए[15]षा स्त्रीणां प्रयोक्तव्या नृणां चा[16]क्षिप्तविक्रमा ।
कचिदासन्नपतितैर्विकृष्टपतितैः कचित् ॥ ६९ ॥

---

१. 'नता' क-ख. २. क-ख-पुस्तकयो रत्राधिकम्—'मध्यानामपि तत्त्वज्ञागति··· विधानतः'. ३. 'उरःपातहतोत्साहः' क-ख. ४. 'व्याकुल' का. ५. '°श्चूर्ण°' का. ६. 'भिद्रुतस्य' क-ख. ७. 'दन्तो स्फुरणं' क-ख. ८. 'तु कम्पनं' का. ९. 'कर्तव्यं' क-ख. १०. 'बले' क-ख. ११. 'विलोकनैः' क-ख. १२. '°श्चूर्णपदैः' का. १३. '°नुसरणे' क-ख. १४. 'विकृतस्वरम्' का. १५. 'एषां' क-ख. १६. 'आक्षिप्त-विक्रमः' क-ख.

एडका[1]क्रीडितैः पादैरुपर्युपरि पातितैः ।
एषामेवानुगैर्हस्तैर्गतिं भीतेषु योजयेत् ॥ ७० ॥
वणिजां सचिवानां च गतिः कार्या स्वभावजा ।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥ ७१ ॥
[कृत्वा नाभितटे हस्तं मुक्ताङ्क(ख?)टकामुखम् ।
आद्यं चारालमुक्तानां कुर्यात्पार्श्वे तदन्तरे ॥
न निषण्णं वच[ः]स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु ॥]
यतीनां[2] चैव सर्वेषां ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्ये[3] तु नैष्ठिकं व्रतमाश्रिताः[4] ॥ ७२ ॥
अलोलचक्षुश्च भवेद्युगमात्र[5]निरीक्षणः ।
उपस्थितस्मृतिश्चैव[6] गात्रं सर्वं विधाय च ॥ ७३ ॥
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः[7] ।
विनीतवेषश्च भवेत्काषायवसनस्तथा ॥ ७४ ॥
प्रथमे समपादेन[8] स्थित्वा स्थानेन वै बुधः ।
हस्तं च चतुरं कृत्वा[9] तथा चैकं प्रसारयेत्[10] ॥ ७५ ॥
प्रसन्नं[11] वदनं कृत्वा प्रयोगस्य वशानुगैः[12] ।
अनिषण्णेन गात्रेण गतिं गच्छेद्व्यतिक्रमात्[13] ॥ ७६ ॥
उत्तमानां भवेदेषा लिङ्गिनां[14] ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥ ७७ ॥
तथा व्रतानुगा[15] च[16] स्यादन्येषां लिङ्गिनां[17] गतिः ।
विभ्रान्ता वाप्युदात्ता[18] वा विभ्रान्तनिभृतापि[19] वा ॥ ७८ ॥

---

१. 'एलका' क-ख. २. 'यतीनां श्रमणानां च' का. ३. 'गतिर्विप्रा' का. ४. 'माश्रिता' का. ५. 'मत्र' का. ६. '॰गतिश्चैव' क-ख. ७. 'तथालिङ्गं समाश्रितः' का. ८. सतपदिन' क-ख. ९. 'कृत्वा' का. १०.' प्रयोजनम्' का. ११. 'प्रसन्नवदनं' क-ख. १२. 'वशानुगम्' क-ख. १३. 'दतिक्रमान्' का. १४. 'लिङ्गिनो' क-ख. १५. 'प्रतानुगा' क-ख. १६. 'सा' क-ख. १७. 'लिङ्गिनां गतिः' क. १८. 'चाप्युक्षान्ता' (?) क-ख. १९. 'विभ्रान्ता निभृतापि च' क-ख.

शकटास्यस्थितैः पादैरतिक्रान्तैस्तथैव च ।
कार्या पाशुपतानां च गतिरुद्धत[1]गामिनी ॥ ७९ ॥
अन्धकारेऽन्धय[2]याने च गतिः कार्या प्रयोक्तृभिः ।
भूमौ विसर्पितैः पादैर्हस्तैर्मार्गप्रदर्शिभिः[3] ॥ ८० ॥
रथस्थ[4]स्यापि कर्तव्या गतिस्तूर्ण[5]पदैरथ ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत् ॥ ८१ ॥
धनुर्गृहीत्वा चैकेन[6] तथा ह्येकेन कूबरम् ।
सूतश्चास्य भवेदेवं प्रतोदप्र[7]ग्रहाकुलः ॥ ८२ ॥
वाहनानि[8] विचित्राणि कर्तव्यानि विभागशः[9] ।
द्रुतैश्चूर्णपदैश्चैव गन्तव्यं[10] रङ्गमण्डले ॥ ८३ ॥
विमानस्थस्य कर्तव्या ह्येषैव स्यन्दिनी[11] गतिः ।
आरूढमुद्वहेद्गात्रं किंचित्स्यादुन्मुखस्थितम् ॥ ८४ ॥
अस्यैव[12] वैपरीत्येव कुर्याच्चाप्यव[13]रोहणम् ।
अधोवलोकनैश्चैव मण्डलावर्तनेन च ॥ ८५ ॥
आकाशगमने चैव कर्तव्या नाट्ययोक्तृभिः ।
व्योम्नश्चावतरेद्यस्तु तस्यैतां कारयेद्गतिम् ॥ ८६ ॥
रुद्धायतोऽनुतननैः कुटिलावर्तितैरथ ।
अश्यतश्च तथाकाशादपविद्धभुजा गतिः ॥ ८७ ॥
विकीर्णवसना चैव तथा भूगतलोचना ।
प्रासादद्रुमशैलेषु नदीनिम्नोन्नतेषु च ॥ ८८ ॥
आरोहणावतरणं कार्यमर्थवशाद्[14] बुधैः ।
प्रासादारोहणं कार्यमतिक्रान्तैः पदैरथ[15] ॥ ८९ ॥

---

१. 'रुक्रान्तगामिनी' का. २. 'ऽथ याने' क-ख. ३. '°मार्गप्रदर्शितै' का. ४. 'अधस्तस्यापि' का. ५. 'चूर्णपदै°' का. ६. 'चैकेन' का. ७. 'प्रतोदान°' क-ख. ८. 'कैनानि वै' क-ख. ९. 'विभागतः' क-ख. १०. 'कर्तव्यं' क-ख. ११. 'स्पादनी' का. १२. 'अन्यैव' क-ख. १३. 'चाप्यतिरोहणम्' क-ख. १४. 'तथा' क-ख. १५. 'न्त···दैः' क-ख.

उद्धाह्य गात्रं पादं[1] च न्यसेत्[2]सोपानपङ्क्तिषु ।
तथा[3]वतरणं चैव गोत्रमस्यैव कारयेत ॥ ९० ॥
[[4]अतिक्रान्तेन पादेन द्वितीयेनाञ्चितेन च ।]
प्रसादे[5] यन्मया प्रोक्तं प्रतारः कवलो भवेत् ।
जलप्रमाणापेक्षा तु जलमध्ये गतिर्भवेत् ॥ ९१ ॥
तोयेऽल्पे वसनोत्कर्षैः[6] प्राज्ये[7] पाणिविकर्षणैः ।
किंचिन्नताग्रकाया तु प्रतारे गतिरिष्यते ॥ ९२ ॥
प्रसार्य बाहुमेकैकं मुहुर्बाहुविकर्षणैः[8] ।
तिर्यक्प्रसारिता चैव ह्रियमाणस्य[9] वारिणा ॥ ९३ ॥
अशेषाङ्गाकुलाधूतवदना[10] गतिरिष्यते ।
नौस्थस्यापि प्रयोक्तव्या द्रुतैस्तूर्णैः[11] पदैर्गतैः ॥ ९४ ॥
[12]प्रासादारोहणे यत्तु तदेवाद्रिषु[13] कारयेत् ।
केवलं मूर्धनि[14] क्षेपमद्रिष्वङ्ग भवेदथ ॥ ९५ ॥
द्रुमे चारोहणं कार्यमतिक्रान्तो[15]त्थितैः पदैः ।
सूचीविद्धैरपक्रान्तैः पार्श्वक्रान्तैस्तथैव च ॥ ९६ ॥
संज्ञामात्रेण कर्तव्यान्येतानि विधिपूर्वकम् ।
[[16]एतदेवावतरणं सरित्स्वपि नियोजयेत् ।]
तस्मान्नृत्तं[17] इति प्रोक्ते किं कर्तव्यं प्रयोक्तृभिः ॥ ९७ ॥
अङ्कुशग्रहणान्नागं[18] खलीनग्रहणाद्धयम्[19] ।
प्रग्रहग्रहणाद्यानमेवमेवापरेष्वपि[20] ॥ ९८ ॥

---

१. 'णात्रपादं च' क-ख. २. 'सोपाने निक्षिपेन्नरः' क-ख. ३. 'अथावतरणं चैव गात्रमानस्य रेचयेत् ।' का. ४. का-पुस्तकेऽत्राग्रेतना 'प्रासादारोहणं' इत्यादिपद्यद्वयी वर्तते. ५. 'प्रासादे यन्मया प्रोक्ता प्रतारे केवलं भवेत् ।' का. ६. 'वसनोत्कर्षः' क-ख. ७. 'प्राज्येऽप्राणि विवेकगैः' क-ख. ८. 'वारिविकर्षणैः' क-ख.; 'बाहुविकर्षणः'. का. ९. 'ह्रियमाणा च' क-ख. १०. '°पूरवदना' का. ११. 'गतिश्चूर्णपदैर्गतिः' का. १२. 'प्रासादारोहणं' का. १३. तदेवा' क-ख. १४. 'तच्च विक्षेपमङ्गिव्यङ्गं' क-ख. १५. '°क्रान्तैःस्थितैः' क-ख. १६. 'एतत् पद्यार्धं का-पुस्तकेऽधिकम्. १७. 'मृतविषु' क-ख. १८. 'नाङ्गं' क-ख. १९. 'ग्रहणद्वयम् ।' क-ख. २०. '°ग्रहणायानं' क-ख.

अश्वयाने गतिः कार्या वैशाखस्थानकेन तु ।
[1]तथा तूर्णपदैश्चित्रैरुपर्युपरि पातितैः ॥ ९९ ॥
पन्न[2]गानां गतिः कार्या पादैः स्वस्ति[3]कसंज्ञितैः ।
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा[4] ॥ १०० ॥
पादैराकुञ्चितैः किंचित्तालाभ्यन्तरपातितैः[5] ।
[6]ससौष्ठवसमा[7]युक्तौ तथा हस्तौ पदानुगौ ॥ १०१ ॥
'क(ख)टकौ वर्धमानौ तु' कृत्वा विटगतिं व्रजेत् ।
[8]कञ्चुकीव प्रकर्तव्या वयोऽवस्थाविशेषतः ॥ १०२ ॥
अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत् ।
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तथा ॥ १०३ ॥
समुद्वहंस्तथाङ्गानि पङ्क[9]लग्न इव व्रजेत् ।
अथ वृद्धस्य कर्तव्या गतिः[10] कम्पितदेहिका ॥ १०४ ॥
विष्[11]कम्भेन कृतप्राणा मन्दोत्क्षिप्तपदक्रमा[12]त् ।
कृशस्याप्यभिनेया वै गतिर्मन्दपरिक्रमात्[13] ॥ १०५ ॥
व्याधिग्रस्ते ज्व[14]रार्ते च तपःश्रान्ते क्षुधान्विते ।
विष्कम्भनकृतप्राणः कृशः क्षामोदरस्तथा ॥ १०६ ॥
क्षाम[15]स्वरकपोलश्च दीननेत्रस्तथैवच ।
[[16]शनैरुत्क्षेपणं चैव कर्तव्यं हस्तपादयोः ।
कम्पनं चैव गात्राणां क्लेशनं च तथैव च ॥ १०७ ॥
दूराध्वानं गतस्यापि गतिर्मन्दपरिक्रमा ।
विकूणनं च गात्रस्य जानुनोश्च विमर्दनम् ॥ १०८ ॥

१. 'यथा चूर्णपदैश्चित्रैः' का. २. 'वनगानां' क-ख. ३. 'पादे स्वस्तिकयोजयेत्' (?) क-ख. ४. '°विभ्रमा' क-ख. ५. '°यानभैः' क-ख. ६. 'ससौष्ठव' का. ७. '°समायुक्तस्तथा'. ८. 'खटकाबद्धमानौ' क-ख. ९. 'काञ्चुकी यस्य' का. 'पञ्चलग्न' क-ख. १०. 'गतिकम्पित.°' क-ख. ११. 'विष्कम्भन' क-ख. १२. 'पदक्रमा' का. १३. 'पदक्रमा' का. १४. 'व्याधिग्रस्तस्य च तथा एषा श्रान्तस्य चैव हि ।' क-ख. १५. क-पुस्तके तु 'क्षामश्वरश्चैव भवेन्निःश्वासबहुलस्तथा'। १६. इतःप्रभृति श्लोकत्रयं क-ख-पुस्तकयोर्नास्ति.

स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी ।
समुद्वहनभूयिष्ठा मन्दोत्क्षिप्तपदक्रमा ॥ १०९ ॥
[विष्कम्भगामी च भवेन्निःश्वासबहुलस्तथा ।]
श्रमखेदाभिभूतश्च व्रजेत्तूर्ण[1]पदैस्तथा ॥ ११० ॥
मत्तानां तु गतिः कार्या मदे तरुणमध्यमे ।
वामदक्षिणपादाभ्यां घूर्णमानोऽपसर्पणैः ॥ १११ ॥
[2]अवकृष्टे पदे चैव ह्यनवस्थितपादिका ।
विघूर्णितशरीरा च [3]पदैः प्रस्खलितैरथ ॥ ११२ ॥
उन्मत्तस्यापि कर्तव्या गतिस्[4]त्वभिनयक्रमात् ।
बहुचारीसमायुक्ता लोकानुकरणाश्रया ॥ ११३ ॥
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवान् ॥ ११४ ॥
[5]आलीढस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ।
जानूपरि [6]करं त्वेकमपरं [7]वक्षसि स्थितम् ॥ ११५ ॥
अवलोक्य दिशः [8]सर्वाश्चिबुकं बाहुमस्तके ।
गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः ॥ ११६ ॥
[[9]नियुद्धसमये चैव रङ्गावतरणे तथा ।
सिंहादीनां [10]प्रयोक्तव्या गतिरेषा प्रयोक्तृभिः ॥ ११७ ॥]
शेषाणामर्थयोगेन गतिं [11]स्थाने च योजयेत् ।
वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ॥ ११८ ॥
एवमेताः प्रयोक्तव्या नराणां गतयो बुधैः ।
नो[12]क्ता या या म[या] ह्यत्र ग्राह्यास्ताश्चापि लोकतः ॥ ११९ ॥

---

१. '०श्चूर्णपदैः' का. २. 'अवक्रुष्टे' का. ३. 'करैः प्रचलितैस्तथा' क. ४. 'गतिश्च नियतक्रमा' का. ५. 'आलीढं स्थानकं' क-ख. ६. 'करं चैकम्' का. ७. 'चैव खस्थितम्' क-ख. ८. 'कृत्वा' का. ९. पद्यमेतदधिकं का-पुस्तके. १०. 'प्रयोक्त...' क-ख. ११. 'स्थानं प्रयोजयेत्' क-ख. १२. 'नोक्ताश्च या मया ह्यत्र ग्राह्यास्ता अपि लोकतः' का.

अतःपरं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम्।
स्त्रीणां स्थानानि कार्याणि गतिष्वाभरणेषु च[1] ॥ १२० ॥
आयतं चावहित्थं च अश्वक्रान्तमथापि वा[2]।
[दक्षिणस्तु[3] समः पश्चात् त्र्यस्त्रः पक्षस्थितोऽपरः।
वामः समुन्नतकटिश्चायते स्थानके भवेत्॥ १२१ ॥
आवाहने विसर्गे च तथा निर्वर्णनेषु च।
चिन्तायां चावहित्थे च स्थानमेतत् प्रयोजयेत्॥ १२२ ॥]
रङ्गावतरणारम्भैः[4] पुष्पाञ्जलिविसर्जनम्।
मन्मथेर्ष्योद्भवं[5] कोपं तर्जन्यङ्गुलिमोटनम्[6]॥ १२३ ॥
निषेधगर्वगाम्भीर्यं[7][8] मौनमानावलम्बनम्।
स्थानेऽस्मिन्संविधातव्यं[9] दिगन्तरनिरूपणम्[10]॥ १२४ ॥
[समो[11] यत्र स्थितो वामस्त्र्यस्त्रः पक्षस्थितोऽपरः।
समुन्नतकटिर्वामस्त्ववहित्थं तु तद्भवेत्॥ १२५ ॥]
पुरोऽपि[12] चलितस्त्र्यस्त्रस्तदन्योऽपसृतः समः।
पादस्तालान्तरन्यस्तस्त्रिकमीषत्समुन्नतम्॥
पाणिर्लताख्यो[13] यत्रैकस्तदन्योऽपि नितम्बगः॥ १२६ ॥
[स्त्रीणामेतत्[14] स्मृतं स्थानं संलापे तु स्वभावजे।

---

१. 'गतिस्ता भाषणेषु च' क-ख. २. 'च' का. ३. 'एतत् पद्यद्वयं क-ख-पुस्तकयोर्नास्ति। किं त्वस्य स्थाने—

'वामः स्वभावतो यत्र पादो विरचितः समः।
तालत्रयान्तरे न्यस्तस्त्रिस्त्रः पक्षस्थितोऽपरः॥
प्रसन्नमानसपुरा (?) समं यत्र समुन्नतम्।
लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदा जगुम्॥'

एतत् पद्यद्वयं वर्तते. ४. '°रम्भपुष्पा°' क-ख. ५. 'मन्मथस्योद्भवं' क-ख. ६. 'तर्जनाङ्गुलिमोटनं' क-ख. ७. 'निषेव (?)' क-ख. ८. 'गाम्भीर्यमौनं' का. ९. 'संविधानीयं' क-ख. १०. 'दिगम्बर' क-ख. ११. पद्यमेतदधिकं का-पुस्तके. १२. 'पुरा विरचितस्त्रिस्रः' क-ख. १३. '°लताख्ये' क-ख. १४. पद्यमेतदधिकं का-पुस्तके.

निश्चये परितोषे च वितर्के चिन्तने तथा ॥]
अवहित्थं समाख्यातं स्थानमागमभूषणैः ॥ १२७ ॥
विलासलीलाविव्वोकशृङ्गारात्मनिरूपणैः ।
स्थानमेतत्प्रयोक्तव्यं भर्तुर्मार्गावलोकने ॥ १२८ ॥
पादः समुत्थितश्चैक एकश्चाग्रतलाञ्चितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ॥ १२९ ॥
'शाखावलम्बने कार्यं स्तबकग्रहणे तथा ।
विश्रामेष्वथ देवानां दाराणां चात्र योगतः ॥ १३० ॥
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ।
पुनश्च संप्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् ॥ १३१ ॥
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ।
स्थानकं तावदेव स्याद्यावच्चेष्टा प्रवर्तते ॥ १३२ ॥
भग्नावस्थानकं नृत्ये चारी च समुपस्थिता ।
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं करम् ॥ १३३ ॥
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ।
ततः संललितं पादं तालमात्रसमुत्थितम् ॥ १३४ ॥
दक्षिणं वामपादस्य बाह्यपार्श्वे विनिक्षिपेत् ।
तेनैव समकालं च लताख्यं वामकं भुजम् ॥ १३५ ॥

---

१. का-पुस्तके तु–'विवाहलीलालावण्ये शृङ्गारादिनिरूपणे'. २. 'तथा मार्गावलोकने' का. ३. 'एष चाग्रतलान्तितः' क-ख. ४. 'तदश्वक्रान्त उच्यते' क-ख. ५. का-पुस्तकेऽधिकं पद्यद्वयम्. क-ख-पुस्तकयोस्तु—

'स्खलितं घूर्णितं चैव ग(ल?)लिताम्बरधारणम् ।
कुसुमस्तबकादानं परिरक्षणमेव च ॥
खत्रासनं सललितं तरुशाखावलम्बनम् ।
स्थानेऽस्मिन् संविधानीयं स्त्रीणामेतत् प्रयोक्तृभिः ॥'

एवं पद्यद्वयी वर्तते. ६. अस्य श्लोकार्धद्वयस्य स्थाने का-पुस्तके–'पुनश्च संप्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम्'. ७. 'भुजम्' क-ख. ८. 'कटकामुखम्' का.

दक्षिणं विन[1]मेत्पार्श्वं न्यसेन्नाभितटे ततः ।
नितम्बे [2]दक्षिणं कृत्वा हस्तं चोद्वेष्ट्य वामकम् ॥ १३६ ॥
ततो वामपदं दद्याल्लताहस्तं च [3]दक्षिणम् ।
लीलयोद्वाहितेनाथ शिरसो[4]नुगतेन च ॥ १३७ ॥
षट्कलं तु न कर्तव्यं तथाष्टकलमेव च ।
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत्स्त्रियाः[5] ॥ १३८ ॥
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः ।
[6]स्थवीयसीनामेतासां संप्रवक्ष्याम्यहं गतिम् ॥ १३९ ॥
[7]कृत्वापविद्धं स्थानं तु वामं न्यस्य कटीतटे ।
आद्यं चारालमु[8]क्तानां कुर्यान्नाभिस्तनान्तरे ॥ १४० ॥
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ॥ १४१ ॥
प्रे[9]ष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी ।
किंचिदु[10]न्नमितैर्गात्रैराविद्धगतिविक्र[11]मा ॥ १४२ ॥
स्थानं कृत्वावहित्थं [12]तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च ख[13]टकामुखम् ॥ १४३ ॥
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ।
उदात्तललितैर्गात्रैः पदै[14]र्लीलासमन्वितैः ॥ १४४ ॥
या पूर्वमेवाभिहिता ह्युत्तमानां गतिर्मया ।
स्त्रीणां कापुरुषाणां च ततो[15]र्धार्धं तु योजयेत् ॥ १४५ ॥
मध्यमोत्तमनीचानां [16]नृणां यद् गतिचेष्टितम् ।
स्त्रीणां [17]तदै(दे?)व कर्तव्यं ललितैः प[18]दैर्विक्रमैः ॥ १४६ ॥

---

१. 'विनयेत्' क-ख. २. 'दक्षिणे' क-ख. ३. 'सदक्षिणम्' क-ख. ४. 'शिरसानुगतेन' क-ख. ५. 'स्त्रियः' का. ६. 'स्थानीया याः स्त्रियस्तासां' क-ख. ७. 'कृत्वापविद्धं' क-ख. ८. '°मुत्तानं' क-ख. ९. 'वृक्षाणामपि' क-ख. १०. 'कचिदुन्न°' का. ११. '°भुजविक्रमा' क-ख. १२. 'च' का. १३. 'कटका°' का. १४. '°ली...सम°' १५. '°र्धार्धो' क-ख. १६. 'नृपंप्रति विचेष्टितम्' क-ख. १७. 'तदर्धा कर्तव्या' क-ख. १८. 'पाद°' क-ख.

बालानामपि कर्तव्या स्वच्छन्द[1]गतिविक्रमा ।
न [2]तस्याः सौष्ठवं कार्यं [3]न प्रमाणं प्रयोक्तृभिः ॥ १४७ ॥
[[4]तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसकम् ।
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ॥ १४८ ॥]
विपर्ययः प्रयोक्तव्यः पुरुष[5]स्त्रीनपुंसके ।
[6]स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ॥ १४९ ॥
व्याजेन क्रीडया[7] वापि तथा भूयश्च वञ्चनात् ।
स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥ १५० ॥
धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ।
स्त्री पुमांसं त्वभिनयेद्वेषवाक्यविचेष्टितैः ॥ १५१ ॥
स्त्रीवेषभाषितैर्युक्तः [8]प्रेषिताप्रेषितैस्तथा ।
मृदु[9]मन्दगतिश्चैव पुमान्स्त्रीभावमाचरेत् ॥ १५२ ॥
[वि[10]जातीयास्तु या नार्यः पुलिन्दशबराङ्गनाः ।
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः ॥ १५३ ॥
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव च ।
स्वस्थानां चैव नारीणां समपादं प्रयोजयेत् ॥ १५४ ॥
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि च ।
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिता ॥ १५५ ॥]
[11]तथासनविधिः कार्या [12]नृणां स्त्रीणां विशेषतः ।
नानाभावसमायुक्त[13]स्तथैव शयनाश्रयः ॥ १५६ ॥
विष्कम्भे[14]णाञ्चितौ पादौ त्रिकं किंचित्समुन्नतम् ।
हस्तौ [15]कट्यूरुविन्यस्तौ बाहु[16]शीर्षाश्रितं शिरः ॥ १५७ ॥

---

१. '°पदविक्रमा' क-ख. २. 'तस्यां' क-ख. ३. 'प्रमाणं न' का. ४. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ५. 'पुरुषस्त्रीनपुंसकैः' क-ख. ६. 'दभाव(?)°' क-ख. ७. 'सेवया' का. ८. 'प्रेक्षिताप्रेक्षितैः' क-ख. ९. 'मृदुसन्नगतिः' क-ख. १०. 'इतः प्रभृति पद्यत्रयं का. पुस्तकेऽधिकम्. ११. 'अथासन°' क-ख. १२. 'कार्यः स्त्रीणां नृणामथापि वा' क-ख. १३. 'तथा च' क. १४. 'विष्कम्भेना°' का. १५. 'हस्ताः कट्यूरुविन्यस्ताः' का. १६. 'स्वस्थे स्यादुपवेशने' का.

[[1]पादः प्रसारितः किंचिदेकश्चैवासनाश्रयः।
शिरः पार्श्वगतं चैव सचिन्त उपवेशने॥
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रितं शिरः॥ १५८॥]
संप्रणष्टेन्द्रियमना [2]भवेच्छोकोपवेशने।
प्रसार्य बाहू शिथिलौ तथा [3]चोपाश्रयाश्रितः॥ १५९॥
[4]मूर्च्छामदश्रमग्लानिविषादेषूपवेशयेत्।
सर्वपिण्डीकृताङ्गस्तु संपाते [5]पादजानुभिः॥ १६०॥
[6]व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः।
तथा [7]चोत्कटकं स्थानं स्फिक्पार्ष्णीनां [8]समागमम्॥ १६१॥
पित्र्ये [9]निर्वापसलिले संध्यास्वाचमने[10]षु च।
विष्कम्भितं पुनश्चैव जानु भूमौ निपातयेत्॥ १६२॥
प्रियप्रसादने कार्यं होमादिकरणेषु च।
महीगताभ्यां जानुभ्यामधोमुखमवस्थितम्॥ १६३॥
देवाभिगमने चैव [11]रुषितानां प्रसादने।
शोके चाक्रन्दने [12]तीव्रं मृतानां चैव दर्शने॥ १६४॥
त्रासने च कुसत्त्वानां [13]दीनानां चैव याचने।
होमयज्ञक्रियायां च प्रेष्याणां चैव [14]योजयेत्॥ १६५॥
मुनीनां नियमेष्वेष भवेदासनजो विधिः।
अथासनविधिः कार्यो विविधो नाटकाश्रयः॥ १६६॥
स्त्रीणां च पुरुषाणां च बाह्यश्चाभ्यन्तरस्तथा।
[[15]आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च।]
देवानां नृपतीनां च दद्यात्सिंहासनं द्विजाः॥ १६७॥

---

१. सार्धपद्यमेकमिदमधिकं का-पुस्तके. २. 'शोकौत्सुक्योपवेशने' का. ३. 'चापाश्रयाश्रितः' क-ख. ४. 'मोहमूर्च्छामन्दग्लानिविषादेषू॰' का. ५. 'संयुक्तः' का. ६. 'व्याधिपीडावहित्थेषु' क-ख. ७. 'चोत्कटिकास्थान' का. ८. 'समागमः' का. ९. 'निवापे जप्ये च' का. १०. '॰चमनेऽपि च' का. ११. 'देवाभिगमने कार्यं रूषिकाणां च सान्त्वने' क-ख. १२. 'तीव्रमृतानां' का. १३. 'नीचानां चैव' का. १४. 'कारयेत्' का. १५. 'पद्यार्धमिदं' क-पुस्तकेऽधिकम्.

पुरोधसाममात्यानां भवेद्वेत्रासनं तथा ।
मुण्डा(ज्ञा ?)सनं च दातव्यं सेनानीयुवराजयोः ॥ १६८ ॥
काष्ठासनं[1] ब्राह्मणानां कुमारीणां[2] कुथासनम् ।
एवं राजसभां[3] प्राप्य कार्यस्त्वासनजो[4] विधिः ॥ १६९ ॥
स्त्रीणां चैवासनविधिं[5] संप्रवक्ष्याम्यहं पुनः ।
सिंहासनं तु राज्ञीनां देवीनां मण्डलासनम्[6] ॥ १७० ॥
पुरोधोमात्यपत्नीनां[7] भवेद्वेत्रासनं[8] तथा ।
भोगिनीनां पुनश्चैव[9] वस्त्रं[10] चर्म कुथापि वा ॥ १७१ ॥
[ब्राह्मणीनां[11] यतीनां च पट्टासनमथापि च ।
वैश्यानां च प्रदातव्यमासनं च मयूरकम् ॥ १७२ ॥]
शेषाणां प्रमदानां तु भवेद्भूम्यासनं[12] द्विजाः ।
एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः ॥ १७३ ॥
तथा स्वगृहवार्तासु[13] च्छन्देनासनमिष्यते ।
नियमस्थमुनीनां[14] च भवेदासनजो विधिः ॥ १७४ ॥
लिङ्गिनां वासनविधिः[15] कार्यो व्रतसमाश्रयः ।
वृषीमुण्डासनप्रायं[16] वेत्रासनमथापि वा[17] ॥ १७५ ॥
[ होमे[18] यज्ञक्रियायां च पित्र्यार्थे च प्रयोजयेत् । ]
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः ।
तेषामासनसत्कारः कर्तव्य इह[19] पार्थिवैः ॥ १७६ ॥
समे समासनं दद्यान्मध्यमे[20] मध्यमासनम् ।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं भवेत् ॥ १७७ ॥

---

१. 'कु (? सु) ज्ञासनं' का. २. 'कुमारीणां' का. ३. 'राजासनं' क-ख. ४. 'तु' इति क-ख-पुस्तकयोर्नास्ति. ५. 'चाप्यासन' का. ६. 'मुण्डमासनम्' का. ७. 'पत्तीनां' क-ख. ८. 'दद्यात्' का. ९. 'तथा चैव' का. १०. 'कुथा चर्मकुथापि वा' का. ११. 'पद्यमेतदधिकं' का-पुस्तके. १२. 'दिव्यासनं' का. १३. 'स्वगृहवा...' क-ख. १४. 'नियमस्थो' क-ख. १५. 'वा' इति का पुस्तके नास्ति. १६. 'दण्डमुण्डवृषीप्रायं'. १७. 'च' का. १८. पद्यार्धमिदं क-ख-पुस्तकयोर्नास्ति. १९. 'इति' क-ख. २०. 'मध्यमध्यममासनम्' का.

उपाध्यायस्य नृपतेर्गुरूणां चा[1]ग्रतो बुधैः ।
भूम्यासनं सदा[2] कार्यमथवा काष्ठमासनम् ॥ १७८ ॥
नौनागरथयानेषु भूमिका[3]ष्ठासनेषु च ।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥ १७९ ॥
आकुञ्चितं समं[4] चैव प्रसारितविवर्तने ।
उद्वाहितं तथा[2] चैव शयने कर्म कीर्त्यते ॥ १८० ॥
[ [5]स्वैरमाकुञ्चितैरङ्गैः शल्याविद्धेषु जानुनी ।
स्थानमाकुञ्चितं नाम शीतानां तु प्रयोजयेत् ॥ १८१ ॥
उत्तानितमुखं चैव स्रस्तमुत्तरकं तथा ।
समं नाम तु सुप्तस्य स्थानकं संविधीयते ॥ १८२ ॥
एकं भुजमुपाधाय संप्रसारितजानुकम् ।
स्थानं प्रसारितं नाम खलु सुप्तस्य कारयेत् ॥ १८३ ॥
अधोमुखस्थितं चैव विकर्तनमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥ १८४ ॥
अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च ।
उद्वाहितं तु विज्ञेयं लीलायां वेशने विभोः ॥ १८५ ॥
ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥ १८६ ॥ ]
गतिप्रचारस्तु मयोदितोऽयं नोक्तश्च यः सोऽर्थवशेन साध्यः ।
अतः परं रङ्गविधि[6]क्रमस्य वक्ष्यामि कक्षा[7]न्तरसंविधानम् ॥ १८७ ॥

इति [8]श्रीभारतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशो[9]ऽध्यायः ।

---

१. 'च' इति का. पुस्तके नास्ति. २. 'तथा' का. ३. 'तथा काष्ठासनेषु' का. ४. 'समं चैव' का. ५. इतःप्रभृति षट्श्लोकी क-ख-पुस्तकयोर्नास्ति. ६. 'रङ्गपरिक्रमस्य' क-ख. ७. 'कक्षां प्रविभागयुक्ताम्' का. ८. 'श्री' इति का-पुस्तके नास्ति. ९. 'त्रयोदशोऽध्यायः' का.

त्रयोदशोऽध्यायः[1] ।

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः कक्षां[2] प्रयोजयेत् ॥ १ ॥
ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥ २ ॥
कक्षाविभागो[3] निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य ह्यन्या[4] कक्षा भवेदिह ॥ ३ ॥
कक्षाविभागे[5] ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसरितस्त्वाश्रमा[6] अटवी तथा ॥ ४ ॥
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्त द्वीपाश्च पर्वता विविधास्तथा[7] ॥ ५ ॥
आलोकश्चैव लोकश्च रसातलमथापि वा ।
दैत्यानामालयश्चैव गृहाणि च[8] वनानि च ॥ ६ ॥
[ तथा[9] सप्त समुद्राश्च वर्षा वै पर्वतास्तथा ।
यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥ ७ ॥
बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः । ]
दूरं वा संनिकृष्टं वा देशं[10] तु परिकल्पयेत् ॥ ८ ॥
पूर्वं प्रविष्टा ये रङ्गे ज्ञेयास्तेऽभ्यन्तरे बुधैः ।
पश्चात्प्रविष्टास्ते[11] ज्ञेयाः कक्ष्या(क्षा)भागे[12] तु बाह्यतः ॥ ९ ॥
तेषां तु दर्शनेच्छुः सम्प्रविशेद्[13]रङ्गमण्डलम् ।
दक्षिणाभिमुखैः[14] सोऽथ[15] कुर्यादात्म[16]निवेदनम् ॥ १० ॥

---

१. 'अथ चतुर्दशोऽध्यायः' का. २. 'कक्ष्यां' का. ३. 'कक्ष्याविभागो' का. ४. 'कक्ष्या ह्यन्या विधीयते' का. ५. 'कक्ष्या°' का. ६. 'उद्यानारामसहितो देशो ग्रामोऽटवी तथा' का. ७. 'वर्णनैः' क-ख. ८. क-ख-पुस्तकयोः 'नगरे च वने चापि वर्षे वै पर्वते तथा' इत्यधिकमत्र. ९. अत्राधिका श्लोकद्वयीयं कोष्ठकबद्धा. १०. 'देशात्तु' का. ११. 'विज्ञेयाः' का. १२. 'कक्षाभावे तु मध्यतः' क-ख. १३. 'यः' का. १४. 'दक्षिणाभिमुखं' का. १५. 'सोऽथ' इति त्रुटितं क-ख-पुस्तकयोः. १६. 'कुर्यादालनिवेदनम् (?)' का.

[1]यतो मुखं भवेद्भाण्डद्वारं नेपथ्यकस्य च।
सा मन्तव्या तु दिक्पूर्वा नाट्ययोगेन नित्यशः ॥ ११ ॥
निष्क्रामेच्चापि यस्तत्र [2]नरः कार्येण केनचित्।
[3]संनिष्क्रमेत्तु तेनैव कृतं येन [4]निवेशनम् ॥ १२ ॥
[[5]निष्क्रान्तोऽर्थवशाच्चापि प्रविशेद् यदि तद्गृहम्।
यतः प्राप्तः स पुरुषस्तेन मार्गेण निष्क्रमेत् ॥ १३ ॥
अथवार्थवशाच्चापि तेनैव सह गच्छति।
तथैव प्रविशेद् गृहमेकाकी सहितोऽपि वा ॥ १४ ॥
तयोश्चापि प्रविशतोः काष्ठामन्यां विनिर्दिशेत्।
परिक्रमेण रङ्गस्य त्वन्या कक्ष्या विधीयते ॥ १५ ॥
समैश्च सहितो गच्छेन्नीचैश्च परिवाहितः।
अथ प्रेक्षणिकाश्चापि विज्ञेया ह्यग्रतो गतौ ॥ १६ ॥
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः।
मध्या [6]वासन्निकृष्टा वा तेषामेवं [7]विकल्पयेत् ॥ १७ ॥
नगरे वा वने वापि [8]पर्वते सागरेऽपि वा।
दिव्यानां गमनं कार्यं [9]वर्षे द्वीपेऽपि वा पुनः ॥ १८ ॥
आकाशेन विमानेन [10]मायया(?)प्यथवा पुनः।
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः ॥ १९ ॥
नाटके छन्नवेषाणां दिव्यानां भूमिसंचरः।
मानुषैः कारणादेषां [11]यथा भवति दर्शनम् ॥ २० ॥
भारते त्वथ हैमे वा हरिवर्षे इलावृते।
रम्ये किं पुरुषे वापि कुरुषूत्तरकेषु वा ॥ २१ ॥

---

१. पद्यमिदं का-पुस्तके नास्ति. २. 'यं सूत्रनरः' क-ख. ३. 'अतिक्रामेत्तु' क-ख. ४. 'निवेदनम्' क-ख. ५. सेयं श्लोकचतुष्टयी क-ख-पुस्तकयोर्नास्ति. ६. '°सन्नकृष्टा वा' का. ७. 'तेषामेव विकल्पनात्' क-ख. ८. 'पर्वते नगरेऽपि वा' क. 'सागरे पर्वतेऽपि वा' का. ९. 'द्वीपे वर्षेषु वा पुनः' का. १०. 'मयेन' क-ख. ११. 'यदा' क-ख.

दिव्यानां[1] छन्दगमनं सर्ववर्षेषु[2] कीर्तितम् ।
[3]भारते मानुषाणां च गमनं संविधीयते ॥ २२ ॥
हिमवत्पृष्ठसंस्थे[4] तु कैलासे पर्वतोत्तमे[5] ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥ २३ ॥
रक्षोभूतपिशाचाश्च[6] सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥ २४ ॥
सर्वे नागा [श्च[7]] निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशज्ज्ञेया देवगणा बुधैः[8] ॥ २५ ॥
नीले तु वैडूर्यमये सिद्धा[9] ब्रह्मर्षयस्तथा ।
दैत्यानां दानवानां च श्वेतपर्वत उच्यते[10] ॥ २६ ॥
पितरश्चापि विज्ञेयाः शृङ्गवन्तं समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासी[11] भवन्ति हि ॥ २७ ॥
तेषां [12]कक्षाविभागस्तु जम्बूद्वीपे भवेदयम् ।
तेषां [13]तु (चेष्टितं) कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥ २८ ॥
परिच्छदविशेषस्तु तेषां मानुषलोकवत् ।
सर्वे भावास्[14]तु देवानां कार्या मानुषसंश्रयाः ॥ २९ ॥
तेषाम[15]निमिषं यत्तु तन्न कार्यं प्रयोक्तृभिः ।
इह भावा रसाश्चैव दृष्ट्यामेव[16] प्रतिष्ठिताः ॥ ३० ॥
दृष्ट्या हि सूचितो भावः पश्चा[17]दङ्गैर्विभाव्यते ।
[एवं कक्ष्याविभागस्तु मया प्रोक्ता द्विजोत्तमाः ।
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनां तु लक्षणम् ॥ ३१ ॥]

---

१. 'विद्यानां' क-ख. २. 'वर्षेष्वेतेषु कारयेत्' का. ३. एतत् कोष्ठबद्धं श्लोकपञ्चकं क-ख-पुस्तकयोर्नास्ति. ४. '°पार्श्वे' क-ख. ५. 'पर्वते शमे' (?)क-ख. ६. 'रक्षःपिशाचभूताश्च' का. ७. 'च' इति त्रुटितं क-ख-पुस्तकयोः ८. 'तथा' का. ९. 'सिद्धब्रह्मर्षयः' का. १०. 'इष्यते' का. ११. 'दिव्यवासाः प्रकीर्तिताः' का. १२. 'कक्ष्याविभागश्च' का. १३. 'चावेष्टितं' क-ख. १४. 'च' का. १५. 'त्वनिमिषत्वं यत्तन्न' का. १६. 'दृष्टावेव' का. १७. 'पुनरङ्गैः' का.

चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः[1] ।
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी ॥ ३२ ॥

अत्राह—प्रवृत्तिरिति कस्मात् । उच्यते—पृथिव्यां नाना[2]देशवेष-[3]भाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः, प्रवृत्तिश्च[4] निवेदनैः । अत्राह—[5]यथा पृथिव्यां नाना[6]देशाः सन्ति, कथमासां चतुर्विधत्वमुत्पन्नम्, समानलक्षणश्चासां प्रयोग उच्यते । [7]सत्यमेतत् समानलक्षणः प्रयोगः । किंतु नानादेशवेष-भाषाचारो लोक इति कृत्वा लोकानुमतेऽ[8]नुवृत्तिसंश्रितमस्य[9] मया चतु-र्विधत्वमभिहितं भारत्या[10]रभटी सात्त्वती कैशिकी चेति । [11]वृत्तिसंश्रितेष्व-मीषु प्रयोगेष्वभिरता देशाः, यतः प्रवृत्तिचतुष्टयमभिनिवृत्तं प्रयोगश्चो-त्पादितः । तत्र दाक्षिणात्या[12]स्तावत्, बहुगीत[13]नृत्यवाद्या कैशिकीप्रा[14]याश्चतुर-मधुरललिताङ्गाभि[15]नयाश्च ।

महेन्द्रो मलयः सह्यो मेखक[16] कालपञ्जरः ।
एतेषु ये [17]श्रिता देशाः स ज्ञेयो दक्षिणापथः ॥ ३३ ॥
को[18]शलास्तोशलाश्चैव कलिङ्गा [19]यवनाः खसाः ।
द्रमि[20]डान्ध्रमहाराष्ट्रा वै[21]ष्णा वै [22]वानवासिजाः ॥ ३४ ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशास्ते[23]षु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥ ३५ ॥
आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा [24]आनर्ताः सार्बु[25]देयकाः ॥ ३६ ॥

१. '°प्रयोगतः' का. २. '°नाव्य' क-ख. ३. '°भाषाचारो' क-ख. ४. 'वृत्तिश्च निवेदने' का. ५. 'यदा' क ख. ६. 'बह्वो देशाः' का. ७. 'एवमेष' क-ख. ८. 'अनु°' इति क-ख-पुस्तकयोर्नास्ति. ९. 'नाव्यस्य' का. १०. 'भारतीसात्त्वतीकेशिक्यारभटी' का. ११. 'वृत्तिसंश्रितैः प्रयोगैरभिहिता' क-ख. १२. 'भवेत्' क-ख. १३. 'बहुनृत्त-गीतवाद्या' का. १४. 'प्राया' क-ख. १५. '°भिनया यथा' क-ख. १६. 'मेलकः पलपिञ्जरः' ख. १७. 'संश्रिता' ख. १८. 'कोसलाः' का. १९. 'एव मोशलः' क-ख. २०. 'द्रविडा' ख. २१. 'वैण्या' क-ख. २२. 'वानवासजाः' क-ख. २३. 'संश्रितास्तेषु दाक्षिणात्यास्तु' इति का. २४. 'आवर्ताः' का. २५. 'सार्बुदेशकाः' का.

दाशार्णास्त्रैपुराश्चैव तथा वै[1]वर्तिकावताः ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥ ३७ ॥
सात्त्वतीं कैशिकीं चैव वृत्तिमेषा समा[2]श्रिता ।
भवेत्[3]प्रयोगो नान्यत्र स [4]च कार्यः प्रयोक्तृभिः ॥ ३८ ॥

अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवोड्रमागधाः ।
पौण्ड्रा[5] नैपालिकाश्चैव अन्तर्गिरि[6]बहिर्दुराः ॥ ३९ ॥
[7]तथा प्लवङ्गमाहेन्द्रमलदा(या ?)मलवर्तकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवा [8]मार्गवास्तथा ॥ ४० ॥
प्राग्ज्यौति[9]षाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः ।
[10]प्रांशुप्रवृत्तयश्चैव युज्यन्ती चौड्रमागधी ॥ ४१ ॥
अन्येऽपि देशाः [11]प्राच्यां ये पुराणे संप्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा प्रवृत्तिस्त्वौ[12]ड्रमागधी ॥ ४२ ॥
[13]पाञ्चालमध्यमायां तु सात्त्वत्यारभटी स्मृता ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविभ्रमः ॥ ४३ ॥

पाञ्चालाः [14]शौरसेनाश्च काश्मीरा हास्तिनापुराः ।
वाह्लीकाः[15] शाकलाश्चैव मद्र[16]कौशीनरास्तथा ॥ ४४ ॥
हिमवत्संश्रिता ये [17]च गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमाः ॥ ४५ ॥
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे ।

---

१. 'मार्तिका मताः' क; 'मार्तिका सुता.' ख. २. 'समाश्रित' क-ख. ३. 'भवेष' क-ख. ४. 'सर्वैः' क-ख. ५. 'पौण्ड्रनैपालिकाः' क-ख. 'पौण्ड्रा नैपालकाश्चैव' का. ६. 'बहिर्गिराः' क-ख. ७. 'तत्र वङ्गसमा ज्ञेया मलंचा मल्लयवर्शकाः' क-ख. ८. 'मार्गवस्तथा' का. ९. 'प्रापोतिषा' क-ख. १०. क-ख-पुस्तकयोस्तु—'प्रामाः प्राकृतयाश्चैव युञ्जन्ति ह्योड्रमागधीम्' (?). ११. 'एभ्यो ये' क-ख. १२. 'चौड्र॰' का. १३. 'पद्यमिदं' का-पुस्तकेऽत्र नास्ति किंतु श्लोकद्वयोत्तरं वर्तते । तत्र पाठश्च—'पाञ्चालमध्यमायां तु सात्त्वत्यारभटीश्रिताः' एवं वर्तते. १४. 'सौरसेनाश्च' का. १५. 'बाह्लिकाः शाल्यकाश्चैव' का. १६. '॰कौसीनरास्तथा' क-ख. १७. 'तु' का.

प्रदक्षिण[1]प्रदेशा च तथा चाप्य[2]प्रदक्षिणा ॥ ४६ ॥
आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्य[3]प्रदेशास्तु पाञ्चाली चौड्रमागधी ॥ ४७ ॥
आवन्त्यां दाक्षिणात्यायां [4]योज्यं द्वारमथोत्तरम् ।
पाञ्चाल्यामौड्रमागध्यां [5]योज्यं द्वारं तु दक्षिणम् ॥ ४८ ॥
एकभूताः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः ।
[6]वर्षं च देशं कालौ चाप्यर्थयुक्तिमवेक्ष्य[7] च ॥ ४९ ॥
येषु दे[8]शेषु या पूर्वं प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥ ५० ॥
[ [9]ऐकीभूताः पुनस्त्वेता गानकादौ भवन्ति हि ।
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्माचरेत्सदा ॥ ५१ ॥
सार्थे बाहुल्यमेकस्य शेषाणामथ बुद्धिमान् ।
येषामन्यस्य बाहुल्यं प्रवृत्तिं पूरयेत्तदा ॥ ५२ ॥ ]
प्रयोगो [10]द्विविधश्चैव विज्ञेयो [11]नाटकाश्रयः ।
सुकुमारस्तथाविद्धो नाट्ययुक्तिसमाश्रयः ॥ ५३ ॥
यत्त्[12]वाविद्धाङ्गहारं [13]तच्छेद्यभेद्याहवात्मकम् ।
माये[14]न्द्रजालबहुलं [15]पुंसो नेपथ्यसंयुतम् ॥ ५४ ॥
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्त्वत्यारभटीप्रायं नाट्यमाविद्धमेवं[16] तत् ॥ ५५ ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ५६ ॥

---

१. '°प्रवेशाश्च' क. ख. २. 'प्रदक्षिणाः' क-ख. ३. '°प्रवेशा तु' क-ख. ४–५. 'पार्श्वद्वारं' क-ख. ६. 'पार्षदं देशकालौ च' क-ख. ७. 'अपेक्ष्य च' क-ख. ८. 'ये देशेषु च या कार्या' क-ख. ९. श्लोकद्वयमेतत् क-ख. पुस्तकयोर्नास्ति. १०. 'विविधश्चैव' क-ख. ११. 'नाट्यकाश्रयः' का. १२. 'तत्र' क-ख. १३. 'तु' क-ख. १४. 'महेन्द्र°' क-ख. १५. 'पुस्त' (?) क-ख. १६. '°आविद्धसंज्ञितम्' का.

[1]एषां प्रयोगः कर्तव्यो [2]दैत्यदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः ॥ ५७ ॥
नाटकं सप्रकरणं भाणो वीथ्यङ्क[3]नाटिके ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि [4]च ॥ ५८ ॥
[ [5]यतोमुखं भवेद्भाण्डं द्वारनै(ने ?)पथ्यकस्य तु ।
सा मन्तव्या तु दिक् पूर्वा नाट्ययोगेषु नित्यशः ॥ ५९ ॥
अथ बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते ।
विदिक्ष्वपि भवेद्रङ्गः कदाचिद्भर्तुराज्ञया ॥ ६० ॥
पृष्ठे कृत्वास्य कुतपं नाट्यं युङ्क्ते यतोमुखं भरतः ।
सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः ॥ ६१ ॥
द्वाराणि षट् चैव भवन्ति चास्य रङ्गस्य दिग्भागविनिश्चितानि ।
नाट्यप्रयोगेन(ण) खलु प्रवेशे प्राच्यां प्रतीच्यां च दिशि प्रवेशः ॥६२॥
विधानमुत्क्रम्य यथात्र रङ्गे लीना (?) प्रमाणानि दिशः प्रयोगम् ।
द्वारं तु यस्मात् स मृदङ्गभाण्डं प्राचीदिशं तां मनसाध्यवस्येत् ॥६३॥
वयोनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥६४॥]
[6]धर्मी या द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः ।
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् ॥ ६५ ॥
स्वभावभावोपगतं शुद्धं त्वविकृतं तथा ।
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम् ॥ ६६ ॥
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥ ६७ ॥
अतिवा[7]क्यक्रियोपेतमतिसत्त्वातिभा[8]षितम् ।

---

१. 'एषः' का. २. 'देवदानवराक्षसैः' क-ख. ३. '°एव च' क-ख. ४. 'तु' का. ५. कोष्ठबद्धं श्लोकषट्कं का-पुस्तकेधिकम्. ६. नारीशब्दवद्धर्मीशब्दोऽपि स्त्रीलिङ्गो वर्तते, अत एव सर्वत्र स्त्रीलिङ्गत्वेनैव व्यवहारो दृश्यते. ७. 'अतिसत्त्व°' का. ८. '°तिभाविकम्' का.

लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् ॥ ६८ ॥
स्वरालंकारसंयुक्तमस्व[1]स्थपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥ ६९ ॥
[2]लोकप्रसिद्धं द्रव्यं तु यदा नाट्ये प्रयुज्यते ।
मूर्ति[3]मत्साभिलाषं च नाट्यधर्मी तु सा स्मृता ॥ ७० ॥
[4]आसन्नोक्तं च यद्वाक्यं न शृण्वन्ति परस्परम् ।
अनुक्तं श्रूयते [5]वाक्यं नाट्यधर्मी तु सा स्मृता ॥ ७१ ॥
शैलयानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥ ७२ ॥
ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः ।
नृत्यते गम्यते य[6]च्च नाट्यधर्मी तु सा स्मृता ॥ ७३ ॥
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः ।
[7]सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी [8]प्रकीर्तिता ॥ ७४ ॥
यश्च कक्षाविभागोऽयं नानाविधिसमाश्रितः ।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥ ७५ ॥
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत् ।
न ह्यङ्गाभिनया[9]त्किंचिद्दते नाट्यं प्रवर्तते ॥ ७६ ॥
सर्वस्य सहजो भावः सर्वो [10]ह्यभिनयोत्थितः ।
अङ्गालंकार[11]चेष्टा तु नाट्यधर्मी प्रकीर्तिता ॥ ७७ ॥
एवं [12]कक्षाविभागस्तु धर्मी[13]युक्तय एव च ।
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च [14]यत्नतः ॥ ७८ ॥

१. '°श्वस्थपुरुषाश्रयं' क-ख. २. 'लोके यदभियोज्यं तु भद्रमत्रोपयुज्यते ।' क-ख. ३. 'मूर्तिमत्' क-ख. ४. 'अत्रोक्तं चैव' क-ख. ५. 'यच्च' क-ख. ६. 'चापि' क-ख. ७. 'सोऽद्राभिनय°' क-ख. ८. 'तु सा स्मृता' क-ख. ९. 'कश्चिदन्ते रागः प्रवर्तते' क-ख. १०. 'ह्यभिनयार्थजः' का. ११. '°चेष्टाभिः' का. १२. 'कक्ष्या°' का. १३. 'धर्मयुक्ताः प्रकीर्तिताः' का. १४. 'तत्त्वतः' का.

उक्तो मयाङ्गाभिनयो यथावद्भावः कृतो यश्च कृताङ्गहारः[1] ।
पुनश्च वाक्याभिनयं यथावद्वक्ष्ये स्वरव्यञ्जनवर्णयुक्तम् ॥ ७९ ॥

इति श्रीभारतीये[2] नाट्यशास्त्रे करयुक्तिधर्मीव्यञ्जको नाम त्रयोदशोऽध्यायः ।

---

चतुर्दशोऽध्यायः ।

[यो[3] वागभिनयः प्रोक्तो मया पूर्वं द्विजोत्तमाः ।
लक्षणं तस्य वक्ष्यामि स्वरव्यञ्जनसंभवम् ॥ १ ॥
वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता ।
अङ्गनेपथ्यतत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि ॥ २ ॥
वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च ।
तस्माद्वाचः परं नास्ति वाग् हि सर्वस्य कारणम् ॥ ३ ॥
नामाख्यातनिपातैरुपसर्गसमासतद्धितैर्युक्तः ।
सन्धिविभक्तिषु युक्तौ विज्ञेयो वाचिकाभिनयः ॥ ४ ॥
द्विविधं हि स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा ।
तयोर्विभागं वक्ष्यामि यथावदनुपूर्वशः ॥ ५ ॥
व्यञ्जनानि स्वराश्चैव संधयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातस्तद्धितास्तथा ॥ ६ ॥
एतैरङ्गविधानैस्तु नानाधातुसमाश्रयम् ।
विज्ञेयं संस्कृतं पाठ्यं तद्वक्ष्यामि समासतः ॥ ७ ॥
अकाराद्याः स्वरा ज्ञेया औकारान्ताश्चतुर्दश ।
हकारान्तानि कादीनि व्यञ्जनानि विदुर्बुधाः ॥ ८ ॥
वर्गे वर्गे समाख्यातौ द्वौ वर्णौ प्रागवस्थितौ ।
अघोषा इति ये त्वन्ये सघोषा[ः] संप्रकीर्तिता[ः] ॥ ९ ॥

तत्र स्वराश्चतुर्दश—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ इति स्वरा ज्ञेयाः ॥

---

१. '०हारैः' का. २. 'इति भारतीयनाट्यशास्त्रे प्रवृत्तिधर्मव्यञ्जको नाम चतुर्दशोऽध्यायः ।' 'अङ्गाभिनयः समाप्तः' इति का. पुस्तके. ३. इतोऽग्रे १०८ अष्टोत्तरशती श्लोकानां काशीमुद्रितपुस्तक एवोपलभ्यते न च क-ख-पुस्तकयोः.

व्यञ्जनानि यथा—क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह इति व्यञ्जनवर्गः ॥

एते घोषाघोषाः कण्ठ्योष्ठ (ष्ठ्य) दन्त (न्त्य) जिव्हानुनासिक्यः ।
ऊष्माणस्तालव्य (व्या) विसर्जनीयाश्च बोद्धव्याः ॥ १० ॥
ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म तथैव य र ल व हा घोषाः ।
क ख च छ ट ठ त थ प फ इति वर्गेष्वघोषाः ॥ ११ ॥
कण्ठ (ण्ठ्या)स्तालुस्थाना मतास्तु च छ ज झ ञाः ।
ट ठ ड ढ णा मूर्धन्यास्त थ द ध नाश्चैव दन्तस्थाः ॥ १२ ॥
प फ ब भ मा—स्त्वोष्ठ्याः स्युर्दन्त्या ललसा अहौ च कण्ठस्थौ ।
तालव्या इयशा स्युर्ऋरषा मूर्धस्थिता ज्ञेयाः ॥ १३ ॥
ओ औ कण्ठोष्ठस्थानौ ए ऐकारौ च कण्ठतालव्यौ ।
कण्ठ्यो विसर्जनीयो जिह्वामूलोद्भवः कपयोः ॥ १४ ॥
पफयोरोष्ठं स्थानं भद्रेन्द्रकारस्वराविद्धः ।
स्पृष्टाः काद्या मान्ताः श ष स हकारास्तथा विवृताः ॥ १५ ॥
अन्तस्थाः संवृत्ताः ङ ञ ण न मा नासिकोद्भवा ज्ञेयाः ।
ऊष्माणश्च श ष स हा य र ल व वर्णास्तथैव चान्तस्थाः ॥१६
जिह्वामूलीयः कः प उपध्मानीयसंज्ञया ज्ञेयः ।
क च ट त पा [:] स्युः ख छ ठ थ फा [:] स्युः सदा कण्ठ्याः ॥१७
कण्ठ्येन रसान् विद्यात् घ झ ढ ध भान् पाठ्ययोगे तु ।
वेद्यो विसर्जनीयो विद्यास्थानस्थितो वर्णः ॥ १८ ॥
एते व्यञ्जनवर्णाः समासतः संज्ञया मया कथिताः ।
शब्दविषयप्रयोगे स्वरांस्तु भूयः प्रवक्ष्यामि ॥ १९ ॥
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।
पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः ॥ २० ॥
एभिर्व्यञ्जनयुक्तैर्नामाख्यातोपसर्गनिपातैः ।
तद्धितसंधिविभक्तिभिरधिष्ठितः शब्द इत्युक्तः ॥ २१ ॥

पूर्वाचार्यैरुक्तं शब्दानां लक्षणं तु विस्तरशः ।
पुनरेव संहितार्थं लक्षणतः संप्रवक्ष्यामि ॥ २२ ॥
तत्प्राहुः सप्तविधं पदकारकसंयुतं प्रथितसाध्यम् ।
निर्देशसंप्रदानापादानप्रभृतिसंज्ञाभिः ॥ २३ ॥
संप्रत्यतीतकालप्रयोजितः क्रियादिसंयोगः प्रथितः ।
साध्ये वचनानां यतियुक्तं सदृशसंयोजनविभक्तम् ॥ २४ ॥
स्वाद्यत्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासा ।
प्रातिपदिकार्थलिङ्गयुक्तं पञ्चविधमिदं ज्ञेयम् ॥ २५ ॥
आख्यातं पाठ्यकृतं ज्ञेयं नानार्थाश्रयविशेषम् ।
प्रातिपदिकार्थयुक्तान् धात्वर्थानुत्सृजन्ति ये स्वार्थैः ।
उपसर्गाद्युपदिष्टास्तस्मात् संस्कारशास्त्रेऽस्मिन् ॥ २६ ॥
प्रातिपदिकार्थयोगाद्धातुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात् प्रोक्ता निपातास्तु ॥ २७ ॥
प्रत्ययविभागजनिता प्रकर्षसंयोगसत्त्ववचनैश्च ।
यस्मात् पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ॥ २८ ॥
लोपप्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैश्च ।
त(य)स्मात् पूरयतेऽर्थांस्ततो यतस्तद्धितस्तस्मात् ॥ २९ ॥
एकस्य बहूनां वा धातोर्लिङ्गस्या(स्य) पदानां वा ।
विभजन्त्यर्थं यस्मात् विभक्तयस्तेन ताः प्रोक्ताः ॥ ३० ॥
वर्णक्रमसंबन्धः पदैकयोगोऽन्यवर्णयोगाच्च ।
संधीयते च यस्मात्तस्मात् संधिः समुद्दिष्टः ॥ ३१ ॥
लुप्तविभक्तिर्नाम्ना एकार्था [:] संहरन्ति संक्षेपात् ।
तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि ॥ ३२ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनात्वसंयुक्तैः ।
पदबन्धाः कर्तव्या वृत्तनिबन्धास्तु चूर्णा वा ॥ ३३ ॥
विभज्यैक्यं पदं ज्ञेयं निबन्धं चूर्णमेव च ।

तत्र चूर्णपदस्येह बहिर्बोधत लक्षणम् ॥ ३४ ॥
अनिबद्धं पदवृन्दं तथा चानियताक्षरम् ।
अर्थापेक्षाक्षरयुतं ज्ञेयं चूर्णपदं बुधैः ॥ ३५ ॥
निबद्धाक्षरसंयुक्तं पदच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियताक्षरम् ॥ ३६ ॥
एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्वृत्तं छन्दोवृत्ताभिधानवत् ॥ ३७ ॥
षड्विंशतिः स्मृतानीह पादे छन्दांसि संख्यया ।
समं चार्धसमं चैव तथा विषममेव च ॥ ३८ ॥
छन्दोयुक्तं समासेन निबद्धं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषा तनुः स्मृता ॥ ३९ ॥
छन्दोहीनो न शब्दोऽस्ति न छन्दः शब्दवर्जितः ।
तस्मात्तूभयसंयुक्ते नाट्यस्योद्द्योतके स्मृते ॥ ४० ॥
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ४१ ॥
सुप्रतिष्ठा भवेत् पञ्चगायत्री षड् भवेदिह ।
सप्ताक्षरा भवेदुष्णिग् अष्टौ चानुष्टुबुच्यते ॥ ४२ ॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुप् जगती द्वादशाक्षरा ॥ ४३ ॥
त्रयोदशातिजगती शक्करी च चतुर्दश ।
अतिशक्करी पञ्चदश षोडशाष्टिः प्रकीर्तिता ॥ ४४ ॥
अत्यष्टिः स्यात् सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशतिधृतिः कृतिर्विंशतिरेव च ॥ ४५ ॥
प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा ।
विकृतिश्च त्रयोविंशा चतुर्विंशा च संकृतिः ॥ ४६ ॥
पञ्चविंशत्यतिकृतिः षड्विंशत्युत्कृतिर्भवेत् ।

अतोऽधिकाक्षरं यत्तु मालावृत्तं तदिष्यते ॥ ४७ ॥
संपद्विरामपादश्च दैवतस्थानमक्षरम् ।
वर्णस्वरोऽधिकं वृत्तमिति छन्दोगतो विधिः ॥ ४८ ॥
नैवातिरिक्तं हीनं वा यत्र संपद्यते क्रमः ।
विधानाच्छन्दसामेषां संपदित्यभिसंज्ञिता ॥ ४९ ॥
यत्रार्थस्य समाप्तिः स्यात् स विराम इति स्मृतः ।
पादश्च पद्यते धातोश्चतुर्भाग इति स्मृतः ॥ ५० ॥
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।
शरीराश्रयसंभूतं जिह्वाश्रयमथापि च ॥ ५१ ॥
शरीरमन्त्रसंभूतं छन्दो गायत्रिसंज्ञितम् ।
कण्ठे (?) मध्यंदिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥ ५२ ॥
तृतीयसवनं चापि शीर्षं च जागतं हि यत् ।
ह्रस्वदीर्घप्लुतैश्चैव त्रिविधं चाक्षरं स्मृतम् ॥ ५३ ॥
श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारणश्चैव मन्द्रश्च मध्यमस्त्रिविधः स्वरः ॥ ५४ ॥
ध्रुवाविधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
विधिकालकृतश्चैव तथैवार्धकृतो भवेत् ॥ ५५ ॥
वृत्तमर्धवृत्तं चैव विषमं सममेव च ।
छन्दसि यस्य पादः स्याद्धीनो वाधिक एव वा ॥ ५६ ॥
वृत्तं निवृदिति प्रोक्तं गुरुं (रु?) कैश्चिद् द्विजोत्तमाः ।
अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा ॥ ५७ ॥
तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ।
छन्दसां तु भवेदेषां भेदोऽनेकविधः पृथक् ॥ ५८ ॥
असंख्यपरिमाणानि वृत्तान्याहुरथो बुधाः ।
गायत्रीप्रभृतिस्त्वेषां प्रमाणं संविधीयते ॥ ५९ ॥
प्रयोगजानि सर्वाणि प्रायस्तानि भवन्ति हि ।
वृत्तानां हि चतुःषष्टिर्गायत्री परिकीर्तिता ॥ ६० ॥

शतं विंशतिरष्टौ च वृत्तान्युष्णिगथोच्यते ।
षट्पञ्चाशच्छतं चैव वृत्तानामप्यनुष्टुभः ॥ ६१ ॥
शतानि पञ्च वृत्तानां बृहत्यां द्वादशैव च ।
पङ्क्तेः सहस्रं वृत्तानां चतुर्विंशतिरेव च ॥ ६२ ॥
त्रिष्टुभोत्रि(भस्त्रि)सहस्रे च चत्वारिंशत्तथाष्ट च ।
सहस्राण्यपि चत्वारि नवती च षडुत्तरा ॥ ६३ ॥
जगत्याः समपादानां वृत्तानामिह सर्वशः ।
शतमष्टौ सहस्राणि द्व्यधिका नवतिः पुनः ॥ ६४ ॥
जगत्यामतिपूर्वायां वृत्तानां परिमाणतः ।
शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश ॥ ६५ ॥
वृत्तानि चैव चत्वारि शक्वर्याः परिसंख्यया ।
द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च ॥ ६६ ॥
अष्टौ षष्टिश्च वृत्तानि ह्याश्रयन्त्यतिशक्वरीम् ।
पञ्चषष्टिसहस्राणि सहस्रार्धं च संख्यया ॥ ६७ ॥
षट्त्रिंशच्चैव वृत्तानामष्टौ निगदितानि च ।
एकत्रिंशत्सहस्राणि वृत्तानां च द्विसप्ततिः ॥ ६८ ॥
तथा शतसहस्रं च छन्दस्यत्यष्टिसंज्ञिते ।
धृत्यामपि च पिण्डेन वृत्तमाकलितं मया ॥ ६९ ॥
तथा शतसहस्रे द्वे शतमेकं तथैव च ।
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः ॥ ७० ॥
चत्वारि चैव वृत्तानि शतसंख्यानि यानि तु ।
अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च ॥ ७१ ॥
तथा शतसहस्राणि पञ्चवृत्तशतद्वयम् ।
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च ॥ ७२ ॥
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ।
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च ॥ ७३ ॥
पञ्चषट् सप्ततिश्चैव वृत्तानां परिमाणतः ।

तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ॥ ७४ ॥
सप्त वै गदितं ह्यत्र नवतिश्चैव संख्यया ।
सहस्राणि शतं चैव द्वौ पञ्चाशत्तदन्तरम् ॥ ७५ ॥
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ।
चत्वारिंशत्तथैकं च लक्षाणामथ संख्यया ॥ ७६ ॥
विज्ञेयाष्टसहस्राणां नवतिश्च षडुत्तरा ।
शतत्रयं समाख्यातं संकृत्या परिमाणतः ॥ ७७ ॥
कोटित्रयं चाभिकृत्यां पञ्चविंशद्भिरन्वितः ।
पञ्चाशद्भिः सहस्रैश्च चतुर्भिरधिकैस्तथा ॥ ७८ ॥
चतुष्टयं शतानां च द्वात्रिंशद्भिः समन्वितः ।
षट्कोटयस्तथोत्कृत्यां लक्षाणामेकसप्ततिः ॥ ७९ ॥
चतुःषष्टिशतान्यष्टौ सहस्राण्यष्ट चैव च ।
सर्वेषां छन्दसां पिण्डं कोटयोऽत्र त्रयोदश ॥ ८० ॥
शतानि सप्त सप्तैव सहस्राणि दशैव च ।
तथा शतसहस्राणां द्विचत्वारिंशदत्र हि ॥ ८१ ॥
षड्विंशतिश्च वृत्तानामित्थं चान्यत् समुच्यते ।
सर्वेषां छन्दसामेवं वृत्तांशं कथितं मया ॥ ८२ ॥
एतेषां तु पुनर्ज्ञेयं त्रिकैर्वृत्तप्रवर्तनम् ।
एकं वा विंशतिर्वापि सहस्रं कोटिमेव च ॥ ८३ ॥
सर्वेषां छन्दसामेषां वृत्तानां वा द्विजोत्तमाः ।
ज्ञेयाश्चाष्टौ त्रिकास्तत्र स्वसंज्ञाभिः पृथक् पृथक् ॥ ८४ ॥
त्रीण्यक्षराणि विज्ञेयस्त्रिकोशः परिकल्पितः ।
गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः ॥ ८५ ॥
गुरुपूर्वो भकारः स्यान्मकारस्तु गुरुत्रिकम् ।
जकारो गुरुमध्यस्थः सकारोऽन्तगुरुस्तथा ॥ ८६ ॥
लघुमध्यस्थितो रेफस्तकारोऽन्तलघुः परः ।
लघुपूर्वो यकारस्तु नकारस्तु लघुत्रयम् ॥ ८७ ॥

एते ह्यष्टौ त्रिकाः प्राज्ञैर्विज्ञेया ब्रह्मसंभवाः ।
लाघवार्थं पुनरमी छन्दोमानमवेक्ष्य च ॥ ८८ ॥
अस्वराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणे ।
गुर्वेकं गिति विज्ञेयं तथा लघु मि(लि?)ति स्मृतम् ॥ ८९ ॥
नियतः पदविच्छेदो यतिरित्यभिधीयते ।
गुरुर्दीर्घं प्लुतश्चैव संयोगपरमेव च ॥ ९० ॥
सानुस्वारविसर्गश्च तथान्यच्च लघु क्वचित् ।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः ॥ ९१ ॥
दिव्यो दिव्यतरश्चैव दिव्यमानुष एव च ।
गायत्र्युष्णिगनुष्टुब् च बृहती पङ्क्तिरेव च ॥ ९२ ॥
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ।
तथातिजगती चैव शक्करी चातिशक्करी ॥ ९३ ॥
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणा(?) ।
कृतिश्च प्रकृतिश्चैव व्याकृतिर्विकृतिस्तथा ॥ ९४ ॥
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा ।
गायत्री द्वौ त्रिकौ ज्ञेयौ उष्णिक् चैकाधिकाक्षरा ॥ ९५ ॥
अनुष्टुप् द्व्यधिका चैव बृहती च त्रिकास्त्रयः ।
एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा ॥ ९६ ॥
चतुस्त्रिका तु जगती सैकातिजगती पुनः ।
शक्करी द्व्यधिका चैव त्रिकाः पञ्चातिशक्करी ॥ ९७ ॥
एकाधिकाक्षराष्टिश्च द्व्यधिकात्यष्टिरुच्यते ।
षट्त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ॥ ९८ ॥
कृतिश्च द्व्यधिका प्रोक्ता प्रकृतिः सप्त वै त्रिकाः ।
आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ॥ ९९ ॥
अष्ट त्रिकाः संकृतिः स्यात् सैका चाभिकृतिः पुनः ।
उत्कृतिर्द्व्यधिका चैव विज्ञेया गणसारतः ॥ १०० ॥
अत ऊर्ध्वं तु पादानां मात्रावृत्ताश्रिता गणाः ।

एवं तु छन्दसामेषां प्रस्तारविधिसंश्रयम् ॥ १०१ ॥
लक्षणं संप्रवक्ष्यामि नष्टोद्दिष्टं तथैव च ।
प्रस्ताराक्षरनिर्दिष्टसमावुक्तस्तथैव च ॥ १०२ ॥
द्विकौ ग्लाविति वर्णोक्तौ न्द्रोचेत्यपि (?) मातृका ।
गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ॥ १०३ ॥
अग्रतस्तु समो देया (यो?) गुरवः पृष्ठतस्तथा ।
प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् ॥ १०४ ॥
वृत्तं तु सर्वछन्दःसु प्रस्तारविधिरेव तु ।
गुर्वधस्ताल्लघु न्यस्य तथा द्विद्विय(र्य)थोदितम् ॥ १०५ ॥
न्यसेत् प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्याविनिर्दिष्टो गणैर्मात्राविकल्पितः ॥ १०६ ॥
शिष्टो ग्लाविति विज्ञेयः पृथक्कक्ष्याविभागतः ।
मात्रागणो गुरुश्चैव लघुनीलविलक्षितैः (?) ॥ १०७ ॥
आर्याणां च सकृन्मात्राप्रस्तारे परिकल्पितः ।
प्राकृतः प्रकृतीनां तु पञ्चमात्रो गणः स्मृतः ॥ १०८ ॥
[1]यं पुरस्कृत्य षण्मात्राः स्युस्तथैव च त्र्यक्षराः ।
उक्ताद्यास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥ १०९ ॥
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ।
अन्त्याद्द्विगुणिताद्रूपाद्द्विद्विरेवं[2] गुरोर्भवेत् ॥ ११० ॥
द्विगुणं च लघोः कृत्वा संख्यां पिण्डेन योजयेत् ।
आद्यं सर्वगुरु ज्ञेयं[3] वृत्तं तु समसंश्रितम्[4] ॥ १११ ॥
[5]कोशे तु सर्वलघ्वन्त्यमिश्रैः[6] शेषाणि सर्वतः ।

---

१. 'वैतालीयं पुरस्कृत्य षण्मात्राद्यास्तथैव च ।
त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥' इति का-पुस्तके.
२. 'द्विद्विरेकं गुरोर्हरेत्' क-ख. ३. 'ज्ञेयं' इति त्रुटितं क-ख-पुस्तकयोः. ४. 'समसंज्ञितम्' क-ख. ५. 'कोशे' क-ख. ६. 'सर्वलघ्वन्तं' क-ख.

नै[1]धनादङ्कमेकैकं प्रातिलोम्यक्रियात्मकम् ॥ ११२ ॥
सर्वेषां छन्दसामेव लघ्वक्षरविनिश्चितम् ।
जानीत सर्ववृत्तानां संख्यां संक्षेपतस्तथा ॥ ११३ ॥
ए[2]काधिकां तथा संख्यां सदृशां विनिवेशयेत् ।
यावच्चरणं तु पूर्वेण पूरयेदुत्तरं गणम् ॥ ११४ ॥
ए[3]वं कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् ।
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा ॥ ११५ ॥
वृ[4]त्तानां तु समानानां संख्यां संयोज्य तावतीम् ।
राश्यूनामर्धविषमां समानां दश निर्दिशेत् ॥ ११६ ॥
तदर्धविषमाणां द्विः संख्यां कृत्वा तु तावतीम् ।
राश्यूनामत्र जानीत विषमाणां समासतः ॥ ११७ ॥
वृत्ता[5]र्धपरिमाणं तु च्छित्त्वार्धेन यथा[6]क्रमम् ।
[7]न्यसेत्तथा सैकवृत्ते..........कं गुरु वाप्यथ ॥ ११८ ॥
एवं विन्यस्य वृत्तानां [8]नष्टोद्दिष्टं विभागतः ।
गुरुलघ्वक्षराणीह सर्वं छ[9]न्दःसु दर्शयेत् ॥ ११९ ॥

---

१. का-पुस्तकेऽत्रैतत्सार्धश्लोकस्थाने—
'वृत्तानां तु समानानां संख्यां संयोज्य तावतीम् ।
राश्यूनामर्धविषमं समासादिति निर्दिशेत् ॥'
एतत्पद्यं वर्तते. २. का-पुस्तकेऽत्र—
'एकाद्यां च तथा संख्यां छन्दसो विनिवेश्य च ।
यावत् पूर्वं तु पूर्वेण पूरयेदुत्तरस्तथा ॥'
३. का-पुस्तकेऽत्र—
'एवं कुर्यात्तु सर्वेषां पूर्वं पूर्वस्य पूरणम् ।
क्रमान्नैधनमेकैकं प्रतिलोमं विसर्जयेत् ॥
सर्वेषां छन्दसां वक्ष्ये लघ्वक्षरविनिश्चयम् ।'
इत्यधिकः सार्धश्लोकः. ४. इतोऽग्रे वर्तमाना श्लोकद्वयी का-पुस्तके नास्ति । ५. 'वृत्ताङ्गपरिमाणं' का. ६. 'गुरुं न्यसेत्' का. ७. 'न्यसेल्लघु तथा सैकं छित्त्वार्धेन गुरुं न्यसेत् ।' का. ८. 'नष्टोद्दिष्टविभागतः' का. ९. 'सर्वछन्दःसु' का.

[ इति[1] छन्दांसि जातानि मयोक्तानि द्विजोत्तमाः ।
ध्रुवान्ये ( ण्ये ) तेषु नाट्येऽस्मिन् प्रयोज्यानि निबोधत ॥१२०॥]

इति[2] श्रीभारतीये नाट्यशास्त्रे वाचिकाभिनये छन्दोविधानं नाम चतुर्दशोऽध्यायः ।

---

अथ पञ्चदशोऽध्यायः ।

इति च्छन्दांसि यानीह मयोक्तानि द्विजोत्तमाः ।
वृत्तान्येतेषु नाट्येऽस्मिन्प्रयोज्यानि निबोधत ॥ १ ॥

आद्ये[3] पुनरन्त्ये द्वे द्वे गुरुणी चेत् ।
सा[4] स्यात्तनुमध्या गायत्रसमुत्था ॥ २ ॥

यथा[5]— 'संत्यक्त[6]विभूषा भ्रष्टाञ्जननेत्रा ।
हस्तार्पितवक्त्रा किंचित्तनुमध्या ॥ ३ ॥'

लघुगण आद्यो भवति चतुष्कः[7] ।
गुरुयुगमन्त्ये मकर[8][क]शीर्षा ॥ ४ ॥

यथा— 'स्वयमुपर्यान्तं[9] भजसि न कान्तं[10] ।
भव करिकित्वं[11](?) मकरकशीर्षा ॥ ५ ॥

षडक्षर[12]कृते पादे लघु यत्र द्वितीयकम् ।
शेषाणि तु गुरूणि स्युर्मालिनी सा मता यथा ॥ ६ ॥

[यथा—] 'स्नानगन्धस्त्रग्भि[13]र्वस्त्रभूषायोगैः ।
व्यक्तमेवैषा त्वं मालिनी प्रख्याता ॥ ७ ॥'

द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु ।
यस्याः सप्ताक्षरे पादे सा ज्ञेया तूद्धता यथा ॥ ८ ॥

'दन्तघातकृताङ्कं व्याकुलालकशोभम् ।
शंसतीव तवास्यं युद्धमुद्धतवेषम् ॥ ९ ॥'

---

१. एतत्पद्यं क-ख-पुस्तकयोर्नास्ति. २. 'इति भारतीये नाट्यशास्त्रे वाचिकाभिनयच्छन्दोविभागो नाम पञ्चदशोऽध्यायः' इति का-पुस्तके. ३. अत्र चरणान्ते विशेषेण विश्रामः कर्तव्य इत्याम्नायः. ४. 'वृत्तं तनुमध्या' का. ५. 'यथा' इति क-ख-पुस्तकयोर्नास्ति. ६. 'संत्यक्तभूषणा' का. ७. 'चतुष्के' का. ८. इदं वृत्तं ग्रन्थान्तरे शशिवदनानाम्ना व्यवह्रियते. ९. 'यातां' क-ख. १०. 'कान्तां' क-ख. ११. 'भयकरिकिञ्च' का. १२. '०क्षर क्षात' (?) क-ख. १३. 'द्विजैः' क-ख.

आदौ द्वे निधने चैव गुरुणी यत्र वै सदा।
पादे सप्ताक्षरे ज्ञेया सा तु भ्रमरमालिका ॥ १० ॥

यथा— 'नानाकुसुमचित्रे प्राप्ते सुरभिमासे।
एषा भ्रमति पुष्पे मत्ता भ्रमरमाला ॥ ११ ॥

आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा।
गुरूण्यष्टाक्षरे पादे सिंहलीलेति सा स्मृता ॥ १२ ॥

यत्त्वया ह्यनेकभावचेष्टितं रतं सुगात्रि।
तन्मनो मम प्रविष्टं वृत्तमत्र सिंहलीलम् ॥ १३ ॥

चतुर्थं च द्वितीयं च षष्ठमष्टममेव च।
गुरूण्यष्टाक्षरे पादे वदन्ति मत्तचेष्टितम् ॥ १४ ॥

यथा— 'मदावघूर्णितेक्षणं विलम्बिताकुलालकम्।
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् ॥ १५ ॥'

अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि।
गुरूणि यस्मिन्सा नाम्ना विद्युल्लेखेति संज्ञिता ॥ १६ ॥

[यथा—] 'अम्भोभारैरानदद्भिः श्यामाम्भोदैर्व्याप्ते व्योम्नि।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युल्लेखा ॥ १७ ॥'

नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि तु।

---

१. 'वैरिवारणान्तकारिन् वीर तावकं स्तुवन्ति।
जन्यकानने करालं वृत्तमत्र सिंहलीलम् ॥' इति पाठान्तरम्.

२. 'अनेकभावात्' का. ३. 'विलम्बितालकाकुलम्' का. ४. काशीमुद्रितपुस्तके क. पुस्तकस्थः पाठस्तु—
'पादौ जरौ सलौ गकार एव च स्थितम्।
अनुष्टुबुद्भवं तथा वदन्ति मत्तचेष्टितम् ॥'

५. का० मु० पुस्तके क-पुस्तकस्थः पाठः—
'मौ गौ चान्त्यौ यस्याः पादे पादस्यान्ते विच्छेदश्च।
सा चानुष्टुप् छन्दस्युक्ता नित्या सद्भिर्विद्युन्माला ॥'

६. अस्य च्छन्दसो विद्युन्मालेति नामान्तरम्. ७. 'सान्द्राम्भोभिर्नीनाम्भोदैः' का.

८. का० मु० पुस्तके क-पुस्तकस्थः पाठः—
'षडिह लघूनि स्युर्निधनगतमकारश्चेत्।
बुधजनसंस्था बृहती भवति मधुकरीनाम्ना ॥'

गुरूणि यस्यां सा नाम्ना भवेन्मधुकरी यथा ॥ १८ ॥

[यथा—] 'कुसुमितमभि[1]पश्यन्ती विविधतरुगणैश्छन्नम् ।
नवनलिनसुगन्धाढ्यं भ्रमति मधुकरी हृष्टा ॥ १९ ॥'

[2]दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिनी ॥ २० ॥

यथा — 'असिते भ्रमरनिभे कान्ते
नानारत्नरचितभूषाढ्ये ।
शोभा[3]मावहति शुभा मूर्ध्नि
प्रोत्फुल्ला कुवलयमालेयम् ॥ २१ ॥

[4]द्वितीयं च चतुर्थं च षष्ठमष्टममेव च ।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी ॥ २२ ॥

यथा— 'नैव तेऽस्ति संगमो मनुष्यै-
र्नापि [5]कामभोगचिह्नमन्यत् ।
गर्भिणीव[6] दृश्यसे ह्यनार्ये
किं सत्वरसारिणी(?) त्वमेव ॥ २३ ॥'

[7]प्रथमं च चतुर्थं च सप्तमं दशमं गुरु ।
अन्त्यं च त्रैष्टुभे पादे यत्र स्याद्दोधकं तु तत् ॥ २४ ॥

---

१. 'अपश्यन्ती' का. २. का० मु० पुस्तके ख. पुस्तकस्थः पाठः—
'त्रीण्यादौ यदि हि गुरूणि स्युः चत्वारो यदि लघवो मध्ये ।
पङ्क्तावन्तर्गतमकारः स्याद् विज्ञेया कुवलयमाला सा ॥
३. तृतीयोऽयं पादः क-ख. पुस्तकयोस्त्रुटितः ४. का० मु० पुस्तके क.पुस्तकस्थः पाठः—
'जौ त्रिकौ तु पादगौ च यस्या गौं च संश्रितौ तथा समस्तौ ।
पङ्क्तियोगसुप्रतिष्ठिताङ्गा सा मयूरसारणीति नाम्ना ॥'
५. 'नापि' का. ६. 'च' क-ख. ७. का० मु० पुस्तके क-पुस्तकस्थः पाठः—
'भौ तु भगौ गिति यस्य गुणाः सा स्याच्च यतिस्त्रिचतुर्भिरथोक्ता ।
त्रैष्टुभमेव च यत्खलु नाम्ना दोधकवृत्तमिति प्रवदन्ति ॥'

यथा— 'प्रस्खलिताग्रपदप्रविचारं मत्तविघूर्णितगात्रविलासम्[1]।
पश्य विलासिनि कुञ्जरमेतं[2] दोधकवृत्तगतिं प्रकरोति ॥ २५ ॥'
आदौ द्वे पञ्चमं चैवाप्यष्टमं नैधनं तथा।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥ २६ ॥
'एषोऽम्बुदनिःस्वनतुल्यरवः
क्षीबः[3] [स्खलदङ्ग]विलम्बगतिः।
श्रुत्वा घनगर्जितमद्रितटे
वृक्षान्प्रतिमोटयति द्विरदः ॥ २७ ॥'
नवमं सप्तमं षष्ठं तृतीयं च लघून्यथ।
यत्रैकादशके पाद इन्द्रवज्रेति सा यथा ॥ २८ ॥
[यथा—] 'चन्द्रं निरीक्ष्यादुरितस्वभावा
दुःखेन[4] साध्या कठिनौ स्तनौ ते।
सर्वास्ववस्थासु च कामतन्त्रे
योग्यासि किंवा बहुनेन्द्रवज्रा[5] ॥ २९ ॥'
एभिरेव तु संयुक्ता लघुभिस्त्रैष्टुभी यदा।
उपेन्द्रवज्रा विज्ञेया लघ्वाद्यमिह[6] केवलम् ॥ ३० ॥
यथा— 'प्रेम्णा श्रिया[7] वर्णविशेषणेन
सितेन कान्त्या सुकुमारभावात्।
अमी गुणा रूपगुणानुरूपा[8]
वसन्ति[9] ते किं त्वमुपेन्द्रवज्रा ॥ ३१ ॥'
षष्ठं[10] च नवमं चैव लघूनि[11] त्रैष्टुभे यदि।
गुरूण्यन्यानि[12] पादेषु सा ज्ञेया शालिनी यथा ॥ ३२ ॥

---

१. '°विनामम्' का. २. '°मेनं' का. ३. 'क्षणस्खलमानविडम्बगतिः' का; 'विलम्बमानगतीः' क-ख. ४. 'दुःखैकसाध्या कठिनस्वभावा' का. ५. '°न्द्रवज्रे' का. ६. 'लघ्वाद्य°' का. ७. 'श्रिया च वर्णेन विशेषणेन' का. ८. '°गणानुरूपा' का. ९. 'भवन्ति' का. १०. अत्र काशीमुद्रितपुस्तके पूर्वं रथोद्धतास्वागतयोर्लक्षणोदाहरणे तदुत्तरं शालिन्याः. ११. 'लघु स्यात्' का. १२. 'चतुर्भिराद्यैर्विच्छेदः' का.

'दुःशीलं[1] स्यादल्पकं वा सुशीलं
लोके धैर्यादप्रियं न ब्रवीति[2] ।
तस्माच्छीलं[3] साधुहेतोः सुवृत्तं
माधुर्यार्थं सर्वथा शालिनीव ॥ ३३ ॥'

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा ।
गुरूण्येकादशे पादे यत्र सा तु रथोद्धता ॥ ३४ ॥

यथा— 'किं त्वया सुभट दूरवर्जितं
नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते
याति धूलिरधुना रथोद्धता ॥ ३५ ॥'

आद्यं तृतीयमन्त्यं च दशमं सप्तमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र सा स्वागता यथा ॥ ३६ ॥

'अद्य मे सफलमायतनेत्रे
जीवितं मदनसंस्कृतभावम्[4] ।
आगतासि भवनं[5] मम यस्मा-
त्स्वागतं तव वरोरु निषीद[6] ॥ ३७ ॥'

षष्ठं[7] तृतीयं नवमं गुरूण्यन्त्यमथापि वा ।
यत्र तु द्वादशे पादे तज्ज्ञेयं तोटकं बुधैः ॥ ३८ ॥

यथा— 'किमिदं कपटाश्रयदुर्विषहं
बहुगण्डमिवोल्बणरूक्षपथम्[8] ।

---

१. 'शीलभ्रष्टे निर्गुणे या प्रकोपा°' का. २. 'ब्रवीषि' का. ३. 'आर्ये शीलं साध्वि हेतोऽनुवृत्तं माधुर्यात् स्यात् सर्वथा शालिनी त्वम्' का. ४. '°संश्रित°' का. ५. 'सदनं' का. ६. 'निपीड' क-ख. ७. का. मु. पुस्तके क-पुस्तकस्थं तोटकलक्षणम्—

'त्रिकसोऽत्र भवेत्तु समुद्रसम-
त्रिषु चापि तथा नियमेन यतिः ।
सततं जगती विहितं हि ततो
गदितं खलु तोटकवृत्तमिदम् ॥'

८. 'बहुगर्जमिवोद्गणरूक्षकथम्' का.

सुजनप्रियदुर्जनभेदकरं
ननु तोटकवृत्तमिदं प्रकुरु ॥ ३९ ॥'
तृतीयमन्त्यं नवमं पञ्चमं च यदा गुरु ।
द्वादशाक्षरके पादे तदा स्यात्प्रमिताक्षरा ॥ ४० ॥
यथा— 'स्मितहासिनी ह्यचपलापरुषा
निभृतापवादविमुखा सततम् ।
अयि कस्यचिद्युवतिरस्ति सुखा
प्रमिताक्षरां स हि पुमाञ्जगति ॥ ४१ ॥'
द्वितीयमन्त्यं दशमं चतुर्थं पञ्चमाष्टमे ।
गुरूणि द्वादशे पादे वंशस्थं जगती तु सा ॥ ४२ ॥

---

१. 'कुरुषे' का. २. का. मु. पुस्तकेऽत्र कुमुदनिभाचन्द्रलेखयोर्लक्षणोदाहरणेऽधिके—
'यदि खलु पादे न्यौ त्रिकौ तथायौ
यतिरपि वर्णैः षड्भिरेव चेत् स्यात् ।
जगति विधाने नित्यसन्निविष्टा
कुमुदनिभा सा नामतः प्रसिद्धा ॥
यथा— 'कुमुदनिभा त्वं कामबाणविद्धा
किमसि नतभ्रूः शीतवातदग्धा ।
मृदुनलिनीव पाण्डुवक्त्रशोभा
कथमसि जाता अग्रतः सखीनाम् ॥'
३. 'हासिनी' इति त्रुटितं क-ख. पुस्तकयोः.
द्वादशाक्षरके पादे सप्तमं दशमं लघु ।
आदौ पञ्चाक्षरे छेदश्चन्द्रलेखेति सा यथा ॥
'वक्त्रं सौम्यं ते पद्मपत्त्रायताक्षं
कामस्याभासं स्वभ्रुवोश्चापभासम् ।
कामस्यापीदं काममाहर्तुकामं
कान्त्या त्वं कान्ते चन्द्रलेखेव भासि ॥'
४. 'विमुखी' का. ५. '°सुखा' इति त्रुटितं क-ख-पुस्तकयोः. ६. 'जयति' क-ख. ७. 'पञ्चमाष्टमम्' क-ख. ८. जगतीलक्षणं क-पुस्तके त्वेवम् 'यदा त्रिकौ ज्तौ भवतस्तु पादतस्तथैव च ज्राववसानसंज्ञितौ । तदा हि वृत्तं जगतीप्रतिष्ठितं वदन्ति वंशस्थमितीह नामतः ॥'.

यथा— 'न मे प्रियं[1] यद्बहुमानवर्जिता
कृता प्रिया[2] ते परुषातिभाषणैः[3] ।
तथा च पश्याम्यहमद्य विग्रहं[4]
ध्रुवं हि[5] वंशस्थगता[6] करिष्यति ॥ ४३ ॥'

चतुर्थमन्त्यं दशमं सप्तमं च यदा गुरु ।
भवेद्धि जागते पादे तदा स्याद्धरिणीप्लुता[7] ॥ ४४ ॥

यथा[8]— 'परुषवाक्यकर्कशाभिहिता[9] त्वया
भयविलोकनपार्श्वनिरीक्षणा ।
वरतनुः प्रततप्लुतसर्पणै-
रनुकरोति गतैर्हरिणीप्लुतम्[10] ॥ ४५ ॥'

सप्तमं नवमं चान्त्यमुपान्त्यं च यदा गुरु ।
द्वादशाक्षरके पादे काममत्तेति[11] सा यथा ॥ ४६ ॥

यथा— 'करजपदविभूषिता यथा त्वं
सुदति दशनविक्षताधरा च ।
गतिरपि चरणारविन्दे[12]मन्दा
त्वमसि मृग[13]समाक्षि काममत्ता ॥ ४७ ॥'

आद्यं चतुर्थं दशमं सप्तमं च यदा लघु ।
द्वादशाक्षरके पादे अप्रमेया तु[14] सा यथा[15] ॥ ४८ ॥

यथा— 'न ते काचिदन्या समा दृश्यते स्त्री
गुणैर्यद्द्वितीया तृतीयापि चास्मिन् ।
ममेयं मतिर्लोकमालोक्य सर्वं
जगत्यप्रमेयासि सृष्टा विधात्रा ॥ ४९ ॥'

---

१. 'प्रिया' का. २. 'प्रिये' का. ३. '०भिभाषणैः' का. ४. 'विक्रमं' का. ५. 'स' का. ६. 'वंशस्थगतिः' का. ७. 'हरिणप्लुता' का. ८. 'कथा' क. ९. '०भिहता' का. १०. 'हरिणप्लुतम्' का. ११. 'स्मृता' का. १२. '०वलग्नमन्दा' का. १३. '...मृगाक्षि' क-ख. १४. 'तथाहि सा' का. १५. 'कथा' क. वृत्तमिदं ग्रन्थान्तरे भुजङ्गप्रायातनाम्ना ख्यातम्.

द्वितीयं पञ्चमं चैव अष्टमैकादशं तथा[1] ।
पादे यत्र लघूनि स्युः पद्मिनी नाम सा तथा ॥ ५० ॥

यथा— 'देहतोयाशया वक्त्रपद्मोज्ज्वला
नेत्रभृङ्गाकुला दन्तहंसैः श्रिता ।
केशपाशच्छदा चक्रवाकस्तनी
पद्मिनीव प्रिये भासि मे सर्वदा ॥ ५१ ॥'

'यदि चरणनिविष्टौ नौ तथा म्यौ
यति विधिरपि युक्त्याष्टाभिरिष्टः ।
भवति च जगतीस्थः सर्वदा यः
स इह हि पुटवृत्तं नामतस्तु ॥ ५२ ॥'

यथा— 'उपवनसलिलानां बालपद्मै-
र्भ्रमरपरभृतानां कण्ठनादैः ।
समदगतिविलासैः कामिनीनां
कथयति पुटवृत्तं पुष्पवासः ॥ ५३ ॥'

द्वितीयं च चतुर्थं च नवमैकादशे गुरु ।
विच्छेदोऽतिजगत्यां च चतुर्भिः सा प्रभावती ॥ ५४ ॥

यथा— 'कथं त्विमं कमलविशाललोचने
गृहं घनैः पिहितकरे निशाकरे ।
अचिन्तयन्त्यभिनववर्षविद्युते
समागता सुतनु यथा प्रभावती ॥ ५५ ॥'

त्रीण्यादावष्टमोपान्त्ये दशमं नैधनं तथा ।
गुरूण्यतिजगत्यां तु त्रिभिश्छेदैः प्रहर्षिणी ॥ ५६ ॥

---

१. का. पुस्तकटिप्पण्यामेवमेतल्लक्षणम्—
'राशिकाः सागराख्या निविष्टा यदि
स्युस्त्रिके युक्तरूपा यतिर्दृश्यते ।
सन्निविष्टा जगत्यां मता सा बुधै-
र्नामतश्चापि संकीर्त्यते पद्मिनी ॥'

यथा— 'भावस्थैर्मधुरकथैः सुभाषितैस्त्वं
　　साटोपस्खलितविलम्बितैर्गतैश्च ।
नानाङ्गैर्हरसि मनांसि कामुकानां
　　सुव्यक्तं ह्यसि जगति प्रहर्षिणीव ॥ ५७ ॥'

षष्ठं च सप्तमं चैव दशमैकादशं लघु ।
त्रयोदशाक्षरे पादे ज्ञेयं मत्तमयूरकम् ॥ ५८ ॥

यथा— 'विद्युन्[illegible] सेन्द्रधनुर्द्योतितदेहा
　　[illegible]तबलाकाकृतशोभाः ।
[illegible]ोज्ज्वलचिह्नाः
　　[illegible]थयन्ति ॥ ५९ ॥'

[illegible] गुरु ।
[illegible]सन्ता[illegible]का यथा ॥ ६० ॥

'[illegible]
　　[illegible] ।
नागावतंस[illegible]भूषितगण्डपाली
　　साक्षाद्वसन्ततिलकेव विभाति नारी ॥ ६१ ॥'

पञ्चादौ शकरीपादे गुरूणि त्रीणि चान्ततः ।
पञ्चाक्षरादौ च यतिरसंबाधा तु सा स्मृता ॥ ६२ ॥

यथा— 'मानालोकज्ञः सुतबलकुलशीलाढ्यो
　　यस्मिन् संमानं न सदृशमनुपश्येद्धि ।
गच्छेत्तं त्यक्त्वा द्रुततगतिरपरं देशं
　　कीर्णा नानार्थैरवनिरियमसंबाधा ॥ ६३ ॥'

आदौ चतुर्गुरूणि स्युर्दशमैकादशे तथा ।
आन्त्योपान्त्ये तु शक्वर्याः पादे तु शरभा यथा ॥ ६४ ॥

'एषा कान्ता व्रजति ललिता वेपमाना
　　गुल्मच्छन्नं वनमुरुनगैः संप्रविद्धम् ।

हाहा कष्टं किमिदमिति नो वेद्मि मूढो
व्यक्तं क्रोधाच्छरभललितं कर्तुकामा ॥ ६५ ॥'

आदौ षड् दशमं चैव लघु चैव त्रयोदशम्[1]।
यत्र पञ्चदशे पादे ज्ञेया नान्दीमुखी[2] तु सा ॥ ६६ ॥

यथा— 'न खलु तव कदाचित्क्रोधताम्रायताक्षं
भ्रुकुटि[3]वलितभङ्गं दृष्टपूर्वं मयास्यम्।
किमिह बहुभिरुक्तैर्या ममेच्छा [illegible]दिस्था
त्वमसि मधुरवाक्या[4] दे[illegible] ॥ ६७ ॥'

आद्यं[5] षष्ठं चतुर्थं च नैधनं [illegible]
षोडशाक्षरके पादे [illegible] ॥ ६८ ॥
[illegible]तामिवेति[6] ॥

यथा— 'तोयधरैः[7] [illegible] कलभपरिवृतः [illegible]
सर्जकद[illegible]कुसुमभरन[illegible]
कन्दलमिन्द्रगोपक[10]रचित[illegible]वसम[illegible]
[illegible] ॥ ६९ ॥'

[illegible] कु[illegible]
[illegible]शम्।
अन्त्ये[13] द्वे यत्र दीर्घाणि प्रवर[illegible]ललितं हि तत् ॥ [illegible] ॥

---

१. 'लघूनि स्युस्त्रयोदश' का. २. 'नान्दीमुखीति' का. वृत्तमेतद्ग्रन्थान्तरे मालिनीनाम्ना प्रसिद्धम्. ३. '°चलित°' क-ख. ४. '°वाक्यादेव' क-ख. ५. 'च' क-ख. ६. लक्षणमिदं काशीमुद्रितपुस्तकटिप्पण्यामेवम्—

'भ्रौ यदि नाश्च नित्यमिह विरचितचरणाः
गश्च तथात्र संभवति निधनमुपगतः।
स्यादपि चाष्टिमेव (छंमे च ?) यदि सततमनुगतं
तत् खलु वृत्तमग्रवृषभगजविलसितम् ॥'

७. 'तोयधरैः' क-ख. ८. '°रवैः' क-ख. ९. 'सुरभिः' क-ख. १०. '°सेन्द्रगोप°' का. ११. 'विलसितम्' क-ख. १२. काशीमुद्रितपुस्तकटिप्पण्यां लक्षणमेवम्—

'यदा य्मौ पादस्थौ भवत इह चेत् न्सौ तथा गौ
तथा षड्भिश्चान्त्यैर्यतिरपि पुनर्यथा स्यात्।
तदप्यष्टौ वृत्ते समनुगतमेवोक्तमन्यैः
प्रयोगज्ञैर्वृत्तं प्रवरललितं नामतस्तु ॥'

१३. 'अन्ये' क-ख.

यथा— 'नखालीढं गात्रं विकचदशनं[1] चोष्ठगण्डं
शिरः पुष्पोन्मिश्रं प्रतिलुलितकेशालकान्तम् ।
गतिर्मन्दायामा[2] वदनमपि संभ्रान्तनेत्र-
महो श्लाघ्यं वृत्तं प्रवरललितं कामचेष्टम्[3] ॥ ७१ ॥'

आद्यात्पराणि[4] पञ्चैवं[5] द्वादशं सत्रयोदशम् ।
अन्त्यं सप्तदशे पादे शिखरिण्यां गुरूणि च ॥ ७२ ॥

यथा— 'महानद्याभोगे[6] पुलिनमिव ते भाति जघनं
तथास्यं[7] नेत्राढ्यं भ्रमरसहितं पङ्कजमिव ।
तनुस्पर्शश्चायं सुतनु सुकुमारो न परुषः
[illegible]भ्यां तुङ्गाभ्यां शिखरिणिनिभा[8] भासि दयिते ॥ ७३ ॥'

यत्र[9] [illegible]न्ते संक्ष[illegible]ौ त्रयोदशचतुर्दशे ।
[illegible]सप्तदशं चैव षोड[illegible][10]याद्वृषभचेष्टितम् ॥ ७४ ॥

यथा— 'जल[illegible]ग्रगं चैव [illegible]दर्पसरोत्सवलालितो[11]
[illegible]च गु[illegible] महीं दर्पाच्छृङ्गैर्मुहुः प्रतिनर्द्य च ।
स्वयवति [illegible] गोष्ठाद्गोष्ठं[12] प्रयाति च निर्भयो[13]
वृषभललितं[14] चित्रं वृत्तं करोति च शाद्वले[15] ॥ ७५ ॥'

---

१. 'दशननिहितं' का. २. 'मन्दा चैवं' का. ३. 'कामचेष्टाम्' का. ४. काशीमुद्रितपुस्तकटिप्पण्यां लक्षणमिदम्—

'चतुर्भिस्तस्यैव प्रवरललितस्य त्रिकगणै-
र्यदालौ गश्चान्ते भवति चरणेऽत्यष्टिगदिते ।
यदा षड्भिश्छेदो भवति यतिमार्गे विरचित-
स्तदा वृत्तेष्वेषा खलु शिखरिणी नाम गदिता ॥'

५. '°...श्चैव' क-ख. ६. '°नद्याभोगं' क-ख. ७. '°सन्नेत्राढ्यं' क-ख. ८. 'शिखरिणि ममाभासि' क-ख. ९. काशीमुद्रितपुस्तकटिप्पण्यां तु—

'यदि हि चरणौ स्नौ म्रौ सौ गः क्रमाद्विनिवेशिताः
यदि खलु यतिः षड्भिर्वर्णैस्तथा दशभिः पुनः ।
यदि च विहितं स्यादप्यष्टिप्रयोगसुखाश्रयं
वृषभललितं वृत्तं ज्ञेयं तथा हरिणीति वा ॥'

१०. ग्रन्थान्तरेऽस्य च्छन्दसो हरिणीनाम्ना प्रसिद्धिः. ११. 'गर्जन्मदोच्चयदर्पितो' का. १२. 'गोष्ठोपगोष्ठं' का. १३. 'नो भिया' क-ख. १४. 'ललितमृषभः' इति पाठो युक्तः. १५. 'शाद्वले' का.

चत्वार्यादौ[1] च दशमं गुरूण्यथ त्रयोदशम् ।
चतुर्दशं तथा[2] पञ्च एकादशमथापि च ॥ ७६ ॥
यदा सप्तदशे पादे शेषाणि तु लघून्यपि ।
भवन्ति यस्मिन्सा ज्ञेया श्रीधरा[3] नामतो यथा ॥ ७७ ॥

यथा— 'स्नानैश्चूर्णैः सुखसुरभिभिर्गन्धसारैश्च धूपैः[4]
पुष्पैर्माल्यैः[5] शिरसि रचितैर्वस्त्रयोगैश्च तैस्तैः ।
नानारत्नैः कनकखचितैरङ्गसंभोगसंस्थै-
र्व्यक्तं कान्ते कमलनिलये[6] श्रीधरा त्वं विभासि ॥७८॥'

आद्यं चतुर्थं षष्ठं च दशमं नैधनं गुरु ।
तद्वंशपत्रपतितं दशभिः स[illegible]थितः ॥

यथा— 'एष गजोऽद्रिमस्तकत[illegible] कलभपरिकृते ।
क्रीडति वृक्षगुल्मगहनेन्कुसु[illegible]
मेघरवं निशम्य मुदितैः[7] पवन[illegible] ॥ ७९ ॥
सुन्दरि वंशपत्रपतितं पुनर[illegible] ॥ ८० ॥'

द्वितीयमन्त्यं[8] षष्ठं च अष्टमं द्वादशं तथा ।
चतुर्दशं पञ्चदशं पादे सप्तदशाक्षरे ॥ ८१ ॥
भवन्ति यत्र दीर्घाणि शेषाणि च लघून्यथ ।
विलम्बितगतिस्तत्र विज्ञेया नामतो यथा ॥ ८२ ॥

---

१. 'मो भो नस्तौ चरणरचिता गश्च गोन्त्यप्रतिष्ठ-
श्छेदश्चेष्टो यदि च दशभिः स्यात्तथार्थैश्चतुर्भिः ।
अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा
विज्ञेया द्विजन्मनि (?) श्रीधरा नामतश्च ॥' इति का.

२. 'उपान्त्यान्त्ये' इति साधीयान्पाठः. ३. वृत्तमिदमन्यत्र मन्दाक्रान्ताख्यया प्रसिद्धम्. ४. 'गण्डलेपैः सुधूपैः' का. ५. '°श्चान्यैः' का. ६. 'कमलनिलया' का. ७. 'मुदितपवनजववशात्' का.

८. 'यदा द्विरुदितौ हि पादमभिसंश्रितौ ज्सौ त्रिकौ
तथैव च पुनस्तयोर्निधनमाश्रितौ ल्गौ सगौ ।
यथा तदाष्टिरिति पूर्विका यतिरपि स्वभावाद्
विलम्बितगतिस्तथा निगदिता द्विजैर्नामतः ॥'

[यथा—] 'विघूर्णितविलोचना पृथुविकीर्ण[1]हारा पुनः
प्रलम्बरसना स्खलल्ल[2]लितपादमन्दक्रमा ।
न मे प्रियमिदं जनस्य बहुमानरा[3]गेण यन्
मदेन विवशा विलम्बितगतिः कृता त्वं प्रिये ॥ ८३ ॥'
पश्चादौ पञ्च[4]दशमं द्वा[5]दशं सानुगं गुरु ।
चतुर्दशं त[6]था पञ्च चित्रलेखा धृतौ[7] स्मृता ॥ ८४ ॥
यथा— 'नानारत्नाढ्यैर्बहुभिरधिकं भूषणैरङ्गसंस्थै-
र्नानागन्धाढ्यैर्मदनजनकैरङ्गरागैर्विचित्रैः[8] ।
केशैः स्ना[9]नाढ्यैः कुसुमनिचितैर्वस्त्रवेषैश्च तैस्तैः
कान्ते संक्षे[10]पः किमिति बहुना चित्रलेखेव भासि ॥ ८५ ॥'
अन्त्यं सप्तदशं चैव षोडशं च चतुर्दशम् ।
द्वादशे साग्रगं चैव षष्ठमष्टममेव च ॥ ८६ ॥
त्रीण्यादौ च गुरूणि स्युर्यस्मिंस्त्वेकोनविंशके ।
पादे लघूनि शेषाणि त[11]च्छार्दूलविक्रीडितम् ॥ ८७ ॥
यथा— 'नानाशस्त्रशतघ्नितोमरहताः प्रभ्रष्टसर्वायुधा
निर्भिन्नोदरपा[12]दहस्तवदना निर्वासिताः शत्रवः ।
धैर्योत्साहपराक्रमप्रभृतिभिस्तैस्तैर्विचित्रैर्गुणै-
र्वृत्तं ते रिपुघाति भा[13]ति समरे शार्दूलविक्रीडितम् ॥ ८८ ॥'
चत्वार्यादौ च षष्ठं च सप्तमं सचतुर्दशम् ।
तथा पञ्चदशं चैव षोडशं नैधनं तथा ॥ ८९ ॥
एतानि तु गुरूणि स्युः शेषाणि तु लघून्यथ ।
पादे यत्र कृतौ ज्ञेया नाम्ना सु[14]वदना तु सा ॥ ९० ॥

---

१. '°विघूर्णहारा' का. २. '°चलत्' का. ३. 'बहुमान·········' क-ख ४. 'अवसाने द्वे' इति पाठः साधुः. 'पञ्चदशकं' का. ५. 'द्वादशैकादशे गुरु' का. ६. 'पञ्चदशं' इति पाठो युक्तः. 'तथान्त्ये द्वे' का. ७. 'बुधैः' का. ८. 'मदनजननैरङ्गहारैर्विचित्रैः' का. ९. 'स्नानार्द्रैः कुसुमरचितैर्वक्रारागैश्च तैस्तैः' का. १०. 'संक्षेपात् किमिह बहुना' का. ११. 'तत् स्यात्' का. १२. 'बाहुवक्त्रनयना निर्भर्त्सिताः' का. १३. 'लाति' क-ख. १४. अत्र सप्तसु षट्सु च यतिः.

यथा— 'नेत्रे लीलालसे ते कमलदलनिभे भ्रूचापनिहिते
गण्डौष्ठं पीनमध्यं सममहितघनं स्निग्धाश्च दशनाः ।
कर्णौ पार्श्वावलम्बौ चिबुकमपि नतं घोणा सुरुचिरा
सर्वस्मिन्मर्त्यलोके वरतनु विदितास्येका सुवदना ॥ ९१ ॥'

चत्वार्यादौ च षष्ठं च सप्तमं च चतुर्दशम् ।
अष्टादशं सप्तदशं तथा पञ्चदशं पुनः ॥ ९२ ॥

अन्त्योपान्त्ये गुरूण्यत्र लघून्यन्यानि सर्वदा ।
एकविंशतिके पादे स्रग्धरा नाम सा यथा ॥ ९३ ॥

'चूताशोकारविन्दैः कुरुबकतिलकैः कर्णिकारैः शिरीषैः
पुंनागैः पारिजातैर्बकुलकुवलयैः किंशुकैः सातिमुक्तैः ।
एतैर्नानाप्रकारैः कुसुमसुरभिभिर्विप्रकीर्णैश्च तैस्तै-
र्वासन्तैः पुष्पवृन्दैर्नरवर वसुधा स्रग्धरेवाद्य भाति ॥ ९४ ॥'

चतुर्थमाद्यं षष्ठं च दशमं द्वादशं तथा ।
षोडशाष्टादशे चैव नैधनं च गुरूण्यथ ॥ ९५ ॥

द्वाविंशत्यक्षरे पादे शेषाणि च लघूनि तु ।
भवन्ति यत्र तद् ज्ञेयं मद्रकं नामतो यथा ॥ ९६ ॥

'उन्नतमेकहस्तचरणं द्वितीयकररेचकं संललितं
वंशमृदङ्गवाद्यमधुरं विचित्रकरणान्वितं बहुविधम् ।

---

१. 'कमल······तिमे' क-ख. २. 'गण्डोष्ठं' का. ३. 'न तौ' का. ४. का-पुस्तके टिप्पण्याम्—

'भ्रौ भ्रौ यौ यश्च सम्यग् यदि हि विरचिताः स्युस्त्रिकाः पादयोगे
वर्णैः पूर्वोपदिष्टैर्यतिरपि च पुनः सप्तभिः सप्तभिः स्यात् ।
············प्रकृतिमनुगतन्तद्विवद्भिः (?) प्रदिष्टम् ।
विज्ञेया वृत्तजातौ कविवरदयिता स्रग्धरा नामतस्तु ॥'

५. 'सप्तदशं' इति क-ख-पुस्तकयोस्त्रुटितम्. ६. का-पुस्तके टिप्पण्याम्—

'भ्रौ चरणे यदा विनियतौ त्रिकौ क्रमवशादथाकृतिविधौ
नौ च ततः परश्च निगतौ तथा तदनु चार्पिता नरनगाः ।
स्याच्च दशाष्टवर्णैरन्विता यतिः पुनरिह प्रिया च विदुषां
श्रुतिसुखसमर्थसुभगं मद्रकवृत्तमेतदुदितं खलु ॥'

७. 'उत्फुल्लं' क-ख. 'उद्यतं' का. ८. 'सविनतं' क-ख.

मद्रकमेतदद्य सुभगैर्विदग्धगतिचेष्टितैः सललितै-
नृत्यसि विभ्रमाकुलपदं[1] वरोरु ललितक्रियं समरसम् ॥ ९७ ॥'

एकादशं सप्तदशं सप्तमं सत्रयोदशम् ।
अन्त्यमेकोनविंशं च पञ्चमं च गुरूण्यथ ॥ ९८ ॥
शेषाणि तु लघूनि[3] स्युर्विकृतौ चरणेषु च ।
वृत्तं तदश्वललितं विज्ञेयं नामतो यथा ॥ ९९ ॥

'[4]विविधतुरङ्गनागरथयोधसंकुलमलं बलं समुदितं
शरशतशक्तिकुन्तपरिघासियष्टिवितत[5]ं बहुप्रहरणम् ।
रिपुशतमुक्तशस्त्ररवभिन्नशङ्कितभटं भयाकुलमिदं
कृतमभिवीक्ष्य संयुगमुखे[6] समीप्सितगुणं तदश्वललितम् ॥१००॥'

षडादावष्टमं[7] चैव ह्येकादश[8]चतुर्दशे ।
विंशं सप्तदशं चैव त्रयोविंशं तथैव च ॥ १०१ ॥
एतानि च लघूनि स्युः शेषाणि च गुरूण्यथ ।
चतुर्विंशाक्षरे पादे मेघमालेति सा यथा ॥ १०२ ॥

'पवनजव[9]समाहृता तीव्रगंभीरनादा[10] बलाकावलीमेखला

---

१. 'सुविभ्रमाकुलपदं' क-ख. २. क-ख-पुस्तकयोस्त्रुटितं श्लोकार्धम्. का-पुस्तक-टिप्पण्यां तु—

'यदि च नकारसंज्ञकगणः पदे विरचितस्तथैव लगौ
यदि च जसौ जसावपि च जभौ क्रमेण न खलूक्तमन्यदपरम् ।
यदि च समाश्रितं हि विकृतिं यच्च दशभिस्तथैकसहितै-
स्तदिह सुकीर्तितं कविगणैर्विशुद्धचरितैस्तदश्वललितम् ॥'

३. 'गुरूणि' क-ख. ४. 'रथहयनागयोधपुरुषैः' का. ५. '°विवृतं' का. ६. 'ममे°' क-ख. ७. का-पुस्तकटिप्पण्याम्—

'यदि खलु चरणस्थितौ नौ त्रिकौ षट् तु रा व्यवस्थितास्तत्परं स्युः क्रमात् ।
भवति यदि यतिस्तथा सप्तभिः सप्तभिः सप्तभिश्चाक्षरैः सद्भिरुक्ताक्षरा ॥
सततसुपरिविष्टदेहा तथा संवृतौ सूरिभिः संमता दृश्यते ।
त इह परिभाषिता शास्त्रविद्भिस्त्वियं मेघमालाथवा अन्धकः ॥'

८. 'हि' इति नास्ति क-ख. पुस्तकयोः.
९. '°बल' का. १०. 'तीव्रनादा बलाकावली मेखला शोभिता' का.

क्षितिधरसदृशोर्ध्व[1]रूपा [2]महाधूमपुञ्जायमानाम्बुगर्भोद्भवा ।
सुरपतिधनुरुज्ज्वलाबद्धशोभा[3] तडिद्द्योतसंनाहबन्धोज्ज्वला[4]
गगनतलवि[5]चारिणी [6]प्रावृषि प्रोन्नता मेघमालाधिकं शोभते ॥ १०३ ॥'

आद्यं चतुर्थं च [7]तथा पञ्चमं षष्ठमेव च ।
नवमं दशमं चैव अन्त्यं चैव गुरूण्यथ ॥ १०४ ॥
लघून्यन्यानि शेषाणि पादे स्युः पञ्चविंशके ।
वृत्तज्ञैः सा तु विज्ञेया क्रौञ्चपादीति नामतः ॥ १०५ ॥

यथा—

'[8]यः किल दास्यं विद्रुतसोमं क्रतुवरमनुपममपगतकलुषं
पातितयूपं क्षिप्तकपालं विवसनसममिव सपशुकसहितम् ।
कार्मुकमुक्तेनाशु चकार व्यपगतसुरगणपितृगणमिथुना
नित्यमसौ ते दैत्यगणारिः प्रददतु(व्यथयतु) सुखमिव रिपुगणमखिलम्'

अष्टावादौ गुरूणि स्युस्तथा चैकोनविंश[9]तिम् ।
एकविंशं तथा चैव चतुर्विंशं सनैधनम् ॥ १०७ ॥
एतानि गुरुसंज्ञानि पादे षड्विंशकाक्षरे ।
यत्र नाम्ना तथा ज्ञेयं तद्भुजङ्गविजृम्भितम् ॥ १०८ ॥

यथा—

'रूपोपेतां देवैः स्पृष्टां समदगजविलसितगतिं निरीक्ष्य तिलोत्तमां
[10]प्रादक्षिण्यं प्राप्तां द्रष्टुं बहुवदनमचलनयनं शिरःशतवा[न्?]हरः ।

---

१. '°व रूपा' का. २. 'महानीलधूमायमानाम्बुगर्भोद्वहा' का. ३. 'बद्धकक्ष्या' का. ४. °पट्टोज्ज्वला' ५. 'विसारिणी' का. ६. 'प्रावृषेण्योन्नता' का. ७. 'तथा' इति नास्ति ख-पुस्तके.

८. 'मा कपिलाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमनुनयकठिना
दीर्घकलाभिस्तूलशिराभिः परिवृतवपुरतिशयकुटिला ।
आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिवृतहृदया
( जालपि चेष्टा ) क्रौञ्चपदा स्त्री ध्रुवमिह निरवधिसुखमभिलषता ॥' इति का-पुस्तके.

९. 'चैकोनविंशकम्' का. १०. 'प्राप्तं द्रष्टुं बहुवदननयनसहितां तिरस्तुतवान् हरः ।' का.

दीर्घं निःश्वस्यान्तर्गूढं स्तनवदनजघनकलितां निरीक्ष्य तथा पुनः
कण्ठे न्यस्तं[1] देवेन्द्रेण प्रवरमणिकनकवलयं भुजङ्गविजृम्भितम् ॥१०९॥'
[दण्डकं[2] नाम विज्ञेयं षड्विंशादधिकाक्षरम् ।
वृत्तं मालादिकं तस्मान्नोक्तं चादौ गुहादिना ॥ ११० ॥
यथा—
'मुदितजनपदाकुला स्फीतसस्याकरा भूतधात्री भवन्तं समभ्यर्च्यते
द्विरदकरविलुप्तहिन्तालताली वनास्त्वां नमस्यन्ति विन्ध्यादयः पर्वताः ।
स्फुटितकलशशुभ्रीर्णे (?) मुक्ताफलैरूर्मिहस्तैर्नमस्यन्ति वः सागरा
मुदितजलचराकुलारूपं प्रकीर्णामलाः कीर्तयन्तीव कीर्तिं महानिम्नगाः ॥']
एतानि समवृत्तानि मयोक्तानि द्विजोत्तमाः ।
विषमार्धसमानं तु पुनर्वक्ष्यामि लक्षणम् ॥ ११२ ॥
यत्र पादास्तु विषमा नानावृत्तसमुद्भवाः ।
ग्रथिताः पादयोगेन तद्वृत्तं विषमं स्मृतम् ॥ ११३ ॥
द्वौ समौ द्वौ च विषमौ वृत्तेऽर्धविषमे तथा ।
सर्वपादैस्तु विषमैर्वृत्तं विषममुच्यते ॥ ११४ ॥
ह्रस्वाद्यमथ दीर्घाद्यं दीर्घं ह्रस्वमथापि वा ।
युग्मौजविषमैः पादैस्तद्वृत्तमसमं स्मृतम् ॥ ११५ ॥
पादे सिद्धे समं सिद्धं विषमं सार्वपादिकम् ।
द्वयोरर्धसमं विद्याद्भेदस्तु पादशः ॥ ११६ ॥
[पाद[3]द्वयस्य संसिद्धौ सिद्धमर्धसमं पुनः ।]
छेदास्तु ये मया प्रोक्ताः समवृत्तविकल्पिताः ।
त्रिकैर्विषमवृत्तानां संप्रवक्ष्यामि लक्षणम् ॥ ११७ ॥
सौ[4] गौ च प्रथमपादे सौ ल्गौ चापि द्वितीयके ।
एवं युग्मौजकौ ज्ञेयौ पथ्यावृत्ते त्रिकौ यथा ॥ ११८ ॥

१. 'पृष्ठन्यस्तां' का. २. कोष्ठकबद्धः पाठोऽधिकः का-पुस्तके. ३. श्लोकार्धमिदमधिकं का-पुस्तके. ४. क-ख-पुस्तकयोस्तु—
'सौ भा गः प्रथमे पादे स्रौ लौ यत्र तथापरे (?) ।
युग्मेऽर्धविषमौ पादौ ज्ञेया पथ्या तु सा त्रिकैः ॥'

यथा—'प्रियदैवतमित्रासि प्रियसंबन्धिबान्धवा ।

प्रियदानरता[1] पथ्या दयिता[2] त्वं प्रियासि मे ॥ ११९ ॥'[3]

अयुजोर्[4]लक्षणं ह्येतद्विपरीतं तु यत्र तु ।

पथ्या हि विपरीता सा विज्ञेया[5] नामतो बुधैः ॥ १२० ॥

[यथा—[6]कृतेन मरणं यस्य सखि रोषेण तेऽत्यथ ।

जले कौ मोहितापि चरितानपत्न्या(?)सि ॥ १२१ ॥

चतुर्थादक्षराद्यत्र त्रिलघुः स्यादयुक्ततः ।

अनुष्टुब्विपुला सा तु विज्ञेया नामतो यथा ॥ १२२ ॥

न खल्वस्याः प्रियतमैः[7] श्रोतव्यं व्याहृतं सदा[8] ।

[9]नारदस्य प्रतिकृतिः श्रूयते विपुला हि सा ॥ १२३ ॥

विपुला वा युजि ज्ञेया लघुत्वात्सप्तमस्य तु ।

[10]सर्वत्र सप्तमस्यैव केषांचिद्विपुलैव तु ॥ १२४ ॥

यथा—'संक्षिप्ता वज्रमध्ये हि[11] हेमकुम्भनिभस्तनी ।

विपुलासि प्रिये कट्यां शरच्चन्द्रनिभानने ॥ १२५ ॥'

[यथा वा—] 'गङ्गेव मेघापगमे आप्लावितवसुंधरा ।

कूलवृक्षानारुजती स्रवन्ती विपुलां[12]न्बलान् ॥ १२६ ॥'

एवं विविधयोगैस्तु[13] पथ्यापादा भवन्ति हि ।

युग्मौजविषमैः पादैः शेषैरन्यैस्त्रिकैस्तथा ॥ १२७ ॥

---

१. 'प्रियदानवरा' का. २. 'यद्यपि' का. ३. क-ख-पुस्तकयोः—

['म्जौ गा]विति भवेत्पूर्वो [य्मौ लगा]विति तथापरः ।

भौ लगौ पादस्तृतीयः स्यात्तथा [ज्सौ लगौ] चतुर्थकः ॥']

यथा—'नैवाचारो न ते मित्रं न संबन्धिगुणप्रिया.

सर्वविषमा······यथा न भवसि प्रिये ॥' इत्यधिकम्.

४. 'युग्मयोः' का. ५. '°या नामतो बुधैः' इति त्रुटितम्. ६. पद्यमेतत् त्रुटितं क-ख. पुस्तकयोः. ७. 'प्रियतमे' का. ८. 'सखा' इति क-ख. ९. 'सा नारदस्य प्रकृतिः श्रूयते विपुलाभिधा' का. १०. 'सप्तमस्यैव केषांचित् विपुलैव तु सा यथा' का. ११. 'हे' का. १२. 'विपुला बलात्' का. १३. 'विपुलयोगास्तु पथ्यापादे' का.

गुर्वन्तकः सर्वलघुस्त्रिको नित्यं हि नेष्यते ।
प्रथमादक्षराद्यत्र चतुर्थात्प्राग्लघुः स्मृतः ॥ १२८ ॥
पथ्यापादं समास्थाप्य त्रीण्यन्ते तु गुरूण्यथ ।
भवन्ति पादे सततं यत्र तद्वक्त्रमिष्यते ॥ १२९ ॥

यथा—'दन्तक्षताधरं सुभ्रु जागरग्लानननेत्रं च ।
रतिसंभोगखिन्नं ते दर्शनीयतरं वक्त्रम् ॥ १३० ॥'

[श्रौ गौ च प्रथमे पादे य्सौ ग्लौ चापि द्वितीयके ।

---

१. 'गुर्वन्त्रक°' क-ख. २. 'लघु स्मृतम्' का. ३. 'म्लान' क-ख. ४. 'प्रातः संभोगखिन्नं ते दर्शनीयतमं' का. ५. इतोऽग्रे का-पुस्तके कोष्ठकबद्धः पाठः । क-ख-पुस्तकयोस्तु—

'म्जौ स्गौ च प्रथमे पादे [तथा] चैव तृतीयके ।
केतुमत्यां गणः प्रोक्तो भ्रौ न्गौ गश्च सदा बुधैः ॥'

यथा—'स्फुरितं...चलितनेत्रं रक्तकपोलमम्बुजदलाक्षम् ।
किमिदं रुषापहृतशोभं केतुमतीमुखाकृति मुखं ते ॥'

अपरवक्त्रस्यादौ तु नौ [र्लौ]गिति त्रिकत्रिकम् ।
नजौ जरौ द्वितीये तु चतुर्थे पुनरेव तु ॥

यथा—'सुरतरुजलपरीतलोचनं जलदनिरुद्धमिवेन्दुमण्डलम् (?) ।
किमिदमपरवक्त्रमिव ते शशिवदनेऽद्य मुखं पराङ्मुखम् ॥'

नौ यौ तु प्रथमे पादे नजौ जौ गस्तथापरे ।
पादौ तु पुष्पिताग्रायां यथैतावपरौ तथा ॥

यथा— 'पवनरयविधूतचारुशाखं
प्रमुदितकोकिलकण्ठनादरम्यम् ।
मधुकरपरिगीयमानकक्षं
वरतनु पश्य वनं सुपुष्पिताग्रम् ॥'

'स्जौ स्लौ चादौ यथा न्सौ ज्गौ भ्नौ ज्लौ गश्च तथा पुनः ।
स्जौ स्लौ गस्त्रिका ह्येत उद्गतायाः प्रकीर्तिताः ॥'

यथा—'तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरी ।
तानिकमवित्यतिना (?) भ्रमरावली च कुसुमात्समुद्गता ॥'

स्जौ.......... ..............वेति तृतीयके ।
.............चतुर्थे पञ्चमे सुललिद्वृत्ता ॥

यथा—'ललिताकुलभ्रमिचारुवसनकरपल्लवा हि मे ।
प्रविकसितकमलकान्तमुखी प्रतिभासि देवि सुरतश्रमातुरा ॥'

एवं श्लोकानां पौर्वापर्यक्रमः ।

रभौ लगौ तृतीये च चतुर्थे तु जसौ लगौ ॥ १३१ ॥

यथा—नैवाचारो न ते मित्रं न संबन्धिगुणक्रिया ।

सर्वथा सर्वविषमा पथ्या न भवसि प्रिये ॥ १३२ ॥

स्जावादौ च तथा स्लौ च नसजा गश्च युग्मके ।

भ्जौ ज्लौ गश्च तृतीये स्युः स्जौ स्जौ गश्च तुरीयके ॥

एते त्रिकाः क्रमप्राप्ता उद्गतायां प्रकीर्तिताः ॥ १३३ ॥

यथा—

'तव रोमराजिरतिभाति सुतनु मदनस्य मञ्जरी ।

नाभिकमले विवरोत्पतिता भ्रमरावलीव कुसुमे समुद्गता ॥ १३४ ॥'

स्जौ जश्च ललितापादे न्सौ जो गश्च द्वितीयके ।

नौ सौ चैव तृतीये तु द्विः स्जौ गश्च चतुर्थके ॥ १३५ ॥

यथा—

'ललिताकुलभ्रभिवाहवसनकरपल्लवा हि मे ।

प्रविकसितकमलकान्तमुखी प्रतिभासि देवि सुरतश्रमातुरा ॥ १३६ ॥']

इत्येषा सर्वविषमा नामतोऽनुष्टुबुच्यते ।

द्विधा मतं हि वैषम्यं त्रिकादक्षर[त]स्तथा ॥ १३७ ॥

स्जौ स्गौ च प्रथमे पादे तथा चैव तृतीयके ।

केतुमत्यां गणाः प्रोक्ता भ्रौ न्गौ गश्च सदा बुधैः ॥ १३८ ॥

यथा—'स्फुरिताधरं कलितनेत्रं रक्तकपोलमम्बुजदलाक्षम् ।

किमिदं रुषापहृतशेषं केतुमतिमुखाकृतिमुखं ते ॥ १३९ ॥'

प्रथमे च तृतीये च नौ रेफः ग्लाश्च कीर्तिताः ।

गणाश्चापरवक्त्रे तु नजौ ज्रौ द्विचतुर्थयोः ॥ १४० ॥

यथा—'सुतनु जलपरीतलोचने जलमनिरुद्धमिवेन्दुमण्डलम् ।

किमिदमपरवक्त्रमेव ते मम तु तथापि मनोहरं मुखम् ॥ १४१ ॥'

नौ र्यौ तु प्रथमे पादे नजौ ज्रौ गस्तथापरे ।

पादे तु पुष्पिताग्राया यथैतावपरौ तथा ॥ १४२ ॥

यथा— 'पवनरयविधूतचारुशाखं
प्रमुदितकोकिलकण्ठनादरम्यम् ।
मधुकररवगीयमानवृक्षं
वरतनु पश्य वनं सुपुष्पिताग्रम् ॥ १४३ ॥'

पादे षोडश मात्रास्तु गाथांशकविकल्पिताः[1] ।
चतुर्भिरंशकैर्ज्ञेया वृत्तज्ञैर्वानवासिका ॥ १४४ ॥

यथा—'असंस्थितपादा विह्वलाङ्गी मदस्खलितचेष्टितैर्मनोज्ञा ।
क यास्यसि वरोरु सुरतकाले विषमा किं वानवासिका त्वम् ॥१४५॥'

एवमेतानि[3] वृत्तानि समानि विषमाणि च ।
नाटकाद्येषु[4] काव्येषु प्रयोक्तव्यानि[5] सूरिभिः ॥ १४६ ॥

सन्त्यन्यान्यपि वृतानि यान्युक्तानीह पण्डितैः ।
न च तानि मयोक्तानि न शोभां जनयन्ति हि[6] ॥ १४७ ॥

यान्यतः परमत्र स्युर्गीतकैस्तानि योजयेत् ।
ध्रुवाविधाने व्याख्यास्ये तेषां चैव विकल्पनम् ॥ १४८ ॥

वृत्तलक्षणमेतत्तु समासेन मयोदितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि आर्याणामपि लक्षणम् ॥ १४९ ॥

पथ्या च विपुला चैव चपला मुखतोऽपरा ।
जघने[7] चपला चैव आर्याः पञ्च प्रकीर्तिताः[8] ॥ १५० ॥

---

१. वानवासिकालक्षणोदाहरणे क-ख-पुस्तकयोः केतुमतीलक्षणात् पूर्वं वर्तेते. २. 'त्रिकांशक°' का. ३. पथ्यालक्षणोदाहरणे का-पुस्तके पूर्वमेवागते परं क-ख-पुस्तकयोरत्र वर्तेते ।

'म्रौ गौ च प्रथमे पादे यसौ ग्लौ चापि द्वितीयके ।
रभौ लगौ तृतीये च चतुर्थे तु जसौ लगौ ॥
यथा—'नैवाचारो न ते मित्रं न संबन्धिगुणक्रिया ।
सर्वथा सर्वविषमा पथ्या न भवसि प्रिय(ये) ॥'

४. 'नाटकादिषु' का. ५. 'प्रयोज्यानि' का. ६. 'यत्' का. ७. 'जघनचपला' क-ख. ८. 'पञ्चविधाः स्मृताः' का.

[ [1]आसां चैव प्रवक्ष्यामि यतिमात्राविकल्पनम् ।
लक्षणैर्नियतांशैश्च विकल्पान् गणसंश्रितान् ॥ १५१ ॥
यतिच्छेदश्च विज्ञेयश्चतुर्मात्रागणस्तथा ।
द्वितीयान्त्यौ युजौ पादौ शेषौ चैवायुजौ स्मृतौ ॥ १५२ ॥
गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्ये (व्यो) युग्गणं पञ्च चैव हि ।]
[2]षष्ठश्च द्वि[3]विकल्पस्तु नैधने ह्येकसं[4]स्थितः ॥ १५३ ॥
पश्चा[5]द्वा यो गणः षष्ठ एकमात्रः स उच्यते ।
द्विविकल्पस्तु [6]यः षष्ठो गुरुमध्यो भवेत्तु सः ॥ १५४ ॥
यथा[7] सर्वलघुश्चैव यति[8]संज्ञासमाश्रिता ।
सा द्वितीया द्विलघु[9]का सप्तमे [10]प्रथमे यतिः ॥ १५५ ॥
[11]गुरुमध्यविहीनस्तु चतुर्गणसमन्वितः ।
अयुग्गणो विधातव्यः प्रमाणश्चैव पञ्चमः ॥ १५६ ॥
[12]प्रथमतृतीयौ पादौ द्वादशमात्रौ भवेत्तु सा पथ्या ।
रक्तमृदुपद्मनेत्रासितदीर्घबहुलमृदुकेशी ॥ १५७ ॥
कस्य तु पृथुमृदुजघना तनुबाहुहंसोदरी पथ्या ।
[13]विपुलान्या खलु गदिता पूर्वोदितलक्षणोपेता ॥ १५८ ॥

---

१. का-पुस्तके कोष्ठकबद्धश्लोकत्रयमेतदधिकम् । क-ख-पुस्तकयोस्तु केवलमर्धमेतदुपलभ्यते—

"अर्धाष्टमगणार्धा च सर्वैवार्या प्रकीर्तिता ।"

२. 'षष्ठस्य' का. ३. 'द्विविकल्पस्य' का. ४. 'ह्येकसंश्रितः' का. ५. 'पश्चार्धे' का. ६. 'षष्ठोऽत्र' का. ७. 'तथा' का. ८. 'यतिसंज्ञाः समाश्रितः' का. ९. 'द्विलघूनि' का. १०. 'प्रथमाद्' का. ११. पद्यमिदं का-पुस्तके नास्ति. १२. का-पुस्तके तु—

'प्रथमादि तथान्ते च पञ्चमे तु विधीयते ।
गणेषु त्रिषु पादेषु यस्याः पथ्या तु सा भवेत् ॥
प्रथमे च द्वितीये च सात्वार्या विपुला मता ।'
पथ्याविपुलयोर्लक्षणमेवं वर्तते ।

१३. इतोऽग्रे वर्तमानं सार्धैकपद्यं का-पुस्तके नास्ति.

'विपुलजघनवदनस्तननयनैस्ताम्राधरोष्ठकरचरणैः ।
आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या ॥ १५९ ॥'

द्वितीयश्च चतुर्थश्च गुरुमध्यगतो भवेत् ।
उभयोरर्धयोर्यत्र विज्ञेया चपला त(य)था ॥ १६० ॥

उद्धटगामिनी परुषभाषिणी कामचिह्नकृतवेषा ।
जानाति मांसयुक्ता सुराप्रिया सर्वतश्चपला ॥ १६१ ॥

पूर्वार्धलक्षणं ह्येतद्यस्याः सा चपलामुखे ।
[2]........................................ ॥ १६२ ॥

आर्यामुखे तु चपला तथापि चर्या न मे यतः सा तु ।
दक्षा गृहकृत्येषु तथा दुःखे भवति दुःखार्ता ॥ १६३ ॥

[3]........................................ ।
यद्येतदन्यत्र भवेच्चपला जघन[4]............ ॥१६४ ॥

वरमृगनयने चपलासि वरोरु शशाङ्कदर्पणनिभास्ये ।
कामस्य सारभूतेन पूर्वमदचारुजघनेन ॥ १६५ ॥

---

१. का-पुस्तकेऽत्रैषा सार्धपञ्चश्लोकी—

'द्वितीयश्च चतुर्थश्च जकारौ गुरुमध्यगौ ।
यस्याः स्यात् पादयोगे तु विज्ञेया विपुला च सा ॥
मुखेऽस्य मुखचपला स्यादन्यत्र जघने तथा ।
उभयोरर्धयोरेतल्लक्षणं दृश्यते यदि ॥
वृत्तज्ञैः सा तु विज्ञेया सर्वतश्चपला तथा ।
त्रिंशन्मात्रास्तु पूर्वार्धे विंशतिः सप्त चापरे ॥
उभयोरर्धयोर्ज्ञेयो मात्रापिण्डो विभागशः ।
अधिकानि यानि त्रिंशद्(द)भ्यस्तानि द्विगुणितानि तु ॥
अक्षरत्रययुक्तानि ज्ञेयान्यत्र लघूनि तु ।
एतानि लघुसंज्ञानि निर्दिष्टानि समासतः ।
सर्वासामेव चार्याणामक्षराणि यथाक्रमम् ॥'

'द्वितीयश्च चतुर्थश्च गुरुमध्यगतो भवेत् ।' इत्यारभ्य 'शेषाणि गुरुसंज्ञानि एवं सर्वत्र निर्दिशेत्' इतिपर्यन्तानां श्लोकानां परिवर्तं वर्तते ।

२. ३. ४. त्रुटिचिह्नं क-ख. पुस्तकद्वितयेऽपि न दृश्यते.

उभयोरर्धयोरेव यत्रैव लक्षणं भवेत् ।
महत्पूर्वानुवृत्तज्ञैर्विज्ञेया चपला तु सा ॥ १६६ ॥
चतुःपञ्चप्रकाराणां चतुष्काणां विशेषतः ।
प्रस्तारयोगमासाद्य बाहुल्यं संप्रदर्शयेत् ॥ १६७ ॥
पञ्चपञ्चाशदाद्या तु त्रिंशदाद्या तथैव च ।
आर्या त्वक्षरपिण्डेन विज्ञेयात्र प्रयोक्तृभिः ॥ १६८ ॥
त्रिंशतस्त्वथ वर्णेभ्यो लघुवर्णत्रयं भवेत् ।
शेषाणि गुरुसंज्ञानि एवं सर्वत्र निर्दिशेत् ॥ १६९ ॥
सर्वेषां[1] जातिवृत्तानां पूर्वमुत्तरसंख्यया ।
विकल्पं गणयित्वा तु[2] संख्यापिण्डेन दर्शयेत्[3] ॥ १७० ॥
आर्यागीतिरथार्यैर्वे[4] केवलं[5] त्वष्टभिर्गणैः ।
इतरार्धेऽपि[6] षष्ठः स्या[त्स]विकल्पो भवेद्गणः[7] ॥ १७१ ॥
एवं[8] चतुर्विधैर्वृत्तैर्नानाछन्दःसमुद्भवैः ।
काव्यबन्धास्तु कर्तव्याः षट्त्रिंशल्लक्षणान्विताः ॥ १७२ ॥
इति[9] श्रीभारतीये नाट्यशास्त्रे छन्दोवृत्तविधिर्नाम पञ्चदशोऽध्यायः ।

---

षोडशोऽध्यायः[10] ।

[भूषणाक्षरसङ्घातौ[11] शोभोदाहरणे तथा ।
हेतुसंशयदृष्टान्ताः प्राप्ताभिप्राय एव च ॥ १ ॥

---

१. 'यानि वृत्तानि' क-ख. २. 'च' का. ३. 'निर्दिशेत्' का. ४. 'अथार्ये च' क-ख. ५. 'केवलः' क-ख. ६. 'इतरा चापि षष्ठा स्यात्' का. ७. 'गुणः' का. ८. 'वृत्तैरेवं तु विविधैः' का. ९. 'इति भारतीये नाट्यशास्त्रे छन्दोविचितिर्नाम षोडशोऽध्यायः' का. १०. 'अथ सप्तदशोऽध्यायः' इति का-पुस्तके. ११. क-ख. पुस्तकयोस्तु—

'विभूषणं चाक्षरसंगतिश्च शोभाभिमानो गुणकीर्तनं च ।
प्रोत्साहनोदाहरणे निरुक्तं गुणानुवादो ··· ···श्च हेतुः ॥
सारूप्यमिथ्याध्यवसायसिद्धिपदोच्चयाक्रन्दमनोरथाश्च ।
आख्यानवादाः प्रतिषेधपृच्छादृष्टाङ्गनिर्भासनसंशयाश्च ॥

निदर्शनं निरुक्तं च सिद्धिश्चाथ विशेषणम् ।
गुणातिपातातिशयौ तुल्यतर्कः पदोच्चयः ॥ २ ॥
दृष्टं चैवोपदिष्टं च विचारस्तद्विपर्ययः ।
भ्रंशश्चानुनयो माला दाक्षिण्यं गर्हणं तथा ॥ ३ ॥
अर्थापत्तिः प्रसिद्धिश्च पृच्छा सारूप्यमेव च ।
मनोरथश्च लेशश्च क्षोभोऽथ गुणकीर्तनम् ॥ ४ ॥
ज्ञेयान्यनुक्तसिद्धिश्च प्रियं वचनमेव च ।
षट्त्रिंशल्लक्षणान्येवं काव्यबन्धेषु निर्दिशेत् ॥ ५ ॥ ]
अलंकारैर्गुणैश्चैव बहुभिः समलंकृतम् ।
भूषणैरिव विन्यस्तै[1]स्तद्भूषणमिति स्मृतम् ॥ ६ ॥
यत्रा[2]ल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसंघातं विद्याल्लक्षणसंज्ञितम् ॥ ७ ॥
सिद्धैरर्थैः समं कृत्वा [3]ह्यसिद्धोऽर्थः प्रयुज्यते ।
[4]यत्र श्लक्ष्णविचित्रार्था सा शोभेत्यभिधीयते[5] ॥ ८ ॥

---

आशीःप्रियं चै(वै)कपटं क्षमा च प्राप्तिश्च पश्चात्तपनं तथैव ।
अर्थायु(थानु)वृत्तिर्ह्युपत्र(प)त्तियुक्ती कार्या तु(नु)नीतीः(तिः ?) परिदेवनं च ॥
'षड्विंशदेतानि तु लक्षणानि प्रोक्तानि वै भूषणसंमितानि ।
काव्येषु भावार्थमतानि तज्ज्ञैः सम्यक्प्रयोज्यानि यथारसं तु ॥'

१. 'चित्रार्थैः' का. २. 'यत्रार्थैरक्षरैः क्लिष्टैर्विचित्रपुष्पवर्णितम् (?)' इति क-ख. ३. क-ख. पुस्तकयोः श्लोकपाद एष त्रुटितः. ४. 'यत्र श्लिष्टं विशिष्टयर्थं' का. ५. क-ख-पुस्तकयोस्तु भिन्न एव पाठक्रमः यथा—

'वार्यमाणस्तु बहुभिर्वचनैः कार्ययुक्तिभिः ।
न यः पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः ॥
कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः ।
लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ॥
एकोऽभिशब्द्यते यस्तु विज्ञेयं गुणकीर्तनम् ।
..................................॥
सिद्धान्बहून्प्रधानार्थान्[ न् ] युक्त्या [ नुक्त्वा ] यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥
यत्रैकस्यापि शब्दस्य दर्शनात्सुबहून्यपि ।
यान्ति सिद्धिमनुक्तादि तदुदाहरणं स्मृतम् ॥

यत्र स्वल्पार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यन्ते निपुणैरर्थास्तदुदाहरणं स्मृतम् ॥ ९ ॥
यत् प्रयोजनसामर्थ्याद् वाक्यमिष्टार्थसाधकम् ।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः ॥ १० ॥
अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचाराणां स संशय इति स्मृतः ॥ ११ ॥
सर्वलोकमनोग्राहि पक्षपक्षार्थसाधकः ।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः ॥ १२ ॥
दृष्ट्वैवावयवान् कांश्चित् भावो यत्रानुमीयते ।
प्राप्तुं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥ १३ ॥
अभूतपूर्वो योऽप्यर्थः सादृश्यात् परिकल्पितः ।
लोकस्य हृदयग्राही सोऽभिप्राय इति स्मृतः ॥ १४ ॥
यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परापेक्षाप्युदासार्थं तन्निदर्शनमुच्यते ॥ १५ ॥
निरवद्यस्य वाक्यस्य पूर्वोक्तानु प्रसिद्धये ।
यदुच्यते तु वचनं निरुक्तं[1] तदुदाहृतम् ॥ १६ ॥

---

1 निरुक्तं विविधं प्रोक्तं तथ्यं वातथ्यमेव च ।
सिद्धिः प्रसाधितं तथ्यमतथ्यं च प्रसाधितम् ॥
गुणानुवादो हीनानामुत्तमैरुपमाकृतः ।
उत्तमार्थविशेषो यः स चाप्यतिशयः स्मृतः ॥
बहूनां भाष्यमाणानामनेकार्थविनिर्णयात् ।
सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः ॥
अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन ।
लक्षणसमानकरणात्सारूप्यं तत्तु निर्देश्यम् ॥
अभूतपूर्वे यत्रार्थे तुल्यस्यार्थस्य निर्णयः ।
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणे ॥
बहूनां तु प्रधानानां मध्ये यन्नाम कीर्त्यते ।
एकार्थसाधनकृतं सा सिद्धिरिति कीर्त्यते ॥

बहूनां च प्रयुक्तानां नाम यत्राभिकीर्त्यते ।
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥ १७ ॥
सिद्धान् बहून् प्रधानार्थानुक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ १८ ॥
गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः ।
गुणातिपातो मधुरो निष्ठुरार्थो भवेदथ ॥ १९ ॥
बहून् गुणान् कीर्तयित्वा सामान्यजनसंभवान् ।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥ २० ॥
रूपकैरुपमानैर्वा तुल्यार्थाभिः प्रयोक्तृभिः ।
अप्रत्ययार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥ २१ ॥
बहूनां च प्रयुक्तानां पादानां बहुभिः पदैः ।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ २२ ॥
यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा ॥ २३ ॥

---

गुणैर्बहुभिरेकार्थैः पदैर्यः संप्रशस्यते ।
पदोद्धटां तु तद्विद्यान्नामार्थमथनात्मकम् ॥
आत्मभावेष्वपत्यस्य परसादृश्ययुक्तिभिः ।
तीव्रार्थभाषणं यत्स्यादाक्रन्दः स तु कीर्तितः ॥
हृदयस्थस्य भावस्य सु[स]ष्ठार्थप्रदर्शकम् ।
अन्यापदेशकथनं मनोरथ इति स्मृतः ॥
अपृष्टैरथ वा पृष्टैर्निर्णयः क्रियते तु यः ।
आख्यानमिति तज्ज्ञेयं लक्षणं नाटकाश्रयम् ॥
आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम् ।
यत्तु प्रियं पुनर्वाक्यं सा याच्ञा परिकीर्तिता ॥
कार्येषु विपरीतेषु यदि कश्चित्प्रवर्तते ।
यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ॥
.................................।
पृच्छत्यभिनयेनार्थं सा पृच्छेत्यभिसंज्ञिता ॥

परिगृह्य च शास्त्रार्थं यद्वाक्यमभिधीयते ।
विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते ॥ २४ ॥

---

सिद्धं पूर्वोपलब्धौ यः समलमुपपादयेत् ।
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः ॥
अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम् ।
अनेकवाक्यसंयुक्तं भासनं नाम तद्भवेत् ॥
अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते ।
अनेकलाद्विचाराणां संशयः परिकीर्तितः ॥
यथाशास्त्रार्थसंपन्नां मनोरथसमुद्भवाम् ।
अप्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः ॥
आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम् ।
तत्प्रियं वचनं ज्ञेयमाशीर्वादसमन्वितम् ॥
छलयुक्त्या त्वन्येषामभिसंधानाभिभावकण्टकम् ।
द्वित्रप्रयोगयुक्तौ विज्ञेयः कपटसंघातः ॥
दुर्जनोदाहृतै रूक्षैः सभामध्येऽतिताडितः ।
अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा भवेत् ॥
दृष्टैर्वावयवं कश्चिद्भावो यत्रोपमीयते ।
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥
अकार्यं सहसा कृत्वा कृत्वा कार्यमथापि वा ।
संतापो मनसो यस्तु पश्चात्तापः प्रकीर्तितः ॥
प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम् ।
स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता ॥
प्राप्तानां यत्र दोषाणां क्रियते शमनं पुनः ।
सा ज्ञेया ह्युपपत्तिस्तु लक्षणं नाटकाश्रयम् ॥
साध्यते योऽर्थसंबन्धो महद्भिः समवायतः ।
परस्परानुकूल्येन या (सा) युक्तिः परिकीर्तिता ॥
यत्रापसारयन्दोषं गुणमर्थेन योजयेत् ।
गुणातिवादो दोषाद्वा कार्यं तदिह कीर्तितम् ॥
अपूर्वक्रोधजनितमपराधं प्रमार्जयेत् ।
सेवार्थं मधुरं वाक्यमनुनीतिः प्रकीर्तिता ॥
यद्दोषैरन्यनामोक्तैः प्रसिद्धार्थैः प्रयोजयेत् ।
अन्यत्रार्थेन संबन्धो ज्ञेयं तत्परिदेवनम् ॥'

पूर्वदेशसमानार्थैरप्रत्यक्षार्थसाधनैः ।
अनेकोपोहसंयुक्तो विचारः परिकीर्तितः ॥ २५ ॥
विचारस्यान्यथाभावस्तथा दृष्टोपयोगतः ।
संदेहात्कल्प्यते यस्तु स विज्ञेयो विपर्ययः ॥ २६ ॥
वाच्यमर्थं परित्यज्य दृष्टादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादिह भ्रंशः स इष्यते ॥ २७ ॥
उभयोः प्रीतिजननो विरुद्धाभिनिविष्टयोः ।
अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥ २८ ॥
ईप्सितार्थप्रसिद्ध्यर्थं कीर्त्यते यत्र सूरिभिः ।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥ २९ ॥
हृष्टैः प्रसन्नवदनैर्यत् परस्यानुवर्तनम् ।
क्रियते वान्यचेष्टाभिस्तद्दाक्षिण्यमिति स्मृतम् ॥ ३० ॥
यत्र संकीर्तयन् दोषं गुणमर्थेन दर्शयेत् ।
गुणातिपाताद् दोषाद्वा गर्हणं नाम तद्भवेत् ॥ ३१ ॥
अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते ।
वाक्यमाधुर्यसंयुक्तं( क्तः ? ) सार्थापत्तिरुदाहृता ॥ ३२ ॥
वाक्यैः सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः ।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥ ३३ ॥
यत्राकरोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छ्यते चाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥ ३४ ॥
दृष्टश्रुतानुभूतार्थकथनाभिः समुद्भवम् ।
सादृश्यमक्षजनितं सारूप्यमिति संज्ञितम् ॥ ३५ ॥
हृदयार्थस्य वाक्यस्य गूढार्थस्य विभावकम् ।
अन्यापदेशैः कथनं मनोरथ इति स्मृतः ॥ ३६ ॥
यद्वाक्यं वादकुशलैरुपायेनाभिधीयते ।
सदृशार्था( र्थ ? )विनिष्पन्नः स लेश इति कीर्तितः ॥ ३७ ॥

परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते ।
अदृष्टान्योऽपि वा कश्चित् स तु दोष इति स्मृतः ॥ ३८ ॥
लोके गुणातिरिक्तानां गुणानां यत्र नामभिः ।
एकोऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥ ३९ ॥
प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते ।
वचनेन विजानाति सिद्धिः सा परिकीर्तिता ॥ ४० ॥
यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥ ४१ ॥
एतानि वा काव्यविभूषणानि
षट्त्रिंशदुद्देश्यनिदर्शनानि ।
काव्येषु सोदाहरणानि तज्ज्ञैः
सम्यक् प्रयोज्यानि बलानुरूपम् ॥ ४२ ॥
उपमा दीपकं[1] चैव रूपकं यमकं तथा ।
काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः[2] ॥ ४३ ॥
यत्किंचित्काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया ॥ ४४ ॥
एकस्यैकेन सा कार्यानेकेनाप्यथवा पुनः ।
अनेकस्य तथैकेन बहूनां बहुभिस्तथा ॥ ४५ ॥
तुल्यं ते शशिना वक्रमिति ह्येककृता भवेत् ।
एकस्य बहुभिः सा स्यादुपमा नाटकाश्रया ॥ ४६ ॥
शशाङ्कवत्प्रकाशन्ते ज्योतींषीति भवेत्तु या ।
एकस्यानेकविषया सोपमा परिकीर्तिता ॥ ४७ ॥
श्येनबर्हिणभासानां तुल्यार्थ इति या भवेत् ।
एकस्य बहुभिः साम्यादुपमा नाटकाश्रया ॥ ४८ ॥
तुल्यं ते शशिना वक्रमित्येकेऽनेकसंश्रया ।
बहूनां बहुभिर्ज्ञेया घना इव गजा इति ॥ ४९ ॥

१. 'रूपकं चैव दीपकं' का. २. 'अलंकारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः' का.

प्रशंसा चैव निन्दा च कल्पिता[1] सदृशी तथा ।
किंचिच्च सदृशी ज्ञेया ह्युपमा[2] पञ्चधा पुनः ॥ ५० ॥

प्रशंसा[2] यथा—

दृष्ट्वा तु तां विशालाक्षीं तुतोष मनुजाधिपः ।
मुनिभिः साधितां कृच्छ्रात्सिद्धिं मूर्तिमतीमिव ॥ ५१ ॥

निन्दा यथा—

सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम् ।
वने[3] कण्ठगतं वल्ली दावदग्धमिव द्रुमम् ॥ ५२ ॥

कल्पिता यथा—

क्षरन्तो दानसलिलं लीलामन्थरगामिनः ।
मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः ॥ ५३ ॥

सदृशी यथा—

यत्त्वयाद्य कृतं कर्म परचित्तानुरोधिना ।
सदृशं न तथैव स्यादतिमानुषकर्मणः ॥ ५४ ॥

किंचित्सदृशी यथा—

संपूर्णचन्द्रवदना नीलोत्पलदलेक्षणा ।
मत्तमातङ्गगमना संप्राप्तेयं सखी मम ॥ ५५ ॥
उपमाया बुधैरेते भेदा ज्ञेयाः समासतः ।
ये[4] शेषा लक्षणे[5] नोक्तास्ते ग्राह्याः काव्यलोकतः ॥ ५६ ॥
नानाद्रव्यानुषङ्गाद्यैर्यदौपम्यं[6] गुणाश्रयम् ।
रूपनिर्वर्णनायुक्तं तद्रूपकमिति स्मृतम् ॥ ५७ ॥
स्वविकल्पैर्विरचितं[7] तुल्यावयवलक्षणम् ।
किंचित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत् ॥ ५८ ॥

---

१. 'नितम्बाकल्पिता' क. ख. २. 'ह्युपधा' क-ख. 'प्रशंसाया यथा' क-ख. ३. 'वानकं नकिनं(?)वल्ली दवदाधमिव द्रुमम्' क-ख. ४. 'शेषा ये' का. ५. 'लक्षणे नोक्ताः' क-ख. ६. रूपकलक्षणात्मकं पद्यमिदमधिकं का-पुस्तके. ७. क-ख-पुस्तकयोः पूर्वं दीपस्य लक्षणोदाहरणे, ततश्च रूपकस्य 'स्वविकल्पनरचितं' का.

[ यथा— ]

पद्माननास्ताः कुमुदप्रकाशा[1] विकासिनीलोत्पलचारुनेत्राः ।
वापीस्त्रियो हंसकुलैर्नदद्भिर्विरेजुरन्योन्यमिवाह्वयन्त्यः[2] ॥ ५९ ॥

नानाधिकरणार्थानां[3] शब्दानां संप्रकीर्तितम्[4] ।
एकवाक्येन संयोगात्तद्दीपकमिहोच्यते[5] ॥ ६० ॥

[ यथा— ]

सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि ।
गोष्ठीभिरुद्यानवनानि चैव तस्मिन्नशून्यानि सदा क्रियन्ते ॥ ६१ ॥

शब्दाभ्यासस्तु[6] यमकं पादादिषु विकल्पितम् ।
विशेषदर्शनं चास्य गदतो मे निबोधत ॥ ६२ ॥

पादान्तयमकं चैव काञ्चीयमकमेव च ।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥ ६३ ॥

यमकं चक्रवालं च संदष्टयमकं[7] तथा ।
पादादियमकं[8] चैव आम्रेडितमथापि च ॥ ६४ ॥

चतुर्व्यवसितं[9] चैव मालायमकमेव च ।
एतद्दशविधं[10] ज्ञेयं यमकं नाटकाश्रयम् ॥ ६५ ॥

चतुर्णां[11] यत्र पादानामन्ते स्यात्सममक्षरम् ।
तद्वै पादान्तयमकं विज्ञेयं नामतो यथा ॥ ६६ ॥

यथा—

दिनक्षयात्संहृत[12]रश्मिमण्डलं दिवीव लग्नं तपनीयमण्डलम् ।
विभाति ताम्रं दिवि सूर्यमण्डलं यथा तरुण्याः स्तनभारमण्डलम् ॥ ६७ ॥

---

१. '°प्रहासा' का. २. 'आह्वयन्तः' क. ३. 'नानाधिकरणस्थानां' का. ४. 'संप्रदीपतः' का. ५. 'संयोगो यस्तद्' का. ६. 'शब्दाभ्यासं तु' का. 'पादान्य' क-ख. ७. 'संदष्टं' क-ख. ८. 'पदादियमकं' का. ९. 'चतुर्थ्यवसितं' क-ख. १०. 'एतादृशविधं' का. ११. 'चतुर्थं' क-ख. १२. '°संवृत°' क-ख.

पादस्यादौ[1] तथा चान्ते स्यातां यत्र[2] समे पदे ।
तत्काञ्चीयमकं नाम विज्ञेयं सूरिभिर्यथा ॥ ६८ ॥

मा[3]या मायाचन्द्रवतीनां द्रवतीनां
व्यक्ताव्यक्तासारजनीनां रजनीनाम् ।
फुल्ले फुल्ले संभ्रमरे[4] वा भ्रमरे वा
रामारामा विस्मयते च स्मयते च ॥ ६९ ॥

अर्धैर्नैकै[5]र्न यद्वृत्तं सर्वमेव समाप्यते ।
समुद्गयमकं नाम तज्ज्ञेयं पण्डितैर्यथा ॥ ७० ॥

केतकीमुकुलपाण्[6]डुरदन्तः शोभते प्रवरकाननहस्ती ।
केतकीमुकुलपाण्डुरदन्तः शोभते प्रवरकाननहस्ती ॥ ७१ ॥

एकैकं पादमुत्क्षिप्[7]य द्वौ पादौ सदृशौ यदा[8] ।
विक्रान्तयमकं नाम त[9]ज्ज्ञेयं नामतो यथा ॥ ७२ ॥

[10]संपूर्णवारणो भूत्वा द्विशृङ्ग इव पर्वतः ।
[11]अभवद्दन्तवैकल्याद् द्विशृङ्ग इव पर्वतः ॥ ७३ ॥

पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः ।
चक्रवच्चक्रवालं [12]तद्विज्ञेयं नामतो यथा ॥ ७४ ॥

शैला यथा शत्रुभिराहता हता हताश्च भू[13]योऽप्यनुपुङ्खगैः खगैः ।
खगैश्च सर्वैर्युधि संचिताश्चि[14]ताश्चिताधिरूढा निह[15]ताः फलैः फलैः ॥७५॥

आदौ द्वौ यत्र[16] पादौ तु भ[17]वेतामक्षरैः समौ ।
संदष्टयमकं नाम विज्ञेयं त[18]द् बुधैर्यथा ॥ ७६ ॥

---

१. 'पादस्यान्ते तथा चादौ' का. २. 'तत्र' का. ३. 'मायामायावद्रवतीनां ·········' क-ख. ४. 'संभ्रमर·········' क-ख. ५. 'अर्थैनैकेन' का. ६. '°पाण्डर°' का. ७. 'उत्क्रम्य' का. ८. 'यदि' का. ९. 'तद्विज्ञेयमिदं यथा' का. १०. 'स पूर्वं वानरो भूत्वा' का. ११. श्लोकार्धमिदं क-ख-पुस्तकयोस्त्रुटितम् । १२. 'तु' का. १३. 'बाणैरनुपुङ्खपुङ्खैः' का. १४. 'संचिताश्चिताः' का. १५. 'हता हतानराः' का. १६. 'आविद्धे' क-ख. १७. 'भवतामक्षरे समे' क-ख. १८. 'तत्तु वै यथा' क-ख.

[1]पश्य पश्य रमणस्य मे गुणा[2]न्येन येन वशगां करोति माम्।
येन[3] येन दिनमेति दर्शनं तेन तेन वशगां करोति माम्॥ ७७॥

आदौ पादस्य यत्र स्यात्समावेशः समाक्षरः।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा॥ ७८॥

विष्णुः सृजति भूतानि विष्णुः संहर[4]ते प्रजाः।
विष्णुप्रसू[5]तं त्रैलोक्यं विष्णुर्लोकादिदै[6]वतम्॥ ७९॥

पादस्यान्त्यं पदं यत्र[7] द्विर्द्विरेकमिहोच्यते।
पादान्ताम्रेडितं नाम विज्ञेयं निपुणैर्यथा॥ ८०॥

विजृम्भितं निःश्वसितं मुहुर्मुहुः कथाभिधानं स्मरणं पदे पदे।
यथा च ते ध्यानमिदं पुनः पुनस्तथागता ते रजनी विना विना॥ ८१॥

सर्वे पादाः समा यत्र भवन्ति नियताक्षराः।
चतुर्व्य[8]वसितं नाम विज्ञेयं तद्बुधैर्यथा॥ ८२॥

सा[9]वारणानामयमेव कालः सावारणानामयमेव कालः।
सावारणानामयमेव कालः सावारणानामयमेव कालः॥ ८३॥

नानारूपैः स्वरैर्युक्तं[10] यत्रैकं व्यञ्जनं भवेत्।
तन्मालायमकं नाम विज्ञेयं [11]पाठकैर्यथा॥ ८४॥

[12]हली बली लली माली शूली जाली लली जली।
बलो बलोच्चलोलाक्षो मुसली [13]त्वभिरक्षतु॥ ८५॥

[[14]असौ हि रामारतिविग्रहः प्रियारहः प्रगल्भारमणं रहोगतम्।
रतेन रात्रिं रमयेत् परेण वा न चेदुदेष्यत्यरुणः पुरोरिपुः॥ ८६॥

---

१. 'यस्य यस्य' इति का. २. 'गुणा' इति का. ३. येन येन हि समेति' इति का. ४. 'संहरति' इति का. ५. °प्रसूत' इति का. ६. 'लोकाधिदैवतं' इति का. ७. 'यच्च' इति का. ८. 'न्यवसितं' इति का. ९. 'सावारणानाम्' इति चतुर्ष्वपि पादेषु का-पुस्तके. १०. 'यत्र' इति का. ११. 'पण्डितैः' का.

१२. 'हली बली लली माली श्वली लालसस्सली।
कली नलो चनो लोढो मुसली लाभिरक्षतु॥'

इति का. पुस्तकटिप्पण्याम्. १३. 'त्वभिरक्षतु' का. १४. एषा श्लोकद्वयी क-ख-पुस्तकयोर्नास्ति।

स पुष्कराक्षः क्षतजीक्षिताक्षः क्षरन्क्षतेभ्यः क्षतजं दुरीक्षः ।
क्षतैर्गवाक्षैरिव संवृताक्षः साक्षात् सहस्राक्ष इवावभाति ॥ (?)] ८७

एभिरर्थक्रियापेक्षं[1] काव्यं कार्यं तु लक्षणैः ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यदोषाः[2] (षान्) समासतः ॥ ८८ ॥

गूढार्थमर्थान्तरमर्थहीनं[3] भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
न्यायादपेतं विषमं विसंधि शब्दच्युतं वै दश काव्यदोषाः ॥८९॥

पर्यायशब्दाभिहितं[4] गूढार्थमभिसंज्ञितम् ।
अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते ॥ ९० ॥

अर्थहीनं त्वसंबद्धं सा (?) त्वशेषार्थमेव च ।
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ॥ ९१ ॥

[वि]वक्षितोऽन्य एवार्थो यत्रान्यार्थेन भिद्यते ।
भिन्नार्थं तदपि प्राहुः काव्यं काव्यविल(च)क्षणाः ॥ ९२ ॥

एकार्थस्याभिधानं यत्तदेकार्थमिति स्मृतम् ।
अभिप्लुतार्थं विज्ञेयं यत्पादेन समस्यते ॥ ९३ ॥

न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम् ।
वृत्त[दोषो][5] भवेद्यत्र विषमं नाम तद्भवेत् ॥ ९४ ॥

अनुप्रतिष्ठाशब्दं यत्तद्विसंधीति काशितम् ।
शब्दहीनं च विज्ञेयमशब्दस्य च योजनात् ॥ ९५ ॥

एते दोषास्तु विज्ञेयाः सूरिभिर्नाटकाश्रयाः ।
गुणा[6] [विपर्य]यादेषां माधुर्यौदार्यलक्षणाः ॥ ९६ ॥

श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् ।
अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यार्थगुणा[7] दशैते ॥ ९७ ॥

---

१. 'अर्थक्रियापेक्षैः' का. २. 'काव्यदोषांस्तथाविधान्' का. ३. 'अगूढमर्थान्तरमर्थहीनं' का. ४. इतोऽग्रेतनं सार्धश्लोकपञ्चकं काशीस्थलिखितपुस्तके नास्तीति का. मु. पु. टिप्पणी. ५. 'भेदः' क-ख. ६. 'एत एव विपर्यस्ता गुणाः काव्येषु कीर्तिताः ।' का. ७. 'काव्यस्य गुणा दशैते' का.

[1]ईप्सितेनार्थजातेन संबद्धानुपरस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥ ९८ ॥
विचा[2]रगहनं यत्स्यात्स्फुटं चैव स्वभावतः ।
स्वतः सुप्र[3]तिबद्धं च श्लिष्टं तत्परिकीर्तितम्[4] ॥ ९९ ॥
अ[5]थानुक्तो बुधैर्यत्र श[6]ब्दादर्थः प्रतीयते ।
मु[7]ख(ख्य ?)शब्दार्थसंयोगात्प्रसादः परिकीर्त्यते ॥ १०० ॥
नै[8]तिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
न दुर्बोधा तैश्च कृता समत्वात्समता मता ॥ १०१ ॥
अ[9]भियुक्तैर्विशेषस्तु योऽर्थस्यैवोपलभ्यते ।
तेन चार्थेन संपन्नः समाधिः परिकीर्त्यते ॥ १०२ ॥
बहुशो यत्[10][11]कृतं काव्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति त[12]स्माद्धि तन्माधुर्यमुदा[13]हृतम् ॥ १०३ ॥
स[14]मासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् ।
सा तु (?) स्वैरुदारैश्च तदोजः परिकीर्त्यते ॥ १०४ ॥

---

१. पद्यमेतत् काशीस्थलिखितपुस्तके नास्तीति का. मु. पु. टिप्पणी. २. 'विचार्य-ग्रहणं वृत्त्या' इति का-पुस्तके. ३. 'सुप्रतिबन्धश्च' का. ४. 'परिकीर्त्यते' का. ५. 'अप्यनुक्तो' का. ६. 'शब्दोऽर्थो वा' का. ७. 'सुखशब्दार्थसंबोधात्' का. ८. काशीमुद्रितपुस्तके तु—

'अन्योन्यसदृशं यत्र तथा ह्यन्योन्यभूषणम् ।
अलंकारगुणाश्चैव समासात् समता यथा ॥'

इति समतालक्षणम् ।

९. 'उपमास्त्रियहिष्टानां(?) अर्थानां यत्नतस्तथा ।
प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ॥

इति का. पुस्तके पाठः ।

१०. 'यच्छ्रुतं वाक्यं' इति का-पुस्तके. ११. 'यस्माद्धि' इति-का पुस्तके. १२. 'इति स्मृतम्' इति का-पुस्तके.

१४. 'अवगीताविहीनोऽपि स्यादुदात्तावभावकः ।
यत्र शब्दार्थसंपत्तिस्तदोजः परिकीर्तितम् ॥' इति का-पुस्तके.

सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसंधिभिः ।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥ १०५ ॥
सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥ १०६ ॥
दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारं(त्तं ?) तत्प्रकीर्तितम् ॥ १०७ ॥
यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥ १०८ ॥
एवमेते ह्यलंकारा गुणा दोषाश्च कीर्तिताः ।
प्रयोगमेषां च पुनर्वक्ष्यामि रससंश्रयम् ॥ १०९ ॥
[लघ्वक्षरप्रायकृतमुपमारूपकाश्रयम् ।
काव्यं कार्यं तु काव्यज्ञैर्वीररौद्राद्भुताश्रयम् ॥ ११० ॥]
गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।
कदाचिद्वीररौद्राभ्यां यदा घर्षणजं भवेत् ॥ १११ ॥
रूपदीपकसंयुक्तं नार्यावृत्तसमाश्रयम् ।
शृङ्गारे तु रसे कार्यं काव्यं स्यान्नाटकाश्रयम् ॥ ११२ ॥
उत्तरोत्तरसंयुक्तं वीरे काव्यं तु यद्भवेत् ।
जगत्यातिजगत्यां वा संकृत्यां (त्या ?) वापि तद्भवेत् ॥११३॥

---

१. 'मुख्यप्रयोज्यैर्यच्छन्दैर्युक्तं प्रश्लिष्टसंधिभिः ।' इति क-ख-पुस्तकयोः. २. 'सुकुमारं' इति क-ख.

३. 'यस्यार्थानुप्रवेशेन मनसा परिकल्प्यते ।
अनन्तरं प्रयोगस्य सार्थव्यक्तिरुदाहृता ॥' इति का-पुस्तके.

४. 'अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः ।
उपेतमतिचित्रार्थैरुदात्तं तच्च कीर्त्यते ॥' इति का-पुस्तके.

५. 'यो मनःश्रोत्रविषयः प्रसादजनको भवेत् ।
शब्दबन्धः प्रयोगेण स कान्त इति भण्यते ॥' इति का-पुस्तके.

६. पद्यमिदमधिकं का-पुस्तके. ७. 'रौद्रवीराभ्याम्' इति का-पुस्तके. ८. 'भार्यावृत्तसमाश्रयम्' इति क-पुस्तके. ९. 'शृङ्गारे रसकार्यं तु' इति का-पुस्तके। १०. '°जगत्यां वा' इति का-पुस्तके. ११. 'संस्कृत्या त्रीणि योजयेत्' इति क-ख.

तथैव[1] युद्धसंफेटौ प्रकृत्यां संप्रयोजितौ।
करुणे शक्करी चैव तथा चातिधृतिः स्मृता॥ ११४॥
यद्वीरे कीर्त्यते[2] छन्दस्तद्रौद्रे संप्रयोजयेत्[3]।
शेषाणामर्थयोगेन छन्दः कार्यं तथा[4] रसः॥ ११५॥
त्रिविधं ह्यक्षरं काव्ये[5] विज्ञेयं नाटकाश्रयम्।
ह्रस्वं दीर्घं प्लुतं चैव रसभावविभावकम्॥ ११६॥
एकमात्रं भवेद्ध्रस्वं द्विमात्रं दीर्घमिष्यते।
प्लुतं चैव त्रिमात्रं स्यादक्षरं वर्णसंश्रयम्[6]॥ ११७॥
स्मृते वासूचिते[7] चैव तथा च परिदेविते।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते॥ ११८॥
ओंकारस्तु[8] स्मृते कार्यं हुंकारं[9] वाप्यसूचिते।
परिदेविते[10] च हुंकारमोंकारोऽध्ययने तथा॥ ११९॥
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम्।
काव्ययोगेष्वक्षराणि[11] यथाशोभं निवेशयेत्॥ १२०॥
ये बन्धाः पूर्वमुद्दिष्टा विषमार्धसमासमाः।
उदारमधुरैः[12] शब्दैः कार्यास्ते स्युः[13] रसानुगाः॥ १२१॥
शब्दानुदारमधुरान्प्रमदाभिनेयान्[14]
नाट्याश्रयान्[15] (नु?) कृतिषु प्रयतेत कर्तुम्।

---

१. तथेत्यादिश्लोकद्वयं क-पुस्तके न दृश्यते, अथ का-पुस्तके—
'तथैव युद्धसंस्फेटा उत्कृत्यां संप्रकीर्तितौ।
करुणे शक्करी ज्ञेया तथैवातिधृतिर्भवेत्॥' इति पाठः.

२. 'कीर्तितं' का. ३. 'रौद्रेऽपि प्रयोजयेत्' का. ४. 'प्रयोक्तृभिः' का. ५. 'काव्ये' का. ६. 'स्वरयोजनात्' का. ७. 'चाभ्रयुते चैव' का. ८. 'अकारस्तु स्मृते कार्यं' का. ९. 'ऊकारश्चाप्यसूचिते' का. १०. 'परिदेविते च हाकार' का. ११. 'काव्ययोगेषु सर्वेषु ह्याकाराणि कृतो जयेत्।' का. १२. 'उदारशब्दैर्मधुरैः' का. १३. 'तेऽर्थवशानुगाः' का. १४. 'प्रमदाभिधेया' क-ख. १५. 'नाट्याश्रया सुगति···प्रयते च' क-ख; 'नाट्याश्रयान् कृतिषु' का.

तैर्भूषिता बहु विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥ १२२ ॥
[1]चेक्रीडितप्रकृतिभिर्विकृतैश्च[2] शब्दै-
र्युक्ता न भान्ति ललिता भरतप्रयोगाः ।
[3]यज्ञक्रियेव शरवर्मधरैर्घृताक्तै-
र्वैश्याद्विजैरिव कमण्डलुदण्डहस्तैः ॥ १२३ ॥
मृदुललितपदाढ्यं[4] गूढशब्दार्थहीनं
जनपदसुख[5]बोध्यं युक्तिमन्नृत्ययोज्यम् ।
बहुकृतरसमार्गं[6] संधिसंधानयुक्तं
[7]भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥ १२४ ॥

इति श्रीभा[8]रतीये नाट्यशास्त्रेऽलंकारलक्षणो नाम षोडशोऽध्यायः ॥

---

सप्तदशो[9]ऽध्यायः ।

एवं तु संस्कृतं पाठ्यं मया प्रोक्तं समासतः[10] ।
[11]प्राकृतस्य तु पाठ्यस्य संप्रवक्ष्यामि लक्षणम् ॥ १ ॥
एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥ २ ॥
त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः ।
समानश[12]ब्दैर्विभ्रष्टं देशीम[13]तमथापि वा ॥ ३ ॥
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसंपन्नम् ।
प्राकृतबन्धेष्वेवं संस्कृत[14]मपि योगमुपयाति ॥ ४ ॥

---

१. 'चक्रीयितप्रभृतिभि' क-ख. २. 'तु' का. ३. 'कृष्णाजिनाक्षररुचर्मधरैर्घृताक्तै-र्विश्याद्विजैरिव कमण्डलुदण्डहस्तैः ।' का. ४. '°पदाढ्यं' का. ५. 'बुधजनसुखभोग्यं बुद्धिमन्नृत्तयोग्यम्' का. ६. 'बहुरसकृतमार्गं' का. ७. 'स (?) भवति शुभकाव्यं नाटकप्रेक्षकाणाम् ।' क-ख. ८. 'इति भारतीये नाट्यशास्त्रे वागभिनयो नाम सप्तदशोऽध्यायः' इति का. ९. 'अथ अष्टादशोऽध्यायप्रारम्भः ।' इति का. १०. 'द्विजोत्तमाः' का. ११. 'प्राकृतस्यापि' का. १२. 'समानशब्दं विभ्रष्टं' का. १३. 'देशीगतमथापि च' का. १४. 'संस्कृतमिव प्रयोगमुपयाति' का.

ये वर्णाः[1] संयुक्ताः स्वरवर्णाः·······स्तनतां चापि।
गच्छन्ति पदन्यस्तास्ते विभ्रष्टा इति ज्ञेयाः ॥ ५ ॥

यथा—

एतु[2] आरपराइंज अंकारपरंभयापायणच्छिव।
सायारमज्जिमाइय कवचग्रतवसराणि हणाइं ॥ ६ ॥
वचंति कगत दयवा लोवं अत्थंवसि स्वहत्तिसरा।
खघथभघभाउणहतंतुवेत्ति अत्थं अ मुंघना ॥ ७ ॥(?)

उघरफुतरसासाहे हाफुल्लप्लवयापणच्छिमोत्तूणवंइदोद्दहपइजाइस्व।
खयषधभाणहयानेमुहकहापहुसुरिच्छेसु कगतदजबाणविच्चांवोयंमिठि-
उसरोहोइच्छे ॥ ८–९ ॥ (?)

इति च[3] षकारो नित्यं बोद्धव्यः षट्पदादियोगे तु।
किल[4]शब्दो रेफान्तो भवति तथा क्खुत्ति खलु शब्दः ॥ १० ॥
ड[5] इति भवति टकारो भट[6]कुटकुटितटाद्येषु।
सत्वं[7] च भवति शषयोः सर्वत्र[8] तथाहि स स आदेशः ॥ ११ ॥

---

१. 'ये वर्णाः संयोगात् स्वरवर्णान्यन्त्वन्यूनतां वापि।' इति का. २. 'एतु–' इत्यारभ्य '–कार्यः प्रयोगेऽस्मिन्' इत्यन्तो ग्रन्थोऽतीवाशुद्धो वर्तते, तथा च द्वित्रस्थले लेखकादिदोषवशेन काश्चनार्या अपि गद्यतामापन्नाः. 'एओ आर पराणिअक्कार परीचवा अएणायिवसआरमंसिमाइतवर्गतवर्गनिगणावंच्छतिकटतदवयवालोत्सवअयचसेव इति सराखप्पतुधळाऊण इहत्थ उषति अं असुचंताउब्बउरयरोहे। णहुंतोअवअएणं थिमोहूणभ्रभ्रवेभ्रवरुभ्रुद्वगचन्द्ररां रंसुकगतिदवाणअणिच्चलो पजमपिओसरोहोलक्ष्षी ॥' इति का-पुस्तके ३. 'च' इति क-ख-पुस्तकयोस्त्रुटितम्. ४. 'किलशब्दान्तो रेफो भवति तथा खुं निखिलशब्दः' इति क-ख-पुस्तकयोः 'किर' इति भवति. ५. 'उ इति च भवति डकारो' इति क-ख-पुस्तकयोः. ६. 'नडककुटी······तडागेषु' इति क-ख-पुस्तकयोः। 'ट' इति स्यात्, तथा च 'टो डः' इति सूत्रेण डत्वविधानं युज्यते, एवं सति 'नडभडकुडीतडागेषु' इति पठनीयम्. ७. 'शषोः सः' इति सूत्रानुसारेण 'षशयोः' इति पाठव्यत्यासे कृते 'विससङ्का' इति साधीयान्पाठो भवितुमर्हति. ८. 'सर्वत्र तथाहि विशशङ्का' इति क-ख-पुस्तकयोः.

अस्पष्टश्च दकारो भवत्यनादौ तकार इतराद्ये[1] ।
बडवा[2]तडागतुल्यो भवति ड[3]कारोऽपि च[4] लकारः ॥ १२ ॥
'[5]पंधमधुशब्दे च तथा धकारवर्णो हकारतां याति ।'
सर्वत्र च प्रयोगे भवति न[6]कारोऽपि च णकारः ॥ १३ ॥
आपाणं [7]आवाणं भवति पकारेण वत्वयुक्तेन ।
अयथातथादिकेषु तु थकारवर्णो व्रजति [8]हत्वम् ॥ १४ ॥
[9]परुसं फरुसं विद्यात्पकारवर्णोऽपि फत्वमुपयाति ।
यस्तु[10] मृगः सोऽपि मओ यस्तु मृतः सोऽपि तथैव ॥ १५ ॥
ओ[11]कारत्वं गच्छत्यौकारश्चो[12]पधादिषु नियुक्तः ।
[13]प्रचयाचिराचलादिषु चकारवर्णोऽपि च यकारः ॥ १६ ॥
अपरस्व[14]रनिष्पन्ना ह्येवं प्राकृतसमाश्रया वर्णाः ।
संयुक्तानां तु[15] पुनर्वक्ष्ये परिवृत्तिसंयोगम् ॥ १७ ॥
[16]श्चत्सप्सां च्छ इति ध्यह्ययोर्भवति तु ज्झकारः ।
ष्टः ट्ठः स्तः त्थः ष्णस्नक्ष्णां ण्हः क्षः खकाररूपो हि ॥ १८ ॥

---

१. 'इतराद्यः' क-ख. २. 'वनवभोनागतुल्ये (?)' इति क-ख-पुस्तकयोः. ३. 'डो लः' इत्यनेन स्वरात्परस्यासंयुक्तस्यानादेर्डस्य प्रायो लो भवति, तेन 'वलआमुहं गरुलो तलाअं' इत्यादयः सिध्यन्ति. ४. 'च' इति का-पुस्तके नास्ति. ५. 'शठपाठपीठिआदिषु कारकर्णोऽपि ठत्वमायाति ।' इति क-ख-पुस्तकयोः. 'ठकारवर्णः' इत्युचितम्, तथा च 'ठो ढः' इति सूत्रेण स्वपरात्परस्यासंयुक्तस्यानादेष्ठस्य ढत्वे 'शठपाठपीठिकादिषु ठकारवर्णोऽपि ढत्वमायाति' इति पाठो युक्तः. ६. 'मकारोऽपि' इति क-ख. 'नो णः' इत्यनुसारेण नकारस्य णत्वे 'नकारः' इति पाठो ज्यायान्. ७. 'पो वः' इति रीत्या प्रायिको वो विधीयते तेनैवं संगच्छते. ८. 'धत्वम्' इति क. ९. 'परुषाणां' (?) इति क-ख. १०. 'यस्तु मृतः सोऽपि मओ डियस्तुमृतसोऽपि मओ यस्तुमृगः सोऽपि तथैवा' (?) इति क-ख. ११. 'औत् ओत' इति सूत्रेण. १२. 'चौषधादिषु' (?) इति का. १३. 'प्रबलायिता बलादिषु भवति चकारोऽपि च यकारः' इति क-ख. १४. 'अपरस्पर' इति क-ख. १५. 'च' इति का.

१६. 'क्षशश्चाच्छ इति तथा राज्ञैतु तकारयोग उपयातः ।
तच्चो अच्छरपक्षास्य च संसत्साह्यसवसत्सोष्टौज्वस्तेऽधः शेषो लक्ष्मक्ष्मोह्यक्ष्णः ॥

आश्चर्यं[1] मात्सर्यं चेत्यनयोर्यस्य रियं च तथा।
उत्साहश्चोच्छाहो पथ्यं पच्छं च विज्ञेयम्॥ १९॥
तुभ्यं तुज्झं मह्यं मज्झं विन्ध्यश्च भवति विंज्झ इति।
हृष्टो दल्ल (दृष्टो दट्ठ) इति स्यात् हस्तोऽपि च हत्थ इत्येवम्॥ २०॥
ग्रीष्मो गिम्हो च तथा श्लक्ष्णां (क्ष्णं?) लण्हं सदा तु विज्ञेयम्।
कृष्णः कण्हो च भवेत् यक्षो जक्खो च पलङ्क पर्यङ्के॥ २१॥
वि[2]परीतमयोगेन ब्रह्मादौ स्याद्बृहस्पतौ फत्वम्।
य[3]ज्ञश्च भवति जह्णो भीष्मो [4]भिम्मोत्ति विज्ञेयः॥ २२॥
उ[5]परिगतोऽधस्ताद्वा भवेत्ककारादिकस्तु यो वर्णः।
स हि संयोगविहीनः [6]शुद्धः कार्यः प्रयोगेऽस्मिन्॥ २३॥
ए[7]वमेतत्तु विज्ञेयं प्राकृतं संस्कृतं तथा।
अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम्॥ २४॥
भाषा चतुर्विधा ज्ञेया दे[8]शरूपप्रयोगतः।
संस्कृतं प्राकृतं चैव यत्र पाठ्यं प्रयुज्यते॥ २५॥
अतिभाषार्यभाषा च जातिभाषा तथैव च।

---

आश्चर्यं अच्छरियं निश्चयमिच्छन्ति णिच्छयन्ति तथा।
उत्सादो उत्साहो पथ्यं पथ्यं च विज्ञेयम्॥
तुभ्यं तुज्झं मह्यं मज्जं विन्ध्यश्च भवति विञ्जेति।
दृष्टो दत्थोऽस्ति तथा हस्तोऽपि च भवति हत्थेति॥
ग्रीष्मो गीम्होति तथा श्लक्ष्णं सह्णं सदा तु विज्ञेयम्।
उष्णं उह्णं जक्षो जक्षौर्योल्लश्च भवति पल्लंको॥' इति **क-ख**-पुस्तकयोः।

१. 'उत्थारो—उच्छाहो' इति स्यात् 'वोत्साहे थो हश्वरः' इति सूत्रेण तथाविधानात्. 'मज्झं' इत्युचितम्. 'विंज्झेति' इत्युचितम्. 'विज्जा' इति विद्यायाः प्राकृतम्. 'दिट्ठेति' इति साधुः. 'गिम्हो' इत्युचितम् 'पक्ष्मश्मष्मस्मह्मां म्हः' इति तद्विधायकं शास्त्रम्. 'सह्णं' इत्युचितम्. 'उह्णं इति युक्तम्. २. 'विपरीते हसयोगो' इति **क-ख**. ३. 'यज्ञो भवति च जन्नो' इति **क-ख**. ४. 'भिन्नोति' इति **क-ख**. ५. 'उपरिगतो हस्ताद्वा भवेत्कारादिकस्तु' इति **क-ख**; 'उपरिगतेतोधस्तान्वा' इति **का**. ६. 'शुद्धं कार्यं प्रयोगेऽस्मिन्' इति **का**. ७. 'एवमेव तु' इति **का**. ८. 'दशरूपे' इति **क-ख**.

तथा जात्यन्तरी चैव भाषा नाट्ये[1] प्रकीर्तिता ॥ २६ ॥
अतिभाषा[2] तु देवानामार्यभाषा तु भूभुजाम् ।
संस्कारपाठ्यसंयुक्ता सम्यग्ग्राम[3]प्रतिष्ठिता ॥ २७ ॥
विविधा[4] जातिभाषा च प्रयोगे समुदाहृता ।
म्लेच्छशब्दोपचारा च भारतं वर्षमाश्रिता[5] ॥ २८ ॥
अथ या जात्यन्तरी भाषा ग्रामा[6]रण्यपशूद्भवा ।
नानाविहंगजा[7] चैव नाट्यधर्मी प्रयोगतः[8] ॥ २९ ॥
जातिभाषाश्रयं[9] पाठ्यं द्विविधं समुदाहृतम् ।
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम् ॥ ३० ॥
धीरोद्धते धीरललिते[10] धीरोदात्ते तथैव च ।
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम् ॥ ३१ ॥
एषामेव तु सर्वेषां नायकानां[11] प्रयोगतः ।
कारण[12]व्यपदेशेन प्राकृतं तु[13] प्रयोजयेत् ॥ ३२ ॥
ऐश्वर्य[14][ण] प्रमत्तस्य ऐश्वर्येण प्लुतस्य च ।
दारिद्र्येण प्रमत्तस्य दारिद्र्येण प्लुतस्य च ॥ ३३ ॥
उत्तमस्यापि ब्रुवतः[15] प्राकृतं[16] संप्रयोजयेत् ।
व्याजलिङ्ग[17]प्रतिष्ठानां श्रमणानां तपस्विनाम् ॥ ३४ ॥
भिक्षुचार्च[18]चराणां च(?) प्राकृतं संप्रयोजयेत् ।
बाले ग्रहोपसृष्टे च स्त्रीणां[19] च प्रकृतौ तथा ॥ ३५ ॥

---

१. 'नाट्यप्रकीर्तिता' इति का. २. 'अभिभाषा' इति का. ३. 'न्यायप्रतिष्ठिता' इति का. ४. 'द्विविधा' इति का. ५. 'आश्रितम्' इति क-ख. ६. 'ग्राम्या°' इति का. ७. 'विहगजा°' इति का. ८. 'प्रयोगतः' इति क-ख. ९. '···ति°' इति क-ख. १०. 'धी···ललिते' इति क-ख.' ११. 'नाट्यकानां' इति क-ख. इति का. १२. 'करैरव्यपदेशेन' इति क-ख. १३. 'संप्रयोजयेत्. १४. 'का-पुस्तके तु—

'ऐश्वर्येण प्रमत्तस्य दारिद्र्येण प्लुतस्य च ।' इत्येव श्लोकार्धम् ।

१५. 'पठतः' इति का. १६. '···कृतं' इति क-ख. १७. 'व्याजलिङ्ग' इति क-ख. १८. 'भिक्षुचक्रवरणानां' इति क-ख. १९. 'स्त्रीणां स्त्रीप्रकृतौ तथा' इति का.

नीचे मत्ते सलिङ्गे च प्राकृतं पाठ्यमिष्यते ।
परिव्राण्[1]मुनिशान्तेषु वा(शा ?)क्येषु श्रोत्रियेषु च ॥ ३६ ॥
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ।
राज्ञश्च गणिकायाश्च शिल्प[2]कार्यास्तथैव च ॥ ३७ ॥
कालावस्थान्तरकृतं योज्यं पाठ्यं तु संस्कृतम् ।
संधिविग्रहसंब[3]द्धं तथा चाप्य[4]शुभं शुभम् ॥ ३८ ॥
ग्रहनक्षत्रचरितं खगानां रुतमेव च ।
सर्वमेतद्धि विज्ञेयं [5]कार्यबन्धे शुभाशुभम् ॥ ३९ ॥
नृपपत्न्या भवेत्पाठ्यं संस्कृतं द्विजसत्तमाः ।
क्रीडार्थं सर्वलोकस्य प्रयोगस्य सुखाश्रयम् ॥ ४० ॥
क्री[6]डालीलार्थकं चैव पाठ्यं वेश्यासु संस्कृतम् ।
लोकोपचा[7]रज्ञानार्थं क्रीडार्थं पार्थिवस्य तु ॥ ४१ ॥
निर्दिष्टं शिल्प[8]कार्येषु नाटके संस्कृतं वचः ।
आम्नायसिद्धं सर्वासां शुभमप्स[9]रसां [10]वचः ॥ ४२ ॥
संसर्गाद्देवतानां वै तद्धि लोकोऽनुवर्तते ।
छन्द[11]तः प्राकृतं पाठ्यं [12]स्मृतमप्सरसां भुवि ॥ ४३ ॥
[13]मानुषीणां च कर्तव्यं कारणार्थव्यपेक्षया ।
न बर्बरकिरातान्ध्रद्रवि[14]डाद्यासु जातिषु ॥ ४४ ॥
ना[15]ट्यप्रयोगे तु कर्तव्यं काव्यं भाषासमाश्रयम् ।
जातिष्वेतासु सर्वासु श्रद्धासु च द्विजोत्तमाः ॥ ४५ ॥

---

१. 'परिभाट्'(?) इति क-ख; 'परिव्राड्मुनिशान्तेषु चैक्षषु(?) श्रोत्रियेषु चा' इति का. २. 'कार्यावस्थान्तरकृतं' इति का. ३. 'संपन्नम्' इति का. ४. 'अशुभाशुभम्' इति का. ५. 'यस्माद्राजा' इति क-ख. ६. 'कालाभ्यासाश्रयं' इति क-ख. ७. 'कलोपचार-ज्ञानार्थं' इति क-ख. ८. 'शिल्पकार्यास्तु' इति क-ख. ९. 'शुभं चाप्सरसां वचः' इति का. १०. 'भवः' इति क-ख. ११. 'छन्दतः' इति का. १२. 'वाक्यं' इति का. १३. 'मानुषाणां' इति का. १४. 'द्रमिलाद्यासु' इति का. १५. इतः प्रभृति श्लोकचतुष्टयी काशीस्थलिखितपुस्तके नास्तीति का-पुस्तकटिप्पणी.

सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।
अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः ॥ ४६ ॥
नानादेशसमुत्थं हि काव्यं भवति नाटके ।
...................................................॥ ४७ ॥
मागध्यवन्तिजा प्राच्या सूरसेन्यर्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ॥ ४८ ॥
शबराभीरचण्डालसचरद्रविडोद्र(ड्र)जाः ।
हीना वनेचराणां च विभाषा नाटके स्मृता ॥ ४९ ॥
मागधी तु नरे[1]न्द्राणामन्तःपुरनिवासिनाम् ।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी ॥ ५० ॥
प्राच्या विदूषकादीनां [2]धूर्तानामप्यवन्तिजा ।
नायिकानां च सखीनां च [3]सूरसेनाविरोधिनी ॥ ५१ ॥
यो[4]धनागरकादीनां दाक्षिणात्या[5]र्थे दीव्यताम् ।
[6]बाह्लीकभाषोदीच्यानां खसानां च स्वदेशजा ॥ ५२ ॥
शबराणां शकादीनां तत्स्वभावश्च यो गणः ।
[7]शकारभाषा योक्तव्या [8]पाञ्चाली पुल्कसादिषु ॥ ५३ ॥
अङ्गारकारव्याधानां का[9]ष्ठयन्त्रोपजीविनाम् ।
योज्या शबरभाषा तु किंचिद्वानौकसी तथा ॥ ५४ ॥
गवाश्वाजाविकौष्ट्रादिघोषस्थाननिवासिनाम् ।
[10]आभीरोक्तिः शाबरी [11]वा द्राविडी द्रविडादिषु ॥ ५५ ॥
सुरङ्गा[12]खनकादीनां (ना) मौष्ट्रि[13]कानां च रक्षसाम् ।

---

१. 'नराणां चैवा॰' इति का. २. 'योज्या भाषा अवन्तिजा' इति का. ३. 'सौरसेन्यविरोधिनी' इति का. ४. 'यौधनागरिकादीनां' इति का. ५. 'च' इति का. ६. 'बह्लीक' इति का. ७. 'सकारभाषा' इति क-ख. ८. 'चाण्डाली पुक्कसादिषु च' इति क-ख. ९. 'काष्ठपत्रोपजीविनाम्' इति क-ख. १०. अत्र का-पुस्तके 'विन्ध्यसागरमध्ये तु' इत्याद्यूनषष्टितमोऽग्रेतनः श्लोकः. ११. 'स्यात्' इति का. १२. 'सुरङ्गखनकादीनाम्' इति का. १३. 'सौण्डीकाराश्च रक्षिणाम् (?)' इति का.

व्यसने नायकानां[1] स्यादात्मरक्षासु मागधी ॥ ५६ ॥
गङ्गा[2]सागरमध्ये तु ये देशाः संप्रकीर्तिताः ।
एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५७ ॥
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५८ ॥
सुराष्ट्रावन्तिदेशेषु वेत्र[3]वत्युत्तरेषु च ।
ये देशास्तेषु कुर्वीत चकारबहुलामिह ॥ ५९ ॥
हिमवत्सिन्धुसौवीरान्ये[4] च देशाः समाश्रिताः ।
उकारबहुलां तज्ज्ञ[5]स्तेषु भाषां प्रयोजयेत् ॥ ६० ॥
चर्मण्वतीनदीपारे ये चार्बुदसमाश्रिताः ।
तकारबहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥ ६१ ॥
एवं भाषाविधानं तु कर्तव्यं नाटकाश्रयम् ।
अत्र[6] नोक्तं मया यच्च लोकाद्ग्राह्यं बुधैस्तु तत्[7] ॥ ६२ ॥
एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः ।
पुनर्वाक्यप्रचारं तु लौकिकं संनिबोधत ॥ ६३ ॥
उत्तमैर्मध्यमैर्हीनैर्ये संभाष्या यथा नराः ।
समानोत्कृष्टहीनास्तु[8] नाटके तान्निबोधत ॥ ६४ ॥
देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥ ६५ ॥

---

१. 'नायिकादीनां' इति का.
२. 'न बर्बरकिरातान्ध्रद्रविडाद्यासु जातिषु ।
नाट्यप्रयोगे कर्तव्यं काव्यं भाषासमाश्रयम् ॥'
पद्यमिदं का-पुस्तके नास्ति क-ख-पुस्तकयोरप्यागतपूर्वमेतत्पद्यमत्र पुनरपि वर्तते.
३. 'वेत्रवत्यन्तरेषु' इति का. ४. 'येऽन्यदेशान्' इति का. ५. 'तेषु नित्यं भाषां प्रयोजयेत्' इति का. ६. 'अथ' इति का. ७. 'अत्र का-पुस्तके—'इति भारतीये नाट्यशास्त्रे भाषाविधानं नाम अष्टादशोऽध्यायः । एकोनविंशाध्यायप्रारम्भः ।' इत्यधिकम्.
८. 'च' इति का.

देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च[1] ये ।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥ ६६ ॥
आर्येति ब्राह्मणं ब्रूयान्महाराजेति पार्थिवम् ।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥ ६७ ॥
छन्दतो नामभिर्वाच्या ब्राह्मणैस्तु नराधिपाः ।
तत्क्षाम्यं तु महीपालैर्यस्मात्पूज्या द्विजोत्तमाः ॥ ६८ ॥
ब्राह्मणैः सचिवो वाच्यो ह्यमात्यः[2] सचिवेति वा ।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥ ६९ ॥
[3]समैः संभाषणं कार्यं येन नाम्ना तु संज्ञितः ।
हीनैः सपरिहारं तु नाम्ना संभाष्य उत्तमः ॥ ७० ॥
नियोगाधिकृता ये तु पुरुषा योषितस्तथा ।
कारुकाः[4] शिल्पिनश्चैव संभाष्यास्ते तथैव हि ॥ ७१ ॥
मान्यो[5] भावेति वक्तव्यः किंचिदूनस्तु मारिषः[6] ।
समानोऽथ वयस्येति हंहो[8] हन्तेति चाधमैः ॥ ७२ ॥
आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ।
[9]तपस्वी च प्रशान्तश्च साधो इति हि शब्द्यते ॥ ७३ ॥
स्वामीति[10] युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवं हेपूर्वं वाधमं[11] वदेत् ॥ ७४ ॥
यद्यस्य कर्म शिल्पं[12] वा विद्या वा जातिरेव वा ।
स तेन नाम्ना संभाष्यो नाटकादौ प्रयोक्तृभिः ॥ ७५ ॥
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा पुनः ।
वाच्यः शिष्यः सुतो वापि[13] पित्रा वा गुरुणापि वा ॥ ७६ ॥

---

१. 'श्रुतिधराश्च' इति का. २. 'ह्यमात्यसचिवेति' इति का. ३. 'समं' इति क-ख. ४. 'कारुकाः' इति का. ५. 'मर्षो भावेति' इति क-ख. ६. 'मर्षकः' इति क-ख. ७. 'हि' इति का. ८. 'ही हं वा इति वाधमः' इति का. ९. 'तपस्वीव प्रशान्तः सन्' इति क-ख. १०. 'तु' इति क-ख. ११. 'चाधमं' इति का. १२. '°ल्पं विद्या' इति क-ख. १३. 'वाथ' इति क.

संभाष्याः शाक्यनिर्ग्रन्था[1] भदन्तेति प्रयोक्तृभिः।
आमन्त्रणेषु पाखण्डाः शेषास्तु[2] समयाश्रितैः॥ ७७॥
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा।
भट्टेति[3] सार्वभौमस्तु नित्यं परिजनेन[4] हि॥ ७८॥
राजन्नित्यृषिभिर्वाच्यो ह्यपत्यप्रत्ययेन[5] वा।
वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः॥ ७९॥
विदूषकेण[6] राज्ञी च चेट्यां[7] च भवतीत्यपि।
नाम्ना वयस्येत्यपि वा राज्ञा वाच्यो विदूषकः॥ ८०॥
सर्वस्त्रीभिः पतिर्वाच्य[9] आर्यपुत्रेति यौवने।
आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः॥ ८१॥
पुरुषाभाषणं ह्येवं नाट्ये कार्यं प्रयोक्तृभिः।
पुनः स्त्रीणां[10] प्रवक्ष्यामि संभाषां[11] नाटकाश्रयाम्॥ ८२॥
तपस्विन्यो[12] देवताश्च वाच्या[13] भगवतीति च।
गुरुभार्या[14] च वक्तव्या स्थानीया भवतीति च॥ ८३॥
गम्या भद्रेति वक्तव्या वृद्धाम्बेति[15] च नाटके।
राजपत्न्यस्तु[16] संभाष्याः सर्वाः परिजनेन तु॥ ८४॥
भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः।
देवीति महिषी वाच्या राज्ञा परिजनेन तु॥ ८५॥
भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः।
स्वसेति भगिनी वाच्या ज्येष्ठा वत्सेति चानुजा॥ ८६॥
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्था व्रतिनी[17] च या।

---

१. 'निग्रन्था' इति क-ख. २. 'शेषाः स्वयमुपागतैः' इति क-ख. ३. 'भेदेति' इति क-ख. ४. 'प्रजनेन न हि' इति क-ख. ५. 'ह्यपत्यं पत्ययेन' इति क-ख. ६. 'विदूषकेन' इति का. ७. 'वेही' इति का. ८. 'नाम्ना च यस्येत्यपि' इति क-ख. ९. 'पतिः..........' इति क-ख. १०. 'स्त्रीणां च वक्ष्यामि. ११. 'संभा[illegible]नाटकाश्रयम्' इति क-ख. १२. 'तपस्विभ्यो' इति क-ख. १३. 'वाच्या[illegible] भगवन्निह' इति क-ख. १४. 'गुरुरार्येति' इति क-ख. १५. 'वृद्धा वाच्येति' इति का. १६. 'च' इति का. १७. '°व्रतिनी त्रपा' इति क-ख.

पत्नी चार्येति संभाष्या पितुर्नाम्ना सुतस्य सा ॥ ८७ ॥
समानाभिस्तथा सख्यो हला भाष्याः परस्परम् ।
प्रेष्या हञ्जेति वक्तव्या स्त्रियो या तू[1]त्तमा भवेत् ॥ ८८ ॥
अज्जुकेति भवेद्वाच्या[2] वेश्या परिजनेन तु ।
या त्वत्र वृद्धा सा त्वत्ता[3] भाष्या नाट्यजनेन[4] तु ॥ ८९ ॥
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ।
पुरोध[5][:]सार्थवाहानां भार्या[6] त्वार्येति सर्वदा ॥ ९० ॥
तल्लिङ्गार्थानि[7] नामानि कार्याणि कविभिर्द्विजाः ।
औत्पत्तिकानि[8] यानि स्युर्न प्रख्यातानि[9] नाटके ॥ ९१ ॥
ब्रह्मक्षत्रस्य[10] नामानि गोत्रकर्मानुरूपतः ।
काव्ये कार्याणि कविभिः शर्मवर्मकृतानि च ॥ ९२ ॥
दत्तप्रायाणि नामानि वणिजां तु प्रयोजयेत् ।
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ॥ ९३ ॥
विजयार्थानि नामानि राजस्त्रीणां[11] च कारयेत् ।
दत्ता मित्रा च सेनेति[12] वेश्यानामानि[13] कारयेत् ॥ ९४ ॥
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ॥ ९५ ॥
गम्भीरार्थानि नामानि योजयेदुत्तमेषु[14] च ।
यस्मान्नामानुसदृशं[15] कर्म तेषां भविष्यति ॥ ९६ ॥
जातिचेष्टानुरूपाणि शेषाणामपि कारयेत् ।
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः ॥ ९७ ॥

---

१. 'वा' इति क-ख. २. 'वेश्या वाच्या' इति का. ३. 'साक्षात्तु' इति क-ख. ४. 'परिजनेन तु' इति क-ख. ५. 'पुरोधाः' इति क-ख. ६. 'नार्यस्त्वार्येति' इति का. ७. 'तल्लिङ्गस्थानि' इति का. ८. 'उत्पत्तिकानि' इति क-ख. ९. 'प्रत्याख्यातानि (?)' इति का. १०. 'ब्राह्मक्षत्रस्य' इति का. ११. 'राज्ञां स्त्रीणां च' इति का. १२. 'वासना च' इति क-ख. १३. 'वेश्यामित्राणि' इति क-ख. १४. 'स्त्रीणां चोक्तानि योजयेत्' इति क-ख. १५. 'कस्मान्नाम्नामसदृशं (?)' इति क-ख.

एवं नाम[1]विधानं तु कर्तव्यं कविभिः सदा ।
एवं भाषाविधानादि ज्ञात्वा सर्वमशेषतः ॥
ततः पाठ्यं प्रयुञ्जीत षडलंकारसंयुतम् ॥ ९८ ॥

पाठ्यगुणानिदानीं वक्ष्यामः । तद्यथा—सप्त स्वराः, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलंकाराः, षडङ्गानि, इ[2]ति । तत्र सप्त स्वराः—षड्जर्षभगान्धारमध्य[3]मपञ्चमधैवतनिषादा[4]ः । ते[5] एते रसेषूपपाद्याः । यथा—

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु च ॥ ९९ ॥
गान्धारश्च निषादश्च कर्तव्यौ क[6]रुणे रसे ।
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ॥ १०० ॥
[7]त्रीणि स्थानान्युरःकण्ठशिरांसीति भवन्त्यपि ।
शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु[8] ।
उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते ॥ १०१ ॥
आभाषणं च[9] दूरस्थे[10] शिरसा संप्रयोजयेत् ।
[11]नातिदूरे च कण्ठे च ह्युरसा च समीपतः ॥ १०२ ॥
उरसोदाहृतं वाक्यं शिरसोद्दी[12]पयेद्बुधः ।
कण्ठेन शमनं कुर्याद्वाच्य[13]योगेषु सर्वदा ॥ १०३ ॥
उदात्तश्चा[14]नुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः ॥ १०४ ॥

---

१. 'नामधानं' इति क-ख. २. का-पुस्तके 'इति' इति नास्ति, किंतु 'तेषामिदानीं लक्षणान्यभिव्याख्यास्यामः' इति वर्तते. ३. 'मध्य पञ्च' इति क-ख. ४. 'निषधाः' इति का. ५. 'ते' इति का-पुस्तके नास्ति. ६. 'कर्तव्यो (?)' इति क-ख. ७. 'त्रीणि स्थानानि—उरःकण्ठशिर इति भवति । अपि च' इति क-ख. ८. 'च' इति का. ९. 'तु' इति का. १०. 'दूरस्थं' इति क-ख. ११. 'नातिदूरेऽपि कण्ठेनाप्युरसा चापि पार्श्वतः' इति का. १२. 'शिरसा दीपयेत्' इति का. १३. 'पाठ्यं योगेषु' इति का. १४. 'उदात्ताश्चानुदात्तश्च' इति का.

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वीररौद्राद्[1]भुतेषूदात्तकम्पितैः करुणवात्सल्यभयानकेष्वनुदात्तस्वरितकम्पितैर्वर्णैः पाठ्यमुपपाद[2]येदिति । द्विविधा काकुः । साकाङ्क्षा निराकाङ्क्षे[3]ति । वाक्य[4]स्य साकाङ्क्षनिराकाङ्क्षत्वात् ।

अनियुक्तार्थकं वाक्यं साकाङ्क्षमि[5]ति संज्ञितम् ।
नियुक्तार्थं तु यद्वाक्यं निराकाङ्क्षं तदुच्यते ॥ १०५ ॥

[6]अत्र साकाङ्क्षं मन्द्रादितारान्तम्, अनि[7]युक्तार्थमनिर्यातितवर्णालंकारं [8]कण्ठोरःस्थानगतम् । निराकाङ्क्षं नाम नियुक्तार्थं निर्या[9]तितवर्णालंकारं शिरःस्थानगतम् मन्द्रादि[10]तारान्तमिति ।

[ अथ [11]षडलंकाराः— ]

उच्चो दीप्तश्च [12]मन्द्रश्च [13]नीचो द्रुतविलम्बितौ ।
पाठ्यस्यैते ह्यलंकारा लक्षणं च निबोधत ॥ १०६ ॥

उच्चो नाम शिरःस्थानगतस्तारः [14]स्वरः, स च दूरस्थाभाषणविस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनार्थं वाद्येषु । दीप्तो नाम शिरस्थानगतस्तारतरः, स चाक्षेपकलहविवादामर्षो[15]त्कुष्टाधर्षणाक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सना[16]क्रन्दितादिषु । मन्द्रो नाम उरःस्थानगतो निर्वेदग्लानिश[17]ङ्काचिन्तौत्सुक्यदैन्यावे[18]गव्याधिगाढशस्त्रक्षतमूर्च्छामदादिषु । नीचो नाम उरःस्था[19]नगतो मन्द्रतरः स्वभावाभाषणव्याधितपथिश्रान्तत्रस्तपतितमूर्च्छितादिषु । [20]द्रुतो नाम

---

१. '॰द्भुतैरुदात्त॰' इति क-ख. २. 'उपपादयति' इति क-ख. ३. 'निराकाङ्क्षा चेति' इति का. ४. क-ख-पुस्तकयोस्तु—'वाक्यस्य साकाङ्क्षेति अत्र साकाङ्क्षं मन्द्रादितारान्तम्, साकाङ्क्षत्वात्.' ५. 'साकाङ्क्षकमिति संज्ञितम्' इति का. ६. 'अत्र साकाङ्क्षं मन्द्रादितारान्तम्' इति का-पुस्तके नास्ति. ७. 'अयुक्तं नाम' इति का. ८. 'कर्णोरःस्थानगतं' इति का. ९. 'नियुक्तार्थनिर्यातितवर्णालंकारं' इति का. १०. 'मन्द्रादितारागतमिति' इति का. ११. 'अथ षडलंकाराः' इति क-ख-पुस्तकयोर्नास्ति. १२. 'मन्द्रश्च' इति त्रुटितं क-ख-पुस्तकयोः. १३. 'नीचोदाहृत' इति क-ख-पुस्तकयोः. १४. 'तारस्वरः' इति का. १५. '॰मर्षाकष्टाधर्षणा' इति क-ख. १६. 'निर्भर्त्सनादिषु' इति का. १७. 'शङ्का' इति नास्ति क-ख-पुस्तकयोः. १८. 'वेग' इति नास्ति क-ख-पुस्तकयोः. १९. 'उरः स्थानस्थामन्द्रतरः स्वभावाभाषणव्याधितपः शान्तत्रस्त—' क-ख. २०. 'द्रुतोनाम कण्ठगतस्खलितवेल्लनमदनभयशीतज्वरत्रस्तायस्तागूढकार्यवेदनादिषु' इति का.

कण्ठगतस्त्वरितलज्जितमन्मथभयशीतज्वरार्तत्रस्ताकार्यवेदनादिषु । विलम्बितो नाम कण्ठस्थानस्थो[1] मन्द्रः शृङ्गारवितर्कविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्ता[2]विस्मिततर्जनदोषानुकीर्तनेन दीर्घरोगनिपीडनादिषु । अत्रानुवंश्याः श्लोका भवन्ति—

उत्तरोत्तरसंजल्पे परुषाक्षेपणे तथा ।
तीक्ष्णरूक्षाभिनयन आवेगे क्रन्दिते तथा ॥ १०७ ॥
परोक्षस्य समाह्वाने तर्जने त्रासने तथा ।
दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च ॥ १०८ ॥
सर्वेष्वेतेषु[3] नित्यं हि नानारससमाश्रयौ[4] ।
उच्चा दीप्ता द्रुता[5] चैव काकुः कार्या प्रयोक्तृभिः ॥ १०९ ॥
मल्ले[6] च मर्दने चैव भयार्ते शीतविप्लुते[7] ।
मन्द्रा द्रुता[8] च कर्तव्या काकुर्नाट्य[9]प्रयोक्तृभिः ॥ ११० ॥
दृष्टानष्टानुसारेण इष्टानिष्टश्रुतौ[10] तथा ।
इष्टार्थख्यापने[11] चैव चिन्ताग्रस्ते[12] तथैव च ॥ १११ ॥
उन्मादे[13]ऽसूयने चैव उपालम्भे तथैव च ।
विस्मयामर्षयोश्चैव हर्षे च परिदेविते ॥ ११२ ॥
अव्यक्तार्थे[14] प्रदाते (ने ?) च तथालोके तथैव च ।
उत्तरोत्तरसंजल्पे कार्येऽतिशयसंयुते ॥ ११३ ॥
विक्षते व्याधिते त्वङ्गे दुःखशोके तथैव च ।
विलम्बिता च दीप्ता च काकुर्मन्द्रा[15] च वै भवेत् ।
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ॥ ११४ ॥

---

१. 'कण्ठ स्थानगतः' का. २. 'चिन्तातर्जनविस्मयदोषानुकीर्तनदीर्घरोगनिपीडनादिषु' इति का. ३. 'भावेष्वेतेषु' का. ४. '°सभाश्रयात्' का. ५. 'हृता' क-ख. ६. 'लल्लोच मन्मने' क-ख. ७. 'चित्तविह्वते' का. ८. 'मन्दाहृता' इति क-ख ९. 'नाट्ये प्रयोक्तृभिः' इति क-ख. १०. 'इष्टानष्टश्रुतौ' इति क-ख. ११. 'दृष्टार्थख्यापने' इति क-ख. १२. 'चिन्तयाने' इति का-पुस्तके १३. का-पुस्तके श्लोकस्यास्य पूर्वार्धमुत्तरार्धत्वेनोत्तरार्धं च पूर्वार्धत्वेन वर्तते. १४. सार्धमिदं पद्यं क-ख-पुस्तकयोर्नास्ति. १५. 'काकुमन्द्रा' इति क-ख.

मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते ।
यानि स्युस्तीक्ष्णरूपाणि दीप्ता वोच्चा[1] च तेष्वपि ॥ ११५ ॥
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ।
लघ्वक्षरप्रायकृते गुर्वक्षरकृते तथा ।
गूढार्थवचने चैव............... ॥ ११६ ॥
उच्चा दीप्ता च कर्तव्या काकुस्तत्र प्रयोक्तृभिः ।
हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ॥ ११७ ॥
वीररौद्राद्भुतेषूच्चा दीप्ता[2] चापि प्रशस्यते ।
भयानके सबीभत्से द्रुता[3] नीचा च कीर्तिता ॥ ११८ ॥
एवं भावरसोपेता काकुर्योज्या[4] प्रयोक्तृभिः ।

अथाङ्गानि—विच्छेदोऽर्पणे[5] विसर्गोऽनुबन्धो दीपनं प्रशमनमिति षडङ्गानि । तत्र विच्छेदो नाम विरामकृतः । अर्पणं[6] नाम लीलावर्णस्वरूपेणापूरयदिव रङ्गं यत्पठ्यते । विसर्गो नाम वाक्यन्यासः । अनुबन्धो[7] नाम पदान्त-[8]रेष्वपि विच्छेदोऽनुच्छ्वसनं वा । दीपनं नाम त्रिस्थानाशोभि[9] वर्धमानस्वरं च । प्रशमनं नाम तारंगतानां[10] स्वराणामवैस्वर्येणावरोहणमिति[11][12] । एषां च[13] रसगतः प्रयोगः[14] । तत्र हास्यशृङ्गारयोरर्पणविच्छेदनदीपनैः[15]प्रशमनयुक्तं पाठ्यं कार्यम्[16] । करुणवीराद्भुतेषु[17] समाकाङ्क्षि[18]विच्छेदप्रशमनार्पणदीपनानुबन्धबहुलं पाठ्यं प्रयोज्यम् । बीभत्सभयानकयोर्विच्छेदार्पणयुक्तमिति[19] । सर्वेषां चैतेषां मन्द्र-

---

१. 'चोच्या च' इति का. २. 'वापि' इति क-ख. ३. 'हृता' इति क-ख. ४. 'कार्या' इति क-ख. ५. 'विच्छेदोऽपसर्पणे' इति क-ख. ६. 'अर्पणं नाम लीलायमानमधुरवर्णस्थानलयेन पूरयद्भिरिव रङ्गं यत्पठ्यते तदर्पणाम्' इति क-ख. ७. 'अनुबन्धो नाम' इति नास्ति क-ख-पुस्तकयोः. ८. 'पदान्तरेष्वविच्छेदानुच्छ्वासनं वा' इति का. ९. '°शोभिः' (?) इति क-ख. १०. 'तारगतानां' इति क-ख. ११. 'स्वराणां नवैश्वर्येण' इति क-ख. १२. 'अवतरणमिति' इति का. १३. 'च' इति नास्ति क-ख-पुस्तकयोः. १४. 'प्रयोगतः' इति क-ख. १५. 'विच्छेद' इति क-ख. १६. 'वाक्यं' इति का. १७. 'करुणवीररौद्राद्भुते' इति क-ख. १८. 'शुलाकाङ्क्षिण' इति क-ख. १९. 'विसर्गविच्छेदाकाङ्क्षिणप्रायमिति' इति क-ख.

मध्यतार[1]व्यवस्थया त्रि[2]स्थानगतः प्रयोगः[3] । तत्र दूरस्थाभाषणे तारं[4] शिरसो[5] नातिदूरे मध्यं कण्ठेन[6] पार्श्वतो मन्द्रमुरसा प्रयोजयेत्पाठ्यमिति । मन्द्रात्ता-रङ्गच्छेत्ताराद्वा[7] मन्द्रमिति । एषां च द्रुत[8]मध्यविलम्बितासु ये वर्णा रसेषूप-पाद्याः[9] तत्र हास्यशृङ्गारयोर्मध्यलयः करुणे विलम्बितो वीररौद्राद्भुतबीभत्स-भयानकेषु[10] द्रुत इति ।

अथ विरामः—अर्थसमाप्तौ कार्यवशाच्च[11] छन्दोवशाद्दृश्यन्ते[12] हि एकद्वि-त्रिचतुरक्षरा विरामाः । यथा—

किं गच्छ मा विश सुदुर्जन वारितोऽसि
कार्यं त्वया न मम सर्वजनोपयुक्तः[13] ।
शोकं शुचं कुरु गते च तथोपचारे[14]
स्वल्पाक्षराणि हि पदानि भवन्ति कार्ये[15] ॥ ११९ ॥

एवं विरामे प्रयत्नोऽनुष्ठेयः[16] । कस्मात् । विरामं[17] ह्यर्थानुदर्शको भवति । अपि च[18]—

विरामेषु[19] प्रयत्नस्तु नित्यं कार्यः प्रयोक्तृभिः ।
कस्मादभिनयो ह्यर्थे[20] अर्थापेक्षी यतः स्थितः ॥ १२० ॥
यत्र व्यग्रावुभौ हस्तौ[21] तत्र दृष्टिसमन्वितः[22] ।
वाचिकाभिनयः कार्यो विरामैरर्थदर्शकैः[23] ॥ १२१ ॥
प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ ।

---

१. 'व्यवस्थायां' इति का. २. 'त्रि' इति नास्ति का-पुस्तके. ३. 'प्रयोगतः' इति क-ख. ४. 'तारः' इति का. ५. 'शिरसा' इति क-ख. ६. 'मध्यकण्ठेन' इति क-ख. ७. 'मन्द्रतारङ्गच्छेशाराद्वा (?)' इति क-ख. 'मन्द्रतारं गच्छात्ताराद्वा' इति का. ८. 'एषां चन्द्रतनमध्य°' इति क-ख. ९. 'उपपाद्या' इति का. १०. 'ष्वद्भुत इति' इति क-ख. ११. 'नच्छन्दोवशात्' इति नास्ति क-ख-पुस्तकयोः. १२. 'दृश्यते' इति क-ख. १३. '°जनोपभुक्तः' इति क-ख. १४. 'सुचासुचाङ्कुरगतेऽत्र तथोपचारे' इति का. १५. 'काव्ये' इति का. १६. 'विरामः प्रयत्नतोऽनुष्ठेयः' इति का. १७. 'विरा-मार्थानुदर्शकः भवति' इति का. १८. 'अपि च श्लोकः' इति का. १९. 'रामे तु' इति का. २०. 'तस्मादभिनये ह्यस्मात्' इति का. २१. 'व्यक्तावुभौ हस्तौ' इति क-ख. २२. 'दृष्टिः' इति क-ख. २३. '°दर्शिभिः' इति का.

बीभत्से कुत्सितत्वाच्च भवतः कुञ्चितौ करौ ॥ १२२ ॥
हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ ।
अद्भुते विस्मयाविष्टे[1] स्तब्धौ कार्यौ भयानके ॥ १२३ ॥
एवमादिषु चान्येषु[2] प्रविचारेषु[3] हस्तयोः ।
अलंकारविरामाभ्यां साध्यते[4] ह्यर्थनिश्चयः ॥ १२४ ॥
ये विरामाः स्मृता वृत्ते[5] तेष्वलंकार इष्यते ।
समासेऽर्थे [ पदे[6] ] वापि तथा प्राणवशेन वा ॥ १२५ ॥
पदवर्णसमासे च द्रुते बह्वर्थसंकटे ।
कार्यो विरामः पादान्ते तथा प्राणवशेन वा ॥
शेषमर्थवशेनैव विरामं संप्रयोजयेत् ॥ १२६ ॥

अथ[7] भावगतानि रसजातानि च कृष्याण्यक्षराणि बोद्धव्यानि । तद्यथा—

एकारै[8]कारसंयुक्तमोकारौकारसंयुतम् ।
व्यञ्जनं यद्भवेद्दीर्घं कृष्यं तत्तु भवेदिह ॥ १२७ ॥
विषादे च वितर्के[9] च प्रश्ने चामर्षणे तथा ।
कलाकाल[10]प्रमाणेन पाठ्यं कार्यं प्रयोक्तृभिः ॥ १२८ ॥
शेषाणामर्थयोगेन[11] विरामे[12] विरमेदिह ।
एकद्वित्रिचतुष्पञ्चषट्कलं च विलम्बितम् ॥ १२९ ॥
विरामे[13] च विलम्बे च यदा गुर्वक्षरं भवेत् ।
षण्णां कलानां परतो[14] लम्बनं न विधीयते ॥ १३० ॥
अथवा कारणोपेतं प्रयोगं कार्यमेव च ।

---

१. 'विस्मयस्तब्धौ भयाच्चैव भयानको' इति **का.** २. 'सर्वेषु' इते **का.** ३. 'अधिकारेषु' इति **का.** ४. 'साध्यन्ते ह्यर्थनिश्चयाः' इति **का.** ५. 'एते' इति **का.** ६. 'पदे' इति नास्ति **क-ख**-पुस्तकयोः. ७. 'अत्रानुगतानि चत्वार्यक्षराणि रसभावानुगतानि निकृष्टान्यक्षराणि चोद्बोध्यानि' इति **का.** ८. 'अकारे करसंयुक्तमेकारे कारसंयुतम्' इति **का.** ९. 'विवर्तें च' इति **का.** १०. 'कालाकाल प्रयाणोन कार्यं पाठ्यं' इति **क-ख.** ११. 'शेषाणामर्घयोगेन' इति **का.** १२. 'विरामो' इति **का.** १३. 'विलम्बेते विरामेपि' इति **क-ख.** १४. 'पदानाम्' इति **का.**

समीक्ष्य वृत्ते कर्तव्यो विरामो रसभावतः ॥ १३१ ॥
ये[1] विरामाः स्मृताः काव्ये वृत्तपाद[2]समुद्भवाः ।
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशाश्रयाः[3] ॥ १३२ ॥
[ नापशब्दं[4] पठेत् तज्ज्ञो भिन्नवृत्तेन चैव हि ।
विश्रमेणाविरामेषु न काकुरसहीनकम् ॥ १३३ ॥
एवमेतत्स्वरकृतं कलातालल्रयान्वितम् ।
व्यपेतं वाक्यशेषैस्तु लक्षणाढ्यं गुणान्वितम् ॥ १३४ ॥
स्वरालंकारसंयुक्तं पठेत् काव्यं यथाविधि ।
अलंकारविशेषा ये पाठ्यसंस्कृतसंश्रया[ः] ॥ १३५ ॥]
ते[5] एव सर्वे कर्तव्याः स्त्रीणां पाठ्ये तु संस्कृतम् ।
एवमेतत्स्वरकृतं[6] कलाताल[7]लयान्वितम् ॥ १३६ ॥
दशरूपविधाने तु पाठ्यं योज्यं[8] प्रयोक्तृभिः ।
यथा[9] काकुविधानं तु यथावदनुपूर्वशः ।
अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् ॥ १३७ ॥

[10]इति श्रीभारतीये नाट्यशास्त्रे वागभिनये काकुस्वरविधानं नाम सप्तदशोऽध्यायः ।

---

अष्टादशोऽध्यायः[11] ।

कथयिष्याम्यहं विप्रा दशरूपविकल्पनम् ।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥ १ ॥
नाटकं सप्रकरणमङ्को व्यायोग एव च ।
भाणः समवकारश्च वीथी प्रहसनं डिमः ॥ २ ॥

---

१. 'ते' इति का. २. 'दक्षपाद°' इति क-ख. ३. 'तेऽर्थवशास्तदा' इति का. ४. कोष्ठकबद्धा श्लोकत्रयी क-ख-पुस्तकयोर्नास्ति. ५. 'ते सर्वे संप्रकर्तव्याः स्त्रीणां पाठ्ये तु संस्कृते ।' इति का. ६. 'स्वरयुतं' इति का. ७. 'कलाकाल°' इति क-ख. ८. 'योज्यं पाठ्यं' इति का. ९. 'उक्तं' इति का. १०. 'इति भारतीये नाट्यशास्त्रे वागङ्गाभिनये काकुस्वरव्यञ्जनोनाम एकोनविंशोऽध्यायः' इति का. ११. 'अथ विंशाऽध्यायः' इति का.

ईहामृगश्च[1] विज्ञेयो दशमो[2] नाट्यलक्षणे ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३ ॥
सर्वेषामेव काव्यानां[3] मातृका वृत्तयः स्मृताः ।
आभ्यो विनिःसृतं[4] ह्येतद्दशरूपं प्रयोगतः ॥ ४ ॥
एतेषां[5] चातिभिश्चैव स्वरा ग्रामत्वमागताः ।
यथा तथा वृत्तिभेदैः[6] काव्यबन्धा भवन्ति हि ॥ ५ ॥
ग्रामौ पूर्णस्वरौ द्वौ तु यथा वै षड्जमध्यमौ ।
सर्ववृत्तिविनिष्पन्नौ[7] काव्यबन्धौ तथा त्विमौ ॥ ६ ॥
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च ।
पूर्ववृत्तविनिष्पन्नं नानाबन्धसमाश्रयम्[8] ॥ ७ ॥
भाणः समवकारश्च तथेहामृग[9] एव च ।
उत्सृष्टिकाङ्को[10] व्यायोगो वीथी[11] प्रहसनं डिमः ॥ ८ ॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ॥ ९ ॥
प्रख्यातवस्तुविषये[12] प्रख्यातोदात्तनायक[13] चैव ।
राजर्षिवंशचरितं तथैव[14] दिव्याश्रयोपेतम् ॥ १० ॥
नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैश्चैव[15] ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं[16] नाम ॥ ११ ॥
नृपतीनां यच्चरितं नानारसभवसंभृतं[17][18] बहुधा ।

---

१. ईहामृगं च विज्ञेयं दशमं नाट्यलक्षणम्'. २. 'दशमे' डॉक्टर हॉल मुद्रितः पाठः. ३. 'काम्यानां' मुद्रितपाठः. ४. 'आभ्यो विनिःसृता ह्येतद्दशरूपे' इति का. ५. 'जातिभिः श्रुतिभिः' मु. का-पुस्तके च. ६. 'भेदाः' मु. ७. 'सर्ववृत्ति' मु. का-पुस्तके च. ८. 'नानावस्थान्तराश्रयम्' मु. 'नाट्यावस्थासमाश्रयम्' इति च का-पुस्तके. ९. 'वीथीचेहामृगस्तथा' इति का. १०. 'उत्सृष्टिकाङ्को' इति का. ११. 'डिमः प्रहसनं तथा' इति का. १२. 'मुद्रितपुस्तके आर्येयमनुष्टुभि परिणामिता, तथापि चतुर्थे पादे छन्दोभङ्गान्न मुच्यते. १३. 'प्रख्यातवस्तुविषयं' इति का. 'नायकम्' मु. १४. 'तथा च' इति का. 'तथा' मु. १५. 'युक्तं वृद्धिविलासादिभिश्चैव' मु. १६. 'तोटकम्' मु. १७. 'नानारसभावचेष्टितैर्बहुधा' इति का. १८. '°संभृतं' इति का.

सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम ॥ १२ ॥
[2]अङ्कावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दु[4]विस्तारात् ।
[5]कर्तव्योऽङ्कस्तज्ज्ञैः स तु सम्यङ् नाटके विधिवत् ॥ १३ ॥
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ १४ ॥
[ अङ्कसमाप्तिः काव्यच्छेदो न बीजसंहारः ।
वस्तुव्यापी बिन्दुः काव्यसमुत्थोऽत्र नित्यं स्यात् ॥ १५ ॥]
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ १६ ॥
ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः ।
नानावस्थान्तरितः कार्यस्त्वङ्को विकृष्टस्तु ॥ १७ ॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् ।
नै[7]करसान्तरविहितो [8]ह्यङ्क इति स वे[9]दितव्यस्तु ॥ १८ ॥
[ प[10]ञ्चावरा दश[illegible]ङ्का[illegible]स्युर्नाटके प्रकरणे च ।
निष्कामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः ॥ १९ ॥]
क्रोध[11]प्रमादशोकाः शापोत्सर्गो[12]ऽथ विद्रवोद्वाहौ ।
अद्भुतसंश्रयदर्शनमङ्के [13]प्रत्यक्षजानि स्युः ॥ २० ॥
युद्धं [14]राज्यभ्रंशो मरणं [15]नगरोपरोधनं चैव ।
[16]प्रत्यक्षाणि तु [17]नाङ्के प्रवेशकैः संविधेयानि ॥ २१ ॥

१. 'तज्ज्ञेयं नाटकं नाम' इति **का.** २. 'नानावस्थान्तरितो बिन्दोः संहारमात्रमधिकृत्य । कर्तव्याङ्केऽप्येवं सतु सम्यङ् नाटके तज्ज्ञैः ॥' इति **का**-पुस्तके. ३. पद्यमिदं **क-ख**-पुस्तकयोर्नास्ति. ४. 'बिम्बप्रस्तारात्' मु. ५. 'कर्तव्योहः' मु. ६. 'यथार्थरसः' मु. **का**-पुस्तके च. ७. 'नैकरसाम्बर-' मु. ८. 'ह्याङ्क' मु., 'त्वङ्कः खलु वेदितव्यः सः' इति **का.** ९. 'विदितव्यस्तु' मु. १०. पद्यमिदं **क-ख**-पुस्तकयोर्नास्ति. ११. 'प्रसाद' मु., **का**-पुस्तके च. १२. 'शापोत्सर्गोऽथ' इति **का.** १३. 'अङ्कप्रत्यक्षजानि' इति **का.** १४. 'राज्यस्य' मु. १५. 'समरस्य रोधनम्' मु. 'नगररोधनं चैव' इति **का.** १६. 'प्रत्यक्षराणि' मु. 'अप्रत्यक्षकृतानि'. १७. 'नवाङ्के' मु.

अङ्के[1] प्रवेशकैर्वा[2] प्रकरणमाश्रित्य नाटके[3] वापि ।
न[4] वधः कर्तव्यः[5] स्याद्यस्तत्र[6] स नायकः ख्यातः ॥ २२ ॥

अवतरणमेव[7] कार्यं संधिर्वा[8] ग्रहणमेव वा नित्यम् ।
बहुभिः[9] कार्यविशेषैः प्रवेशकैः सूचयेद्वापि[10] ॥ २३ ॥

एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य[11] ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ २४ ॥

एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान् ।
आवश्यकाविरोधेन[12] तत्र काव्यानि[13] कार्याणि ॥ २५ ॥

रङ्गं[14] तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तिमुक्तं कृत्वा काव्यं[15] यथार्थरसम् ॥ २६ ॥

ज्ञात्वा दिवसावस्थां[16] क्षणयाममुहूर्तलक्षणोपेताम्[17] ।
विभजेत्सर्वमशेषं पृथक्पृथक्काव्यम[18]ङ्केषु ॥ २७ ॥

दिवसावसानकार्यं यद्यङ्के नोपपद्यते[19] सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधेयं[20] हि ॥ २८ ॥

संनिहितनायको[21]ऽङ्कः कर्तव्यो नाटके प्रकरणे वा ।
परिजनकथानुबन्धः प्रवेशको[22] नाम विज्ञेयः ॥ २९ ॥

प्रकरणविषये[23] पञ्चाद्या.........दशपरास्तथा चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ ३० ॥

---

[illegible] 'अङ्कप्रवेशके वा' इति का. २. 'प्रवेशके' मु. ३. 'नाटकं' मु., का-पुस्तके च. ४. 'अ[illegible]' मु. ५. 'तस्य स्यात्' इति का-पुस्तके. ६. 'यत्र तु नायकः ख्यातः' इति का. ७. 'अ[illegible]सरण' इति मु., 'अपसरणमेव' इति का. ८. 'सद्भिः' इति मु. ९. 'तैस्तैः कार्यविशेषैः' इति [illegible] का. १०. 'सूचकैश्चापि' इति का. ११. 'अधिकृत्य' मु., का-पुस्तके च [illegible]२. 'आवश्यकाव[illegible]रोधेन' इति क-ख. १३. 'कार्याणि इति क-ख. १४. 'रङ्गे' मु. १५. 'कार्यं' क-ख. [illegible]. 'दिवसांस्तान्' इति का. १७. '°लक्षणोपेतम्' मु. 'लक्षणोपेता[illegible]' इति का. १८. 'का[illegible]' इति क-ख. १९. 'नोत्पद्यते' इति मु. २०. 'विधातव्यं' [illegible]-का. २१. 'न[illegible]हितनायकैकम्' इति मु. २२. 'प्रवेशके वापि कर्तव्यः' इति क[illegible]. २[illegible]. एतदारभ्य ति[illegible]र्या मुद्रितपुस्तके का-पुस्तके च न वर्तन्ते.

अनयोरन्तरविहितः प्रवेशको यत्क्रियां समभिवीक्ष्य ।
संक्षेपार्थः संधिस्त्वर्थानां संविधातव्यः ॥ ३१ ॥
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः ।
प्रख्यातस्त्वितरो वा नारीसंज्ञाश्रिते काव्ये ॥ ३२ ॥
अङ्कच्छेदं[1] कृत्वा[2] मासकृतं[3] वर्षसंचितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न[4] तु कदाचित् ॥ ३३ ॥
यः कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत्तज्ज्ञैः ॥ ३४ ॥
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषयप्रवेशकः संविधातव्यः ॥ ३५ ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ ३६ ॥
कालोत्थानगतिरसौ व्यत्यासारम्भकार्यविषयाणाम् ।
अर्थाभिधानपूर्वः प्रवेशकः स्यादनेकार्थः ॥ ३७ ॥
[11]टठडढणा मूर्धन्या अन्तःस्था यरलवाश्चेति ।
विसर्जनीयः............................ ॥ ३८ ॥
यस्मिन्स्थाने तु समो विज्ञेयः सवर्णसंज्ञोऽसौ ।
शब्दप्रयोगविषये स्वरांस्तु भूयः प्रवक्ष्यामि ॥ ३९ ॥
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।

---

१. 'अङ्कच्छेदम्' इत्यादि पद्यद्वयं का-पुस्तके 'संनिहितनागवोऽङ्कः' इत्यादि प[illegible]स्य पूर्वं वर्तते. २. 'कुर्यात्' का. ३. 'नामकृतं' मु. ४. 'च न तु क्वचित्' [illegible]क-[illegible]. ५. 'विहितोऽयम्' इति मु. ६. 'विषयोपदेशको नाम विज्ञेयः' मु. '[illegible]ये प्रवेशको भवति काव्येषु' इति का-पुस्तके. ७. 'प्रयोगमासाद्य कर्तव्यः' इति [illegible] क-ख-पुस्तकयोः का-पुस्तके च. ८. '°रसवत्यासारसकाम—इति मु., 'कालार्थान्तर[illegible]व्यत्यासारम्भ' इति का-मुद्रिते. ९. 'व्याख्यासंरम्भ' इति क-ख. १०. 'आ[illegible]भिधानसूतः' इति मु., 'अर्थाभिधानयुक्तः' इति क-ख. ११. 'टठड—' इत्यारभ्य [illegible] पञ्चमात्रः स इष्यते' इति पर्यन्तमष्टचत्वारिंशच्छ्लोका मुद्रितपुस्तके काशीमुद्रितपु[illegible] च त्रुटिताः, अ[illegible]मपि मध्ये क्वचित्क्वचित्त्रुटिर्वर्तत इति निपुणं विभावनीयम्.

पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः ॥ ४० ॥

.............................................. ।

ए ऐ कण्ठताल्व्यौ ओ औ तु कण्ठौष्ठ्याविति च ॥ ४१ ॥
इत्थं व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः ।
काव्यनिबन्धाश्च स्युर्धातुनिपातोपसर्गैस्तु ॥ ४२ ॥
उद्दिष्टं शब्दानां लक्षणमेतत्समासयोगेन ।
प्रकरणवशाद्धि तदहं विस्तरतः संप्रवक्ष्यामि ॥ ४३ ॥
तत्प्राहुः सप्तविधं षट्कारकसंयुतं प्रथितसाध्यम् ।
वचनं नामसमेतं पुरुषविभक्तं तथा ख्यातम् ॥ ४४ ॥
प्रातिपदिकार्थयुक्ता धात्वर्थानुपसृजन्ति ये स्वार्थे ।
उपसर्गा ह्युद्दिष्टास्तस्मात्संस्कारतस्तस्मिन् ॥ ४५ ॥
प्रातिपदिकार्थयोगाद्धानुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मिन्निपतति पादे तस्मात्प्रोक्ता निपातास्तु ॥ ४६ ॥
लोके प्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैस्तु ।
ते ते पूर्वान्तश्च तेषु हि तत्तद्धितस्तस्मात् ॥ ४७ ॥
एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
यस्माद्विभजन्त्यर्थान्विभक्तयः कीर्तितास्तस्मात् ॥ ४८ ॥
विशिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगतः ।
संधीयते पदे यस्मात्तस्मात्संधिः प्रकीर्तितः ॥ ४९ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः ।
पदबन्धाः कर्तव्या निबद्धबन्धास्तु चूर्णा वा ॥ ५० ॥
विभक्त्यन्तं पदं ज्ञेयं निबद्धं चूर्णमेव च ।
तत्र चूर्णपदस्येह संनिबोधत लक्षणम् ॥ ५१ ॥
अनिबद्धपदच्छन्दस्तथा चानियताक्षरम् ।
अर्थापेक्षाक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः ॥ ५२ ॥
निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियतात्मकम् ॥ ५३ ॥

एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्युक्तं छन्दोवृत्ताभिधानवत् ॥ ५४ ॥
षड्विंशतिः शतान्येभिः पादैश्छन्दांसि संज्ञया ।
सममर्धसमं चैव तथा विषममेव च ॥ ५५ ॥
छन्दो ज्ञेयं समासेन त्रिविधं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषा तनुः स्मृता ॥ ५६ ॥
छन्दोहीनो न शब्दोऽस्ति न छन्दः शब्दवर्जितम् ।
एवं तूभयसंयोगो नाद्यास्याद्योनकस्मृतः(?) ॥ ५७ ॥
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ५८ ॥
सुप्रतिष्ठा भवेत्पञ्च षड्गायत्री भवेदिह ।
सप्ताक्षरा भवेदुष्णिगष्टौ वानुष्टुबिष्यते ॥ ५९ ॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा[1] त्रिष्टुब्जगती द्वादशाक्षरा ॥ ६० ॥
[illegible]शातिजगती शक्करीति चतुर्दश ।
अतिशक्करी पञ्चदश षोडशाष्टिः प्रकीर्त्यते ॥ ६१ ॥
अत्यष्टिः स्यात्सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशतिरति(धृतिः) कृतिर्विंशतिरेव च ॥ ६२ ॥
प्रकृतिरेकविंशत्या द्वाविंशत्याकृतिस्तथा ।
त्रयोविंशतिर्विकृतिरधिकैका तु संकृतिः ॥ ६३ ॥
एकाधिका चातिकृतिः षड्विंशत्यक्षरोत्कृतिः ।
अत ऊर्ध्वाक्षरं छन्दो मालावृत्तमिति स्मृतम् ॥ ६४ ॥
छन्दसां तु यथान्येषां भेदाः प्रस्तारयोगतः ।
असंख्येयपरीमाणा वृत्तसंख्या समाश्रिता ॥ ६५ ॥
गायत्री प्रकृतिश्चैषां प्रमाणं संप्रचक्षते ।
प्रयोगजानि पूर्वाणि प्रायशो न भवन्ति हि ॥ ६६ ॥

---

१. 'एकादश-' इत्यारभ्य '-अष्टादशाक्षरा' इति पर्यन्तं पाठः क-पुस्तके नास्ति.

तिस्रः कोट्यो दश तथा सहस्राणां शतानि तु ।
चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ॥ ६७ ॥
सप्तभिः सहितान्येव सप्त चैव शतानि च ।
षड्विंशतिर(रिहा)न्यानि व्याख्यातानि समासतः ॥ ६८ ॥
सर्वेषां छन्दसामेव त्रिकैर्वृत्तं प्रयोजयेत् ।
ज्ञेया अष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमक्षरम् ॥ ६९ ॥
वर्णाक्षरो विधिर्वृत्तमिति च्छन्दोगतो विधिः ।
नैवातिरिक्तं हीनं वा यत्र संपद्यते स्वरम् ॥ ७० ॥
विधाने छन्दसामेषां संपदेताभिसंज्ञिता ।
यत्रार्थस्य समाप्तिः स्यात्स विराम इति स्मृतः ॥ ७१ ॥
पादस्य पद्यतेर्धातोश्चतुर्भागः प्रकीर्तितः ।
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ॥ ७२ ॥
शरीराश्रयसंभूतं दिगाश्रयमथापि च ।
ह्रस्वं दीर्घं प्लुतं चैव त्रिविधं चाक्षरं स्मृतम् ॥ ७३ ॥
श्वेताद्यस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारश्चैव हि मन्द्रश्च मध्यश्च त्रिविधः स्वरः ॥ ७४ ॥
ध्रुवाभिधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
विधिर्गणकृतश्चैव तथा पद्यकृतोऽपि च ॥ ७५ ॥
वृत्तमर्धसमं चैव विषमं सममेव च ।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रिकाः ॥ ७६ ॥
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ ७७ ॥
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ।
तथातिजगती चैव शक्करी ह्यतिशक्करी ॥ ७८ ॥
अष्टिरत्यष्टिरितरो धृतिश्चातिधृतिर्गणः ।
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ॥ ७९ ॥
संकृत्यतिकृती चैव [ह्युत्कृति]र्दिव्यमानुषः ।

एतेषां छन्दसां भूयः प्रस्तारविधिसंश्रयम् ॥ ८० ॥
लक्षणं संप्रवक्ष्यामि नष्टमुद्दिष्टमेव च ।
प्रस्तारोऽक्षरमुद्दिष्टो मात्रोक्तश्च तथैव हि ॥ ८१ ॥
द्विकौ ग्लौ विनिपर्णोक्ता (?) मिश्रौ चेत्यपि मात्रिकौ ।
गुर्वधस्ताल्लघुं न्यस्य ततो द्विर्द्विर्यथोचितम् ॥ ८२ ॥
न्यस्येत्प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्या विनिर्दिष्टा गणो मात्राविकल्पितः ॥ ८३ ॥
मिश्रौ ग्लाविति विज्ञेयौ पृथग्लक्ष्यविभागतः ।
मात्रागणो गुरूण्येव लघुनीयैधुकैक च(?) ॥ ८४ ॥
आर्याणां स चतुर्मात्रा प्रस्तारः परिकीर्तितः ।
गीतकप्रभृतीनां च पञ्चमात्रः स इष्यते ॥ ८५ ॥
वेताली.................................................. ।
.................................................................. ॥ ८६ ॥
बह्वाश्रयमपि [1]कार्यं [2]प्रवेशकैः [3]संक्षिपेत्तु संधिषु च ।
[4]बहुचूर्णप[illegible]वृत्तं जनयति खेदं प्रयोगस्य ॥ ८७ ॥
यत्रार्थस्य समाप्तिर्न [5]भवत्यङ्के प्रयोगबाहुल्यात् ।
[6]वृत्तान्तः स्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः ॥ ८८ ॥
[7]मध्यमपात्रैः कार्यो नित्यं विष्कम्भकस्तु विज्ञेयः ।
संस्कृतवचनानुगतः संक्षिप्तार्थः प्रवेशकवत् ॥ ८९ ॥
शुद्धः संकीर्णो वा द्विविधः खलु नाटके प्रयोगज्ञैः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यमकृतः ॥ ९० ॥
अङ्कान्तरे मुखे वा प्रकरणमाश्रित्य नाटके वापि ।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरधमैः ॥ ९१ ॥

---

१. '°मप्यर्थं' मु., का-पुस्तके च. २. 'संक्षिप्तेऽर्थे तु' इति मु. ३. 'संक्षिपेच्च संधिषु च' इति का. ४. '°पदैर्युक्तं' इति मु., 'बहुचूर्णपादवृत्तं' इति क-ख. ५. 'भवेदङ्के' इति का. ६. 'विष्कम्भः स्वल्पकथः' इति मु., 'बहुवृत्तान्तोऽल्पकथैः प्रवेशकैः संविधातव्यः ।' इति का-पुस्तके. ७. इतःप्रभृतिश्लोकत्रयी का-पुस्तकेऽधिका.

न[1] महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा ।
येनात्र[2] कार्यपुरुषाश्चत्वारः पञ्च[3] वा ते स्युः ॥ ९२ ॥
कार्यं[4] गोपुच्छाग्रं कर्तव्यं काव्यबन्धमासाद्य[5] ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ९३ ॥
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणे[6] कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ९४ ॥
नाटकलक्षणमेतन्मया समासेन कीर्तितं[7] विधिवत् ।
प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ९५ ॥
यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नाटकं[8] चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति[9] तद्बुधैर्ज्ञेयम् ॥ ९६ ॥
यदनर्थमपाहार्यं[10] काव्यं कुरुते प्रभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥ ९७ ॥
यन्नाटके मयोक्तं वस्तु शरीरं च[11] वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि कार्यं[12] केवलमुत्पाद्यवस्तु स्यात् ॥ ९८ ॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यत्रैकविधं[13] ज्ञेयं तत्प्रकरणं नाम ॥ ९९ ॥
नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगैः[14] ।

---

१. एतत्पूर्वम् 'शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः । मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः ॥' इत्यार्या मुद्रितपुस्तकेऽधिका. २. 'यत्तत्र' मु, 'ये तत्र कार्याः' इति का-पुस्तके. ३. 'पञ्चधा' मु. ४. एतत्पूर्वम् 'व्यायोगेहामृगसमवकार-डिमसंचितानि कार्याणि । दशभिर्द्वादशभिर्वा षोडशभिर्वापि पुरुषैः स्युः ॥' इत्यार्या मुद्रितपुस्तकेऽधिका. 'गोपुच्छाग्रं काव्यं' मु. ५. 'कर्तव्यं बन्धमासाद्य' इति क-ख. ६. 'निर्वहणं कर्तव्यं' मु. ७. 'प्रकीर्तितम्' मु. 'विविधं' मु. ८. 'नायकं' क-ख. ९. 'तज्ज्ञेयं प्रकरणं नाम' मु. 'प्रकरणमेतद् बुधैर्ज्ञेयम्' का. १०. 'यदनायकहार्य-कार्यं प्रकरोत्यद्भुतगुणयुक्तम् । प्रकरणमिति तद्विद्याद्बीजं बीजासंयुक्तम् ॥' मु. 'यदनाय-कहार्यंकार्यं काव्यं प्रकरोत्यद्भुतगुणयुक्तम् ।' का. ११. 'रसाश्रयोपेतम्' का., 'समा-श्रयोपेतम्' मु. १२. 'योज्यं तल्लक्षणं सर्वसंधिषु तु' क-ख. 'योज्यं' का. १३. 'यन्नै-कविधं' मु. 'यदनेकविधं तज्ज्ञेयं प्रकरणं नाम' का. १४. 'राजसंभोगम् (?)' का.

बाह्यजनसंप्रयुक्तं ज्ञेयं तत्[1]प्रकरणं नाम ॥ १०० ॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकरणोपेतम् ।
मन्दकुलस्त्रीचरितं [2]काव्यं कार्यं प्रयोगे तु ॥ १०१ ॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्य[3]सार्थवाहानाम् ।
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥ १०२ ॥
यदि वेशयुवतियुक्तं न कु[4]लस्त्रीसङ्गमर्हति [5]ततः ।
अत्र कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥ १०३ ॥
यदि [6]वा प्रकरणयुक्त्या वे[7]शकुलस्त्रीकृतोपचारं(रः?) स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥ १०४ ॥
प्रकरणनाटकविषये [8]पञ्चाद्या दश परास्तथा चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ १०५ ॥
[9]मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्त्वज्ञैः ।
संस्कृतवचनानुगतः संक्षिप्तार्थः प्रवेशकवत् ॥ १०६ ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि वि[10]ज्ञेयः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः ॥ १०७ ॥
अङ्कान्तरालविहितः [11]प्रवेशकार्थक्रियां समभिवीक्ष्य ।
[12]संक्षेपात्संधीनामर्थानां चैव कर्तव्यः ॥ १०८ ॥
अनयोश्च बन्धयोगादन्यो [13]भेदः प्रयोक्तृभिः कार्यः [14]।
[15]प्रख्यातस्त्वितरो वा [16]नाटीसंज्ञाश्रिते काव्ये ॥ १०९ ॥

---

१. 'तज्ज्ञेयं प्रकरणं तज्ज्ञैः' क-ख. 'विज्ञेयं प्रकरणं तज्ज्ञैः' का. २. 'कार्यं काव्यं प्रकरणे तु' का. ३. 'सर्ववाहानाम्' क-ख. ४. 'कुलस्त्रीसंगमो भवेत्तत्र' का. ५. 'तत्राप्यकुल' मु. ६. 'क्वाकरण' मु. 'कारणयुक्त्या' का. ७. 'वेशकुलस्त्रीसंगमो न स्यात्' का. ८. 'कविभिः पञ्चाद्या दशपराश्च' का. ९. 'इतः प्रभृत्यार्याद्वयी' का-पुस्तके नास्ति. १०. 'कर्तव्यः' मु. ११. 'प्रवेशकोऽर्थक्रियामभिवीक्ष्य' मु. 'प्रवेशिकार्थक्रियामभिवीक्ष्य' का. १२. 'संक्षेपार्थः संधिष्वर्थानां संविधातव्यः' का. १३. 'एको' का. १४. 'ज्ञेयः' का. १५. 'प्रत्याख्यातस्त्वितरो वा नाटकयोगे प्रकरणे च,' का. १६. 'नाटकयोगे प्रकरणे च' का.

स्त्रीप्राया[1] चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी[2] ।
[3]बहुगीतनृत्यवाद्यरतिसंभोगात्मिका चैव ॥ ११० ॥
राजोप[4]चारयुक्ता प्रसाद[5]नक्रोधदम्भसंयुक्ता ।
[नायकदूती[6] चापि देवीसंबन्धी नाटिका ज्ञेया ॥ १११ ॥
अन्तर्भावगता ह्येषा भावयोरुभयोरपि ।
अथ दशैतानि रूपाणि इत्युदितानि तु ॥ ११२ ॥]
प्रकरणनाटकनाटीलक्षणमुक्तं मया समासेन ॥ ११३ ॥
वक्ष्याम्यतः[7]परमहं लक्षण[8]युक्त्या समवकारम् ।
देवासुरबीजकृतः[9] प्रख्यातोदात्तनायकश्चैव ॥ ११४ ॥
[10]त्र्यङ्कस्तथा त्रिकपटः त्रिविद्रवः स्यात्त्रिशृङ्गारः ।
द्वादशनायकबहुलो ह्यष्टादश[11]नाटिकाप्रमाणश्च ॥ ११५ ॥
वक्ष्याम्य[12]स्याङ्कविधिं याव[13]त्यो [14]नाडिका यत्र ।
[[15]अङ्कस्तु सप्रहसनः कालस्य यन्मुहूर्तमिति ।
तन्नाडिकाप्रमाणं यथोत्तमाङ्केषु संयोज्यम् ॥ ११६ ॥
या नाडिकेति संज्ञा कालविभागे क्रियाभिसंपन्ना ।
कार्या च सा प्रयत्नाद् यथाक्रमेणैव शास्त्रोक्ता ॥]
अङ्कस्तु सप्रसहनः सविद्रवः सकपटः सवीथीकः[16] ॥ ११७ ॥
[17]द्वादशनाडीविहितः प्रथमः [18]कार्यः क्रियोपेतः ।
कार्यस्तथा द्वितीयः समाश्रितो नाडिका[19]श्चतस्र[20]श्च ॥ ११८ ॥

१. प्रयोग' मु. २. 'विहितार्थां' का. ३. 'प्रनृत्तगीतपाठ्याः' का. ४. 'कामोपचारयुक्ता' का. 'युक्त्या शृङ्गाराभिनयभावनाटिका ज्ञेया' मु. ५. 'प्रसाधनक्रोधसंयुतापि' का. ६. इतोऽग्रे पद्यद्वयी क-ख-पुस्तकयोर्नास्ति ७. 'परं लक्षण' मु. ८. 'लक्षणयुक्तं' का. ९. 'देवासुरबीजकृतं प्रख्यातोदात्तनायकं चैव' का. १०. 'अङ्कः' क-ख. ११. '–नायिकासमाप्यश्च' मु. '°प्रमाणं च' का. १२. 'अङ्क' इति त्रुटितं का-पुस्तके. १३. 'यत्रान्या नाडिका कार्या' का. १४. 'नाटिका' मु. १५. इतोऽग्रे पद्यद्वयी क-ख-पुस्तकयोर्नास्ति' १६. 'सवीथ्यङ्गः' का. १७. 'द्वादशनाडिकयुक्तं प्रथमः कार्यो यथाक्षस्तु' का. १८. 'कार्यकृतोपेतः' मु., 'तु' का. २०. 'कार्यकृतोपेतः मु.

वस्तुसमा[1]पनविहितो द्विनाडिकः स्यात्तृतीयस्तु ।
[2]नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम् ॥ ११९ ॥
[3]तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ।
[4]अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य ॥ १२० ॥
अर्थं हि समवकारे [5]ह्यप्रतिसंधानमिच्छन्ति ॥ १२१ ॥
युद्धजलसंभवो वा वाय्वग्निजले[6]न्द्रसंभवो वापि ।
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥ १२२ ॥
यस्तु गतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा ।
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटाश्रयो ज्ञेयः ॥ १२३ ॥
त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्का[7]र्ययोगविहितार्थः ।
[8]शृङ्गारः कर्तव्यो धर्मे चार्थे च कामे च ॥ १२४ ॥
यत्र तु धर्मसमा[9]पकमात्महितं भवति साधनं बहुधा ।
[10]व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मशृङ्गारः ॥ १२५ ॥
अर्थस्येच्छायोगाद्बहुधा चैवार्थतोऽर्थशृङ्गारः ।
[11]स्त्रीसंप्रयोगविषयेष्वयथार्थमपीष्यते[12] हि रतिः ॥ १२६ ॥
कन्याविलोभनकृतं[13] प्राप्तौ स्त्रीपुंसयोस्तु [14]रम्यं वा ।
निभृतं[15] सावेगं वा यस्य [16]भवेद्वा कामशृङ्गारः ॥ १२७ ॥
[17]उष्णिग्गायत्री वा वृत्तानि च यानि बन्धकुटिलानि ।

---

१. 'प्रमाणविहितो' **का.** २. 'ज्ञेयं तु नाडिकाख्यं' **का.** 'नाडी–' इत्यादिः 'संयोज्यम्' इत्यन्तः पाठः **क-ख**-पुस्तकयोर्नास्ति. ३. एतत् पद्यार्धं **क**-पुस्तके नास्ति. ४. 'अङ्कान्ते संबन्धः कर्तव्ये काव्य–' मु. ५. 'ह्यप्रतिसंबन्धम्' **क-ख.**, 'ह्यप्रतिबन्ध' मु. ६. 'ह्यग्निगजेन्द्रसंभ्रमकृतो' **क-ख.** ७. 'काव्य–' मु. ८. 'त्रिविधाकृतिश्शृङ्गारो ज्ञेयो धर्मार्थकामकृतः ।' इति **का.**, 'त्रिविधकृतश्शृङ्गारो ज्ञेयो धर्मार्थकामेषु' मु. ९. 'यत्र तु धर्मे प्रार्थिनमात्रं हितं भवति साधितं बहुधा' । **का.** १०. 'प्रतिनियमतपोयुक्तं ज्ञेयोऽसौ धर्मशृङ्गारः' **का.** ११. 'सम्यक्प्रयोगविषयेष्वर्थार्थिकान्यानि च चारयति यत्र' मु. १२. 'पीष्यतेऽभिरतिः' **का.** १३. 'विलोभनं वै प्राप्य' मु; 'विलोभनं वा प्राप्तं' **का.** १४. 'रहः' मु. १५. 'रम्यं वा निभृतं वा' मु. 'निभृतं वा सावेगं जानीयात् कामशृङ्गारम्' **का.** १६. 'विज्ञेयः' मु. १७. 'उष्णिग्गायत्र्या वा छन्दःसु' । **क-ख.** 'उष्णिगनुष्टुब् वा वृत्तानि च यानि बन्धकुटिलानि' इति च 'उष्णिग्गायत्री वा यानि तथान्यानि बन्धकुटिलानि' **का.**

[1]तान्यत्र समवकारे कविभिः[2] सम्यक्प्रयोज्यानि ॥ १२८ ॥
[3]एवं कार्यस्तज्ज्ञैः सुखदुःखसमाश्रयः [4]समवकारः ।
[5]वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ॥ १२९ ॥
दिव्यपुरुषाश्रय[[6]कृतो दिव्यस्त्रीकारणोपगतयु[7]द्धः ।
सुविहितवस्तुनिबन्धो विप्रात्ययकारक]श्चैव ॥ १३० ॥
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संफेटकृतस्[9]तथा चैव ॥ १३१ ॥
स्त्रीभेदनापह[10]रणा[प?]मर्दनप्राप्तवस्तुशृङ्गारः ।
[[11]यत्र तु वधेप्सितानां वधोऽप्युदश्रयो भवेत्तु पुरुषाणाम् ।]
ईहामृगस्तु [12]कार्यश्चतुरङ्कविभूषितश्चैव ॥ १३२ ॥
[13]यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव ।
[14]ईहामृगेऽपि तत्स्यात्केवलमत्र स्त्रिया योगः ॥ १३३ ॥
किंचिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ॥ १३४ ॥
ईहामृगस्य [15]लक्षणमुक्तं विप्राः समासयोगेन ।
[16]अथ वै डिमस्य लक्षणमतः परं प्रवक्ष्यामि ॥ १३५ ॥

---

१. 'वृत्तानि' मु.' का. २. 'कविभिर्नैव प्रयोज्यानि' का; 'कविभिस्तानि प्रयोज्यानि' मु. ३. 'एवं कार्यं तज्ज्ञैर्नानारससंश्रयं समवकारम्' इति पाठान्तरं क-ख-पुस्तकयोः, 'कार्यस्तज्ज्ञैः' क-ख-मु. ४. 'समवकारे' मु. ५. 'अत ऊर्ध्वं व्याख्यास्ये' मु. ६. त्रुटितश्चायं पाठः क-ख-पुस्तकयोः. ७. '°ारणोपगतयुक्तः' मु. ८. 'वस्तुप्रहितो' मु. ८. 'विप्रत्ययकारकश्चैव' मु. ९. 'तथैव' मु. १०. 'हरणे प्रमदेनाप्राप्तस्तु' मु. '°पमर्दसंप्राप्त' का. ११. 'पद्यार्थमिदमधिकं का-पुस्तके.एतत्परिवर्ते 'यत्र तु बन्धे नानावधो हि उदयो भवेद्धि पुरुषाणाम्' एतत्पद्यार्थं क-ख-पुस्तकयोः 'ईहामृगेऽपि तत्स्यात्' अस्योत्तरं वर्तते । 'वधेप्सितानां बन्धो' मु. १२. 'कार्य सुसमाहितः काव्यबन्धश्च' क-ख. 'ससमाहितकाव्यबन्धश्च' इति का. १३. 'यद्वा योगे कार्यं ये पुरुषा ये रसाश्च निर्दिष्टाः' इति का. १४. 'ईहामृगेऽपि ते स्युः केवलनेत्रस्त्रयोगः' मु. 'ईहामृगेऽपि ते स्युः केवलममरस्त्रियो ह्यस्मिन्' क- १५. 'लक्षणमित्युक्तं चतुरस्रमिदं समासयोगेन' मु. 'ईहामृगस्य लक्षणमिद- 'सर्वतः क- गासेन ।' इति का. १६. 'डिमलक्षणं तु भूयो लक्षणयुक्त्या प्र- ' भूयोलक्षणयुक्त्या प्रवक्ष्यामि' का.

प्रख्यातवस्तुविषयः [1]प्रख्यातोदात्तनायकश्चैव ।
[2]षड्त्रिंशल्लक्षण[3]युक्तश्चतुरङ्को वै डिमः कार्यः ॥ १३६ ॥
शृङ्गारहास्य[4]वर्जं शेषैरन्यै रसैः समायुक्तः ।
दीप्तरसकाव्ययोनि[5]र्नानाभावोपसंपन्नः ॥ १३७ ॥
निर्घातोल्कापातैरु[6]परागेणेन्दुसूर्ययोर्युक्तः ।
[7]युद्धनियुद्धप्रहरणसंफेटककृतश्च कर्तव्यः ॥ १३८ ॥
[8]मायेन्द्रजालबहुलो बहुपुरुषो[9]त्थानयुक्तश्च ।
[10]देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च १३९ ॥
षोडशनायकबहुलः सात्त्वत्यारभटि[11]वृत्तिसंपन्नः ।
कार्यो डिमः प्रयत्ना[12]न्नानाश्रयभावसंपन्नः ॥ १४० ॥
[डिम[13]लक्षणमित्युक्तं मया समासेन लक्षणानुगतम् ।
व्यायोगस्य तु लक्षणमतः परं संप्रवक्ष्यामि ॥ १४१ ॥]
[14]व्यायोगस्तु विधिज्ञैः [15]कार्यः प्रख्यातनायकशरीरः ।
[16]अल्पस्त्रीजनयुक्तस्त्वेका[17]हकृतस्तथा चैव ॥ १४२ ॥
[18]बहवस्तत्र च पुरुषाः कविभिः कार्या यथा समवकारे ।
न च [19]तत्प्रमाणयुक्ताः कार्या एकाङ्क एवायम् ॥ १४३ ॥

---

१. 'प्रख्यातोदात्तनायकोपेतः' का. २. 'षड्जकलक्षण' क-ख. 'षड्रसलक्षणे युक्तः' ३. 'युक्तः' मु. ४. 'वर्जितः' मु. 'शृङ्गारहास्यवर्जः शेषैरन्यैः समायुक्तः' का. ५. 'नानाचित्रो डिमः कार्यः' मु. 'नानाभावान्वितश्चैव' का. ६. 'निर्घातचन्द्रसूर्योपरागसोल्कावपात-संयुक्तः' मु. का. 'रागेणेह सूर्ययो' क-ख; ७. 'युद्धनियुद्धनिबद्धसंफेटस्तत्र कर्तव्यः' मु. 'युद्धनियुद्धधर्षण' क-ख. ८. 'माहेन्द्रजाल' क-ख. ९. 'भेदसंयुक्तः' मु. १०. 'देवासुरराक्षसभूतयक्षनागाश्च पुरुषाः स्युः ।' का. ११. 'संयुक्तः' मु. का. १२. 'तज्ज्ञैर्नानाश्रयविशेषः' मु. 'तज्ज्ञैर्नानाश्रयविशेषेण' का. १३. एतत्पद्यं क-खपुस्तकयोर्नास्ति. १४. 'व्यायोगः सुविधि' मु. १५. 'कर्तव्यः ख्यातनायकशरीरः' का. १६. 'स्त्रीजनयुक्तस्तु डिमस्त्वेकाहकृतस्तथा चैव' मु. १७. 'स्त्वैकाव्यङ्क(?) स्तथा चैव' क-ख. १८. 'बहवस्तत्र तु पुरुषा न्यायकृतो' मु. 'बहवश्च तत्र पुरु[illegible]च्छन्ते यथा सम[illegible]वकारे ।' क-ख. १९. 'न च तत्प्रमाणस्तु तदेकाङ्कः सं[illegible]ख. 'उष्णि[illegible]. 'तत्र[illegible] स्वेकाङ्कः संविधातव्यः' मु. [illegible]नि तथान्यानि बन्धकुटि[illegible]

न[1] च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः[2] ।
युद्धनियुद्धाक(ध)र्षणसंह(घ)र्षकृतश्च[3] कर्तव्यः ॥ १४४ ॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥ १४५ ॥
प्रख्यातवस्तुविषयस्त्वप्रख्यातः[4] कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यै(र्युक्तो[5])र्भ(भ)वेत्[6]पुंभिः ॥ १४६ ॥
करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च[7] ।
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव[8] ॥ १४७ ॥
नानाव्याकुलचेष्टः[9] सात्वत्यारभटिकैशिकीहीनः ।
कार्यः[10] काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु[11] ॥ १४८ ॥
यद्दिव्यनायककृतं[12] काव्यं[13] संग्रामबन्धवधयुक्तम्[14] ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥ १४९ ॥
कस्माद्[15]भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु[16] ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात्[17] ॥ १५० ॥
उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न तत्र दुःखं न वा शोकः[18] ॥ १५१ ॥
ये[19] तेषामपि(धि)वासाः पुराणवादेषु पर्वताः[20] प्रोक्ताः ।
संभोगस्तेषु भवेत्कर्मारम्भो[21] भवेदस्मिन् ॥ १५२ ॥

---

१. 'नवदिव्यनायककृतः' क-ख; 'नरदिव्य' मु. २. 'निबद्धम्' मु. ३. 'धर्षण-संफेट' मु. 'युद्धनियुद्धाघर्षणसंघर्षश्चापि कर्तव्यः ।' का. ४. 'विषयोऽप्र' मु. ५. 'बद्धो' मु. ६. 'स्तु' मु. ७. 'देवन' मु. का. ८. 'वाक्यभाषश्च' मु. ९. 'नातिव्यायतवेश्म' मु. १०. 'कर्तव्योऽभ्युदयान्तस्तज्ज्ञैरुत्सृष्टिकाङ्कस्तु ।' का. ११. 'चोत्क्रुष्टिकाङ्कस्तु' मु. १२. 'क्षमम्' मु. १३. 'कार्यम्' मु. १४. 'संग्रामयुद्धबन्धवधयुक्तम्' क-ख. १५. 'तस्मात्' का. १६. 'नित्यकष्टं हि' मु. 'नित्यकालं हि' का. १७. 'चैव' मु. १८. 'नो दुःखं नापि वा शोकः' मु., 'न वा शोकम्' का. १९. 'यत्तेषामधिवासः' मु. २०. 'सर्वतः कथिताः' मु. 'पर्वता गदिताः' का. २१. 'कर्मारम्भास्तथा ह्यस्मिन्' मु.

[[1]अङ्कस्य लक्षणगतं व्याख्यातं शेषमात्रगतम्।
प्रहसनमतः परमहं सलक्षणं संप्रवक्ष्यामि ॥ १५३॥]
प्रहसनम[2]पि विज्ञेयं द्विविधं शुद्धं तथा[3] च संकीर्णम्।
व[4]क्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषा[5]न् ॥ १५४ ॥
[6]भगवत्तापसविप्रैरन्यैरपि हास्यवादसंबद्धम्।
[8]कापुरुषसंप्रयुक्तं परि[9]हासाभाषणप्रायम् ॥ १५५ ॥
अविकृतभाषाचारं विशेषभावोप[7]पन्नरचित(चरित)पदम्।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ १५६ ॥
[10]वेश्याचेटनपुंसकविट[11]धूर्ता बन्धकी च यत्र स्युः।
[12]अनिभृतवे[13]षपरिच्छदचेष्टित[14]करणैस्तु [15]संकीर्णम् ॥ १५७ ॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः।
तत्प्रह[16]सनेषु योज्यं धूर्तोक्ति[17]विवादसंयुक्तम् ॥ १५८ ॥
वीथ्य[18]ङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम्।
[19]भाणस्यापि तु[20] लक्षणमतः परं संप्रवक्ष्यामि ॥ १५९ ॥
आत्मानुभूतशंसी परसं[21]श्रयवर्णनाविशेषे[22]षु(षस्तु)।
द्वि(वि)विधा[23]श्रयो हि भाणो विज्ञेयस्त्वेकहा[24]र्यश्च ॥ १६० ॥

---

१. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. २. 'मिति' मु. ३. 'तथैव' का. ४. 'तस्य व्याख्यास्याम्यहं पृथ' मु; 'तस्य व्याख्यास्येहं पृथक्पृथक् लक्षणविशेषान्।' का. ५. 'विशेषान्' मु. ६. 'भगवत्तापसभिक्षुश्रोत्रियविप्रातिहाससंयुक्तम्' का. ७. 'संपन्नम्' मु. ८. 'नीचजनसंयुक्तं' मु. 'नीचजनसंप्रयुक्तं' का. ९. 'हासोपहास' मु. 'पहास' का. १०. 'वेश्यानपुंसकविटैर्वानिकदासीजनेन वा कीर्णम्' मु. ११. 'धूर्तविटा' का. १२. 'अनिवृत्त' मु. १३. 'य च परिच्छदाचटितकरणै' क-ख. १४. 'चेष्टितकरणात्तु' का. १५. 'संपन्नम्' मु. १६. 'स प्रहसने न योज्यो धूर्तजनविवादसंयुक्तः' मु; 'तत्प्रहसने प्रयोज्यं' का. १७. 'धूर्तविटविवादसंपन्नम्' का. 'स प्रहसने न योज्यो धूर्तप्रविवादसंपन्नः' ब. मु. १८. 'उद्धात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवति मिश्रम्' मु. 'उद्धात्यकादिभिरिदं वीथ्यङ्गे मिश्रितं भवेन्मिश्रम्।' का. १९. 'भाणस्य विधानमतो लक्षणयुक्त्या प्रवक्ष्यामि' मु. २०. 'हि' का. २१. 'संस्तव' मु. २२. 'वर्णनाविशेषश्च' मु. का. २३. 'प्रियो हि' मु. 'विविधाश्रयो' का. २४. 'पात्रश्च' मु.

परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथिते(तैः) ।[1]
आकाशपुरुषकथितैरङ्गविकारैरभिनयै[श्चैव] ॥ १६१ ॥[2][3]
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ १६२ ॥
[भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ।[4][5]
वीथ्याः संप्रति निखिलं कथयामि यथाक्रमं विप्राः ॥ १६३ ॥]
अधमोत्तममध्याभिर्युक्ता स्यात् प्रकृतिभिस्तिसृभिः ।
वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥ १६४ ॥[6][7]
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ॥
अङ्गानां वक्ष्येऽहं लक्षणमखिलं यथादेशम् ॥ १६५ ॥'
उद्घात्यकावलितता (लगिता) वस्यन्दितनाल्पसत्प्रलापाश्च ।[8]
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलत्रिगते ॥ १६६ ॥
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः ।
अथ वीथी संप्रोक्ता लक्षणमेषां प्रवक्ष्यामि ॥ १६७ ॥[9]
पदानि त्वगतार्थानि यत्तरां ('ये नराः') पुनरादरात् ।[10][11]

---

१. 'प्रतिवचनैः सोत्तरैर्ग्रथितवाक्यम्' मु; 'परवचनैरुत्तरोत्तरैर्ग्रथितैः' का. २. 'इदमार्यार्धं मुद्रिते नास्ति. ३. 'अङ्गविकारैरभिनयेत्तत्' का. ४. एषार्या क-ख-पुस्तकयोर्नास्ति । ५. 'वस्तुसमाङ्कः कार्यः सततं काव्ये बुधैर्भाणः मु. इदमार्यार्धं मुद्रिते नास्ति. ६. 'सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।' इत्यधिकमत्र क-ख-पुस्तकयोः । ७. 'द्विपात्रहार्यातथैकहार्या वा' मु. का. ८. 'उद्घात्यकावलगिते त्ववस्यन्दितमेव च । असत्प्रलापश्च प्रपञ्चो नालिकापि च ॥ वाक्केल्यधिबलं चैव च्छलं व्याहार एव च । मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा । त्रयोदशसदाङ्गानि वीथ्यामेतानि योजयेत् ॥ लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः ।' इत्येवं पाठभेदः का. पुस्तके । इतः प्राक् 'अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः ॥ सर्वरसभावयुक्ता विज्ञेया वीथिका ह्यर्थं तस्याः । अङ्गानां वक्ष्येऽहं लक्षणमधुना यथोद्देशम् ॥' इति सार्धार्या मुद्रितपुस्तकेऽधिका. 'उद्घात्यकावलगिते अवस्यन्दितकं तथा । असत्प्रलापश्च तथा प्रपञ्चो नालिकापि या ॥ वाक्केल्यधिबलं चैव छलं व्याहार एव च । मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा ॥' इत्येवं मु. ९. आर्यार्धमिदं मुद्रितपुस्तके का. पुस्तके च नास्ति. १०. 'च गतार्थानि तदर्थगतये नराः' मु. ११. 'यैर्नराः पुनरादरात्' का.

योजयन्ति पदैरन्यैस्तदुद्धात्यकमुच्यते ॥ १६८ ॥
यत्रान्यस्मिन्समावेश्य कार्य[1]मन्यत्प्रसाध्यते ।
त[2]च्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥ १६९ ॥
[3]आक्षिप्तार्थे (प्तेऽर्थे) तु कस्मिंश्चिच्छुभाशुभसमुत्थितम् (ते) ।
कौ[4]शलारू (दु) च्यतेऽन्यार्थे (न्योऽर्थः) तदवस्पन्दितं भवेत् ॥ १७० ॥
[ [5]असंबद्धं तु यद्वाक्यमसम्बद्धमथोत्तरम् ।
असत्प्रला ( ल? ) पितं चैव वीथ्यां सम्यक् प्रयोजयेत् ॥ १७१ ॥
मूर्खजनसंनिकर्षे विद्वानन्यत्र भाषते सम्यक् ।
वचनं न गृह्यतेऽस्य संज्ञेयोऽसत्प्रलापस्तु ॥ १७२ ॥
यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परतः ।
एकस्य चार्थहेतोः सहास्यजननः प्रपञ्चस्तु ॥ १७३ ॥ ]
[6]हास्येनोपगतार्था प्रहेलिका नालिकेति विज्ञेया ।
एकद्विप्रतिवचना वाक्केली स्यात्प्रयोगेऽस्मिन् ॥ १७४ ॥
मूर्ख[7]जनसंनिकर्षे हितमपि यत्र प्रभाषते विद्वान् ।
न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ॥ १७५ ॥
[8]यदतो संभृत( यदसद्भूतं )वचनं सं[9]श्र(स्त)वयुक्तं द्वयोः प[10]रस्परं यत् ।
एकस्य चार्ष ( र्थ ) हेतोः स हास्यजननः [11]प्रपञ्चः स्यात् ॥ १७६ ॥
[12]यत्कारणाद्गुणानां दोषीकरणं भवेद्विवादकृतम् ।
दोषगुणीकरणं वा तन्[13]मृदवं नामापि विज्ञेयम् ॥ १७७ ॥

---

१. 'प्रशस्यते' का. २. 'परानुरोधात्तज्ज्ञेयं नाम्नावलगितं बुधैः' मु. 'तच्चावलिततं' क-ख. ३. 'आक्षिप्य कंचिदेवार्थं शुभाशुभ' मु. आक्षिप्य कंचिदर्थं शुभाशुभसमुत्थितम् ।' का. ४. 'यद्वादबुद्धिनैपुण्यात्' मु. 'यत्सृजेद् बुद्धिवैशद्यात्' का. ५. कोष्ठकबद्धा पद्यत्रयी क-ख-पुस्तकयोर्नास्ति. इतः प्राक् 'असंबद्धं तु यद्वाक्यमसंबद्धं यदुत्तरम् । असत्प्रलापस्तं चैव वीथ्यां सम्यक्प्रयोजयेत् ॥' इत्यधिकं मु. ६. '°नांतां केलीं नाम जानीयुः । मु. '°नात् वाक्केलिका नाम तामाह' का. ७. 'वचनं न गृह्यतेऽस्य संज्ञेयोऽसत्प्रलापस्तु' का. ८. 'यदसत्संभूतं वचनं' मु. ९. 'संस्तव' मु. १०. 'परस्परतः' मु. ११. 'प्रपञ्चस्तु' मु. १२. 'यद्गुणदोषीकरणं दोषगुणीकरणमेव च । यैर्हेतुभिरुपपन्नार्थैस्तन्मृ' मु. १३. 'मृदवन्नामपि' क-ख.

परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र ।
अन्योन्यार्थविशेषकमधिबलमिति तद्बुधैर्ज्ञेयम् ॥ १७८ ॥
अन्यार्थमेव वाक्यं छलमभिसंधानहास्यरोषकरम् ।
श्रुतिसारूप्यार्थात्मनि बहवोऽर्था युक्तिभिर्नियुज्यन्ते ॥ १७९ ॥
एतद्धास्य( यद्धास्य )महास्यं वा त्रिगतं नामापि विज्ञेयम् ।
प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः ॥ १८० ॥
संरम्भसंभ्रमयुतं विवादयुक्तं तथापवादकृतम् ।
बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः ॥ १८१ ॥
(अन्यान्यपि लास्यविधावङ्गानि तु नाटकोपयोगानि ।
अस्माद्विनिःसृतानि तु भाण इवैकप्रयोज्यानि ॥ १८२ ॥
गेयंपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदकस्त्रिमूढाख्यं सैन्धवं च द्विमूढकम् ॥ १८३ ॥
उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् ॥ १८४ ॥
आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् ।
गायनैर्गीयते शुष्कं तद्गेयपदमुच्यते ॥ १८५ ॥
प्राकृतं या वियुक्ता तु पठेदासनसंस्थिता ।
मदनानलतप्ताङ्गी स्थितिपाठ्यं तदुच्यते ॥ १८६ ॥

---

१. 'अन्यार्थं' मु. २. 'बहुविधैः' मु. ३. 'मिति' मु. ४. 'शेष' क-ख. ५. 'यथानुदात्तवचनं त्रिधा विभक्तं भवेत्प्रयोगे तु । हास्यरससंप्रयुक्तं तत्त्रिगतं नाम विज्ञेयम् ॥' मु. ६. 'कथितो' मु. ७. 'गण्डमिति वदन्ति' मु. ८. धनुश्चिह्नान्तर्गतपाठः केवलं मुद्रितपुस्तकानुसारेण लिखितः, लिखितादर्शपुस्तकयोस्तूत्तराध्याये कियानुपलभ्यते. ९. 'तस्मात्' क-ख. १०. 'गेयं पदं स्थितं पाठ्यं' क-ख. ११. 'त्रिरूढाख्यं' क-ख. १२. 'सैन्धवाख्यं द्विरूढकम्' क-ख. १३. 'मुत्तमम्' क-ख.

१४. बहुचारीसमायुक्तं पञ्चपाणिकलानुगम् ।
वत्सपुच्छेन वा युक्तं स्थितिपाठ्यं विधीयते ॥' मु.
प्राकृतं यद्वियुक्तं तु पठेदान्तरसंस्थिता ।
मदनानलतप्ताङ्गी स्थितपाठ्यं विधीयते ॥' क-ख.

[1]आसीनमास्यते यत्र चिन्ताशोकसमन्वितम् ।
अप्रसारितगात्रं च जिह्मदृष्टिनिरीक्षितम् ॥ १८७ ॥
[2]यत्र स्त्री नरवेषेण ललितं संस्कृतं पठेत् ।
सखीनां तु विनोदाय सा ज्ञेया पुष्पगन्धिका ॥ १८८ ॥
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहता ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ १८९ ॥
अनिष्ठुरश्लक्ष्ण[3]पदं समवृत्तैरलंकृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम् ॥ १९० ॥
[4]पात्रविस्मृतसंकेतं सुव्यक्तकरुणान्वितम् ।
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥ १९१ ॥
[5]शुभार्थगीताभिनयं चतुरस्रपदक्रमम् ।
स्पष्टभावरसोपेतं व्याजचेष्टं द्विमूढकम् ॥ १९२ ॥

---

१. आसीनमासनस्थस्य सर्वतोद्यविवर्जितम् ।
अप्रसारितगात्रं च चिन्ताशोकान्वितं च यत् ॥' मु.
आसीनमास्यते यत्र सर्वतोद्यविवर्जितम् ।
अप्रसारितगात्रं च चिन्ताशोकसमन्वितम् ॥' क. ख.

२. 'नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च ।
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका ॥' मु.
वृत्तानि विविधानि स्युर्गेयं गानं च संस्तम् ।
चेष्टाभिश्चाश्रयः पुंसां यत्र सा पुष्पगण्डिका ॥' क-ख.

३. '°श्लक्ष्णपदं' मु. ४. '°मिति स्मृतम्' क-ख.
'रूपवाद्यादिसंयुक्तमव्यक्तकरणाश्रयम् ।
पाठ्यं तु स्वभावोक्त्या विदुः सैन्धवकं बुधाः ॥' मु.
पात्रं विभ्रष्टसंकेतं सुव्यक्तकरणान्वितम् ।
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः ॥' क-ख.

५. 'मुखप्रतिमुखोपेतं चतुरस्रपदक्रमम् ।
स्पष्टभावरसोपेतं नानार्थं च विमूढकम् ॥' मु.
'मुखप्रतिमुखोपेतं चतुरस्रपदक्रमम् ।
स्पष्टभावरसोपेतं श्लिष्टार्थं च द्विमूढकम् ॥' क-ख.

उत्तमोत्तमकं विद्यादनेक[1]रससंश्रयम् ।
विचित्रैः श्लोकबन्धैश्च हे[2]लाभावविभूषितम् ॥ १९३ ॥
[ [3]यदि प्रतिकृतिं दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्तं तु विचित्रपदमुच्यते ॥ १९४ ॥ ]
को[4]पप्रसादजनि[5]तं सं[6]धिक्षेपपदाश्रयम् ।
उक्तप्रत्युक्तमेवं[7] स्यात् किंतु गीतार्थयोजितम् ॥ १९५ ॥
[ [8]दृष्ट्वा स्वप्ने प्रियं य[9]त्र मदनानलतापिता ।
करोति विविधान् भावा[10]न् तद्धै भावितमुच्यते ॥ १९६ ॥ ]
[11]एतद्धै लास्यविधौ लक्षणमुक्तं मया तु विस्तरतः ।
तद(दि)हैव तु यन्नोक्तं प्रसङ्गविनिवृत्तिहेतोस्तु ॥ १९७ ॥)
इति दशरूपविधानं सर्वं प्रोक्तं मयाति[12]लक्षणतः ।
[13]इतिवृत्तद्विविधानं संधिविधौ लक्षणं वक्ष्ये ॥ १९८ ॥

[14]इति भारतीये नाट्यशास्त्रे दशरूपलक्षणं नामाध्यायोऽष्टादशः ॥

---

१. 'अनेककरणान्वितम्' मु. २. 'लीलाभावविभूषितम्' मु. 'हेलाहावविचित्रितम्' क-ख.

३. 'यत्राप्रयोकृतं (?) दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥' क-ख.

४. 'कोपप्रसादजननमविक्षेप (प्य?) जनाश्रयम् ।
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् ॥' मु.

५. '°जननं' क-ख. ६. 'सविक्षेपपदाश्रयम्' क-ख. ७. '°एवं स्याच्चित्रगीतार्थयोजितम्' मु.

८. 'भाणामुक्तालिास्यं (?) विज्ञेयं त्वेकपात्रिह्यर्थत्वात् ।
प्रकरणवदुक्तकाव्यं संस्तवयुक्तं द्विविधभावात् ॥ मु.

९. 'यत्तु' क-ख. १०. 'भावांस्तत्क्रुद्धाविकमुच्यते ॥' क-ख. ११. 'लास्यविधौ एतेषां' मु. क-ख. १२. 'मया हि लक्षणतः' मु. १३. 'इतिवृत्तद्विविधानसंधिविलक्षणां वक्ष्ये' (?) का. 'पुनरस्य शरीरगतं' १४. 'इति भारतीये नाट्यशास्त्रे दशरूपविधानं नामाध्याय एकोनविंशः ।' क-ख., 'इति भारतीये नाट्यशास्त्रे दशरूपविधानं नाम विंशोऽध्यायः ।' इति भारतीये नाट्यशास्त्रे दशरूपलक्षणं नामोध्यायोऽष्टादशः ।' मु.

एकोनविंशोऽध्यायः ।

इतिवृत्तं तु[1] नाट्यस्य शरीरं परिकीर्तितम् ।
पञ्चभिः संधिभिस्तस्य वि[2]भागः संप्रकल्पितः ॥ १ ॥
इतिवृत्तं द्वि[3]धा चैव बुधस्तु परिकल्पयेत् ।
आधिकारिकमेकं तु[4] प्रासङ्गिकमथापरम् ॥ २ ॥
यत्[5] कार्यं हि फलप्राप्त्या समर्थं[6] परिकल्प्यते ।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः ॥ ३ ॥
कवेः प्रयत्नान्नेतॄणां युक्तानां विध्यपाश्रयात् ।
कल्प्यते हि[7] फलप्राप्तिः समुत्कर्षात् फलस्य च[8] ॥ ४ ॥
कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम् ।
त[9]स्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ॥ ५ ॥
[[10]लौकिकसुखदुःखाख्या यथावस्था रसोद्भवा ।
दशधा मन्मथावस्था व्यवस्था त्रिविधा मता ॥ ६ ॥]
[11]संसाध्ये [12]फलयोगे तु व्यापारः [13]साधकस्य यः ।
[14]तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥ ७ ॥
[[15]नाट्यप्रकरणा भावा अवस्थास्ता मता इह ।
धर्मार्थकामसंबन्धः फलयोगस्तु कथ्यते ॥ ८ ॥]
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ ९ ॥

---

१. 'हि' मु. २. 'विभागाः परिकीर्तिताः' का., 'विभागाः संप्रलक्षितः' मु. ३. 'द्विजा' (?) मु. ४. 'परिवर्जयेत्' का., '५. '°एवं स्यात्' मु. क-ख. ६. इतःप्रभृति पद्यद्वयी लिखितपुस्तके नास्ति । ७. 'यत्' का. ८. 'तु' मु. ९. 'परोपकरणार्थं तु' का. १०. पद्यमिदमधिकं का. पुस्तके. ११. लिखितादर्शे त्वितः पूर्वं 'कल्प्यते हि फलप्राप्तिः समुत्कर्षः फलस्य च । कम्पे प्रयत्नोन्नेतॄणां युक्तानां विध्य (ध्य?) पाश्रयात् ॥' इत्युपलभ्यते. १२. 'फलसाध्ये' मु. १३. 'कारकस्य' मु. 'करकणस्य' क-ख. १४. 'तस्यानुपूर्व्यात्' मु. १५. पद्यमिदं का. पुस्तक एवोपलभ्यते ।

औत्सुक्यमात्रं[1] बन्धस्य यद्[2] बीजस्य निबध्यते ।
महतः फलयोगस्य सोऽत्र[3] प्रारम्भ इष्यते ॥ १० ॥

अपश्यतः फलप्राप्तिं यो[4] व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं प्रयत्नः[5] परिकीर्तितः ॥ ११ ॥

[6]ईषत्प्राप्तिर्यदा[7] काचित्फलस्य परिकल्प्यते ।
भावमात्रेण सं[8] ( तं ) प्राहुर्विधिज्ञाः प्राप्तिसंभवम् ॥ १२ ॥

नियतां[9] तु[10] फलप्राप्तिं यदा[11] भावेन पश्यति ।
नियतां तां फलप्राप्तिं सगुणां[12] परिचक्षते ॥ १३ ॥

अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
[13]इतिवृत्ते भवेद्यस्मिन्[14]फलयोगः प्रकीर्तितः ॥ १४ ॥

[15]सर्वस्ये( स्यै )व हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
[16]एता अनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥ १५ ॥

[17]तासां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास[18] एकभावेन फलहेतुः प्रकीर्तितः ॥ १६ ॥

[19]इतिवृत्तं समाख्यातं प्रत्यगेवाधिकारिकम् ।
तदारम्भादि कर्तव्यं फलान्तं[20] च यथा[21] भवेत् ॥ १७ ॥

---

१. 'औत्सुक्यं बन्धमात्रस्य' मु. 'औत्सुक्यमात्रबन्धस्तु' **का.** २. 'यो' मु. **क-ख.** ३. 'स खल्वारम्भ' मु., **का.** ४. 'व्यापारो यः' **का.** ५. 'संप्रकीर्तितः' मु. 'स प्रयत्नः प्रकीर्तितः' **का.** ६. 'ईषत्प्राप्तिश्च या काञ्चिदर्थस्य परिकल्पते' **का.** ७. 'यदौञ्चित्यं फलस्य' मु. ८. 'संज्ञेयो विधिज्ञैः प्राप्तिसंभवः' **का.** ९. 'रूपक्रियाफलप्राप्तिर्यदा' मु. १०. 'च' **का.** ११. 'यत्र' **का.** १२. 'सगुणां' मु. 'सगुणस्तु विनिर्दिशेत्' **का.** १३. 'इति योगे' मु., 'यद् दृश्यते निवृत्ते तु फलयोगः स उच्यते ।' **का.** १४. 'सगुणस्तु विनिर्दिशेत् **का.** १५. 'इतिवृत्तादिकार्यस्य' मु. १६. 'यथानुक्रमते तास्तु' मु. 'यथानुक्रमशो ह्येताः' **का.** 'भवेतत्र संयोज्यं' **का.** १७. 'आसां' **का.** १८. 'विन्यास्स' मु. 'विन्यासः फलभावेन फलाय परिकल्प्यते ।' **का.** १९. 'यद्वृत्तं हि समारब्धं पुरस्तादाविकारिकम्' मु. 'इतिवृत्तं यथाख्यातं पुरस्तादाधिकारिकम् ।' **का.** २०. 'कलान्तं' मु. 'फलन्ति' **का.** २१. 'यदा' मु.

[1]पूर्णसंधि तु तत्कार्यं[2] हीनसंध्यपि वा पुनः ।
नियमात्पञ्च[3]संधि स्याद्धीनसंध्य[3]थ कारणात् ॥ १८ ॥
[4]चतुर्थस्यैकलोपे तु द्विलोपे[5] त्रिचतुर्थयोः ।
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते ॥ १९ ॥
प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत् ।
यद्वृत्तं संभ[6]वेत्तत्र तद्योज्यमविरोधतः ॥ २० ॥
इतिवृत्ते [7]यथावस्थाः पञ्चारम्भादि[8]काः स्मृताः ।
अर्थप्रकृतयः पञ्च[9] [10]तथा बीजादिका अपि ॥ २१ ॥
[11]बीजं बिन्दुः पताका [12]च प्रकरी कार्यमेव च ।
[13]अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥ २२ ॥
[14]स्वल्पमात्रं समुत्सृष्टं बहुधा यद्वि[15]सर्पति ।
फलावसानं [16]तच्चैव बीजं तदि[17]ह कीर्तितम् ॥ २३ ॥
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्तिर्बन्धस्य स बिन्[18]दुः परिकीर्तितः ॥ २४ ॥
यद्वृत्तं हि प[19]रार्थं स्यात्प्र[20]धानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ २५ ॥
[21]फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः ।
[22]अनुबन्धवि[23]हीनं स्यात्प्रकरीमिति निर्दिशेत् ॥ २६ ॥

---

१. 'स्वर्ण॰' मु., 'पूर्णसंध्यपि यत्कार्यं' का. २. 'पूर्णसंधिः स्यात्' का. ३. 'हीनसंधिस्तु' का. ४. 'एकलोपे चतुर्थस्य' का. ५. 'लोपेन' मु. ६. 'संभवेत्किंचित्' मु. ७. 'यथाधस्तात्' मु. 'यदावस्था' का. ८. '॰दिका' का. ९. 'श्चसां पञ्च' का. १०. 'तदा' मु. ११. इतः प्राक् 'अर्थप्रकृतयः पञ्च ससंधिषु प्रकीर्तिताः' इत्यधिकं मु. १२. 'बीजबिन्दुपताकाश्च' का. १३. 'इदमर्धं मुद्रिते नास्ति. १४. 'अल्पमात्रं' का. १५. 'प्रसर्पति' का. १६. 'यच्चैव' मु. 'यच्चैव' का. १७. 'तदभिधीयते' का. १८. 'बिन्दुरिति' मु., 'बिन्दुरिति संज्ञितः' का. १९. 'फलार्थं' मु. २०. 'प्रधानस्याप' मु. २१. 'फलं ब्रूहि फलार्थं स्यात्प्रधानस्यापकारकम् । प्रधानवच्च कल्प्येत पारार्थ्यं' मु. 'फलं संकल्प्यते सद्भिः, परार्थं यस्य केवलम् ।' का. २२. 'अनुबन्धेन हीनस्य प्रकरीं तां विनिर्दिशेत्' का. २३. विहीनानां यथावदिति निर्दिशेत्' मु.

यदाधिकारिकं [1]वृत्तं सम्यक्प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं [2]परिकीर्तितम् ॥ २७ ॥
एतेषां यस्य येनार्थो यतश्च गुण इष्यते ।
त[3]त्प्रधानं तु कर्तव्यं गुणभूतान्यतः परम् ॥ २८ ॥
एकोऽ[4]नेकोऽपि वा संधिः [5]पताकायां तु यो भवेत् ।
प्रधानार्थानुयायित्वादनु[6]संधिः प्रकीर्त्यते ॥ २९ ॥
आ[7]गर्भादाविमर्शाद्वा पताका विनिवर्तते ।
[8]कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ॥ ३० ॥
[9]यत्रान्यस्मिन्युज्यमाने तल्लिङ्गेभ्यः ( ङ्गोऽन्यः ) प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ३१ ॥
सहसैवार्थसंपत्तिर्गुणव[10]त्युपकारतः ।
पताका[11]स्थानकमिदं प्रथमं [12]परिकीर्तितम् ॥ ३२ ॥
[13]वचः सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं [14]परिकीर्तितम् ॥ ३३ ॥
अर्थोपक्षेपणं [15]यत्र लीनं [16]सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥ ३४ ॥
द्व्यर्थो वचनविन्यासः [17]सुश्लिष्टः काव्ययोजितः ।
[18]उपन्यासः संयुतश्च तच्चतुर्थमुदाहृतम् ॥ ३५ ॥
चतुःपताकापरमं नाटके काव्यमिष्यते ।

---

१. 'यस्तु' का. 'कार्यं पूर्वमेव प्रकीर्तितम् । यदर्थो यः' मु. २. 'समुदाहृतम्' का. ३. 'प्रधानं तत्प्रकर्तव्यं' का. ४. 'नैकोऽपि' का. ५. 'पताकायाश्च योजयेत्' का. ६. 'अनुबन्धः स कीर्त्यते' का. ७. 'आगमादिविमर्शांशा' क-ख. ८. 'तस्माद् यस्मात्तु बन्धोऽस्याः परार्थायोपकल्पते' का. ९. 'यत्रान्यस्मिंश्चिन्त्यमाने तल्लीनोऽन्यः' मु. 'यत्रार्थे चिन्त्यमानेऽपि तल्लिङ्गार्थः प्रयुज्यते ।' का. १०. '°त्युपचारतः' का. ११. 'स्थानमित्याद्यमलंकारार्थसंयुतम्' मु. १२. 'परिकीर्त्यते' का. १३. 'वचसातिशयश्लिष्टं' का. 'यवसाति' क-ख. १४. 'परिकल्पितम्' मु. १५. 'यत्तु' का. 'यथा' क-ख. १६. 'साविनयं' क-ख. १७. 'संश्लिष्टः' मु. १८. 'उपपत्त्या युतं यत्तच्चतुर्थं समु' मु.

पञ्चभिः संधिभिर्युक्तं [1]तांश्च वक्ष्याम्यतः [2]पुनः ॥ ३६ ॥

मुखं [3]प्रतिमुखं गर्भो [4]विमर्शश्च तथैव हि ।

तथा निवर्हणं [5]चेति [6]नाटके पञ्च संधयः ॥ ३७ ॥

[7]पञ्चभिः संधिभिर्युक्तं प्रधानमनुकीर्त्यते ।

शेषाः प्रधानसंधीनामनुग्राह्यास्तु संधयः ॥ ३८ ॥

[8]यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।

काव्ये [9]शरीरानुगता तन्मुखं परिकीर्तितम् ॥ ३९ ॥

बीजस्योद्धाटनं यत्तु दृष्टनष्टमिव क्वचित् ।

[10]मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं [11]स्मृतम् ॥ ४० ॥

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव [12]वा ।

पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ ४१ ॥

[13]गर्भान्निर्भिन्नबीजार्थो [14]विलोभनकृतोऽपि वा ।

[15]क्रोधव्यसनजो वापि स विमर्श इति स्मृतः ॥ ४२ ॥

[16]समानं च समर्थानां [17]मुख्यार्थानां सबीजिनाम् ।

[18]नानाभावोऽन्तराणां यद्भवेन्निर्वहणं तु तम् ॥ ४३ ॥

एते [19]तु संधयो ज्ञेया नाटकस्य प्रयोक्तृभिः ।

तथा प्रकरणस्यापि शेषाणां [20]विनिबोधत ॥ ४४ ॥

[ [21]व्यायोगेहामृगौ चापि त्रिसंधी परिकीर्तितौ । ]

[22]न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा ॥ ४५ ॥

---

१. 'तत्प्रवक्ष्याम्यतः परम्' मु. २. 'परम्' का. ३. 'प्रतिमुखं चैव गर्भो विमर्श एव च' मु. ४. '°ऽविमर्शस्तथा हि' का. (?) ५. 'चैव' मु. का. ६. 'संधयो नाटके स्मृताः' का. ७. अयं श्लोको लिखितादर्शे नोपलभ्यते. ८. 'तत्र' क-ख. ९. 'शरीरानुगतं' का. १०. 'मुखान्यस्तस्य' क-ख. 'मुखेन्यस्तस्य' का. ११. 'भवेत्' का. १२. 'च' मु. १३. 'गर्भनिभिन्नबीजार्थो' का. १४. 'विकल्पनकृतोऽपि वा' मु. १५. 'किंचिदाश्लेषसंयुक्तो विमर्शः स्मर्यते बुधैः' १६. 'समानयनमर्थानां' मु. १७. 'मुखाद्यानां' मु., 'व्याख्यानां तु' मु. १८. 'फलोपसंगतानां च ज्ञेयं निर्वहणं तु तत् ।' का. 'भावोत्तराणां च भवेन्निर्वहणं च' मु. १९. 'हि' का. 'च' मु. २०. 'च निबोधत' का. २१.......२२. 'न तयोर्विमर्शस्तु स्यान्न च वृत्तिस्तु कैशिकी' मु.

डिमः समवकारश्च चतुःसंधी प्रकीर्तितौ ।
[1]गर्भा[2]विमर्शौ न स्यातां न च वृत्तिस्तु कैशिकी ॥ ४६ ॥
द्विसंधि तु प्रहसनं [3]वीथ्यङ्को भाण एव च ।
[4]मुखनिर्वहणे स्यातां तेषां वृत्तिश्च भारती ॥ ४७ ॥
एवं [5]हि संधयः कार्या [6]दशरूपे प्रयोक्तृभिः ।
[7]पुनरेषां तु संधीनामङ्ग[8]कल्पं निबोधत ॥ ४८ ॥
[9]संधीनां यानि वृत्तानि [10]प्रदेशेष्वनुपूर्वशः ।
[11]स्वसंपद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ॥ ४९ ॥
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः [12]प्रयोगस्य गुह्यानां चैव गूहनम् ॥ ५० ॥
आश्चर्यवदभि[13]ख्यातं प्रकाश्यानां प्रकाशनम् ।
[14]अङ्गहीनो नरो यद्वद् युद्धारम्भे[15]ऽक्षमो भवेत् ।
अङ्गहीनं [16]तथा काव्यं न प्रयोगक्षमं भवेत् ॥ ५१ ॥
काव्यं यदपि हीनार्थं सम्यगङ्गैः [17]समन्वितम् ।
[18]दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः ॥ ५२ ॥
उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम् ।
[19]हीनत्वात्तु प्रयोगस्य न सतां रञ्जयेन्मनः ॥ ५३ ॥

---

१. 'गर्भोपमर्शौ' क-ख. २. अत्र पूर्वश्लोके च 'अविमर्शं' इति दर्शनेन 'संधीनां' नामसु लक्षणेषु च, 'विमर्श' इत्येव वर्तते । 'विमर्श' इति वा, 'अविमर्श' इति वा इति संदिग्धम्' ३. 'वीथ्यङ्कौ' क-ख. ४. 'मुखनिर्वहणे तत्र कर्तव्ये कविभिः सदा ।' क-ख., 'मुखनिर्वहणे तेषां कर्तव्ये कैशिकीं विना ।' मु. ५. 'तु' मु. ६. 'दशरूप' मु. ७. 'पुनः संध्यन्तरं तेषां' का. ८. 'कल्पान्' मु. ९. कोष्ठकबद्धा श्लोकत्रयी क-ख-पुस्तकयोर्मुद्रितपुस्तके च नास्ति । १०. 'प्रदेशमनुपूर्वशः' मु., 'प्रदेशश्चानुपूर्वतः' क-ख. ११. 'संपद्गुणप्रयुक्तानि तान्यङ्गान्यवबोधयेत्' मु. १२. 'प्रयोगश्च' मु. १३. 'अविख्यातं' मु. १४. अयमर्धश्लोको मुद्रितपुस्तके त्रुटितः. १५. 'यद्वन्नैवारम्भक्षमो' क-ख. १६. 'तु तत्' क-ख. १७. 'समर्पितम्' क-ख. १८. 'दीप्ताङ्गत्वात्' का. १९. 'विप्रयोगस्य नैव तद्' मु., 'हीनत्वाद्धि प्रयोगस्य' मु.

[ [1]तस्मात्संधिप्रयोगेषु[2] यथादेशं यथारसम् ।
कवि[3]नाङ्गानि कार्याणि प्रदेशांस्तु[4] निबोधत ॥ ५४ ॥ ]
उप[5]क्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः [ [6]समाधानं विधानं परिभावना ॥ ५५ ॥
उद्भेदः करणं भेदो द्वादशाङ्गा[7]नि वै मुखे ।
तथा प्रतिमुखे चैव वक्ष्याम्यङ्गानि नामतः ॥ ५६ ॥ ]
विलासः परिसर्पश्च विधूतं ता[9]पनं तथा ।
नर्म [10]नर्मद्युतिश्चैव तथा[11] प्रशमनं पुनः ॥ ५७ ॥
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ।
[12]पुष्पं वज्रमुपन्यासो वर्णसंहार एव च ॥ ५८ ॥
ए[13]तानि वै प्रतिमुखे गर्भेऽङ्गा[14]नि निबोधत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ५९ ॥
संग्रहश्चानुमानं च प्रार्थना क्षिप्ति[15]रेव च ।
तोटकाधिबले चैव चो[16]द्भेदो विद्रवस्तथा ॥ ६० ॥
एतान्यङ्गानि वै गर्भे विमर्शे[17] च निबोधत ॥ ६१ ॥

---

१. धनुश्चिह्नान्तर्गतपाठो लिखितादर्शयोर्नोपलभ्यते. २. '°संधिप्रदेशेषु यथायोगं' मु. ३. 'कविताङ्गानि' मु. ४. 'सम्यक् तानि निबोधत' का. ५. इतः प्राक् मुद्रितपुस्तके 'सामभेदः प्रदानं च दण्डश्च वध एव च । प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ साहसं च भयं चैव ह्रीर्माया क्रोध एव च । ओजःसंवरणं भ्रान्तिस्तथा हेत्ववधारणम् ॥ दूतो लेखस्तथा स्वप्नश्चित्रं मन्द इति द्विधा । संध्यन्तराणि संधीनां प्रदेशास्त्वेकविंशतिः ॥ एते विशेषाः संधिजाः स्युः संधेर्यस्त्वर्थयोगतः । पाठ्याङ्गान्यथ योगेन सन्ति तानि निबोधत ॥ इति पाठ्य उपक्षेपः परिन्यासो' इत्यधिकमुपलभ्यते. ६. धनुश्चिह्नान्तर्गतपाठो लिखितपुस्तके त्रुटितः. ७. 'ह्येतान्यङ्गानि' का. ८. 'शृणुताङ्गान्यतः परम्' का. ९. 'शमनं' क-ख. १०. 'नर्मच्युति' क-ख. ११. 'तथा गणं' 'तथा गपणं' क-ख. १२. 'वज्रं पुष्पं' का. १३. 'एवमङ्गानि बीजस्य संप्रसिद्धिकराणि च ।' इत्यधिकमितः प्राक् मु. १४. 'गर्भे चैव' मु., 'गर्भाङ्गानि' का. १५. 'त्किमि' क-ख. 'क्षिप्रमेव' मु. 'प्रार्थनाक्षिप्तमेव च' का. १६. 'ह्युद्वेगो' क-ख. १७. 'ह्यवमर्शे' क-ख., 'ऽथ विमर्शे' क-ख.

[1]अपवादश्च संफेटो वि[2]द्रवः शक्तिरेव च ।
प्र[3]सङ्गो व्यवसायश्च [4]द्युतिः खेदो निषेधनम् ॥ ६२ ॥
विरो[5]ध[नः]मथादानं छा[6]दनं च प्ररोचना ।
[7]एतान्यवमृशेऽङ्गानि [8]भूयो निर्वहणे शृणु ॥ ६३ ॥
सं[9]धिनिरोधो ग्रथनं निर्णयः परिभाषणम् ।
[10]द्युतिः प्रसाद आनन्दः स[11]मयश्चोपगूहनम् ॥ ६४ ॥
[12]भाषणं पूर्ववाक्यं च [13]कार्यसंहार एव च ।
प्रशस्तिरिति सं[14]हारे ज्ञे[15]यान्यङ्गानि नामतः ॥ ६५ ॥
[16]चतुःषष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि संधिषु ।
[ [17]संपादनार्थं बीजस्य सम्यक्संधिकराणि तु ॥ ६६ ॥
कार्याण्येतानि कविभिर्विस्पष्टार्थानि नाटके ] ।
[18]एतेषां तु पुनर्वक्ष्ये लक्षणानि यथाक्रमम् ॥ ६७ ॥
काव्या[19]र्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।
समु[20]त्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः ॥ ६८ ॥
तन्नि[21]र्वृत्तिः परिन्यासो विज्ञेयः कविभिः सदा ।
गुणनिर्वर्णनं चैवं[22] विलोभनमिति स्मृतम् ॥ ६९ ॥

---

१. 'अपवादोऽथ' का. २. 'हि द्रवः' मु., 'ऽभिद्रवः' क-ख. ३. 'व्यवसायः प्रसङ्गश्च' का. ४. 'निरोधश्च प्रकीर्तितः' क-ख. ५. 'प्ररोचना विचलनमादानं छेदनं तथा । व्याहारश्च द्युतिश्चैव विमर्शाङ्गान्यमूनि च ॥' इति क-ख. पुस्तकयोः । ६. 'छलनं' मु. ७. 'व्यवहारश्च युद्धश्च' क-ख.; 'व्याहारश्चापि द्युतिश्च' मु. ८. 'विमर्शेऽङ्गान्यमूनि च' मु. ९. 'विबोधो' मु. 'विरोधो' का. १०. 'कृतिः प्रसादानन्दौ च' मु., 'द्युतिः प्रसादश्चानन्दः' का. ११. 'समयो ह्यपगूहनम्' का. १२. 'आभाषणं पूर्वभावः' मु. १३. 'काव्यसंहार' क-ख. १४. 'चाङ्गानि कुर्यान्निर्वहणे बुधः' का. १५. 'संध्यङ्गानि चतुर्दश' मु. १६. 'संधौ निवर्हणाख्ये तु कर्तव्यानि प्रयोक्तृभिः । एतेषां त्वर्थसंबद्धं पुनर्वक्ष्यामि लक्षणम् ॥' मु. १७. एतत्पद्यमधिकं का. पुस्तके. १८. 'पुनरेषां प्रवक्ष्यामि' का. १९. 'काव्यस्यार्थसमुत्पत्ति' मु. २०. 'यदुत्पन्नार्थबाहुल्यम्' क-ख. २१. 'भविष्यद्वस्तुकथनं परिन्यासं प्रचक्षते' मु., 'तन्निष्पत्त्या तु कथनं परिन्यासः प्रकीर्तितः ।' का. २२. 'तज्ज्ञैर्वि' मु., 'यत्तु' का.

संप्रधारणमर्थानां युक्तिरित्यभिधीयते।
सुखार्थस्याभिगमनं[1] प्राप्तिरित्यभिधीयते[2] ॥ ७० ॥
बीजार्थस्योपगमनं तत्समाधानमुच्यते[3]।
सुखदुःखकृतो योऽर्थस्तद्विधानमिति[4] स्मृतम् ॥ ७१ ॥
कुतूहलोत्तरावेशो[5] विज्ञेया परिभावना।
बीजार्थस्य प्ररोहो यः स[6] उद्भेद इति स्मृतः ॥ ७२ ॥
प्रकृतार्थसमारम्भः करणं नाम तद्भवेत्।
संघातभेदनार्थो[7] यः स भेद इति कीर्तितः ॥ ७३ ॥
समीहा[8] रतिभोगार्था विलास इति कीर्तितः।
दृष्टनष्टानुसरणं परिसर्प इति स्मृतः ॥ ७४ ॥
कृतस्यानुनयस्यादौ विधूतमपरिग्रहः[9]।
अपायदर्शनं[10] यत्तत्तापनं[11] नाम तद्भवेत् ॥ ७५ ॥
क्रीडार्थं[12] विहितं यत्र[13] हास्यं नर्मेति तत् स्मृतम्।
दोषप्रच्छादनार्थं[14] तु हास्यं[15] नर्मद्युति स्मृतम् ॥ ७६ ॥
उत्तरोत्तरवाक्यं[16] तु भवेत्प्रशमनं[17] बुधाः।
या तु व्यसनसंप्राप्तिर्निरोधः स तु[18] कीर्तितः ॥ ७७ ॥
क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनम्।
विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम् ॥ ७८ ॥
प्रत्यक्षरूपं[19] यद्वाक्यं तद्वज्रमिति[20] संज्ञितम्।

---

१. 'सुखार्थस्योपगमनं' मु. का. २. '°रित्यभिसंज्ञितम्' का. ३. 'समाधानमपीष्यते' का. ४. 'मिहीच्यते' का. ५. 'कौतूहलोत्तरविशो भवेत्तु' का. ६. 'उद्भेदः स तु कीर्तितः' का. ७. 'संघार्थं' मु. ८. 'संभोगो रतिसंपन्नो' मु. ९. 'विधूतं ह्यपरिग्रहः' मु. १०. 'तस्योपशमनं यत्तु शमनं नाम तद्भवेत्।' मु. ११. 'यत्तु' का. १२. 'क्रीडाविलोभनार्थं तु हास्यं नर्म इति स्मृतम्।' मु. १३. 'यत्तु हास्यं नर्म तु संज्ञितम्।' का. १४. अयमर्धश्लोको मुद्रिते नास्ति। १५. [हास्यं] इति त्रुटितं क-ख. पुस्तकयोः। १६. 'अधरोत्तर' क-ख. १७. 'प्रगणनं' मु. 'प्रगयणं पुनः' क-ख. १८. 'च' मु., 'प्रकीर्तितः' का. १९. 'विरूक्षवचनप्रायं वज्रमित्यभिधीयते।' क-ख. २०. 'इत्यभिधीयते' क-ख.

उपपत्तिकृतो योऽर्थ[1] उपन्यासस्तु स स्मृतः ॥ ७९ ॥
चातुर्वर्ण्याभिग[2]मनं वर्णसंहार इष्यते ।
ए[3]तानि तु प्रतिमुखे गर्भे चापि निबोधत ॥ ८० ॥
कपटा[4]द्याश्रयं वाक्यमभूताहरणं विदुः ।
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥ ८१ ॥
चित्रा[5]र्थसमवायो यस्तद्रूपमिति कीर्तितम् ।
य[6]त्सातिशयवद्वाक्यं तदुदाहरणं स्मृतम् ॥ ८२ ॥
भाव[7]तत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते ।
सामदानार्थसंयुक्तः संग्रहः परिकीर्तितः ॥ ८३ ॥
रूपानुरूपगमनमनुमानमिति स्मृतम् ।
रतिर्हर्षोत्सवार्थानां प्रार्थना प्रार्थना भवेत् ॥ ८४ ॥
ग[9]र्भस्योद्भेदनं यत्स्यात् क्षिप्तिरित्यभिधीयते ।
संरम्भवचनप्रायं तोटकं त्व[10]िति संज्ञितम् ॥ ८५ ॥
कपटेना[11]भिसंधानं ब्रु[12]वतेऽधिबलं बुधाः ।
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ॥ ८६ ॥
नृ[13]पाग्निभयसंयुक्तः संभ्र[14]मो विद्रवः स्मृतः ।
[ ए[15]तान्यङ्गानि गर्भे स्युरविमर्शे निबोधत ॥ ८७ ॥
दोषप्रख्यापनं यत् स्यात् सोऽपवा[16]दः प्रकीर्तितः ।
रोषग्रथितवाक्यं तु संफेटः परिकीर्तितः ॥ ८८ ॥

---

१. 'श्च' क-ख. २. '°पगमनं' का. ३. 'एतत्प्रतिमुखेऽङ्गानि अथ गर्भस्थलक्षणम् ।' मु., इदमर्धं लिखितादर्शे नास्ति । ४. 'कपटापाश्रयं यत्तदभूताहरणं विदुः ।' का. 'कपटाश्रयं यद्वा' का. मु. ५. 'चित्रार्थसमवाये तु वितर्को रूपमिष्यते' का. ६. 'यत्तु सातिशयं वाक्यं' मु. ७. 'तत्त्वोपलब्धिर्वाक्यस्य' मु. क-ख. ८. 'कार्यानुनयपूर्वस्तु नियोगः' मु. ९. 'गर्भस्योद्भेदनं यत्तु तदुपस्थितमुच्यते ।' मु. १०. 'त्विह' मु. ११. 'कपटेनातिसंधानम्' का. १२. 'ज्ञेयं त्वधिबलं बुधैः' का. 'ज्ञेयं चाधिबल-बुधैः' मु. १३. 'शङ्कामयत्रासकृतो विद्रवः समुदाहृतः ।' क-ख. १४. 'द्रव एव हि विद्रवः' मु. १५. पद्यार्धमिदं क-ख. पुस्तकयोर्नास्ति । मुद्रितपुस्तके तु—'गर्भाङ्गलक्षणं प्रोक्तं विमर्शेऽथ निबोधत ।' १६. 'अपवादस्तु स स्मृतः ।' मु.

गुरुव्यतिक्रमो यस्तु विज्ञेयोऽभि[1]र्द्रवस्तु सः ।
विरोध[2]प्रशमो यस्तु सा शक्तिः परिकीर्तिता ॥ ८९ ॥
प्र[3]सङ्गश्चैव विज्ञेयो गु[4]रूणां परिकीर्तनम् ।
व्यवसाय[5]श्च विज्ञेयः प्रतिज्ञाहेतुसं[6]भवः ॥ ९० ॥
वाक्य[7]माघर्षणकृतं द्य( द्यु ? )ति स्तज्ज्ञैरुदाहृतम् ( ता ? ) ।
मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ॥ ९१ ॥
ईप्सितार्थप्रतीघातो निषेधः स तु कीर्तितः ।
विरोधनं तु संरम्भादुत्तरोत्तरभाषणम् ॥ ९२ ॥
बीजकार्योपगमनमादानमिति संज्ञितम् ।
अ[9]वमानात् कृतं वाक्यं कार्यार्थं छादनं भवेत् ॥ ९३ ॥
प्ररोचना च विज्ञेया सं[10]भारार्थप्रकाशिनी ।
ए[11]तान्यवमृशाङ्गानि संहारे तु निबोधत ॥ ९४ ॥

---

१. 'हि द्रवस्तु' मु. २. 'विरोधो ( धा ? )पगमो' का. ३. काशीमुद्रितपुस्तके श्लोकेऽस्मिन् पूर्वार्धोत्तरार्धयोः पौर्वापर्यम् । ४. 'गुरूणां परिकीर्तितः' क-ख. 'वाक्यै-रामर्षयोजितैः' मु. ५. 'तु' का. 'तु कर्तव्यः' मु. ६. 'प्रतिज्ञादोषसंभवः' का. 'प्रतिज्ञाहेतुसंश्रयः' मु. ७. इतः प्रभृति कोष्ठबद्धा श्लोकद्वयी लिखितपुस्तके नास्ति । किंतु

( उत्तरोत्तरवाक्यं तु निरोध इति संज्ञितः ।
प्ररोचना च विज्ञेया या कार्यार्थप्रदर्शिनी ॥
अनुमानार्थसंयुक्तं विद्याद् विचलनं तथा ।
बीजकार्योपगमनमादानमिति संज्ञितम् ॥
अपमानकृतं वाक्यं कार्यार्थं छादनं भवेत् ।
प्रत्यक्षकथनं यत्तु स व्याहार इति स्मृतः ॥
वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृतः । )

एवं पाठभेदः । 'वाक्यमाधर्षैं संयुक्तं द्युतिस्तज्ज्ञैरुदाहृतम् । मनः श्रेष्ठार्थमुत्पन्नः श्रमस्तोद उदाहृतः । ईप्सितार्थप्रतीघातः प्रतिषेधः प्रकीर्तितः । कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥' इति च क-ख. पुस्तकयोः । ८. 'साधिक्षेपं वचो यत्र तद् द्युतिरिति संज्ञितम् ।' मु. ९. 'अपमानादिजनितसंमोहच्छलनं' मु. १०. 'संहा-रार्थप्रदर्शिनी' मु. ११. इदमर्धं लिखितादर्शे नोपलभ्यते । 'लक्षणं विमर्शाङ्गानां संहारे तु निबोधत ।' इति क-ख. पुस्तकयो.

मुखबीजोपगमनं संधिरित्यभिधीयते ।
कार्यस्यान्वेषणं युक्त्या निरोध इति कीर्तितः ॥ ९५ ॥
उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम् ।
अनुभूतार्थकथनं निर्णयः समुदाहृतः ॥ ९६ ॥
परिवादकृतं यत् स्यात् तदाहुः परिभाषणम् ।
लब्धस्यार्थस्य शमनं धृतिमाचक्षते पुनः ॥ ९७ ॥
शुश्रूषाद्युपसंपन्नः प्रसादः प्रीतिरुच्यते ।
समागमस्तु योऽर्थानामानन्दः परिकीर्तितः ॥ ९८ ॥
दुःखस्यापगमश्चैव समयोऽथ निगद्यते ।
अद्भुतस्य च संप्राप्तिर्भवेत्तदुपगूहनम् ॥ ९९ ॥
सामदानादिसंपन्नं भाषणं समुदाहृतम् ।
पूर्ववाक्यं तु विज्ञेयं यथार्थोक्तार्थदर्शनम् ॥ १०० ॥
वरप्रसादसंप्राप्तिः काव्यसंहार इष्यते ।
नृपदेवप्रशस्तिश्च प्रशस्तिरभिधीयते ॥ १०१ ॥
यथासंधि तु कर्तव्यान्येतान्यङ्गानि नाटके ।
कविभिः काव्यकुशलै रसभावानवेक्ष्य तु ॥ १०२ ॥
सर्वाङ्गानि कदाचित्तु द्वित्रियोगेन वा पुनः ।

१. 'सुखबीजोपगमनम्' इति का. २. 'यत्तु विबोध इति स स्मृतः' मु. ३. 'विरोध' इति का. ४. 'नाम तद्भवेत्' मु. ५. 'अनुभूतस्य कथनं' का. ६. 'कृतिरित्यभिधीयते' मु; 'द्युतिरित्यभिधीयते' इति का. ७. '°संपन्ना' लिखित पु. ८. 'प्रसाद इति भण्यते' का. ९. 'समागमस्तथार्थानां' क-ख. १०. 'स तु कीर्तितः' का. ११. 'दुःखस्यापगमो यस्तु' का., 'दुःखापनयनं चैव' मु. १२. 'समयः स निगद्यते ।' मु; 'स शमः संनिगद्यते' का. १३. 'तु' लि. १४. '°रुपगूहनमिष्यते' लि. १५. 'सामदानादिसंयुक्तं भाषणं तूच्यते बुधैः ।' का. 'दानमानविनिष्पन्नमाभाषणमुदाहृतम्' मु. १६. 'पूर्वभावस्तु विज्ञेयः सद्भिः कार्योपदेशकः' मु; 'पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शकम् ।' का. १७. 'वरप्रदानं' का. १८. 'नृपदेवप्रशान्तिश्च' का. 'देवद्विजनृपादीनां प्रशस्तिः स्यात् प्रसाधनम् ।' मु. १९. 'इत्येतानि यथा संधिकार्याण्यङ्गानि रूपके ।' का. २०. 'रूपके' मु. २१. 'कार्यकुशलैः' का. २२. 'रसभावमपेक्ष्य तु ।' लि. २३. 'यन्मिश्राणि' क-ख., 'संमिश्राणि' का.

[१]ज्ञात्वा कार्यमवस्थां च [२]योज्यान्यङ्गानि संधिषु ॥ १०३ ॥
( [३]एतेषामेव चाङ्गानां संबद्धान्यर्थयुक्तितः ।
[४]संध्यन्तराणि वक्ष्यामि त्वर्थोपक्षेपकाणि च ॥ १०४ ॥
साम[५]भेदस्तथा दण्डः प्रदानं वध एव च ।
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ १०५ ॥
साहसं च भयं चैव ह्री[६]र्माया क्रोध एव च ।
[७]ओजःसंवरणं भ्रान्तिस्तथा हेत्ववधारणम् ॥ १०६ ॥
[८]दूतो लेखस्तथा स्वप्न[९]श्चित्तं मद इति स्मृतम् ॥
संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः ॥ १०७ ॥ )
विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः ।
अङ्कावतारो[१०]ऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥ १०८ ॥
मध्यमपुरुषनियोज्यो नाटकमुखसंधि[११]र्मात्रसंचारः ।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ १०९ ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचम[१२]ध्यैकृतः ॥ ११० ॥
[१३]अन्तर्यवनिकासंस्थैः [१४]शून्यादिभिरनेकधा ।
अर्थोपक्षेपणं [१५]यत्तु क्रियते सा हि चूलिका ॥ १११ ॥
[१६]अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥ ११२ ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।

---

१. 'कार्यं कालमवस्थां च ज्ञात्वा कार्याणि संधिषु' मु. २. 'कार्याण्यङ्गानि संधिषु' लि. ३. इतः प्रभृति श्लोकचतुष्टयी का. पुस्तके नास्त्येव । ४. 'संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः ।' क-ख. ५. 'भेदप्रदानं च दण्डश्च वध' मु. ६. 'ज्ञेया सा' क-ख. ७. 'तेजः' क-ख. ८. 'भ्रान्ता' क-ख. ९. 'चित्रं मद इति द्विजाः' मु. १०. 'अङ्कावताराङ्कमुखं' का. ११. 'संधिवस्तुसंचारः' का. १२. 'नीचमध्यमैः कृतः' का. १३. 'जवनिकासंस्थैः' लि. १४. 'उत्तमाधममध्यमैः' का. १५. 'यत्र' का. १६. 'अङ्कान्तराधिकारी' (?) का.

प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ ११३ ॥
[ [1]प्राकृतभाषाग्रथितः संस्कृते प्राकृतस्य लोकस्य ।
नीचस्याचरणकृतः प्रवेशको नाम विज्ञेयः ॥ ११४ ॥ ]
अङ्कान्तरेऽथवाङ्के निपतति य[2]स्मिन् प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो ज्ञेयो [3]ह्यङ्कावतारोऽसौ ॥ ११५ ॥
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
य[4]त्र संक्षिप्यते पूर्वं तदङ्कमुखमि[5]ष्यते ॥ ११६ ॥
[6]वृत्तिवृत्त्यङ्गसंपन्नपदार्थप्रकृतिक्षमम् ।
पञ्चावस्[7]थाभिनिष्पन्नैः पञ्चभिः संधिभिर्युतम् ॥ ११७ ॥
सं[8]ध्यन्तैरेकविंशत्या चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं गुणालंकारभूषितम् ॥ ११८ ॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसंचारं सा[9]ध्वाचारजनप्रियम् ॥ ११९ ॥
[10]सुश्लिष्टसंधिसंयोगं सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥ १२० ॥
अवस्था या हि लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसंचारा नाटके सं[11]भवेदिह ॥ १२१ ॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न[12] योगोऽसौ नाटके यन्न दृश्यते ॥ १२२ ॥
योऽयं [13]स्वभावो लोकस्य [14]नानावस्थान्तरात्मकः ।
सो[15]ऽङ्गाद्यभिनयैर्युक्तो ना[16]ट्यमित्यभिधीयते ॥ १२३ ॥

---

१. तदेतत्पद्यं लिखितपुस्तके नास्ति । २. 'यस्मात्' का. ३. 'विज्ञेयोऽङ्कावतारोऽसौ' का. ४. 'यदुपक्षिप्यते' लि. ५. 'उच्यते' लि. ६. 'वृत्तिप्रत्यङ्गसंपन्नं पताकार्थं प्रतिक्रियम् ।' का. ७. 'पञ्चावस्थासमुत्पन्नं' का. ८. 'पञ्चसंधि चतुर्वृत्ति' क-ख. ९. 'साध्याचारं जनप्रियम्' लि. १०. 'सुश्लिष्टसंधियोगं च' का. ११. 'सा भवेदिह' मु., 'साभिधीयते' लि. १२ 'न वा योगो' लि; 'न तत्कर्मसमायोगो' मु. १३. 'यो यः' का. १४. 'नानावस्थानयात्मकः' लि. १५. 'साङ्गाभिनयसंयुक्तो' का. १६. 'नाट्यकं त्वभिधीयते' लि.

देवतानामृषीणां च राज्ञां लोकस्य[1] चैव हि।
पूर्ववृत्तानुचरितं नाटकं[2] नाम तद्भवेत् ॥ १२४ ॥
यस्मात् स्वभावः[3] संहृत्य साङ्गोपाङ्गगतिक्रमैः[4]।
अभिनीयते गम्यते च तस्माद्धि[6] नाटकं स्मृतम् ॥ १२५ ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥ १२६ ॥
यान्येकशिल्पजातानि[7] ह्येककर्मकृतानि[8] च।
तानि शेषाणि रूपाणि प्रयोज्यानि[9] प्रयोक्तृभिः ॥ १२७ ॥
लोकस्वभावं[10] संप्रेक्ष्य नराणां च बलाबलम्।
संभोगं चैव युक्तिं च ततः कुर्यात्तु[11] नाटकम् ॥ १२८ ॥
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः।
ये चापि हि भविष्यन्ति[12] तेऽप्यल्पश्रुतबुद्धयः ॥ १२९ ॥
बुद्धयः कर्म शिल्पानि[13] वैचक्षण्यं कलासु च।
सर्वाण्येतानि[14] नश्यन्ति[15] यदा लोकः प्रणश्यति ॥ १३० ॥
तदेवं लोकभावानां प्रसमीक्ष्य बलाबलम्[16]।
मृदुशब्दं सुखार्थं[17] च कविः कुर्यात्तु नाटकम् ॥ १३१ ॥
[18]चेक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये।
वेश्या इव न शोभन्ते[19] कमण्डलुधरैर्द्विजैः ॥ १३२ ॥

---

१. 'चोत्कृष्टनैधनम्' लि; 'लोकस्य चैव हि' मु. २. 'नाट्यकं' लि. ३. 'स्वभावं।' का. ४. 'साङ्गोपाङ्गमतिक्रमैः' मु. ५. 'प्रयुज्यते ज्ञायते च' लि. ६. 'यस्मात् तत्' मु. ७. पद्यमिदं लिखितपुस्तके नास्ति। 'यान्येव' का. ८. 'एकरूपकृतानि च' क-ख. ९. 'कर्तव्यानि प्रयोक्तृभिः' का. १०. 'लोकस्य भावं' मु. ११. 'कार्यं तु' का; मु. १२. 'श्लोके प्रणश्यति प्रायोभवन्त्यविबुधा' मु. १३. 'शल्यानि (शास्त्राणि) वैचक्षण्यं बलानि च।' क-ख. १४. 'सर्वाणि पुंसां' का. १५. 'यदा लोकः विना नाट्यं प्रणश्यति।' मु. १६. 'यथाक्रमम्' मु. १७. 'यथार्थं च तज्ज्ञैः कार्यं तु लक्षणम्।' मु. १८. अयं श्लोको लिखितादर्शे नोपलभ्यते। १९. 'न भान्ति च' क-ख.

इति [1]वृत्तं ससंध्यङ्गं मया प्रोक्तं द्विजोत्तमाः ।
[2]अतः परं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥ १३३ ॥

इति भारतीये नाट्यशास्त्रे सं[3]ध्यङ्गविकल्पो नामैकोनविंशोऽध्यायः ।

---

अथ विंशोऽध्यायः ।

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथावस्तूद्भवं चैव काव्यानां च विकल्पनम् ॥ १ ॥
एकार्णवं जगत् कृत्वा भगवानच्युतो यदा ।
शेते स नागपर्यङ्के लोकान् संक्षिप्य मायया ॥ २ ॥
अथ वीर्य[6]मदोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षिणौ ॥ ३ ॥
निर्जबाहुविसृष्टौ तौ भूतभावनमक्षयम् ।
[10]जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् ॥ ४ ॥
[11]अभिद्रवन्तावन्योन्यं वाक्यैश्च परुषैस्तदा ।
[12]नानाविक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥ ५ ॥
[13]तयोर्नानाप्रकाराणि श्रुत्वा वाक्यानि [14]गर्जतोः ।
किंचिदाकम्पितमना द्रुहिणो वाक्यमब्रवीत् ॥ ६ ॥
किमियं भारती वृत्तीर्वाग्भिरेव [15]प्रवर्तते ।
[16]उत्तरोत्तरसंवृद्धौ[17] नन्विमौ निधनं नय ॥ ७ ॥

---

१. 'दशरूपविधानं' लि. २. 'अत ऊर्ध्वं प्रवक्ष्यामि' का. ३. 'संधिनिरूपणं नामैक-विंशोऽध्यायः ।' मु; 'संधिनिरूपणं नाम विंशोध्यायः' लि. ४. 'काम्यानां' मु; 'काष्ठानां' लि. ५. 'लोकं' ६. 'वीर्यबलोन्मत्तौ' लि. ७. 'युद्धकाङ्क्षया' लि. ८. 'बाहू विमर्दमानौ तौ भूतभावनमक्षयम्' का. ९. 'विवृद्धं तौ' क-ख. १०. 'मुष्टिभिर्जानु-भिश्चैव' का. ११. 'बहुभिःपरुषैर्वाक्यैरन्योन्यस्पर्धया तौ' लि. १२. 'नामविक्षेप-वचनैः' लि. १३. 'तयोर्नैकप्रकाराणि' का. 'तयोरनेकरूपाणि विचांसि वदतोस्तदा । श्रुत्वा आकम्पितमना' मु. १४. 'तर्जनाम्' लि. १५. 'प्रवर्तिता' लि. १६. 'उत्तरो-त्तरसंबद्धा न त्विमौ' लि. १७. 'संबद्धावन्विमौ' मु.

पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
[1]कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता ॥ ८ ॥
[2]भाष्यतो वाक्यभूयिष्ठा भारतीयं भविष्यति ।
अहमेतौ निहन्म्यद्य इत्युक्त्वा वचनं हरिः ॥ ९ ॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तदा भृशम् ।
योधयामास तौ दैत्यौ [3]युद्धमार्गविशारदौ ॥ १० ॥
भूमिसंस्थानसंयोगैः पदन्यासै[4]स्तदा हरेः ।
अतिभारोऽभवद्भूमेर्भारती [5]तत्र निर्मिता ॥ ११ ॥
[6]वल्गितैः शार्ङ्ग[7]धनुषस्तीव्रैर्दीप्तिकैरथ ।
सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती [8]तत्र निर्मिता ॥ १२ ॥
विचित्रै[9]रङ्गहारैस्तु देवो लीलासमुद्भवैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥ १३ ॥
संरम्भावेगबहुलैर्[10]नानाचारीसमुत्थितैः ।
नियुद्धकरणै[11]श्चित्रैर्निर्मि[12]तारभटी ततः ॥ १४ ॥
यां यां देवः समाचष्टे क्रियां [13]वृत्तिसमुत्थिताम् ।
तां तदर्थानुगै[14]र्वाक्यैर्द्रुहिणः प्रत्यपूजयत् ॥ १५ ॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
[15]उक्तवांस्तु तदा ब्रह्मा नारायणमरिंदमम् ॥ १६ ॥
अहो विचित्रैर्वि[16]शदैः स्फुटैः सुललितैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥ १७ ॥

१. 'बाढं कार्यक्रियाहेतोः' का. २. 'वदतां वाक् प्रभूयिष्ठा' लि. ३. 'बाहुयुद्धविशारदौ' मु. ४. 'पदन्यासैर्हरेस्ततः' लि., 'पादन्यासैर्हरेस्तदा' मु. ५. 'तेन' मु. ६. 'वर्जितैः' क-ख. ७. 'धनुषा तीव्रदीप्ततैरथ' मु. ८. 'च विनिर्मिता' मु. ९. 'विविधैः' मु. १०. 'नानाचारीसमन्वितैः' मु., 'नानाचारसमुद्भवैः' लि. ११. '°रङ्गैः' मु. १२. '°उत्पन्नारभटी ततः' लि. १३. 'वृत्तिसमुद्भवाम्' मु. 'वृत्तिषु संस्थिताम्' लि. १४. 'जल्पैः' मु., 'जाप्यैः' लि. १५. 'ततोऽब्रवीम् पतयोनिः' लि. १६. 'विचित्रैर्ललितैः स्फुटैः सुविशदैरपि' लि.

तस्मादयं सर्वलोके[1] नियुद्धसमयक्रमः ।
सर्वशास्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति ॥ १८ ॥
न्यायाश्रितैरङ्गहारैर्न्यायैश्चैव[2][3] समुत्थितैः ।
यस्माद्[4] युद्धं कृतं ह्येतत्तस्मान्न्यायः प्रकीर्तितः ॥ १९ ॥
[ ततो[5] देवेषु[6] निक्षिप्ता द्रुहिणेन महात्मना ।
पुनर्नाट्यप्रयोगे[7][8] च नानाभावरसान्विता[9] ॥ २० ॥
वृत्तिसंज्ञा कृता[10] ह्येषा नानाभावरसाश्रया[11] ।
चरितैस्तस्य[12][13] देवस्य द्रव्यं यद् यादृशं कृतम् ॥ २१ ॥
ऋषिभिस्तादृशी वृत्तिः कृता वाक्याङ्गसंभवा[14] ।
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका[15] ॥ २२ ॥
पुनरिष्टसुजातेन[16] नानाचारीसमाकुले ।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥ २३ ॥
ऋग्वेदाद्भारती[17] वृत्तिर्यजुर्वेदात्तु[18] सात्त्वती[19] ।
कैशिकी[20] सामवेदाच्च[21] शेषा चाथर्वणात्तथा[22] ॥ २४ ॥

या वाक्प्रधाना पुरुषप्रयोज्या[23]
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता[24] ।

१. 'सर्वलोके नियुद्धः समयः शुभः' मु., 'हि लोकस्य नियुद्धसमयक्रमः' लि. २. 'न्यायसमुत्थितैश्चित्रैरङ्गहारैर्विभूषितम् । यस्माद् युद्धं कृतं ह्येतत्तस्मान्न्यायाः प्रकीर्तिताः ॥' मु. ३. 'न्यायैश्चैव' लि. ४. 'यस्माद् युद्धान्यवर्तन्त तस्मान्न्यायाः प्रकीर्तिताः ।' लि. ५. इतःप्रभृति श्लोकद्वयी 'लिखितादर्शे नोपलभ्यते ।' ६. 'वेदेषु' लि. ७. इतः पूर्वं 'पुनरिष्टसुजातेन नानाचारी समाकुली' इत्यधिकं लिखितपुस्तके. ८. 'पुनर्नाट्यप्रयोगेण' लि. ९. 'नानाभावसमन्विताः' लि. १०. 'वृत्ता ह्येताः काव्यसंज्ञाः समाश्रिताः ।' लि. ११. 'काव्यबन्धसमाश्रिताः' मु. १२. 'वल्गितैस्तस्य' मु. १३. 'स्वस्य दैवस्य जप्यं' लि. १४. 'याप्यङ्गसंभवा' मु. 'या(जा)प्याभिसंयुता' लि. १५. 'वाचां याभिनयान्विता' लि. १६. 'पद्यार्धमिदं लिखितादर्शे विंशश्लोकस्योत्तरार्धरूपत्वेन पूर्वमेवायातं वर्तते ।' १७. 'ऋग्वेदे' मु. १८. 'यजुर्वेदे च' मु. १९. 'सात्त्विकी' लि. २०. 'कौशिकी' का. २१. 'सामवेदे च' मु. २२. '°चाथर्वणी तथा' मु. २३. 'नृवरप्रयोज्या' मु. २४. 'संस्कृतपाठ्ययुक्ता' मु.

स्वनामधेयैर्भरतैः[1] प्रयुक्ता
सा[2] भारती नाम भवेत्तु वृत्तिः ॥ २५ ॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः[3] ।
प्ररोचनामुखं चैव वीथी प्रहसनं तथा ॥ २६ ॥
जय(यि?)न्युदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना[4] ॥ २७ ॥
नटी विदूषको वापि पारिपार्श्वक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र[5] कुर्वते ॥ २८ ॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि[6] वा ।
आमुखाङ्गान्यतो[7] वक्ष्ये यथावदनुपूर्वशः ॥ २९ ॥
उद्धात्यकः कथोद्धातः प्रयोगातिशयस्तथा ।
प्रवृत्तिकावलगिते[8] आमुखाङ्गानि पञ्च वै ॥ ३० ॥
उद्धात्यकावलगितयोर्लक्षणं[9] कथितं मया ।
शेषाणां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३१ ॥
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेत् पात्रं प्रयोगातिशयो हि सः ॥ ३२ ॥
प्रवृत्तं[10] कार्यमाश्रित्य सूत्रभृद् यत्र वर्णयेत् ।
तदाश्रयाच्च[11] पात्रस्य प्रवेशस्तत् प्रवृत्तकम्[12] ॥ ३३ ॥
एषामन्यतमं श्लिष्टं योजयित्वा तु[13] युक्तिभिः ।
पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं बुधः ॥ ३४ ॥
एवमेतद् बुधैर्ज्ञेयमामुखं विबुधाश्रयम्[14] ।
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥ ३५ ॥

---

१. 'भवनैः' मु. २. 'तां भारतीं वृत्तिमुदाहरन्ति' मु. ३. 'द्रवमागताः' मु. ४. 'पूर्वरङ्गप्ररोचिनी' मु. ५. 'यत्तु' लि. ६. 'रनपायि वा' मु. ७. इदमर्धं मुद्रितपुस्तके नास्ति । ८. 'प्रवृत्तिकावलगितैः लि. ९. 'उद्धात्यकावलगिते वीथ्यङ्गे तु मयोदिते ।' मु. १०. 'कालं प्रवृत्तमाश्रित्य' मु. ११. 'तदाश्रयस्य' मु. १२. 'प्रवृत्तिकम्' लि. १३. 'अथ' लि., 'अर्थयुक्तिभिः' मु. १४. 'विविधाश्रयम्' मु.

[1]इत्यष्टार्थविकल्पा वृत्तिरियं भारती मया प्रोक्ता ।
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ३६ ॥

या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः ॥ ३७ ॥

वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ ३८ ॥
वीराद्भुतरौद्ररसा विज्ञेया [2]ह्यल्पकरुणशृङ्गारा ।
उद्धतपुरुषप्राया [3]परस्पराधर्षणकृता च ॥ ३९ ॥
[4]उत्थापकश्च परिवर्तकश्च संलापकः ससंघातः ।
[5]चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥ ४० ॥
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इति संघर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥ ४१ ॥
उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः ॥ ४२ ॥
[6]साधर्षजो निराधर्षजो वापि विविधवचनसंयुक्तः ।
[7]साधिक्षेपालापो ज्ञेयः संलापकः सोऽपि ॥ ४३ ॥
मित्रार्थवाक्ययुक्त्या दैववशादात्मदोषयोगाद्वा ।
संघातभेदजननस्तज्ज्ञैः संघातको ज्ञेयः ॥ ४४ ॥
इत्यष्टार्थविकल्पा वृत्तिरियं सात्त्वती मयाभिहिता ।
कैशिक्यास्त्विह लक्षणमतः परं संप्रवक्ष्यामि ॥ ४५ ॥

---

१. आर्येयं लिखितादर्शयोर्नास्ति । २. 'निरस्तशृङ्गारकरुणनिर्वेदा(?)' लि. ३. 'परस्पराधर्षणा चैव' मु. ४. 'उपरिवर्तकश्च संलापकश्च संघात्यः' मु. ५. 'चत्वारश्चैव' मु. ६. एतदर्धं मुद्रितपुस्तके नास्ति. ७. 'सामबीजानिरामर्षोऽपिलापो सल्लापको नाम' मु. ८. '°स्त्वथ' मु.

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसंयुता[1] या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ॥ ४६ ॥

नर्म[2] च नर्मस्फुर्जो[3] नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥ ४७ ॥
आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् ।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥ ४८ ॥
ईर्ष्या[4]क्रोधप्रयासोपालम्भवचनानुविद्धं[5] च ।
आत्मो[6]पक्षेपकृतं सविप्रलम्भं स्मृतं नर्म ॥ ४९ ॥
नवसंगमसंभोगो रतिसमुदयवाक्य[7]वेषसंयुक्तः ।
ज्ञेयो नर्मस्फुर्जो[8] ह्यव[9]सानभयानकश्चैव ॥ ५० ॥
विविधानां भावानां लवैर्लवैर्भूषितो बहु[10]विशेषैः ।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥ ५१ ॥
विज्ञा[11]नरूपसंभावनादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नं[12] व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥ ५२ ॥
[ पूर्वस्थि[13]तानिपद्येत(?)यत्र चान्यतमनायकस्तिष्ठेत् ।
तमपीह नर्मगर्भं वदन्ति नाट्यप्रयोगेऽस्मिन् ॥ ५३ ॥ ]
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मया प्रोक्ता[14] ।
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ॥ ५४ ॥
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता[15] ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥ ५५ ॥

---

१. 'स्त्रीपुंसयुक्ता' मु. २. 'सनर्म' मु. ३. 'नर्मस्फुञ्जो' लि. ४. 'ईर्ष्योत्क्रोद्धतप्रायं सोपालम्भवचनानुविद्धं च ।' मु. ५. 'वचनाविरुद्धं च' लि. ६. 'आक्षेपोपक्षेपकृतं' मु. ७. 'वाक्यवेषसंयुक्तैः' का. ८. 'नर्मस्फुञ्जो' लि. ९. 'ह्यवमान' भयानकश्चैव' लि. १०. 'बहुविशेषः' का. ११. 'विज्ञानरूपसंभावादि' मु. १२. 'प्रच्छन्नैः' लि. १३. सेयमार्या लिखितादर्शयोर्नास्ति । १४. 'मयाभिहिता' लि. १५. 'बहुवचनकपटा च' का.

प्रस्तावपातप्लुत[1]लङ्घितानि चान्या[2]नि मायाकृतमिन्द्रजालम् ।
चित्राणि युक्तानि च[3] यत्र नित्यं तां तादृशीमारभटीं वदन्ति ॥५६॥
संक्षिप्तकावपातौ[4] वस्तूत्थापनमथापि संफेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ।
अन्वर्थशिल्पयुक्तो बहु[5]पुस्तोत्थानचित्रनेपथ्यः ।
संक्षिप्तवस्तुविषयो[6] ज्ञेयः[7] संक्षिप्तको नाम ॥ ५७ ॥
भयहर्षसमुत्थानं विद्रुत[8]संभ्रान्तविविधवचनं च ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानन्ति[9] ॥ ५८ ॥
[10]सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि ।
नाट्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् ॥ ५९ ॥
[11]संरम्भसमायुक्तो बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः संफेटो नाम विज्ञेयः ॥ ६० ॥
एवमेता बुधैर्ज्ञेया वृत्तयो [12]नाट्यसंश्रयाः ।
[13]रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥ ६१ ॥
[14]शृङ्गारे चैव हास्ये च वृत्तिः स्यात् कैशिकीति सा ।
[15]सात्त्वती नाम सा ज्ञेया वीररौद्राद्भुताश्रया ॥ ६२ ॥
[16]भयानके च बीभत्से रौद्रे चारभटी भवेत् ।

१. 'वञ्चितानि' क-ख. २. 'छेद्यानि' लि. ३. 'युद्धानि' लि. ४. 'संक्षिप्तकावघातौ' का. ५. 'पुस्तोत्थापनचित्रनेपथ्यः' मु. 'बहुपुंस्त्वोत्थानवाच्च(?) संयुक्तः' लि. ६. 'विज्ञो ज्ञेयः संक्षिप्तको नाम' मु. ७. 'सोऽपि हि संक्षिप्तको ज्ञेयः' लि. ८. 'विद्रवविनिपातसंभ्रमावरणम्' लि. ९. 'विजानीयात्' लि. १०. 'सर्वरससमासकृतं सविद्रवमविद्रवाश्रयं चापि । पश्चाद्विभाषते यत्' मु., 'नैकरसलेशयुक्तं सविद्रवं वाप्यविद्रवं वापि । कार्यं विभाव्यते तद्वस्तूत्थापनं ज्ञेयम् ॥' लि. ११. 'संरम्भसंप्रयुक्तो बाहु[नि]युद्धातियुद्धकपटनिर्भेदः । शस्त्रप्रहारब[हु]लः संस्फोटो नाम विज्ञेयः ॥' इति लि. १२. 'वृत्तयो नाट्यमातरः' लि.; 'वृत्तयः काव्यहेतवे' क-ख. १३. 'ससंप्रयोगतासां च गदतो मे निबोधत ।' क-ख. १४. 'हास्यशृङ्गारकरुणैर्वृत्तिः स्यात् कैशिकी रसैः । सात्त्वती यापि च ज्ञेया वीराद्भुतसमाश्रया ॥' लि., मु., 'हास्यशृङ्गारबहुला कैशिकी परिप्रश्निता ।' क-ख. १५. 'सात्त्वती चापि विज्ञेया वीररौद्राद्भुताश्रया' मु. १६. 'रौद्रे भयानके चैव विज्ञेयारभटी बुधैः । बीभत्से करुणे चैव भारती संप्रकीर्तिता ॥' लि.

भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥ ६३ ॥
[1] [ न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः।
भावोऽपि रसो वापि प्रवृत्तिरेव वा (?) ॥ ६४ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद्बहु।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥ ६५ ॥ ]
वृत्त्यन्त एषोऽभिनयो मयोक्तो।
वागङ्गसत्त्वप्रभवो [2] यथावत्।
आहार्यमेवाभिनयं प्रयोगे।
वक्ष्यामि नेपथ्यकृतं पुनश्च [3] ॥ ६६ ॥

[4] इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नाम विंशोऽध्यायः।

---

[5] अथैकविंशोऽध्यायः।

आहार्याभिनयं विप्राः प्रवक्ष्याम्यनुपूर्वशः।
[6] एवमेव प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः ॥ १ ॥
[7] आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः।
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता ॥ २ ॥
[8] [ तस्मिन् यत्नस्तु कर्तव्यो नेपथ्ये शुभमिच्छता।
नाट्यस्येह त्वलंकारो नेपथ्यं संप्रकीर्तितम् ॥ ३ ॥ ]
नानावस्थाः प्रकृतयः [9] पूर्वनेपथ्यसूचिकाः।
अङ्गादिभिरभिव्यक्तिमुप [10] गच्छन्त्ययत्नतः ॥ ४ ॥

---

१. सेयं कोष्ठकबद्धा पद्यद्वयी का. पुस्तकेऽधिका। २. 'समासात्' लि. ३ 'च भूयः' मु.; 'यथावत्' लि. ४. 'इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नामाध्यायो विंशः' लि. ५. 'एकविंशोऽध्यायः' लि. ६. 'प्रयोगो यत्र सर्वोऽयमाहार्याभिनये स्थितः।' लि. ७. इतः पूर्वं लिखितादर्शे 'नानावस्थाः प्रकृतयः पूर्वं नेपथ्यसाधिताः। अङ्गादिभिरभिव्यक्तिमन्ते गच्छन्त्ययत्नतः ॥' इति पद्यम्। तदेतत्संख्याने द्वितीयं पद्यं काशीमुद्रितपुस्तके चतुर्थत्वेन वर्तते। तथैवात्रापि चतुर्थत्वेन द्रष्टव्यम्। ८. 'श्लोकोऽयं का. पुस्तकेऽधिकः।' ९. 'पूर्वं नेपथ्यसाधिताः' लि. १०. 'अन्ते गच्छन्त्ययत्नतः' लि.

चतुर्विधं तु नेपथ्यं पुस्तो[1]ऽलंकार एव च ।
[2]तथाङ्गरचना चैव ज्ञेयः संजीव[3] एव च ॥ ५ ॥
पुनस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
संधिमो व्याजिमश्चैव चेष्टि[4]मश्च प्रकीर्तितः ॥ ६ ॥
[5]किलिञ्चवस्त्रचर्माद्यैर्यद्रूपं क्रियते बुधैः ।
संधिमो नाम विज्ञेयः पुस्तो [6]नाटकसंश्रयः ॥ ७ ॥
व्याजिमो [7]नाम विज्ञेयो यन्त्रेण क्रियते तु यः ।
चे[8]ष्टयते चैव यद्रूपं चेष्टिमः स तु संज्ञितः ॥ ८ ॥
[9]शैलयानविमानानि चर्मवर्मध्वजा नगाः ।
यानि क्रियन्ते नाट्ये [10]हि स पुस्त इति संज्ञितः ॥ ९ ॥
अलंकारस्तु विज्ञेयो [11]माल्याभरणवाससा ।
नानाविधसमायोगात् [ यो ]ऽङ्गो[12]पाङ्गविनिर्मितः ॥ १० ॥
[13]चेष्टितं विततं चैव संघात्यं [14]ग्रन्थिमं तथा ।
प्रलम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ ११ ॥
चतुर्विधं तु विज्ञेयं देहस्याभरणं बुधैः ।
[15]आवेध्यं बन्धनीयं च [16]प्रक्षेप्यारोपके तथा ॥ १२ ॥
आवेध्यं [17]कुण्डलादीह त[18]था श्रवणभूषणम् ।
श्रोणिसूत्राङ्गदैर्मुक्ताब[19]न्धनीयानि निर्दिशेत् ॥ १३ ॥
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ।
आरोप्यं हेमसू[20]त्रादि हाराश्च विविधाश्रयाः ॥ १४ ॥

---

१. 'मुक्तालंकार एव च' लि. २. 'नाट्याङ्गरचना' लि. ३. 'सञ्जीवमेव' लि. ४. 'वेष्टितश्च' लि. ५. 'कैलिञ्जं चर्मवस्त्राद्यैः' लि. ६. 'नरकसंश्रयः(?)' लि. ७. 'वा सुविज्ञेयो' लि. ८. 'ये स्वेते चैव यद्रूपं वस्त्राद्यैर्वेष्टितः स तु ।' लि. ९. 'शील' लि. १०. 'तु' लि. ११. 'माल्याभरणवाससाम्' लि. १२. 'योगोऽ(ङ्गो)पाङ्गविनिर्मितः' लि. १३. 'विष्टिमं(?)' लि. १४. 'तेपितं(?)' लि. १५. 'आवेध्यं' लि. १६. 'क्षेप्यमाप्यकं' लि. १७. 'आवेध्यं' लि. १८. 'यत्स्यात्' लि. १९. 'बन्धनीया विनिर्दिशेत्' लि. २०. 'हेमसूत्राणि' लि.

भूषणानां विकल्पं च पुरुषस्त्रीसमाश्रयम् ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् ॥ १५ ॥
चूडामणिः समुकुटः शिरसो भूषणं स्मृतम् ।
कुण्डलं मोचकं कीलः [1]कर्णाभरणमिष्यते ॥ १६ ॥
मुक्तावली हर्षकं च [2]ससूत्रं कण्ठभूषणम् ।
[3]कटकोऽङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥ १७ ॥
[ [4]हस्तवी वलयं चैव बहुनालीविभूषणम् ।
रुचकोच्चितकै( कः? )श्चैव मणिबन्धविभूषणम् ॥ १८ ॥ ]
[5]केयूरमङ्गदं चैव कूर्परोपरि भूषणम् ।
[6]त्रिसरश्चैव हारश्च [7]भवेद्वक्षोविभूषणम् ॥ १९ ॥
व्यालम्बिमौक्तिकाहारा[8] माल्याद्या[9] देहभूषणम् ।
तरलं सूत्रकं चैव भवेत्कटिविभूषणम् ॥ २० ॥
अयं पुरुषनिर्योगः कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ॥ २१ ॥
शिखापाशः[10] शिखाजालं पिण्डपात्रं तथैव च ।
चूडामणि[11]र्मकरिका मुक्ताजालं गवाक्षकम्[12] ॥ २२ ॥
[ [13]शिरसो भूषणं चैव विचित्रं शीर्षजालकम् ।
कुण्डलं शिखिपत्रं[14] च वेणीगुच्छः[15] सदारकः ॥ २३ ॥
ललाटतिलकश्च नानाशिल्पप्रयोजिताः ।
भ्रूकक्षोपरि गुच्छश्च कुसुमानुकृतिर्भवेत् ॥ २४ ॥
कर्णिका कर्णवलयं तथा स्यात् पत्रकर्णिका ।
आवेष्टितः[16] कर्णमुद्रा कर्णोत्पलकमेव[17] ॥ २५ ॥

१. 'कुण्डलं कर्णमेवैकं कलाकरणमिष्यते' लि. २. 'सत्सूत्रं' का. ३. 'वटिकाङ्गुलिमुद्रा च' लि. ४. पद्यमिदं का. पुस्तकेऽधिकम्. ५. 'केयूरावङ्गदे चैव' लि. ६. 'त्रिरसं चैव हारं च' का. ७. 'विवा ( ग्रीवा ? ) 'वक्षोजभूषणम्' लि. ८. 'मुक्तिकाहारा' लि. ९. 'मालाद्या' लि. १०. 'शिखापाशं' लि. ११. 'चूडामणिं' लि. १२. 'गवाक्षि' लि. १३. 'पद्यार्धमेतत् केवलं का. पुस्तक एवोपलभ्यते। १४. 'खड्गपात्रं च' लि; १५. 'वेणीकञ्जसरोचकम्' का. १६. 'आपेश्रुकः(?)' लि. १७. 'कर्णोत्कीलक एव च' का.

[1]नानारत्नविचित्राणि दन्तपत्राणि चैव हि ।
कर्णयोर्भूषणं कार्यं कर्णपूरस्तथैव च ॥ २६ ॥
[2]तिलकः पत्ररेखा च भवेद्गण्डविभूषणम् ।
[ [3]त्रिवेणी चैव विज्ञेयं भवेद्वक्षोविभूषणम् ॥ २७ ॥
नेत्रयोरञ्जनं कार्यमधरस्य च रञ्जनम् ।
दन्तानां विविधा रागाश्चतुर्णां शुक्लता तथा ।
रागान्तरविकल्पार्थशोभनेनाधिकोज्ज्वलः(ला) ॥ २८ ॥
मुग्धानां सुन्दरीणां च मुक्ताभाः सितशोभनाः ।
सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः ॥ २९ ॥
अश्मरागो द्योतितः स्यादधरः पल्लवप्रभः ।
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम् ॥ ३० ॥ ]
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ।
रत्नावलीसूत्रकं च ज्ञेयं कण्ठविभूषणम् ॥ ३१ ॥
[ [4]द्विरस( सर ? )स्त्रिरस( सर ? )श्चैव चतूरस( चतुःसर ? )कमेव च ।
तथा श्रृङ्खलिका चैव भवेत्कण्ठविभूषणम् ॥ ३२ ॥ ]
[5]नानारत्नकृताश्चैव हारा वक्षोविभूषणम् ।
[6]मणिजालावनद्धं च भवेत् [7]स्तनविभूषणम् ॥ ३३ ॥
[ [8]अङ्गदं वलयं चैव बाहुमूलविभूषणम् ।

१. 'नानाचित्रविचित्राणि रत्नपात्राणि चैव हि ।' का. २. 'तिलकाः पत्रलेखाश्च' लि. ३. एतदारभ्य श्लोकचतुष्टयं केवलं काशीमुद्रितपुस्तक एवोपलभ्यते. ४. एष श्लोकः केवलं काशीमुद्रितपुस्तक एवोपलभ्यते । ५. 'नानाशिल्पकृताश्चैव' का. ६. 'मणिजालानुबन्धं च' लि. ७. 'पृष्ठविभूषणम्' लि. ८. तदेतत्–काशीमुद्रितपुस्तकातिरिक्तपुस्तकेषु श्लोकत्रयमेवम्—

'मुद्राङ्गुलीयकं चैव ह्यङ्गुल्याभरणी भवेत् ।
शङ्खकलापी कटकं तथा स्यात् पत्रपूरकम् ॥
खर्जूरकांशोपितिकं बाहुनानाविभूषणम् ।
अङ्कदेव(?) त्रयं चैव ज्ञेयं बाहुविभूषणम् ॥
मुक्ताजालाद्यतिलकं मेखला काञ्च्यथापि वा ॥
रसना च कलापश्च ज्ञेयं श्रोणिविभूषणम् ॥'

ब(खः)र्जुरं खेच्छितीकश्च बाहुनालीविभूषणम् ॥ ३४ ॥
कटकं कलशाखा च हस्तपत्रं सुपूरकम् ।
मुद्राङ्गुलीयकं च स्यादङ्गुलीनां विभूषणम् ॥ ३५ ॥
काञ्ची मौक्तिकजालाढ्या कुलकं मेखलं तथा ।
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् ॥ ३६ ॥ ]
एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
[1]रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥ ३७ ॥
[2]द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा ।
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ॥ ३८ ॥
[3]नूपुरः किङ्किणीकं च रत्नजालकमेव च ।
संघोषकटकं चैव गुल्फोपरि विभूषणम् ॥ ३९ ॥
[4]पदयोः पादपात्रं स्यादङ्गुलीष्वङ्गुलीयकम् ।
अङ्गुष्ठे तिलकं चैव पादयोश्च[5] विभूषणम् ॥ ४० ॥
[ [6]तथैवालक्तरागश्च नानाभक्तिनिवेशितः ।
अशोकपल्लवच्छायः स्यात् स्वाभाविक एव वा ॥ ४१ ॥ ]
[7]एतद्विभूषणं नार्या आकेशादानखादपि ।
यथाभावरसावस्थं विज्ञायैवं प्रयोजयेत् ॥ ४२ ॥
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा ।
[8]विश्वकर्मोद्भवं कार्यं बुध्वा चापि प्रयोजयेत् ॥ ४३ ॥
..............[9]बहुविधं नानापत्तनसंभवम् ।
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम् ॥ ४४ ॥

---

१. 'रसना षोडश ज्ञेयाः' लि. २. 'द्वात्रिंशत् षोडशाष्टौ च चतुःषष्टिः शतं तथा ।' लि. ३. '[नू] पुरं [कि]ङ्किणीकाश्च घण्टिका लालमेव च । सुघोषे कटके चैव गुल्फोपरि विभूषणम् ॥' लि. ४. 'जङ्घयोः पदपत्रं स्यात्' का. ५. 'तु' का. ६. 'पद्य-मेतदधिकं का. पुस्तके. ७. लि. पुस्तके तु–'तथा भावरसावस्थं विज्ञेयं द्विजसत्तमाः । एतद्विभूषणं नार्या आकेशादानखादपि ॥' एवं पौर्वापर्येण वर्तते । ८. 'विश्वकर्मभ-(र्मोक्त)वत्कार्यं' लि. ९. इतःप्रभृति श्लोकद्वयं का. पुस्तके नास्ति ।

दिव्यपार्थिवयोरेवं प्रोक्तमेतद्द्विधा द्विजाः ।
[1]नहि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ॥ ४५ ॥
[2]स्वाधीनं चेच्छया चैव कर्तुमङ्गस्य भूषणम् ।
[ वि[3]भावतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ॥ ४६ ॥
यथा स्थानान्तरगतं भूषणं रत्नसंयुतम् ।
न तु नाट्यप्रयोगेषु कर्तव्यं भूषणं बहु ॥ ४७ ॥
खेदं जनयते तद्धि सव्यायतविचेष्टनात् ।
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः ॥ ४८ ॥
गुरुभारावसन्नस्य खेदो मूर्च्छा प्रजायते ।
तस्मात् न सम्यक् च कृतं सौवर्णं भूषणं भवेत् ॥ ४९ ॥
जतुपूर्णाल्पस्त्नं तु न खेदजननं भवेत् ।
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते ।
यदभावाद्विनिष्पन्ना मानुषाणां विभूषणम् ॥ ५० ॥ ]
भूषणैश्चापि वेषैश्च[4] नानावस्था[5]समाश्रयैः ।
दिव्याङ्गनानां कर्तव्या वि[6]भक्तिः स्वस्वभूमिजा ॥ ५१ ॥
विद्याधरीणां यक्षीणामप्सरोनागयोषिताम् ।
[ ऋ[7]षिदैवतकन्यानां वेषैर्नानात्वमिष्यते ॥ ५२ ॥ ]

---

१. 'तर्हि शक्त्यनुसारेण' लि; शक्त्यसुवर्ण(?)' क-ख. २. 'स्वाधीनमतिरूव्यैव' लि,. ३. लिखितादर्शेतु कोष्ठबद्धश्लोकपञ्चकस्थाने सार्धश्लोक द्वयमेवं वर्तते—'मुक्तामणिलता-प्रायं फणास्तासां तु केवला(?)। कार्यं तु मुनिकन्यानामेकवेणिधरं शिरः । न चापि भूषणविधिस्तासामप्यर्पितो भवेत् । एवं शृङ्गारिणः कार्या वेषा देवाङ्गनाश्रयाः ॥ मानुषीणां तु कर्तव्या नानादेशसमाश्रयैः ॥' ४. 'वेशैश्च' क-ख. ५. 'नानास्थानसमाश्रयैः' क-ख. ६. 'विभक्तिश्च......भूमिजा' क-ख. ७. कोष्ठबद्धश्लोकानां स्थाने क-ख. पुस्तकयोस्तु—

'मुक्तामणिमणिप्रायं फणास्तासां च मूर्धनि ।
अप्सरोयक्षनारीणां कार्यं कार्यं च भूषणम् ॥
समस्तानां भवेद्द्वेषो यक्षाणां केवलं शिखा ।
शिलासु शशिखण्डं च मुक्ताभूयिष्ठभूषणम् ।

तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम् ।
दिव्यानां नरनारीणां मानुषीणां तथैव च ॥ ५३ ॥
शिखापुटशिखण्डा तु मुक्ताभूयिष्ठभूषणम् । ]
विद्याधरीणां कर्तव्यः[1] शुद्धो वेषपरिच्छदः ॥ ५४ ॥
[ यक्षिण्यप्सरसां[2] चैव कार्यं रत्नैर्विभूषणम् ।
यस्त्वासां तु भवेद्वेषो यक्षीणां केवलं शिखा ॥ ५५ ॥
दिव्यवत् संप्रकर्तव्यं नागीनां तु विभूषणम् । ]
मुक्तामणिलताप्रायं[3] फलं तासां तु केवलम् ॥ ५६ ॥
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ।
न चापि भूषणं कार्यं[4] तासामत्यर्थतो भवेत् ॥ ५७ ॥
[ मुक्तामरकतप्रायं[5] मण्डनं सिद्धयोषिताम् ।
तासां चैव तु कर्तव्यं पीतवस्त्रपरिच्छदम् ॥ ५८ ॥
पद्म[राग?] मणिप्रायं गन्धर्वीणां विभूषणम् ।
वीणाहस्ता च कर्तव्याः कौसुम्भवसनास्तथा ॥ ५९ ॥
इन्द्रनीलैस्तु कर्तव्यं राक्षसीनां विभूषणम् ।
सिता दंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदः ॥ ६० ॥
वैदूर्यमुक्ताभरणाः कर्तव्याः सुरयोषितः ।
शुकपिच्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः ॥ ६१ ॥
पुष्परागैश्च मणिभिः क्वचिद्वैदूर्यभूषितम् ।
दिव्यवानरनारीणां कार्या नीलपरिच्छदाः ॥ ६२ ॥ ]
एवं[6] शृङ्गारिणः कार्यो वेषो दिव्याङ्गनाश्रियः ।
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा[7] ॥ ६३ ॥

---

१. 'कर्तव्यं चित्रवेषपरिच्छदं' क-ख. २. कोष्ठकबद्धं सार्धपद्यं ख-क. पुस्तकयोर्नास्ति। ३. पद्यार्धमेतत् क-ख. पुस्तकयोः—'मुक्तामणिमणिप्रायं फणीस्तासां च मूर्धनि' इति पूर्वमेव. ४. 'भूषणविधिस्तासां वेषोवनोचितः' इति क-ख. पुस्तकयोः। ५. इतः प्रभृति कोष्ठकबद्धं श्लोकपञ्चकं काशीमुद्रितपुस्तकेऽधिकम्। ६. 'भुवं (एवं?) शृङ्गारिणः कार्या वेषा दिव्याङ्गनासु वा।' इति क-ख. पुस्तकयोः। ७. 'तथैव च' क-ख.

मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ।
वेषास्त्वाभरणोपेतास्तांश्च सम्यङ्‌ निबोधत ॥ ६४ ॥
अवन्तियुवतीनां तु शिरः सालककुन्तलम् ।
गौडीनामलकप्रायं [1]सशिखापाशवेणिकम् ॥ ६५ ॥
आभीरयुवतीनां तु द्विवेणीधरमेव च ।
शिरः[2]परिगतं कार्यं नीलप्रायमथाम्बरम् ॥ ६६ ॥
तथा पूर्वोत्तरस्त्रीणां समुद्धत[3]शिखण्डिकम् ।
[4]आकेशं छादनं तासां वेषकर्मणि कीर्तितम् ॥ ६७ ॥
तथा च दक्षिणस्त्रीणां कार्यमुल्लेख्यसंज्ञितम् ।
[5]कुम्भीपदकसंयुक्तं तथावर्त[6]ललाटिकम् ॥ ६८ ॥
[ गणि[7]कानां तु कर्तव्यमिच्छाविच्छित्तिमण्डनम् ॥ ६९ ॥ ]
दे[8]शजातिविशेषेण देशा[9]नामपि कारयेत् ।
[10]वेषं तथा चाभरणं क्षुरकर्मपरिच्छदम् ॥ ७० ॥
[11]अदेशजो हि वेषस्तु न शोभां जनयिष्यति ।
मेखलोरसि बन्धे च [12]हास्यायैवोपजायते ॥ ७१ ॥
तथा प्रोषितकान्ता [13]या व्यसनाभिहताश्च याः ।
[14]वेषः स्यान्मलिनस्तासामेकवेणीधरं शिरः ॥ ७२ ॥
विप्रलम्भे हि [15]नार्यास्तु शुद्धो वेषो भवेदिह ।
[16]नानाभरणसंयुक्तो न चापि मृजयान्वितः ।
एवं स्त्रीणां प्रयोक्तव्या [17]देशावस्थासमुद्भवाः ॥ ७३ ॥

१. 'शेषा प्रायेकवेणिकम्' क ख. २. 'परिगमप्रायो' का. मु. ३. 'शिखण्डकम्' क-ख. ४. 'आवेशाछेदकं तासां दशकर्मणि कीर्तितम् ।' क-ख. ५. 'कुम्भीपथाङ्क-संयुक्तम्' क-ख. ६. 'ललाटकम्' क-ख. ७. पद्यार्धमेतत् क-ख. पुस्तकयोर्नास्ति । ८. 'देशजातिविधानेन' क-ख. ९. 'शेषाणामपि' क-ख. १०. 'येषां' क-ख. ११. 'आदेशयुक्तो' क-ख. १२. 'हास्यं समुपपादयेत्' क-ख. १३. 'प्रोषितकान्तासु मदनाभिहतासु च' क-ख. १४. 'वेषो वै मलिनः कार्यः शिरश्चाप्येकवेणिकम् ।' इति क-ख. १५. 'भार्यासु' क-ख. १६. 'नान्याभरणसंयुक्तो नवापिहिनतायुतः' (?) क-ख. १७. 'वेषा देशसमुद्भवाः' क-ख.

पुरुषाणां पुनश्चैव वेषान् वक्ष्यामि तत्त्वतः ।
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ॥ ७४ ॥
[ सित[1]नीलसमायोगात् पाण्डुवर्णः प्रकीर्तितः ।
सितरक्तसमायोगात् पद्मवर्ण इति स्मृतः ॥ ७५ ॥
पीतनीलसमायोगाद् हरितो नाम जायते ।
नीलरक्तसमायोगात् कषायो नाम जायते ॥ ७६ ॥
रक्तपीतसमायोगात् गौर इत्यभिधीयते ।]
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ॥ ७७ ॥
त्रिचतुर्वर्णसंयुक्ता बहवः परिकीर्तिताः ।
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः ॥ ७८ ॥
दुर्बलस्य च भागौ द्वौ नीलमुक्त्वा[3] प्रपाद(दाप ?)येत् ।
नीलस्यैको भवेद्भागश्चत्वारो[4]ऽन्ये तु वर्णके ॥ ७९ ॥
[5]बलवान् सर्ववर्णानां नील एव प्रकीर्तितः ।
एवं वर्णविधिं ज्ञात्वा [6]नानासंयोगसंभवम् ।
[7]ततस्तु वर्तना कार्या नानारूपसमाश्रया ॥ ८० ॥

---

१. कोष्ठबद्धश्लोकानां स्थाने क-ख- पुस्तकयोस्तु—
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च ।
एते स्वभावजा वर्णा यैः कार्यं त्वङ्गव [र्णकम् ?] ॥
संयोगजाः पुनस्त्वन्ये उपवर्णा भवन्ति हि ।
तथाहं संप्रवक्ष्यामि यथा कार्याः प्रयोक्तृभिः ।
सितपीतसमायोगः पाण्डुवर्ण इति स्मृतः ।
सितरक्तसमायोगः पद्मवर्ण इति स्मृतः ।
सितनीलसमायोगः कापोतो नाम जायते ।
पीतनीलसमायोगाद् हरितो नाम जायते ।
नीलरक्तसमायोगात् काषायो नाम जायते ।
रक्तपीतसमायोगाद्गौर इत्यभिधीयते ॥' इत्येवं पद्यानि ।
२. 'विधीयते' क-ख. ३. 'नीलवर्णादृते भवेत्' क-ख. ४. 'चत्वारोऽन्यस्य तु स्मृताः ।' क-ख. ५. 'वर्णस्य तु बलीयस्त्वं नीलस्यैवं हि कीर्त्यते' इति क-ख. ६. 'मानसं योगसंश्रयम्'(?) क-ख. ७. 'ततः कुर्याद् यथायोगमङ्गानां वर्तनं बुधः' क-ख.

वर्तनाच्छादितं रूपं स्ववेषपरिवर्तितम्[1] ।
नाट्यधर्मप्रवृत्तेन[2] ज्ञेयं तत् प्रकृतिस्थितम् ॥ ८१ ॥
[ संवर्णमात्मनश्चान्यं[3] वर्णजैर्वेषसंश्रयैः ।
प्रकृतिवास्य कर्तव्या तस्य प्रकृतिमास्थिता ॥ ]
यथा नरः[4] स्वभावं स्वं परित्यज्यान्यदेहजम्[5] ।
पराभवं प्रकुरुते[6] भूतदेहसमाश्रयम् ॥ ८२ ॥
वर्णकैश्चापि[7] वेषैश्च छादितः पुरुषस्तथा ।
परप्रभावं कुरुते यस्य वेषसमाश्रयम्[8] ॥ ८३ ॥
देवदानवगन्धर्वयक्षराक्षसपन्नगाः[9] ।
ते प्राणिन इति प्रोक्ता[10] जीवबन्धाश्च[11] ये त्विह ॥ ८४ ॥
शैलप्रासादयन्त्राणि[12] चर्मवर्मध्वजास्तथा ।
नानाप्रहरणाद्याश्च ते प्राणिन इति स्मृताः ॥ ८५ ॥
अथवा कारणोपेता भवन्त्येते शरीरिणः ।
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु ॥ ८६ ॥
वर्णानां तु विधिं ज्ञात्वा वयः[13] प्रकृतिमेव च ।
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम् ॥ ८७ ॥
देवा[14] गौरास्तु कर्तव्या यक्षाश्चाप्सरसस्तथा[15] ।
रुद्राः[16] सद्रुहिणस्कन्दास्तपनीयसमप्रभाः ॥ ८८ ॥

१. 'स्ववेषपरिवर्जितम्' ख-क. २. 'नाट्यधर्मप्रवृत्तं तु' क-ख. ३. 'पद्यमेतत् क-ख. पुस्तकयोर्नास्ति ।' ४. 'जन्तुः' क-ख. ५. '°दैहिकम्' क-ख. ६. 'तत्स्वभावं हि भजते देहान्तरमुपाश्रितः ।' क-ख. ७. 'पोषणष्वर्षकौ(?)श्चैव च्छादितः पुरुषस्तथा ।' क-ख. ८. 'यस्य वेषमुपाश्रितः' क-ख. ९. '°गन्धर्वा' क-ख. १०. 'प्राणिसंशाः (ज्ञाः ?) कृता ह्येते' क-ख. ११. 'जीवबन्धास्तथापरे' क-ख. १२. इतः पूर्वं का. मु. पुस्तकेऽधिकमेतत्पद्यम्—

[ स्त्रीभावाः पर्वता भार्याः समुद्रा वाहनानि च ॥
नानाशस्त्राण्यपि तथा विज्ञेयाः प्राणिसंश्रयाः । ]

१३. 'तथा' क-ख. १४. 'देवागिरोस्तु(?)' क-ख. १५. 'वक्ष्ये' क-ख. १६. 'रुद्रार्कद्रुहिणस्कन्दा' क-ख.

सोमो बृहस्पतिः शुक्रो वरुणस्तारका[1]गणः ।
स[2]मुद्रो हिमवान् गङ्गा श्वेताः कार्यास्तु वर्णतः ॥ ८९ ॥
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ।
नारायणो नरश्चैव श्यामव[3]र्णोऽथ वासुकिः ॥ ९० ॥
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ।
पि[4]शाचा यम आकाशं श्यामवर्णास्तु वर्णतः ॥ ९१ ॥
नानावर्णाः स्मृता यक्षा गन्धर्वा भूतपन्नगाः ।
विद्याधराः सपितरो वा[5]नराश्च तथैव हि ॥ ९२ ॥
वसन्ति सप्तद्वीपेषु[6] ये नरा वर्णतस्तु ते ।
कर्तव्या नाट्यतत्त्वज्ञैर्निष्ट[7]प्तकनकप्रभाः ॥ ९३ ॥

जम्बूद्वीपस्य वर्षे[8] ये नानावर्णाश्रया नराः ।
उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः ॥ ९४ ॥
भ[9]द्राश्च वपुषा श्वेताः क[10]र्तव्या वर्णतो बुधैः ।
केतु[11]मालास्तथा श्वेता गौराः शेषेषु कीर्तिताः ॥ ९५ ॥
नानावर्णाः स्मृता भूता[12] वामना विकृताननाः ।
वराहमेषमहिषमृगवक्त्रास्तथैव च ॥ ९६ ॥
पुनश्च भारते वर्षे [13]तांस्तान् वर्णान् निबोधत ।
राजा[14]नः पञ्च[15]वर्णास्तु गौरा[16]ः श्यामास्तथैव च ।
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु ते बुधैः ॥ ९७ ॥

---

१. 'तारकाप्रणी(?) क-ख. २. 'समुद्रादिलवा वर्णाः सिताः कार्यास्तु वर्णतः ।' क-ख. ३. 'सोमनागश्च' क-ख. ४. 'पिशाचाजलमाकाशमसितावर्णतः स्मृताः ।' क-ख. ५. 'मानवाश्च' क-ख. ६. 'षड्गुण···द्वी···(?)' क-ख. ७. 'निष्टम्भ(?)' क-ख. ८. 'तु' क-ख. ९. 'इन्द्राश्च गुरुवा(?)श्वैता' क-ख. १०. 'कर्तव्या वर्णतस्तथा' क-ख. ११. 'केतुमाले नरा नीलाः' क-ख. १२. क-ख-पुस्तकयोस्तु—'नानावर्णाः स्मृता यक्षा गन्धर्वा भूतपन्नगाः । विद्याधरास्तथा चैव पितरश्च समानवाः ॥' क-ख. १३. 'ताम्रान् वर्णानि(ति ?) बोधत' क-ख. १४. 'विज्ञानः ( राजानः )' क-ख. १५. 'पञ्चवर्णाः स्युः' इति काशीमुद्रिते । १६. 'श्यामो ( मा ? ) गौरास्तथैव च ।' का. मु.

कुकर्मिणो ग्रहग्रस्ता व्याधितास्तपसि स्थिताः ।[1]
आ( अ ? )यज्ञकर्मिणश्चैव ह्यसिताश्च कुजातयः ॥ ९८ ॥
ऋषयश्चैव कर्तव्या नित्यं तु बदरप्रभाः ।
तपःस्थिताश्च ऋषयो नित्यमेतावता बुधैः ॥ ९९ ॥
कारणव्यपदेशेन न तथात्मेच्छया पुनः ।
वर्णस्त्वन्योपि[2] कर्तव्यो देशजातितपोऽनुगः ॥ १०० ॥
देशं कालं[3] च जातिं च पृथिव्युद्देशमेव[4] च ।
विज्ञाय[5] वर्तना कार्या पुरुषाणां प्रयोगतः ॥ १०१ ॥
किरातबर्बरान्ध्राश्च द्रविडाः[6] काशिकोसलाः ।
पुलिन्दा दाक्षिणात्याश्च प्रायेण त्वसिताः स्मृताः ॥ १०२ ॥
शकाश्च यवनाश्चैव पौह्(ह्ल?)[7] वा बाह्लिकाश्रयाः ।
प्रायेण गौराः कर्तव्या उत्तरां[8] ये श्रिता दिशम् ॥ १०३ ॥
पाञ्चालाः शूरसेनाश्च माहिषा उड्रमागधाः[9] ।
अङ्गा[10] वङ्गा[ः]कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः ॥ १०४ ॥
ब्राह्मणाः क्षत्रियाश्चैव गौराः[11] कार्याः सदैव[12] हि ।
वैश्याः शूद्रास्तथा चैवं[13] श्यामाः कार्यास्तु वर्णतः ॥ १०५ ॥
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्णनम्[14] ।
श्मश्रुकर्म प्रयुञ्जीत देशकर्मक्रियानुगम्[15] ॥ १०६ ॥
शुक्लं[16] श्यामं विचित्रं च तथा रोमशमेव च ।
चतुर्विधं भवेच्छ्मश्रु नानावस्थान्तराश्रयम् ॥ १०७ ॥
शुद्धं[17] तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् ।

---

१. 'कुकर्मिणो' इत्यादि श्लोकद्वयं का. मु. पुस्तके नास्ति। २. 'वर्णस्त्वन्यः प्रयोक्तव्यो देशजातिवयःश्रितः ।' का. मु. ३. 'कर्म च' क-ख. ४. 'पृथिव्युद्देशसंश्रयम्' क-ख. ५. 'विज्ञाय वर्तनां कुर्यात् पुरुषाणां प्रयोगवित् ।' का. मु. ६. 'द्रमिलाः' का. मु. ७. 'पह्लवा बह्लिकादयः' का. मु. ८. 'उत्तरां पश्चिमां दिशम्' क-ख. ९. 'तथा चैवोढ्(ड्र?) मागधाः' का. मु. १०. 'अङ्गवङ्गकलिङ्गास्तु' का. मु. ११. 'रक्ताः कार्याः' का. मु. १२. 'तथैव च' क-ख. १३. 'तथा श्यामाः कार्याश्चैव हि सर्वतः' क-ख. १४. 'अङ्गोपाङ्गेषु वर्तनाम्' क-ख. १५. 'देशकालवयोऽनुगम्' क-ख. १६. 'शुद्धं विचित्रं श्यामं च' क-ख. १७. 'शुद्धस्तु लिङ्गिनां कार्यः' का. मु.

[1]अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ॥ १०८ ॥
व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत् ।
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ॥ १०९ ॥
दिव्या ये पुरुषाः केचित् सिद्ध[2]विद्याधरादयः ।
[3]पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः ॥ ११० ॥
शृङ्गारिणश्च ये मर्त्या यौ[4]वनोन्मादिनश्च ये ।
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्[5]तृभिः ॥ १११ ॥
ऋषीणां तापसानां च ये च दीर्घव्रता नराः ।
सिद्[6]धविद्याधराणां च रोमशस्तु विधीयते ॥ ११२ ॥
एवं नानाप्रकारं तु श्मश्रु[7]कर्म प्रयोजयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि वे[8]षान्नानाप्रयोगजान्[9] ॥ ११३ ॥
शुद्धो विचित्रो मलिनस्त्रि[10]विधो वेष उच्यते ।
[11]तेषां विभागं व्याख्यास्ये यथा कार्यं प्रयोक्तृभिः ॥ ११४ ॥
[ दे[12]वाभिगमने चैव माङ्गल्ये नियमस्थिते ॥
तिथिनक्षत्रयोगे च विवाहकरणे तथा ॥ ११५ ॥ ]
[13]धर्मप्रवृत्तं यत्कार्यं स्त्रीणां च पुरुषस्य वा ।

---

१. 'पद्यमेतम्' का. मु. पुस्तके नास्ति. २. 'सिद्धा' क-ख. ३. 'नृपतीनां कुमाराणां का. मु. ४. 'यौवनोन्मादिताश्च ये' क-ख. ५. 'अनिस्तीर्णप्रतिज्ञानाम्' इत्यादि पद्यं काशीमुद्रितपुस्तकेऽत्र वर्तते । केवलं 'प्रयोजयेत्' इत्यस्य स्थाने 'भवेत्तदा' इति वर्तते । ६. 'तथा च वैरबद्धानां रोमशं तु भवेदथ ।' इति क-ख. ७. 'श्मश्रुकार्यं प्रयोक्तृभिः' इति क-ख. ८. 'येषां नानाप्रयोगजान्' क-ख. ९. इतोऽग्रे काशीमुद्रितपुस्तके—

'चेष्टितं विततं चैव संघात्यं ग्रथितं तथा ॥
प्रालम्बकं तथा चैव माल्यं पञ्चविधं स्मृतम् ।
अ(आ)च्छादनं बहुविधं नानावर्तनसंभवम् ।
ज्ञेयं तत् त्रिप्रकारं तु शुद्धं रक्तं विचित्रकम् ॥

श्लोकद्वयी समधिका । १०. 'त्रिविधो ये च उद्यते (?)' क-ख. ११. 'तेषां नियोगं वक्ष्यामि यथावदनुपूर्वशः ।' क-ख. १२. पद्यमेतत् काशीमुद्रितपुस्तकेऽधिकम् । क-ख-पुस्तकयोस्तु नास्ति । १३. 'धर्मप्रवृत्तवत् कार्यं स्त्रिया वा पुरुषस्य वा ।' इति क-ख.

वेषस्तत्र भवेच्छुद्धो ये च प्राप(यः)त्तिका नराः ॥ ११६ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
नृपाणां कर्कशानां च चित्रो[1] वेषो भवेत्तदा ॥ ११७ ॥
[2]कञ्चुकीनाममात्यानां श्रेष्ठिनां[3] सपुरोधसाम् ।
सिद्धविद्याधराणां च वणिक्[4]शास्त्रविदामपि ॥ ११८ ॥
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ।
[5]शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाटकाश्रयः ॥ ११९ ॥
[6]उन्मत्तानां प्रमत्तानां [7]जनानामध्वगामिनाम् ।
[8]व्यसनोपगतानां च मलिनो वेष इष्यते ॥ १२० ॥
[9]शुद्धरक्तविचित्राणि वासांस्युच्चावचानि च ।
योजयेन्नाट्यतत्त्वज्ञैर्वेषयोः शुद्धचित्रयोः ॥ १२१ ॥
कुर्याद्वेषे तु मलिने मलिनानि विचक्षणः ।
मुनिनिर्ग्रन्थशाक्येषु [10]यतिपाशुपतेषु च ॥ १२२ ॥
वृत्तानुगै[11]श्च [12]कर्तव्यो वेषो लोक[13]स्वभावतः ।
[14]चीरवल्कलचर्माणि तापसानां तु योजयेत् ॥ १२३ ॥

१. 'विशेषो यो भवेत्तथा' क-ख. २. 'कञ्चुकिनाम्' क-ख. ३. 'श्रेष्ठीनां पुररो-धसाम्' का. मु. ४. 'शस्त्रविदामपि' क-ख. ५. 'शुद्धो यस्त्रिविधस्तेषां' क-ख. ६. 'उत्तमानां' क-ख. ७. 'अध्वगानां तथैव च' क-ख. ८. 'व्यसनोपहतानां च' क-ख. ९. तदेतत्सार्धपद्यं काशीमुद्रितपुस्तके नास्त्येव । १०. 'त्रिदण्डिश्रोत्रियेषु च' का. मु. ११. 'प्रतानुगश्च ( वृत्तानुगश्च )' क-ख. १२. 'तु' का. मु. १३. 'अलंकार भावनः' का. मु. १४. 'चीरवल्कलचर्माणि' इत्यादि श्लोकद्वयस्थाने काशीमुद्रितपुस्तके—

'परिव्राण्मुनिमुख्येषु तापसेषु तथैव च ।
काषायवसनो वेषः कार्यस्त्वर्थवशानुगः ॥
नानाचित्राणि कार्याणि कुर्यात् पाशुपतेष्वथ ।
कुलजाश्चैव ये प्रोक्तास्तेषां चापि यथोचितम् ॥
अन्तःपुरस्य रक्षार्थे विनियुक्ता हि ये नराः ।
काषायकञ्चुकपटाः कार्यास्तेषां यथाविधि ।
चीरवल्कलचर्माणि तापसानां तु कारयेत् ॥'

एवं सार्धपद्यत्रयम् ।

अन्तःपुरप्रवेशे तु विनियुक्ता हि ये नराः।
काषायकञ्चुकिपटास्तेऽपि कार्या यथाविधि॥ १२४॥
[1]कुलजाश्चापि ये प्रोक्तास्तेषां चैव यथोचितम्।
[2]अवस्थान्तरितश्चैव सम्यग्वेषो भवेत्तथा॥ १२५॥
[3]सांग्रामिकश्च शूराणां वेषः संपरिकीर्तितः।
विचित्रशस्त्रकवचो बद्ध[4]तूणधनुर्धरः॥ १२६॥
चित्रो[5] वेषस्तु कर्तव्यो नृपाणां नित्यमेव हि[6]।
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पात[7]मङ्गले॥ १२७॥
[8]एवं वेषो बुधैः कार्यो देशजातिगुणान्वितः।
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च॥ १२८॥
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये।
नानावस्थां समासाद्य शुभाशुभकृतस्तथा॥ १२९॥
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम्।
दि[9]व्यानां मानुषाणां च देशजातिवयःश्रि[10]तम्॥ १३०॥
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः।
त्रिविधा[11] मुकुटा ज्ञेया दिव्यपार्थिवसंश्रयाः॥ १३१॥
देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम्।
कर्तव्या नैकविहिता मुकुटाः पार्श्वमौलिनः॥ १३२॥
उत्तमा ये च दिव्यानां तेषां कार्याः किरीटिनः।
मध्यमा मौलिनश्चैव कनिष्ठा(ष्ठाः?) पा[12]र्श्वमौलिनः॥ १३३॥
नराधिपानां क[13]र्तव्या( व्यं ) मस्तके मुकुटं बुधैः।

---

१. 'कुश(ल)जाः' क-ख. २. 'अवस्थान्तरमासाद्य स्त्रीणां वेषो भवेदिह।' का. मु. ३. 'वेषः सांग्रामिकश्चैव शूराणां संप्रकीर्तितः।' का. मु. ४. 'बद्धत्राण' का. मु. ५. 'विचित्रवेषः कर्तव्यो' का. मु. ६. 'च' का. मु. ७. 'नक्षत्रोत्पादमङ्गले' का. मु. ८. 'एवमेष भवेद्वेषो वयोजातिगुणान्वितः।' का. मु. ९. 'देवानाम्' का. मु. १०. °श्रितः का. मु. ११. 'त्रिविधा मुकुटा' इत्यादि पद्यद्वयं का. मु. पुस्तके नास्ति। १२. 'शीर्षमौलिनः का. मु. १३. 'कर्तव्यास्तथा मस्तकिनो बुधैः' का. मु.

विद्याधराणां सिद्धानां चारणानां तथैव च ॥ १३४ ॥
ग्रन्थि(थि ?)ताः केशमुकुटाः कर्तव्यास्तु प्रयोक्तृभिः ।
[ उदात्ताश्चापि ये तत्र कार्यास्ते पार्श्वमौलिनः ॥ १३५ ॥
तस्मात्तु मुकुटाश्लिष्टाः प्रयोगे दिव्यपार्थिवे ।
केशानां छेदनं नेष्टं वेद वेदे यथा श्रुतिः ॥ १३६ ॥
भद्रीकृतस्य वा यज्ञे शिरसश्छेदनेप्सया ।
केशानां चातिदीर्घत्वात् स्मृतं मुकुटधारिणः ॥ १३७ ॥
विद्याधराणां सिद्धानां चारणानां तथैव च ।
ग्रन्थि(थि ?)तः केशमुकुटः कर्तव्यस्तु प्रयोक्तृभिः ॥ १३८ ॥
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् ।
वेष्टनं बन्धपट्टादि प्रतिशीर्षाणि कारयेत् ॥ १३९ ॥
सेनापतेः पुनश्चापि युवराजस्य चैव हि ।
मस्तकेष्वर्धमुकुटं प्रयोगे संप्रयोजयेत् ॥ १४० ॥
शेषाणामर्धयोगेन देशजातिवयःश्रुतम् ।
शिरः प्रयोक्तृभिः कार्यं प्रयोगस्य वशानुगम् ॥ १४१ ॥
बालानामपि कर्तव्यं न शिखण्डविभूषितम् ।
जटामुकुटलम्बं च मुनीनां तु भवेच्छिरः ॥ १४२ ॥
रक्षोदानवदैत्यानां पिककेशकृतानि तु ।
हरिश्मश्रूणि च तथा मुखशीर्षाणि कारयेत् ॥ १४३ ॥ ]
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम् ।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं तु शीर्षकम् ॥ १४४ ॥

---

१. 'वानराणां' क-ख. २. 'ग्रन्थितः केशमुकुटः कर्तव्यस्तु प्रयोक्तृभिः ।' का. मु. ३. काशीमुद्रितपुस्तके कोष्ठबद्धानि पद्यानि समधिकानि क-ख. पुस्तकयोस्तु—

'देवदानवयक्षाणां पिङ्गकेशेक्षणानि हि ।
हरिच्छ्मश्रूणि च तथा नानारूपाणि कारयेत् ॥'

एतत्पद्यमथ, × × × × एवं प्रकारेण त्रुटिचिह्नानि । ४. 'इतोऽग्रे क-ख. पुस्तकयोः 'सेनापतेः पुनश्चापि युवराजस्य चैव हि । योजयेदर्धमुकुटं कूटमात्राश्च ये नराः ।

शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च ।
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च ॥ १४५ ॥
तथा वृत्तानुषङ्गेण शेषाणां लिङ्गिनां शिरः ।
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा ॥ १४६ ॥
वधूनां चापि कर्तव्यं ये च राजोपजीविनः ।
ये च शृङ्गारिणस्तेषां शिरः कुञ्चितमूर्धजम् ॥ १४७ ॥
चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव वा ।
विदूषकस्य कर्तव्यं खल्लिकाकपर्दं तथा ॥ १४८ ॥
एवं नानाप्रकारेण बुध्वा चैषां विभज्य च ।
अतस्तैर्भूषणैश्चित्रैर्वस्त्रैर्माल्यैरथापि वा ॥ १४९ ॥
अवस्थाप्य कृतिः स्थाप्या प्रयोगरससंभवा ।
स्त्रीणां वा पुरुषाणां वा व्यवस्थां प्राप्य तादृशीम् ॥ १५० ॥
एवं ज्ञेयाङ्गरचना नानाप्रकृतिसंभवा ।
संजीव[1] इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ॥ १५१ ॥
यः प्राणिनां प्रवेशो वै स संजीव इति स्मृतः ।
चतुष्पदोऽथ द्विपदस्तथा चैवापदः स्मृतः[2] ॥ १५२ ॥
उरगान्[3] ह्यपदान् विद्याद् द्विपदान्खगमानुषान् ।
ग्राम्यारण्याश्च[4] पशवो विज्ञेयास्ते चतुष्पदाः ॥ १५३ ॥
एतेऽपि युद्धसंफेटैरुपरोधैस्तथैव[5] च ।
नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः ॥ १५४ ॥
आयुधानि[6] च कार्याणि तज्ज्ञैः सम्यक् प्रमाणतः ।
तान्यहं संप्रवक्ष्यामि यथावदनुपूर्वशः[7] ॥ १५५ ॥
भिण्डि( न्दि ? ) द्वादशतालः[8] स्याद् दश कुन्तो भवेदथ ।

---

१. 'सज्जीव' क-ख. 'सज्जीव इति संज्ञितः' क-ख. २. 'स्मृताः' का. मु. ३. 'उरगा ह्यपदा ज्ञेया द्विपदाः खगमानुषाः' का. मु. ४. 'ग्रामारण्याश्च' क-ख. ५. 'वै' क-ख. 'एते तु युद्धसंभेदो(?) स्त्ववरोधे तथैव च' का. मु. ६. 'आयुधानि च वर्माणि पुरुषाणां प्रमाणतः ।' का. मु. ७. 'यथा युक्तिप्रमाणतः' का. मु. ८. 'भिण्डि(न्दि ?) द्वादशतालास्तु' क-ख.

[1]अष्टौ शतघ्नी शूलश्च तोमरो शक्तिरेव च ॥ १५६ ॥
[2]अष्टतालं धनुर्ज्ञेयमायामस्तु द्विहस्ततः ।
शरो गदा च चक्रं [3]च चतुस्तालं भवेदथ ॥ १५७ ॥
अङ्गुलानि त्वसिः [4]कार्या चत्वारिंशत्प्रमाणतः ।
द्वादशाङ्गुलकं चक्रं ततोर्ध्वं प्रास उच्यते ॥ १५८ ॥
[5]प्रासवत् पट्टिशं विद्याद्दण्डं चैव हि विंशतिः ।
[6]विंशतिः कम्पनं चैव ह्यङ्गुलानि प्रमाणतः ॥ १५९ ॥
षोडशाङ्गुलविस्तीर्णं सबलं संप्रकीर्तितम् ॥ १६० ॥
त्रिंशदङ्गुलमानेन कर्तव्यं खेटकं बुधैः ।
[7]जर्जरोद्दण्डकाष्ठं च तथैव प्रतिशीर्षकम् ॥ १६१ ॥
छत्रं च चामरं चैव [8]ध्वजो भृङ्गार एव च ।
यत् किंचिन्मानुषे लोके द्रव्यं पुंसां [9]प्रयोगजम् ॥ १६२ ॥
[10]तत्सर्वं तूपकरणं नान्यस्मिन् संविधीयते ।
यद्यस्य विषयप्राप्तं तेनोक्तं तस्य लक्षणम्[11] ॥ १६३ ॥
[12]माहेन्द्रा वै ध्वजाः प्रोक्ता लक्षणैः संप्रकीर्तिताः ।
[13]एषामन्यतमं कुर्यात् जर्जरं दारु कर्मतः ॥ १६४ ॥
[14]अथवा वृक्षजातस्य प्ररोहो वापि जर्जरः ।

---

१. 'अष्टौ...शतघ्नी...शूलं तोमरमेव च ।' क-ख. २. 'अष्टौ तालाधनुर्ज्ञेया(य?) मायामोऽस्य द्विहस्तकम् (?) क-ख. ३. 'वज्रं च चतुस्तालो' का. मु. ४. 'कार्याश्चत्वारिंशत्' क-ख. 'प्रास' का. मु. ५. 'प्रासयत्यादिशं ( प्रासवत्पट्टिशं ) विद्याद्दण्डकाश्चैव विंशतिः ।' क-ख. ६. 'कणयं (?) च विवेद्दंशं ह्यङ्गुलैः परिमाणतः । षोडशाङ्गुलि विस्तीर्णं सनाल्यं सप्रधण्डिकम् ।' का. मु. (?) ७. 'जर्जरोदं तु काष्ठं च' क. 'तर्जरोदं तु काष्ठं च' ख. ८. 'वत्रे' क-ख. ९. 'प्रयोजयेत्' क-ख. १०. 'यात्वोपकरणं(?) सर्वं तन्नाट्ये संप्रकीर्तिम् ।' क-ख. ११. इतोऽग्रे काशीमुद्रितपुस्तके—

[ जर्जरे दन्तकाष्ठे च संप्रवक्ष्यामि लक्षणम् ।
श्वेतभूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ॥ ] इत्यधिकं पद्यम्—

१२. 'माहेन्द्रे वै ध्वजे कार्यं लक्षणं विश्वकर्मणा ।' इति का. मु. १३. 'तेषामन्यतमे कार्यम्' का. मु. १४. 'अथवा वृक्षयोनिः स्यात् प्रारब्धो वापि जर्जरः ।' क-ख.

वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥ १६५ ॥
प्रमाणतो[1]ऽङ्गुलानां तु शतमष्टोत्तरं भवेत् ।
श्वेतेन (श्वेत ?) भूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ॥ १६६ ॥
[2]संग्राह्यो वै भवेद्वेणुर्जर्जरार्थे प्रयत्नतः ।
[3]पञ्चपर्वा चतुर्ग्रन्थिस्ताल[4]मात्रस्तथैव च ॥ १६७ ॥
स्थूलग्रन्थिर्न कर्तव्यो न [5]शाखी न च कीटवान् ।
न क्रिमिक्षतपर्वा च न हीनश्चा[6]न्यवेणुभिः ॥ १६८ ॥
[7]मधुसर्पिः सर्षपाक्तं माल्यधूपपुरस्कृतम् ।
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ॥ १६९ ॥
यो विधिर्यः क्रमश्चैव [8]माहेन्द्रे तु ध्वजे स्मृतः ।
स जर्जरस्य कर्तव्यः पुण्यं[9]वेणुसमाश्रयः ॥ १७० ॥[10]
[11]नित्यं यः पीतपत्रश्च सरु(?) पत्रस्तथैव च ।
पर्यग्रतण्डुलश्चैव पुष्प(ष्य)वेणुः स कीर्तितः ॥ १७१ ॥
[12]विधिरेवं मया प्रोक्तो जर्जरस्य तु लक्षणे ॥
[13]अत ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ॥ १७२ ॥
[14]कपित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ ।
[15]वक्रं त्वेव हि तत्कार्यं त्रिभागे लक्षणान्वितम् ॥ १७३ ॥
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम् ।
मन्द[16]शाखं भवेद् यश्च दण्डकाष्ठं तदुच्यते ॥ १७४ ॥

---

१. 'प्रमाणमङ्गुलानां तु' क-ख. २. 'पद्यस्यास्य स्थाने काशीमुद्रितपुस्तके आयातपूर्वं 'जर्जरे दन्तकाष्ठे च' इत्यादिपद्यम् । ३. 'पञ्चपर्वा' का. मु. ४. 'स्फाल ( स्ताल ? ) मात्रः' का. मु. ५. 'नाशाखी' क-ख. ६. 'न हीनस्त्वन्यवेणुभिः' का. मु. ७. 'अक्तं तु मधुसर्पिभ्यां' का. मु. ८. 'महेन्द्रे यो विधिः स्मृतः' का. मु. ९. 'सुभ्यं (ल्य) वेणुसमाश्रयः' क-ख. १०. काशीमुद्रितपुस्तके तु—'भवेद्वै दीर्घपर्वा तु तनुपर्वा तथैव च ।' इति. ११. पर्वानुमण्डलं चैव पुष्यवेणुप्रकीर्तितः ।' का. मु. १२. 'विधिरेष' का. मु. १३. 'अथ' का. मु. १४. 'बिल्वं कपित्थं वंशो वा दण्डकाष्ठं भवेत्सदा ।' का. मु. १५. 'चक्रं त्वेव च' का. मु. १६. 'मन्दशालं' का. मु.

यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ।
कारयेत् स त्वपचयं महान्तं प्राप्नुयाद् ध्रुवम् ॥ १७५ ॥
[1]तथा शीर्षविधानार्थं पटी कार्या तु मानतः ।
[2]सप्रमाणविनिर्दिष्टा [3]द्वात्रिंशच्चाङ्गुलानि [4]वै ॥ १७६ ॥
[5]बिल्वकल्केन कर्तव्या पटी [6]चीरसमाश्रया ।
स्विन्नेन बिल्वकल्केन द्रवेण च [7]समागता ॥ १७७ ॥
[8]भस्मना वा तुषैर्वापि [9]कारयेत्प्रतिशीर्षकम् ।
[10]संछाद्य कृतको वस्त्रैर्बिल्वदिग्धैर्व[11]नाश्रयैः ॥ १७८ ॥
बिल्वकल्केन चीरं तु दिग्धा[12]ङ्गं योजयेत् पटीम् ।
[13]न स्थूलां न तनुं चैव न मृद्वीं चैव कारयेत् ॥ १७९ ॥
[14]शुष्कायास्तु ततस्तस्या मलिनातपयोगतः ।
[15]छेद्यं बुधस्तु कुर्वीत विधिदृष्टेन कर्मणा ॥ १८० ॥
[16]सुतीक्ष्णेण तु शस्त्रेण अर्धार्धं प्रवि[17]भज्य च ।
स्वप्रमाणं [18]विनिर्दिष्टं [19]ललाटाकृति कोणजम् ॥ १८१ ॥
अर्धाङ्गुलललाटं तु छेद्यं कार्यं षडङ्गुलम् ।
अर्धार्धमङ्गु[20]लंच्छेद्यं [21]कटयोस्त्र्यङ्गुलं भवेत् ॥ १८२ ॥
[22]कटान्ते कर्णतालस्य छेद्यं त्वधि[23]कमङ्गुलम् ।

---

१. 'तथा य ( च ? ) प्रतिशीर्षस्य घटिः कार्या प्रयत्नतः ।' क-ख. २. 'स्वप्रमाणा विनिर्दिष्टा' क-ख. ३. 'द्वात्रिंशदङ्गुलानि वै' क-ख. ४. 'च' का. मु. ५. 'बिल्व-मध्येन' क-ख. ६. 'घटीशीर्षसमाश्रया' क-ख. ७. 'समन्वितम्' क-ख. ८. 'भस्मनो' क-ख. ९. 'प्रतिशीर्षाणि कारयेत्' का. मु. १०. 'संस्थाप्य तु ततो वस्त्रैर्बिल्व-दिग्धैर्वनाश्रयैः ।' क-ख. ११. 'घनाश्रयैः' का. मु. १२. 'दिग्धं संयोजयेद्घटिम्' क-ख. १३. 'न स्थूलां न च तां तन्वीं मृद्वीं नैव च कारयेत् ।' क-ख. १४. 'तस्या-मातपशुष्कायां सुशुष्कायामथापि वा ।' क-ख. १५. 'छेद्यं बुधाः प्रकुर्वन्ति' क-ख. १६. 'सुतीक्ष्णेनाथ शस्त्रेण' क-ख. १७. 'विप्रभज्यते' क-ख. १८. 'स्वप्रमाणविनिर्दिष्टं' क-ख. १९. 'ललाटकृतकोणजम्' क-ख. २०. '°मङ्गुलं छेद्यं' क-ख. २१. 'कटेव द्यङ्गुलं भवेत्' क-ख. २२. 'कथं ते' क-ख. २३. 'द्यधिकमङ्गुलम्' क-ख.

[1]ऽयङ्गुलं कर्णविवरं [2]तथास्य छेद्यमेव च ॥ १८३ ॥
ततश्च [3]वावट्टः कार्या [4]सुसमा द्वादशाङ्गुला ।
[5]पटीच्छेद्यकृतं ह्येतद् विधानं विहितं मया ॥ १८४ ॥
तस्योपरि[6]गताः कार्या मुकुटा बा(ब[7])हुशिल्पजाः ।
नानारत्नप्रतिच्छन्ना बहुरूपोपशोभिताः ॥ १८५ ॥
तथो[8]पकरणानीह नाट्ययुक्तिकृतानि च ।
बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति ॥ १८६ ॥
यत्किञ्चिदस्मिन् लोके तु [9]चराचरसमन्विते ।
विहितं कर्म शिल्पं वा तत्तूपकरणं स्मृतम् ॥ १८७ ॥
[10]यद(यो ?) यस्य विषयं(यः) प्राप्यं(प्यः) स तस्मिंस्त्वधिगच्छति ।
[11]नास्त्यतः पुरुषाणां हि ना[12]ट्योपकरणाश्रये ॥ १८८ ॥
[13]नाट्येनोत्पादितं कर्म शिल्पयोग[14]ः क्रियापि वा ।
ते[15]न तस्य कृता सृष्टिः प्रमाणं लक्षणं तथा ॥ १८९ ॥
या [16]कार्ष्णायसभूयिष्ठा कृता सृष्टिर्महत्तरा ।
[17]नास्माकं संमता नाट्ये गुरुत्वात् खेददा हि सा ॥ १९० ॥
यद् द्रव्यं जीवलोके तु [18]नानालक्षणलक्षितम् ।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत् ॥ १९१ ॥
प्रासादगृहयानानि [19]नाट्योपकरणानि च ।
[20]न शक्यानि तथा कर्तुं यथोक्तानीह लक्षणैः ॥ १९२ ॥

---

१. 'अङ्गुलं कर्णविवरम्' क-ख. २. 'सदैव छेद्यमेव हि' क-ख. ३. 'वा यदुः(?)' क-ख. ४. 'ससामा' का. मु. 'सुसमा द्वादशाङ्गुलम्' क-ख. ५. 'धव्यावेततसदा छेदैः' क-ख. ६. 'तस्योपरि ततः कार्या' का. मु. ७. 'विविधाश्रयाः' का. मु. ८. 'तत्रोपकरणानीह' का. मु. ९. 'सचराचरसंहिते' का. मु. १०. 'यस्या (य ?)स्य विषर्ण(यं) प्राप्तं स तदेवाभिगच्छति ।' का. मु. 'यद् यस्य विषयं प्राप्यं स तस्मिंस्त्वधिगच्छति ।' का. मु. ११. 'नान्यतः' का. मु. १२. 'नान्योपकरणाश्रयम्' का. मु. १३. 'यद् येनोत्पादितं' का. मु. १४. 'शिल्पयोगक्रियापि वा' का. मु. १५. 'तस्य तैन कृता सृष्टिः' का. मु. १६. 'वाक्ययन्त्रम् भूयिष्ठा' क-ख. १७. 'ना(न)सास्माकं नाट्ययोगे कस्मात् खेदावहा हि सा ।' क-ख. १८. 'लतालक्षितलक्षणम्' क-ख. १९. 'नानाप्रहरणानि च' क-ख. २०. 'न शक्यं तानि वै कर्तुं' क-ख.

लोकधर्मी भवेत्क्वा[1]( त्वन्या ? ) नाट्यधर्मी तथापरा ।
स्वभावो लोकधर्मी तु विभावो[2] नाट्यमेव हि ॥ १९३ ॥
[3]आयसं न तु कर्तव्यं न च सारमयं तथा ।
नाट्योपकरणं तज्ज्ञैर्गुरु[4] खेदकरं भवेत् ॥ १९४ ॥
[5]जंतुकाष्ठं चर्मवस्त्रप्रभा वेणुदलैस्तथा ।
नाट्योपकरणानीह लघुकर्माणि कारयेत् ॥ १९५ ॥
[6]वर्मचर्मध्वजाः शैलाः प्रासादा देवता गुहाः ।
हयवारणयानानि विमानानि गृहाणि च ॥ १९६ ॥
पूर्वं[8] वेणुदलैः कृत्वा कृतभावसमाश्रयाः ।
ततः सुरङ्गैराच्छाद्य वस्त्रो ( स्त्रैः ? ) सारूप्यमानयेत् ॥ १९७ ॥
अथवा यदि वस्त्राणामसांनिध्यं भवेदिह ।
तालीयैर्वा[7] कलिङ्गै( कीलजै ? )र्वा श्लक्ष्णैर्वस्त्रक्रिया भवेत् ॥१९८॥
तथा प्रहरणानि स्युस्तृणवेणुदलादिभिः ।
जतुभाण्डक्रियाभिश्च नानारूपाणि नाटके[9] ॥ १९९ ॥
[10]प्रतिपादौ प्रतिशिरः प्रतिहस्तौ प्रतित्वचम् ।
तृणजैः कीलजैर्भाण्डैः सरूपाणीह कारयेत् ॥ २०० ॥
यद् यस्य यादृशं[11] रूपं सारूप्यगुणसंभवम् ।
मृण्मयं तंत्र[12] कृत्स्नं तु नानारूपांस्तु[13] कारयेत् ॥ २०१ ॥
भाण्ड[14]वस्त्रमधूच्छिष्टैर्लाक्षयाभ्रदलेन च[15] ।

---

१. 'भवेत्त्व (त्व ?) न्या' का. मु. २. 'नाट्यधर्मी विकारतः' का. मु. ३. 'लोहादिभिर्न कर्तव्यं न च सारमयं तथा ।' क-ख. ४. 'गुरुत्वात् खेदकृद्धि तत्' का. मु. ५. 'कश्च चर्मसु वस्त्रेषु तनुवेणुदलेषु च' क-ख. ६. इतःप्रभृति श्लोकद्वयं काशीमुद्रितपुस्तके नास्ति। 'धर्मचर्मध्वजाः' ख. ७. 'तालीयजैः कीलजैर्वा' का. मु. ८. 'तृणवेणुदलादिषु' क-ख. ९. 'कारयेत्' का. मु. १०. 'प्रतिपादः प्रतिशिरः प्रतिहस्तः प्रतित्वचः । तृणैः कलिङ्गैर्भाण्डैर्वा सारूप्याणि तु कारयेत्' क-ख. ११. 'सदृशं' क-ख. १२. 'तत्तु' १३. 'नानारूपं' क-ख. १४. 'भैण्ड' क-ख. १५. इतोऽग्रे सार्धैकपद्यमधिकं का. मु. पुस्तके—

[ नगास्तु विविधाः कार्याश्चर्मवर्मध्वजास्तथा ॥
नानाकुसुमजातानि फलानि कुसुमानि च ।
विविधानि च भाण्डानि लाक्षया वेह कारयेत् ॥ ]

भा[1]ण्डवस्त्रमधूच्छिष्टैस्ता[2]म्रपत्रैस्तथैव च ॥ २०२ ॥
तत्सा[3]म्यं नीलरागेण अभ्रपत्रै[4]र्ण चैव हि ।
रञ्जितेनाभ्रपत्रेण म[5]णींश्चैव प्रकारयेत् ॥ २०३ ॥
उपाश्रयमथा[6]प्येषां तु[7]ल्यं व(र?)ञ्जेन कारयेत् ।
विविधा मु[8]कुटा दिव्या[:] पूर्वं ये गदिता मया ।
तेऽभ्रपत्रोज्ज्वलाः कार्या माणिक्या[9]लोकशोभिताः ॥ २०४ ॥
न शा[10]स्त्रप्रभवं कर्म तेषां हि समुदाहृतम् ।
वि[11]चार्य बुद्ध्या कर्तव्यमूहापोहप्रयोजितम् ॥ २०५ ॥
[12]एवं मर्त्यक्रियायोगो भविष्यन् कथितो मया ।
य[13]स्मा[14]दल्पबलत्वं हि [15]मानुषे[16]षु भविष्यति ॥ २०६ ॥
म[17]र्त्यानामल्पशक्तीनां न भवेदङ्गचेष्टितम् ।
नेष्टाः सुवर्णरत्नै[18]स्तु मुकुटा भूषणानि वा ॥ २०७ ॥
यु[19]द्धे नियुद्धे नृत्ते वा दृष्टिव्यापारकर्मणि ।
गुरुभारावसन्नस्य खेदो मूर्च्छापि जायते ॥ २०८ ॥
खेदमूर्च्छाश्रमार्तस्य प्रयोगस्तु विनश्यति ।
प्राणात्ययः कदाचिच्च भ[20]वेद् व्यायतचेष्टिते[21] ॥ २०९ ॥
तस्मात्ताम्रमयैः पत्रै[22]रभ्रकै रञ्जितैरपि ।
[23]भा[24]ण्डैरथ मधूच्छिष्टैः कार्याण्याभरणानि च[25] ॥ २१० ॥

१. 'भैण्ड' क-ख. २. 'ताम्रवर्णैः' का. मु. ३. 'सम्यक् च' क-ख. ४. 'अभ्रपात्रेण' क-ख. ५. 'भर्षाश्चैवात्र' का. ६. 'स्तथाप्येषां' का. ७. 'शुल्बभ्रष्टैर्न' का. ८. 'युक्तयद्दिव्या' क-ख. ९. 'माणिव्यालोपशोभिता' क-ख. १०. 'नानाशास्त्रभवं' क-ख. ११. 'आचार्यबुद्ध्या' क-ख. १२. 'अन्यापोह' का. मु. १३. 'एवमल्पप्रियायोगो भविष्यकलितो' क-ख. १४. 'कस्मात्' क-ख. १५. 'च' क-ख. १६. 'मनुष्येषु' क-ख. १७. 'मर्त्यानामपि वा शक्या विभवाः सर्वकाञ्चनाः' क-ख. १८. 'सुवर्णरत्नेषु' क-ख. १९. क-ख. पुस्तकयोस्तु सार्धश्लोकस्थाने 'युद्धे नियुद्धे नृत्ते वा खेदो मूर्च्छा च जायते । मूर्च्छा वाभिहते जन्तौ प्रयोगो न भविष्यति ॥' इति पाठः । २०. 'तु' का. मु. २१. 'चेष्टनात्' का. मु. २२. 'मुकुटानीह कारयेत्' का. मु. २३. इतः पूर्वं 'रक्तस्थनीलहारेण अभ्रपत्रेण वेदितम्.' इत्यधिकं का. मु. पुस्तके २४. 'भेण्डैः' क-ख. २५. 'च' इति क-ख.

एवं लोकोपचारेण स्वबुद्धिविभवेन च ।
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ॥ २११ ॥
न[1] भेद्यं नैव छेद्यं च न प्रहर्तव्यमेव च ।
रङ्गप्रहरणैः कार्यं संज्ञामात्रं तु कारयेत् ॥ २१२ ॥
अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा ।
शस्त्रमोक्षः प्र[2]कर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ॥ २१३ ॥
नो[3]क्तानि यानि[4] च मया लोकाद्ग्राह्या[5]णि तान्यपि ॥
आहार्याभिनयो ह्येष मया प्रोक्तः समासतः ।
अत ऊर्ध्वं[6] प्रवक्ष्यामि सामान्याभिनयं प्रति ॥ २१४ ॥
इति[6] भारतीये नाट्यशास्त्रे आहार्याभिनयो नामैकविंशतितमोऽध्यायः ।

---

द्वाविंशतितमोऽध्यायः[7] ।

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।
त[8]त्र कार्यः प्रयत्नस्तु नाट्ये सत्त्वं प्रतिष्ठितम् ॥ १ ॥
सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्यः सत्त्वहीनोऽधमः स्मृतः ॥ २ ॥
अव्यक्तरूपं सत्त्वं हि ज्ञेयं नवे[9]रसाश्रयम् ।
यथास्थानरसोपेतं रोमाञ्चास्रादिभिर्गुणैः ॥ ३ ॥
अलंकाराश्च सत्त्व[10]स्था ज्ञेया भा[11]वसमाश्रयाः ।

---

१. काशीमुद्रितपुस्तके तु—
'भोक्तव्यं नायुधं रङ्गे न छेद्यं न च ताडनम् ।
प्रादेशमात्रं गृह्णीयात् संज्ञार्थं शस्त्रमेव हि ॥
शिक्षायोगेन नाट्येऽस्मिन् शिक्षामायाकृतेन वा ॥' इति
२. 'तु कर्तव्यो' का. मु. ३. इतः पूर्वं का. मु. पुस्तके 'एवं नानाप्रकारैस्तु आयुधाभरणानि च' इति पद्यार्धमधिकम् ४. 'नोक्तानि च मया यानि' का. ५. 'लोकाद्ग्राह्यानि' क-ख. ६. इति नाट्यशास्त्रे आहार्याभिनयो नाम त्रयोविंशोऽध्यायः । का. ७. का. मु. पुस्तके—अथ चतुर्विंशतितमोऽध्यायः । ८. 'सत्त्वे' का. मु. ९ 'भावरसाश्रयं' का. १०. 'तु नाट्यज्ञैः' का. ११. 'नाट्यरसाश्रयाः' का.

यौवने[1]भ्यधिकाः स्त्रीणां विकारा वक्त्रगात्रजाः ॥ ४ ॥
आदौ त्रयोऽङ्गजास्तेषां[2] दश स्वाभाविकास्तथा[3] ।
अयत्नजास्तथा सप्त रसभावोपबृंहिताः ॥ ५ ॥
भावो हावश्च हेला च परस्परसमुत्थिताः ।
सत्त्वभेदा भवन्त्येते शरीरे[4] प्रकृतिस्थिताः ॥ ६ ॥
देहात्मकं भवेत् सत्त्वं सत्त्वाद् भावः[5] समुत्थितः ।
भावात् समुत्थितो हावो हावाद्धेला समुत्थिता ॥ ७ ॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥ ८ ॥
भावातिरिक्तं सत्त्वं हि व्यतिरिक्तं[6] स[7]योनिषु ।
नैकावस्थान्तर[8]गतं हावं तमिह निर्दिशेत् ॥ ९ ॥
तत्राक्षिभ्रूविकारा[9]ढ्यशृङ्गार[10]रससूचकः ।
स ग्रीवारेचको[11] ज्ञेयो भाव[12]श्चित्तसमुत्थितः ॥ १० ॥
य एव भावाः[13] सर्वेषां शृङ्गाररससंश्रयाः[14] ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥ ११ ॥
लीला विलासो विच्छित्तिर्विभ्रमः[15] किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विब्वोको ललितं[16] तथा ॥ १२ ॥
विहृतं[17] चेति संयुक्ता दश स्त्रीणां स्वभावजाः ।
पुनरेषां[18] प्रवक्ष्यामि लक्षणानि पृथक् पृथक् ॥ १३ ॥
वागङ्गालंकारैः श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः ।

---

१. 'ऽभ्यधिकाः' का. २. 'प्रोक्ताः' का. ३. 'परे' का. ४. 'शरीरप्रकृतिस्थिताः' का. ५. 'भावाः समुत्थिताः' क-ख. ६. 'भावस्यातिक्रतं सत्त्वं' क-ख. ७. 'च' क-ख. ८. 'नैकावस्थान्तरक्रतं' क-ख. ९. 'विकाराश्च' क-ख. १०. 'शृङ्गाराका-रसूचकाः' क-ख ११. 'रेचका ज्ञेयो' क-ख. १२. 'हावश्चित्तसमुत्थितः' क-ख. १३. 'हावाः' क-ख. १४. 'संभवाः' क-ख. १५. 'विक्रमः' का. मु. १६. 'विव्वोकं' क-ख. १७. 'विहृतिश्चेति संयुक्ता' क-ख., 'विहृतं चेति विज्ञेया' का. मु. १८. 'अलंकारास्तथैतेषां लक्षणानि पृथक् पृथक्' का. मु.

इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥ १४ ॥
स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥ १५ ॥
माल्याच्छादनभूषणविलेपनानामनादरन्यासः ।
खल्[1]पोऽपि परां शोभां नयति ह्रियः सा तु विच्छित्तिः ॥ १६ ॥
विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो योऽतिश[2]यो विभ्रमः स मतः ॥ १७ ॥
स्मि[3]तहसितरुदितभयबहुदुःखगर्वश्रमाभिलाषाणाम् ।
संकरकरणं हर्षादसकृत् किलकिञ्चितं ज्ञेयम् ॥ १८ ॥
इष्टजनस्य कथायां लीलाभि[4]र्दर्शने चापि ।
तद्भावभावनकृतमुक्तं मोट्टा[5]यितं नाम ॥ १९ ॥
केशस्तनाधरादिग्रहणेऽप्यतिह[6]र्षसंभ्रमोत्पन्नम् ।
कुट्टमितं विज्ञेयं सुखमपि दुःखोपचारेण ॥ २० ॥
ई[7]र्ष्याणां भावानां प्राप्तावभिमानगर्वसंभूतः ।
स्त्रीणामनादरकृतो विव्वोको नाम विज्ञेयः ॥ २१ ॥
करचरणाङ्गन्यासः स[8]भ्रूनेत्रैश्च संप्रयुक्तस्तु ।
सुकुमारविधानेन स्त्रीभि[9]रितीदं स्मृतं ललितम् ॥ २२ ॥
प्राप्तां[10]नामपि वचसां क्रियते यदभाषणं ह्रिया स्त्रीभिः ।
[11]व्याजात् स्वभावतो वाप्ये[12]तत् समुदाहृतं विहृतम् ॥ २३ ॥
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च ।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः ॥ २४ ॥
रूपयौवनलावण्यरूपभोगोपबृंहतैः ।

---

१. 'स्वल्पोप्यधिकां' का. २. 'व्यत्यासो विभ्रमो नाम' का. ३. 'स्मितरुदितहसितभयरोगमोहदुःखश्रमाभिषङ्गाणाम् ।' का. ४. 'लीलाहेलादिदर्शने चापि' का. ५. 'मोट्टायितमित्यभिख्यातम्' का. ६. 'ग्रहणेष्वति' का. ७. 'इष्टानां' का. ८. 'सनूननेत्रो' का. ९. 'रिदं स्मृतं ललितम्' का. १०. 'प्राप्ताम (व)पि' मु., 'प्राप्तानामपि वचनं' का. ११. 'घातात् स्वभावतो वा' मु. १२. 'ह्येतत्' का.

अलंकरणमङ्गानां शोभेति परिकीर्तिता[1] ॥ २५ ॥
विज्ञेया च तथा कान्तिः शोभैवा[2]पूर्वमन्मथा ।
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ २६ ॥
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ।
अनुल्बणत्वं चेष्टायां माधुर्यमिति संज्ञितम्[3] ॥ २७ ॥
चापलेनानुपहता सर्वार्थेष्वनु[4]कत्थना ।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिसंज्ञितम्[5] ॥ २८ ॥
[6]प्रयोगनिःसाध्वसता प्रागल्भ्यं समुदाहृतम् ।
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः ॥ २९ ॥
सुकुमारा भवन्त्येते प्रयोगे ललितात्मके[7] ।
विलासललिते हित्वा दीप्ता ह्येते[8] भवन्ति हि ॥ ३० ॥
शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥ ३१ ॥
दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सितम्[9] ।
उत्तमैश्च गुणैः स्पर्धा यत्र शोभेति सा स्मृता ॥ ३२ ॥
[10]वीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता ।
स्मृतपूर्वमथो[11]लापो विलास इति कीर्तितः ॥ ३३ ॥
अभ्यासात् कारणानां तु श्लिष्टत्वं यत्र जायते ।
महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् ॥ ३४ ॥
धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् ।
व्यवसायादि[12]र्वचनं स्थैर्यमित्यभिसंज्ञितम्[13] ॥ ३५ ॥

---

१. 'यत् सा शोभेति भण्यते' का. २. 'शोभैवापूर्णमन्मथा' का. ३. 'कीर्तितम्' का. ४. '°ध्वविकत्थना' का. ५. '°मित्यभिधीयते' का. ६. 'प्रयोगतः साध्वयता (?)' मु. ७. 'ललितालके' का. ८. 'दीप्तेऽप्येते' मु. ९. 'जुगुप्सनम्' का. १०. 'स्थिरसंचारिणो दृष्टिः' का. ११. 'तथा वाचो' का. १२. '°दवचनं' मु., 'व्यवसायादिवचनं' क., 'व्यवसायादचलनं' का. 'व्यवसायादवचनं' मु. १३. इत्यभिधीयते का.

यस्य प्रभावादाकाराः [1]क्रोधहर्षभयादिषु ।
भावेषु नोपलभ्यन्ते तद् गाम्भीर्यमिति [2]स्मृतम् ॥ ३६ ॥
अबुद्धिपूर्वकं यत्तु सुकुमारं [3]स्वभावतः ।
शृङ्गाराकारचेष्टत्वं ललितं [4]तदुदाहृतम् ॥ ३७ ॥
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् ।
स्वजने वा परे वापि [5]तदौदार्यं प्रकीर्तितम् ॥ ३८ ॥
अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ३९ ॥
[6]सत्त्वतोऽभिनयाः पूर्वं मयोक्ता द्विजसत्तमाः ।
शारीरं चाप्यभिनयं व्याख्यास्याम्यनुपूर्वशः ॥ ४० ॥
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।
[7]शाखा नाट्यायितं चैव निवृत्त्यङ्कुर एव च ॥ ४१ ॥
[8]नानाभावरसार्थैर्वृत्तनिबद्धैः कृतस्य चूर्णपदैः ।
प्राकृतसंस्कृत[9]पाठ्यो वाक्याभिनयो बुधैर्ज्ञेयः ॥ ४२ ॥
वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद्[10]वचनाभिनयः सूचेत्यभिसंज्ञिता सा तु ॥ ४३ ॥
[11]हृदयस्थो निर्वचनैरङ्गविकारैः कृतो निपुणसाध्यः ।
सूचेवोत्[12]पत्तिकृतो विज्ञेयस्त्वङ्कुरा[13]भिनयः ॥ ४४ ॥
यस्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते ।
शाखादर्शितमार्गः शाखाभिनयः सः विज्ञेयः ॥ ४५ ॥
नाट्यायि[14]तैसू( मु ? )पचारैर्यत्क्रियतेऽभिनयसूचना नाट्ये ।

---

१. ‘रोमहर्षभयादिषु’ का. २. ‘गाम्भीर्यमिति शंसितम्’ का. ३. ‘सुकुमारस्वभावजम्’ का. ४. ‘तत् प्रकीर्तितम्’ का. ५. ‘तदौदार्यमिति स्मृतम्’ का. ६. ‘सत्त्वजोऽभिनयः पूर्वं मया प्रोक्तो द्विजोत्तम ।’ का. ७. ‘शाखो’ का. ८. ‘नानारसार्थयुक्तैर्वृत्तनिबद्धैः सुचूर्णकृतैः ॥ का. ९. ‘संस्कृतप्रायो’ मु. १०. ‘वाच्याभिनयः सासूचा सूरिभिर्ज्ञेया’ का. ११. ‘हृदयस्थैर्निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्यः’ का. १२. ‘°त्पत्तिकृतां’ मु. १३. ‘बुधैर्ज्ञेयः’ का. १४. ‘°मुपचारैः’ का.

का[1]व्यप्रकर्षहेतोः प्रवे[2]शकैः सङ्गमो यावत् ॥ ४६ ॥
स्थाने ध्रुवास्वभिनयो यत् क्रियते हर्षशोक[3]रोषाद्यैः ।
भावरससंप्रयुक्तै[4]र्ज्ञेयं नाट्यायितं तच्च ॥ ४७ ॥
यत्रा[5]न्योक्तं वाक्यं सूचाभिनयेन योजयेदन्यः ।
तत्संबन्धा[6]र्थकृतं यन्निवृ[7]त्त्यङ्कुरः सोऽथ ॥ ४८ ॥
[8]एतेषां च स्मृता मार्गा यथाभावरसान्विताः ।
काव्यवस्तुषु निर्दिष्टा द्वादशाभिनयात्मकाः ॥ ४९ ॥
आलापः प्रलापश्च विलाप[9]ः स्यात्तथैव च ।
[10]अनुलापोऽथ संलापस्त्वपलापस्तथैव च ॥ ५० ॥
संदेशश्चातिदेशश्च निर्देश[11]ः स्यात्तथापरः ।
[12]उपदेशोऽपदेशश्च व्यपदेशश्च कीर्तितः ।
आभाषणे तु यद्वाक्यमालापो नाम स स्मृतः ॥ ५१ ॥
अनर्थकं वचो य[13]त्र स प्रलापश्च कीर्तितः ।
दुःखं शोकोद्भवं यत्र विला[14]पः स तु कीर्तितः ॥ ५२ ॥
बहुशोऽभिहितं वाक्यमनुलाप इति[15] स्मृतः ।
[ [16]उक्तिप्रत्युक्तिसंयुक्तः संलाप इति स स्मृतः ॥ ५३ ॥ ]
पूर्वोक्तस्यान्यथाभावो ह्यप[17]लाप इति स्मृतः ।
[18]त्वमिदं वचनं ब्रूहीत्येष संदेश इष्यते ॥ ५४ ॥
अतिदेश[19]स्त्वयोक्तं यत्तन्मयोक्तमिति स्मृतम् (तः ?) ।

---

१. 'कालप्रहर्षहेतोः' का. २. 'प्रवेशने संगमं यावत्' का. ३. 'हर्षरोषशोकाद्यैः' का. ४. '°युक्तो ज्ञेयो' का. ५. 'यस्त्वन्योक्तं' का. ६. 'तत्संबद्धार्थकथं भा (?) यन्निवृत्त्यं' का. ७. 'निवृत्तमेवाङ्कुरं विद्यात्' का. ८. 'एते मार्गास्तु निर्दिष्टा' का. ९. 'विलापोऽन्यस्तथैव च' का. १०. 'इदमर्धं' का. पुस्तके नास्ति ।' ११. 'निर्देशश्च तथैव च' का. १२. 'व्यपदेशापदेशौ च अपदेशस्तथैव च' इति का. १३. 'यच्च प्रलापः स तु संज्ञितः । का. १४. 'करुणप्रभवो यस्तु विलाप इति स स्मृतः ।' इति का. १५. 'अनुलापश्च कीर्तितः' का. १६. एतदर्धं का. पुस्तक एव । 'उक्त-अत्युक्त-संयुक्तमुक्तप्रत्युक्तसंज्ञितम्' इति मु. पुस्तके । १७. 'ह्यपवाद' का. मु. १८. 'तदिदं' का. १९. 'अतिदेशस्त्वयोक्तं तन्मयोक्तमिति स स्मृतः ।' का.

लोपं(कं) ब्रवीम्यहमिति यो निर्देशः[1] स उच्यते ॥ ५५ ॥
इदं कुरु[2] गृहाणेदमुपदेश इति स्मृतः ।
व्याजोऽन्तरेण कथनं व्यपदेशः प्रकीर्तितः ॥ ५६ ॥
एते मार्गा हि विज्ञेयाः सर्वाभिनययोजकाः[3] ।
सप्त प्रकारास्तेषां[4] च पुनर्वक्ष्यामि तत्त्वतः[5] ॥ ५७ ॥
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः ।
आत्मस्थश्च[6] परस्थश्च प्रकाराः सप्त चैव तु[7] ॥ ५८ ॥
अहं करोमि कर्ता[8] च वदामि वचनं तव ।
आत्मप्रत्यक्षसंस्थश्च[9] वर्तमानश्च स स्मृतः ॥ ५९ ॥
करिष्यामि[10] वदिष्यामि गमिष्यामीति यद्वचः ।
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥ ६० ॥
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणाः ।
आत्मस्थश्च परोक्षश्च[11] वृत्तकालश्च[12] स स्मृतः ॥ ६१ ॥
त्वया हता जिताश्चैव[13] यो वदेन्नाट्यकर्मणि ।
एष[14] ब्रवीमि कुरुते गच्छतीत्यादि यद्वचः ॥ ६२ ॥

---

१. 'स एकोऽहं ब्रवीमिति निर्देशः स तु संज्ञितः ।' इति का. २. काशीमुद्रित-पुस्तके त्वेतत्पद्यं पूर्वार्धोत्तरार्धव्यत्यासेनैवं वर्तते—

'व्याजान्तरेण कथनं व्यपदेशो भवेत्तु सः ।
इदं करु गृहाणेदमुपदेश इति स्मृतः ॥'

३. 'वाक्याधिनययोजकाः' का. ४. 'सप्तप्रकारमेतेषां' का. ५. 'लक्षणम्' का. ६. 'आत्मस्थश्च परस्थश्च प्रकाराः सर्व (?) शृण्वतु (?) इति मु. ७. इतोऽग्रे काशी-मुद्रितपुस्तके—

'एष ब्रवीमि नाहं भो वदामीति च यद्वचः ।
प्रत्यक्षश्च परस्थश्च वर्तमानश्च तद्भवेत् ॥'

इत्यधिकम् ।

८. 'गच्छामि' का. ९. 'आत्मस्थो वर्तमानश्च प्रत्यक्षश्चैव स स्मृतः' का. १०. 'करि-ष्यामि गमिष्यामि वदिष्यामीति यद्वचः' का. ११. 'परस्थश्च' का. १२. '°स्तु' का. १३. 'जिताश्चेति' का.

१४. 'काशीमुद्रितपुस्तके च—

परस्थो वर्तमानश्च भविष्यश्च भवेत्तथा ।
स गच्छति करोतीति वचनं यदुदाहृतम् ॥ ६३ ॥
परस्थं वर्तमानं च परोक्षं चैव तद्भवेत् ।
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः ॥ ६४ ॥
परस्थानेऽप्यकालं च परोक्षं चैव तद्भवेत् ।
परेषामात्मनश्चैव कालस्य च विपर्ययात् ॥ ६५ ॥
सप्त प्रकारा(रां)स्त्वस्यैव भेदान् प्राहुरनेकधा ।
हस्तमन्तरतः कृत्वा यद्वदेन्नाट्यकर्मणि ॥ ६६ ॥
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ।
शिरो[1]वदनहस्तोरःकट्यूरुचरणाश्रयः ॥ ६७ ॥
समःकर्मविभागे यो विविधाभिनये तु सः ।
ल[2]लितैर्हस्तविन्यासैस्तथा मृद्वङ्गचेष्टितैः ॥ ६८ ॥
अभिनेयं तु नाट्यज्ञै[3]रसभावसमन्वितैः ।
अ[4]नुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितैः ॥ ६९ ॥
लयताल[5]कलाकालप्रमाणनियतात्[6]मकम् ।

---

'परोक्षश्च परस्थश्च वृत्तकालस्तथैव च ।
ममाद्यैव च संपाद्यं तत्कार्यं भवता सह ॥
आत्मस्थश्च परस्थश्च वर्तमानश्च स स्मृतः ।
हस्तमन्तरितं कृत्वा यद्वदेन्नाट्यकर्मणि ॥
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ।
परेषामात्मनश्चैव कालस्यैव विशेषणात् ॥
सप्तप्रकारकस्यैव भेदा ज्ञेया ह्यनेकशः ।
एते प्रयोक्तृभिर्ज्ञेया मार्गा ह्यभिनये स्मृताः ॥
एभिरेव विनिष्पन्नो विविधोऽभिनये मतः ।'

इयान् पाठः 'एष ब्रवीमि' इत्यारभ्य 'प्राहुरनेकधा' इत्यन्तस्य श्लोकचतुष्टयस्य स्थाने वर्तते।

१. 'शिरोवदनपादोरुजङ्घोदरकटीकृतः । समकर्मविभागो यो सामान्याभिनयस्तु सः ॥' इति का. २. 'ललितैर्हस्तसंचारैस्तथा मृद्वङ्गचेष्टितैः । अभिनेयस्तु नाट्यज्ञै रसभावसमन्वितैः ॥' इति का. ३. 'त्रासभावसमन्वितैः' इति का. ४. 'अनुद्रसेन संभ्रान्तमनाविव्द्धातद्वेष्टितम् । (?)' मु. ५. 'कलापादिप्रमाण' का. ६. 'नियतात्मजम्' (?) का.

[1]सुविभक्तपदालापम[2]निष्ठुरमेकाहलम् ॥ ७० ॥
यदीदृशं भवेन्नाट्यं ज्ञेयमा[3]भ्यन्तरं तु तत् ।
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ॥ ७१ ॥
[4]ऐति(नि ?) बद्धगीतवाद्य(द्यं ?)नाट्यं बाह्यमिति स्मृतम् ।
[5]लक्षणाभ्यन्तरं यत् स्यात् तमोदार(तदेवा ?)भ्यन्तरं स्मृतम् ॥ ७२ ॥
[6]शास्त्रार्थबाह्यभावार्थं बाह्यमित्यभिधीयते ।
अनेन लक्ष्यते यस्मात् प्रयोगः कर्म [7]वा बुधैः ॥ ७३ ॥
तस्माल्लक्षणमेतद्धि नाट्येऽस्मिन् संप्रयोजितम् ।
[8]अनाचार्योदिता ये च ये च शास्त्रबहिष्कृताः ॥ ७४ ॥
[9]बाह्यास्ते तु प्रयोज्यन्ति(न्ते ?) क्रियामात्रैः प्रयोजितैः ।
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च ॥ ७५ ॥
[10]इन्द्रियाणीन्द्रियार्थांश्च भावैरभिनयेद् बुधः ।
कृत्वा साचीकृतां दृष्टिं शिरः [11]पार्श्वाञ्चितं तथा ॥ ७६ ॥
[12]तर्जनीं कर्णदेशे तु [13]शब्दान्नियोजयेत् बुधः ।
किंचिदाकुञ्चिते नेत्रे कृत्वा [14]भ्रूक्षेपमेव च ॥ ७७ ॥
[15]तथांसगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् ।
कृत्वा [16]पताके मूर्धिस्थे किंचित् [17]प्रचलिताननः ॥ ७८ ॥
निर्वर्णयन्त्या दृष्ट्या [18]च रूपं त्वभिनयेद् बुधः ।
किंचिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् ॥ ७९ ॥
[19]एकोच्छ्वासेन चोद्दिष्टौ रसगन्धौ विनिर्दिशेत् ।

---

१. 'सुविभक्तकथालापं' का. २. 'अनाकुलम्' का. ३. 'अभ्यन्तरं' मु. ४. 'अनिबद्धं गीतवाद्यैः' का. ५. 'लक्षणाभ्यन्तरत्वादि तदभ्यन्तरमिष्यते ।' का. ६. 'शास्त्राबाह्यं भवेद् यत्तु तद् बाह्यमिति संज्ञितम् ।' इति का. ७. 'कर्म चैव हि' का. ८. 'अनाचार्योषिता ये च ये च शास्त्रवद्वित्तमाः' (?) मु. ९. 'बाह्यास्ते तु प्रयोज्यन्ति (?)' मु., 'बाह्यं ते तु प्रयोक्ष्यन्ते क्रियामन्त्रैः प्रयोजितम् ।' का. १०. 'इन्द्रियैरिन्द्रियार्थैश्च' का. ११. 'पार्श्वानतं' का. १२. 'तर्जनी' का. १३. 'शब्दं त्वभिनयेद् बुधः' का. १४. 'भ्रुवोरुत्क्षेपणेन च' का. १५. 'तथाङ्गगण्डयोः' का. १६. 'पताकौ मूर्धस्थौ' मु. १७. 'प्रचलिताङ्गुलिः' का. १८. 'तु' का. १९. 'एकोल्लासेन हृष्टेष्टो' का.

पञ्चानामिन्द्रियार्थानां[1] भावा ह्येतेऽनुभाविनः[2] ॥ ८० ॥
त्वक्चक्षुर्घ्राणजिह्वानां श्रोत्रस्य च तथैव[3] हि ।
इन्द्रियार्थाश्च[4] मनसा भवन्ति ह्यनुभाविनः ॥ ८१ ॥
न वेत्ति ह्यमनाः किंचिद्विषयं पञ्चहेतुकम् ।
मनसस्त्रिविधो भावो विज्ञेयोऽभिनयं प्रति ॥ ८२ ॥
ईष्टोऽनिष्टश्च[5] मध्यश्च तस्याभिनय उच्यते ।
प्रह्लादनेन[6] गात्रस्य तथा पुलकितेन च ॥ ८३ ॥
वदनस्य[7] विकाशेन कुर्यादिष्टनिदर्शनम् ।
इष्टे शब्दे तथा रूपे स्पर्शे घ्राणे तथा रसे ॥ ८४ ॥
इन्द्रियैर्मनसि[9] प्राप्तैः सौमुख्यं संप्रदर्शयेत् ।
परावृत्तेन शिरसा नेत्र[10]भासा विविक्त(क्ति)तैः ॥ ८५ ॥
चक्षुषश्चा[11]प्रदानेन ह्यनिष्टमभिनिर्दिशेत् ।
तानि हृष्टेन मनसा[12] न वात्य[13]न्तजुगुप्सया ॥ ८६ ॥
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत् ।
तेनेदं तस्य वापीदं स एवं प्रकरोति च[14] ॥ ८७ ॥
परोक्षाभिनयो यस्तु मध्यस्थ इति स स्मृतः ।
आत्मानुभावी[15] योऽर्थः स्याद[16]ात्मस्थ इति स्मृतः ॥ ८८ ॥
परार्थवर्णनायां च परस्थ[17] इति स स्मृतः ।
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते ॥ ८९ ॥

---

१. '°न्द्रियाणां च' का. २. '°ऽनुभावजाः' का. ३. 'च' का. ४. 'इन्द्रियार्थश्च मनसा भाव्यते ह्यनुभावितः ।' इति का. ५. 'इष्टोनिष्टस्तथा चैव मध्यस्थश्च तथैव च ।' इति का. ६. 'गात्रप्रह्लादनेनेह' का. ७. 'आननप्रक्रियाभिश्च सर्वमिष्टं निरूपयेत् ।' इति का. ८. 'गन्धे रसेऽपि वा' का. ९. 'रङ्गिवैः' (?) मु., 'इन्द्रियैर्मनसा प्राप्तैः' का. १०. '°ऽप्रदानेन च चक्षुषः' का. ११. 'नेत्रनासाश्रिततया' का. १२. 'न चातिमात्रहृष्टस्तु' का. १३. 'न चा–' का. १४. 'वा' का. १५. 'आत्मानुभावा' मु. १६. 'स्यात् स आत्मस्थ' का. १७. 'परस्य वर्णनीयश्च परस्थः स तु संज्ञितः ।' इति का.

स चेच्छागुणसंपन्नो बहुधा[1] परिकल्पितः ।
धर्मकामोऽर्थकामश्च[2] मोक्षकामस्तथैव च ॥ ९० ॥
यंस्तु[3] स्त्रीपुंसयोर्योगः समो योग इति स्मृतः ।
सर्वस्यैव हि लोकस्य[4] सुखदुःखनिबर्हणम् ॥ ९१ ॥
भूयिष्ठं दृश्यते कामः सुखदो दुःखदेष्वपि ।
यः स्त्रीपुरुषसंयोगो[5] रतिसंभोगकारकः ॥ ९२ ॥
स शृङ्गार इति ज्ञेय उपचारकृतः[6] शुभः ।
सर्वः[7] प्रायेण लोकोऽयं सुखमिच्छति[8] सर्वदा ॥ ९३ ॥
सुखस्य च स्त्रियो मूलं नानाशीलधराश्च[9] ताः ।
देवतासुरगन्धर्वरक्षोनागपतत्रिणाम् ॥ ९४ ॥
पिशाचयक्षव्यालानां[10] नरवानरहस्तिनाम् ।
मृगमीनोष्ट्रमकरखरसूकर[11]वाजिनाम् ॥ ९५ ॥
महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ।
स्निग्धाङ्गोपाङ्ग[12]नयना स्थिरा[13] मन्दनिमेषिणी ॥ ९६ ॥
अरोगा दीप्त्युपेता च सत्यार्जव[14]दयान्विता ।
अल्पस्वेदा समरता स्वल्पशुक्र[15]रतप्रिया ॥ ९७ ॥
गन्धपुष्प[16]रता हृद्या देवशीलाङ्गना स्मृता ।
अधमा[17] साम्यनिरतस्थिरक्रोधातिनिष्ठुरा ॥ ९८ ॥
मद्यमांसप्रिया नित्यं क्रोधना[18] यातिमानिनी ।

---

१. 'काम इष्यते' का. २. 'धर्मकामार्थकामस्य' मु. ३. 'स्त्रीपुंसयोस्तु संयोगो यः कामः स तु संस्मृतः ।' का. ४. श्लोकोऽयं का-पुस्तके नास्ति. ५. '°संयोगे रतिसंयोगकारकः' का. ६. 'उपकारकृतः' का. ७. 'इह' का. ८. 'शुभमिच्छति नित्यशः' का. ९. 'नानाशीलाश्च ताः पुनः' का. १०. 'पिशाचयक्षव्यालानां' का. ११. 'वनसूकराणाम्' का. १२. 'स्निग्धा चाङ्गैरपाङ्गैश्च' का. १३. 'स्थिरमन्द' का. १४. 'दानशक्त्यार्जवान्विता' का. १५. 'स्वल्पभुक् सुरभिप्रिया' का. १६. 'गान्धर्वविद्याभिरता हृद्या देवाङ्गना स्मृता ।' का. १७. 'अधर्मशाठ्याभिरता' का. १८. 'कोपना चातिमानिनी' का.

चपला चातिनिर्लुब्धा[1] परुषा कलहप्रिया ॥ ९९ ॥
ईर्ष्याशीलाथ निःस्नेहा[2] शीलमासुरमाश्रिताः[3] ।
क्षिप्रापरा[4] चारुनेत्रा नखदन्तैः सुपुष्पितैः ।
तन्वङ्गी स्मितभाषा[5] च मन्दापत्या रतिक्रि(प्रि ?)या ॥ १०० ॥
नृत्ते[6] गीते च नाट्ये च रता हृष्टा मृजावती ।
गान्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ॥ १०१ ॥
बृहद्व्यायतसर्वाङ्गी[7] रक्तविस्तीर्णलोचना ।
खररोमा दिवास्वप्नस्वभावोत्फुल्लभाषिणी[8] ॥ १०२ ॥
नखदन्तक्षतकरी[9] क्रोधेर्ष्याकलहप्रिया ।
निशाविहारशीला च राक्षसं शीलमास्थिता[10] ॥ १०३ ॥
तीक्ष्णनासोग्रदशना[11] सुतनुस्ताम्रलोचना ।
नीलोत्पलसवर्णा च स्वप्नशीला[12]तिकोपना ॥ १०४ ॥
तिर्यग्जनिश्चैला[13]रम्भा बहुबिम्बा[14]तिमानिनी ।
गन्धमाल्यातिनिरता[15] नागसत्त्वाङ्गना स्मृता ॥ १०५ ॥
अत्यर्थं घटितास्या[16] च तीक्ष्णशीला[17] रतिप्रिया[18] ।
सुरासवक्षीररता[19] बह्वपत्या फलप्रिया ॥ १०६ ॥
नित्यं श्वसनशीला [ च सदो[20] ] द्यानरतिप्रिया ।
जना[21]धिकाङ्गुलिः क्रूरा रात्रौ निष्कुटचारिणी ॥ १०७ ॥
बालोद्वेजनशीला च पिशुना श्लिष्टभाषिणी ।

---

१. 'चातिलुब्धा च' का. २. चलस्नेहा' का. ३. 'चासुरशीलमास्थिता' का. ४. 'अनेकाराममोग्या च' का. ५. 'स्मिताभिभाषिणी तन्वी मन्दचारा रतिप्रिया' इति का. ६. 'गीते वाद्ये च नृत्ते च नित्यं हृष्टा' का. ७. 'बृहदायतसर्वाङ्गी' का. ८. 'निवृतात्युच्चभाषिणी' का. ९. '°क्षतकरी' का. १०. 'सत्त्वमाश्रिता' का. ११. 'नासाग्रदशना' का. १२. 'स्वप्नोद्देशा' का. १३. 'तिर्यग्गतिः' का. १४. 'बहुसत्त्वाभिनन्दिनी' का. १५. 'गन्धमाल्यादिनिरता' का. १६. 'अत्यन्तं व्यावृतास्या च' का. १७. 'तीक्ष्णा शीला' मु. १८. 'सरितिप्रिया' का. १९. 'क्षीररसा' का. २०. '···तिष्ठेद्यौनरतिप्रिया' मु; 'च सदोद्यानवनप्रिया' का. २१. 'जनाधिका–' इत्यादि पद्यद्वयी का. मु.—पुस्तके नास्ति ।

सुरते कुत्सिताचारा रोमाशाङ्गी महास्वना ।
पिशाचसत्त्वा विज्ञेया मद्यमांसरतिप्रिया ॥ १०८ ॥
स्वप्नप्रस्वेदनाङ्गी च स्थिरशय्यासनप्रिया ।
मे[1]धाविनी भ………मद्यगन्धामिषप्रिया ॥ १०९ ॥
चि[2]रेदृष्टे तु हर्षं च कृतज्ञत्वादुपैति या ।
अ[3]दीर्घगमना या च ज्ञेया यक्षान्वयाङ्गना ॥ ११० ॥
मा[4]नापमानयोस्तुल्या परुषा कटुकाक्षरा ।
शठानृतोद्धतकथा पिङ्गदृक् (ग् ?) व्या[5]लवंशजा ॥ १११ ॥
आर्जवाभिरता नित्यं दक्षात्यन्तगुणान्विता ।
विभक्ताङ्गी कृतज्ञा च गुरुदेवार्चने रता ॥ ११२ ॥
धर्मकामार्थनित्या च[6] वश्याहङ्कारवर्जिता ।
सुहृत्प्रिया सुशीला च मानुषं हेतुमा[7]श्रिता ॥ ११३ ॥
संहृ[8]ताल्पतनुर्धृष्टा पिङ्गरोमा फलप्रिया ।
प्रगल्भा चपला तीक्ष्णा वृक्षाग(रा ?)मर[9]तिप्रिया ॥ ११४ ॥
स्व[10]ल्पमप्युपकारं तु नित्यं या बहु मन्यते ।
अ[11]संह्यरतिशीला च कपि[12]सत्त्वं समाश्रिता ॥ ११५ ॥
महाहनुललाटा च श[13]रीरोपचयान्विता ।
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यास[14]वप्रिया ॥ ११६ ॥
कोपना स्थिरसत्त्वा च जलो[15]द्यानवनप्रिया ।
मधुराभिरता चैव हस्तिसत्त्वा प्र[16]कीर्तिता ॥ ११७ ॥

---

१. 'एतत्पद्यार्धं का. मु. पुस्तके नास्ति ।' २. 'चिर इष्टेषु हर्षं च क्रमज्ञत्वादुपैति या ।' मु. ३. 'प्रदीर्घशायिनी चैव ज्ञेया यक्षाङ्गनान्वया ।' का-मु. ४. 'तुल्यमानापमाना च परुषत्वक् खरस्वना ।' का. ५. 'व्यालसत्त्वाथ पिङ्गदृक्' का. ६. 'अहंकारविवर्जिता' का. ७. 'सत्त्वमाश्रिता' का. ८. 'हंसबाल्यधनुर्हृष्टा' मु., 'संहताल्पतनुर्धृष्टा' का. ९. 'वृक्षागमरतिप्रिया' मु., 'वृक्षारामवनप्रिया' का. १०. 'मालामधुपकारं तु नित्यं या च कुमन्यते । (?) मु., ११. 'प्रसह्य' का. १२. 'वानरं सत्त्वमाश्रिता' का. १३. 'मांसलोपचयान्विता' का. १४. 'गन्धमाल्याशयप्रिया' मु. १५. 'जलौघनयनप्रिया' मु. १६. 'रतप्रिया' का.

स्वल्पोदरी म(भ?)ग्ननासा तनुजङ्घा वनप्रिया।
चल[1]विस्तीर्णनयना चपला शीघ्रगामिनी ॥ ११८ ॥
परि[2]त्रासपरा भीरू रोमशा[3] गीतलोभिनी।
कोपना य(च?)लसत्त्वा[4] च मृगसत्त्वाङ्गना स्मृता ॥ ११९ ॥
दीर्घपीनोन्नतोरस्का[5] चपलातिनिमेषिणी[6]।
बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया ॥ १२० ॥
लम्बोष्ठी स्वेदबहुला किंचिद्विकटगामिनी।
कृशोदरी पुष्पफलवर्णा[7]शुकबहुप्रिया ॥ १२१ ॥
उद्बद्धकटिपार्श्वा च खरनिष्ठुरभाषिणी।
अ[8]त्युन्नतकटिग्रीवा भवेदुष्ट्री वनप्रिया ॥ १२२ ॥
स्थूलशीर्षाञ्चितग्रीवा[9] दारितास्या महास्वना।
ज्ञेया मयूरसत्त्वा[10] च क्रूरा मत्स्यगुणैर्युता ॥ १२३ ॥
स्थूलजिह्वोष्ठवदना[11] रूक्षत्वक् कटुभाषिणी।
रतियुद्धप्रिया[12] हृष्टा नखदन्तक्षतप्रिया ॥ १२४ ॥
सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी।
सरोषा बह्वपत्या च खरसत्त्वा प्रकीर्तिता ॥ १२५ ॥
दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता।
सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ॥ १२६ ॥
कृष्णदन्तोत्कटमुखी पीवरोरुशिरोरुहा।
हीनाचारा बह्वपत्या सौकरं सत्त्वमाश्रिता ॥ १२७ ॥
स्थिरा विभक्तपार्श्वोरुकटिपृष्ठशिरोधरा।
सुरूपा[13] दानशीला च ऋजुस्थूलशिरोरुहा[14] ॥ १२८ ॥

१. 'रक्तविस्तीर्णनयना' का. २. 'परिवासपरा' का. ३. 'भीरुर्गीतवादा' का. ४. 'कोपना स्थिरसत्त्वा' का. ५. '°न्नतोरस्यु' (?) मु. ६. 'निर्निमेषिणी' का. ७. 'फुल्लफललवणाम्लकटुप्रिया' का. ८. 'अभ्युन्नतखरग्रीवा उष्ट्रसत्त्वाटवीप्रिया।' का. ९. 'स्थिरग्रीवा' का. १०. 'मकरसत्त्वा' का. ११. 'जिह्वोष्ठरसना' का. १२. 'रतियुद्धकरी' का. १३. 'शु(सु?)भगा' का. १४. 'शिरोरुजा (हा')' का.

कृशा च[1] चलचित्ता च स्निग्ध[2]वाक् शीघ्रगामिनी ।
कामक्रोधपरा नित्यं हय[3]सत्त्वा प्र[4]कीर्तिता ॥ १२९ ॥
स्थूलपृष्ठास्थि[5]दशना स्निग्धत्वङ्मधुरा च या ।
खररोमाञ्चिता रौद्री[6] लोकद्विष्टा रतिप्रिया ॥ १३० ॥
किंचिदुन्नतवक्त्रा च जलक्रीडावनप्रिया ।
बृहल्ललाटा[7] सुश्रोणी माहिषं सत्त्वमाश्रिता[8] ॥ १३१ ॥
उद्बुद्धगात्रनयना विजृम्भणपरायणा ।
दीर्घान्तवदना[9] स्वल्पा[10] पाणिपादविभूषिता ॥ १३२ ॥
उच्चैः[11]स्वरालपनिद्रा च क्रोधना बहुभाषिणी ।
हीनाचारा कृतज्ञा च श्व[12]शीला परिकीर्तिता[13] ॥ १३३ ॥
पृथु[14]पीनोन्नतश्रोणी तनुजङ्घा सुहृत्प्रिया ।
संक्षिप्तपाणिपादा च इष्टा[15]रम्भा प्रजाहिता ॥ १३४ ॥
पितृदेवार्चनरता शुचिसत्त्वा[16] गुरुप्रिया ।
स्थिरा परिक्लेशसहा गवां सत्त्व[17]मुपाश्रिता ॥ १३५ ॥
कृशातनुभुजोरस्यो(स्का ?) नि[18]ष्टब्धतरलोचना ।
संक्षिप्तपाणिपादा च रूक्षा[19] रोमसमाञ्चिता ॥ १३६ ॥

---

१. 'मूढा चपलचित्ता च' का. २. 'तीक्ष्णवाक्' का. ३. 'चैव' का. ४. 'हय-सत्त्वाङ्गना स्मृता' का. ५. 'तनुपार्श्वोदरस्थिरा' का. ६. 'रौद्रा' का. ७. '°ललाट-सुश्रोणी' का. ८. इतोऽग्रे का. मु. पुस्तके—

'कृशा तनुभुजोरस्का विष्टब्धेतरलोचना ।
संक्षिप्तपाणिपादा च सूक्ष्मरोमसमाचिता ॥
भयशीला जडोन्मत्ता बह्वपत्या वनप्रिया ।
चञ्चला शीघ्रगमना ह्यजाशीलाङ्गना स्मृता ॥'

अग्रिमपद्यद्वयन्नैव. ९. 'दीप्रालपवदना' का. १०. 'स्वल्पपाणिपादविभूषणा' का. ११. 'उच्चैःस्वरा स्वल्पनिद्रा' का. १२. 'स्व(श्व)लीला' मु. १३. 'साश्वशीला प्रकीर्तिता' का. १४. 'मधु (?) पीनोन्नतश्रोणि°' मु. १५. 'दृढारम्भा' का. १६. 'नित्य-शौचा' का. १७. 'सत्त्वमुपाश्रिता' का. १८. 'विष्टब्धे°' का. १९. 'सूक्ष्मरोम-समाचिता' का.

भयशीला जलोद्विग्ना[1] बह्वपत्या ध(व?)नप्रिया[2] ।
चञ्चला शीघ्रगमना ह्यजाशीलाङ्गना स्मृता ॥ १३७ ॥
विज्ञाय च यथासत्त्वं उपसर्पेद् यथा[3]गुणम् ।
उपचारो यथासत्त्वं प्रयुक्तो[4] हर्षवर्धनः ॥ १३८ ॥
महा[5]नप्यन्यथा युक्तो नैव तुष्टिकरो भवेत् ।
यथा संप्रार्थिता[6] बाह्यरतिः समुपजायते ॥ १३९ ॥
स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते ।
धर्मार्थं[7] हि तपश्चर्या सुखार्थं धर्म इष्यते ॥ १४० ॥
सुखस्य मूलं प्रमदास्तासु संभोग इष्यते ।
कामोपभोगो द्विविधो नाट्यधर्मे विधीयते ॥ १४१ ॥
बाह्यश्चाभ्यन्तरश्चैव नारीपुरुषसंश्रयैः[8] ।
आभ्यन्तरः पार्थिवानां कर्तव्यः स च नाटके ॥ १४२ ॥
बाह्यो वेश्याङ्गनानां[9] तु स च[10] प्रकरणे भवेत्[11] ।
त्रिविधा[12] प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा ॥ १४३ ॥
बाह्या चाभ्यन्तरा चैव स्याद् बाह्याभ्यन्तरा परा ।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गनाकृते ॥ १४४ ॥
कृतशौर्या[13][14] च या नारी सा बाह्याभ्यन्तरा स्मृता ।
अन्तःपुरोपचा [ रेषु[15] कुलजा कन्यकापि वा ॥ १४५ ॥
नहि राजोपचारेषु कुलजा कन्यकापि वा ।
नहि राजोपचारेषु बाह्यस्त्रीभोग इष्यते ॥ १४६ ॥

---

१. 'जडोन्मत्ता' का. २. 'वनप्रिया' का. ३. 'ततो बुधः' का. ४. 'स्त्रीणामल्पोऽपि हर्षदः' का. ५. 'महानम्य (प्यू?) नया' मु. ६. 'यथा संप्रार्थिताया' का. ७. 'संभवः' का. ८. 'स च कार्यस्तु' का. ९. 'वेश्याकृतश्चैव' का. १०. 'तु' का. ११. अत्र— 'तत्र राजोपभोगं तु व्याख्यास्याम्यनुपूर्वशः ।
उपचारविधिं सम्यक् कामसूत्रसमुत्थितम् ॥'
इत्यधिकं का-पुस्तके. १२. 'विविधा' का. १३. 'स्मृता' का. १४. 'कृत' इति त्रुटितं मु. पुस्तके. १५. इतःप्रभृति १५०॥ श्लोकपर्यन्तं कोष्ठनिबद्धः पाठः का-पुस्तके.

आभ्यन्तरो भवेद् राज्ञो बाह्ये बाह्यजनस्य वा ।
दिव्यवेश्याङ्गनानां हि राज्ञा भवति संगमः ॥ १४७ ॥
कुलजानां मतं यच्च तज् ज्ञेयं कन्यकास्वपि ।
या चापि वेश्या साप्यत्र यथैव कुलजास्तथा ॥ १४८ ॥
इह कामसमुत्पत्तिर्नानाबीजसमुद्भवा ।
स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा ॥ १४९ ॥
श्रवणाद् दर्शनाद् रूपादङ्गलीलाविचेष्टितैः ।
मधुरैः संप्रलापैश्च कामः समुपजायते ॥ १५० ॥
ततः कामयमानानां नृणां स्त्रीणामथापि वा ।]
कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् ॥ १५१ ॥
[ रूप[1]गुणादिसमेतं कलादिविज्ञानयौवनोपेतम् ।
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति ॥ १५२ ॥
ललिता चलपक्ष्मा च सास्रा मुकुलितेक्षणा ।
स्रस्तोत्तरपदा चैव काम्या दृष्टिर्भवेदिह ॥ १५३ ॥
पलितान्ता सलालित्यसम्मितैर्व्यञ्जितैः सदा ।
दृष्टिः सा ललिता नाम स्त्रीणामर्धविलोकने ॥ १५४ ॥
ईषत्संरक्तकण्ठश्च स्वेदबिन्दुविचित्रितः ।
प्रस्यन्दमानरोमाञ्चो मुखरागस्तु कामजः ॥ १५५ ॥]
काम्ये[2]नाङ्गविकारेण सकटाक्षै[3]र्निरीक्षितैः ।
तथाभरणसंस्पर्शा[4]त् कर्णकण्डूयना[5]दपि ॥ १५६ ॥
अङ्गुष्ठाग्रविलेखेन[6] स्त[7]नाभिप्रदर्शनात् ।
नखनिस्तोदनाच्चापि केशसंयमनादपि ।
वेश्यां[8]मेवंविधैर्भावैर्लक्षयेन्मदना[9]तुराम् ॥ १५७ ॥

---

१. इतःप्रभृति श्लोकपर्यन्तं कोष्टकबद्धः पाठः का-पुस्तकेऽधिकः. २. 'कान्ताङ्ग…विकारेण' मु. ३. 'मकाराक्षनिरीक्षणैः' का. ४. 'संस्पर्शौत्' का. ५. 'कण्डूयनादपि'. ६. 'अङ्गुष्ठाग्रेण लिखनात्' का. ७. 'तूर्ण (?)' मु. ८. 'वेश्या' मु. ९. 'मदनातुरा' का.

कुलजायास्तथा चैव प्रवक्ष्यामी[1]ङ्गितानि तु[2] ।
प्रहसन्ती च नेत्राणां[3] प्रू(प ?)तनं च परीक्षयेत् ॥ १५८ ॥
स्मयते[4] सा निगूढं च वाक्यं चा[5]धोमुखी वदेत् ।
स्मितोत्तरा[6] मन्दवाक्या खेदाकारनिगूहनी[7] ॥ १५९ ॥
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ।
एवंविधैः कामलिङ्गैर्[8]प्राप्तसुरतोत्सवा ॥ १६० ॥
दशावस्थागतं[9] कामं नानाभावं प्रदर्शय(ये)न्[10] (त्) ।
प्रथमे त्वभिलाषः स्याद् द्वितीये चिन्तनं भवेत् ॥ १६१ ॥
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ।
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ॥ १६२ ॥
उन्मादः सप्तमे ज्ञेयो भवेद् व्याधिस्तथाष्टमे[11] ।
नवमे जडता चैव[12] मरणं[13] दशमे भवेत् ॥ १६३ ॥
स्त्रीपुंसयोरेष विधिर्लक्षणं च विधीयते[14] ।
व्यवसायात् समारब्धः संकल्पे[15]च्छासमुद्भवः ॥ १६४ ॥
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ।
निर्याति[16] विशति च मुहुः करोति चा[17]कारमेव मदनस्य ॥ १६५ ॥
तिष्ठति च दर्शनपथे प्रथमस्थाने स्थिता[18] कामे ।
केनोपायेन सामान्यैः[19] [ कथं[20] वा संभवेन्मम ॥ १६६ ॥
[21]दूतीनिवेदितैर्भावैरिति चिन्तां विनिर्दिशेत् ।

---

१. 'विज्ञेयानी°' का. २. 'वै' का. ३. 'नेत्राभ्यां प्रततं च निरीक्षते' का. ४. 'स्मयते च निगूढं च' का. ५. 'चाधो' का. ६. 'स्मितास्त्वरा' का. ७. 'निगूहना' का. ८. 'अप्राप्तं (?)' मु. ९. 'देशस्थानगतं' मु. १०. 'नानाभावैः प्रकाशयेत्' का. 'नानाभावं प्रदर्शयन्' मु. ११. '°ष्टमः' का. १२. 'चैव' का. १३. 'दशमे मरणं' का. १४. निबोधत' का. १५. '°स्तत्काल्यस्य (?)' मु. १६. 'निर्गच्छति प्रविशति' का. १७. 'च' का. १८. 'स्थिते कामे' का. १९. 'संभ्रान्तिः' का. २०. '[ कथं वा-इत्यारभ्य, रसना ] इत्यन्तं पाठः कोष्ठान्तर्गतः क-पुस्तके त्रुटितः । २१. 'वाक्यैः' का.

आकेकरार्ध(क्षि ?)विप्रेक्षितानि वलयरसना ] परामर्शः ।
नीवीनाभ्योः संदर्शनं च कार्यं द्वितीये तु ॥ १६७ ॥
मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः ।
प्रद्वेषस्त्वन्यकार्याणामनुस्मृतिरुदाहृता ॥ १६८ ॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणि ।
विहस्ता न (?) चिन्तोपगतत्वात्तृतीयमेवं प्रयुञ्जीत ॥ १६९ ॥
अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षणैः ।
नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद्गुणकीर्तनम् ॥ १७० ॥
गुणकीर्तनोल्ल (ने तु) कुशलैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्या विरहविशुम्भै (?) रभिनययोगश्चतुर्थे तु ॥ १७१ ॥
आसने शयने वापि न कुप्यति न हृष्यति ।
नित्यमेवोत्सुका यस्मात् उद्वेगस्थानमेव तु ॥ १७२ ॥
चिन्तानिश्वासखेदेन हृद्दाहाभिनयेन च ।
तदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च ॥ १७३ ॥
इह स्थित इहासीन इहायापगते (?) मया ।
इति तैस्तैर्विलापेऽपि तैर्विलापं प्रयोजयेत् ॥ १७४ ॥
उद्विग्नात्यर्थमौत्सुक्यादरत्या च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमापि हि (?) ॥ १७५ ॥

........................................................

प्रद्वेष्टि चापरान् पुंसो यत्रोन्मादः स उच्यते ॥ १७६ ॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं नि[:]श्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥ १७७ ॥
सामघनादि (?) साभोगैः काम्यैः संप्रेक्षणैरपि ।
सर्वैरवशीकरणाद्व्याधिः समुपजायते ॥ १७८ ॥

१. 'आकेकरार्ध' मु., 'आकेकराक्षि' का. २. 'रशना' का. ३. 'नीवीनाभ्यूरूणां स्पर्शः कार्यो' का. ४. 'तृतीयमेव' का. ५. '°घनारिसोभोगैः' (?) ख.

शुध्यति (?) हृदयं कापि प्रयाति शिरसस्त्ववेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं त्वभिनयेत् ॥ १७९ ॥
पृष्टा[1] न किंचित् प्रब्रूते न शृणोति न पश्यति ।
हा कष्टाष्टमतूष्णीका जडतायां गतस्मृतिः ॥ १८० ॥
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ।
श्वासाग्रे स्थाननासेव जडताभिनये भवेत् ॥ १८१ ॥
सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥ १८२ ॥
एवं स्थानानि कार्याणि कामतन्त्रसमीक्षया ।
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ॥ १८३ ॥
विविधैः पुरुषोऽप्येवं विप्रलम्भसमुद्भवैः ।
भावैरेतानि कामस्य नानारूपाणि योजयेत् ॥ १८४ ॥
एवं कामयमानानां स्त्रीणां नृणामथापि वा ।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥ १८५ ॥
ललिता चलपक्ष्मा च साश्रुर्मुकुलितेक्षणा ।
स्त्रस्तोत्तरे (र ?) मुपक्रान्ता काम्या इ(द)ष्टिर्भवेदिदम् ॥ १८६ ॥
ईषत्संरक्तगण्डस्तु सखेदलयचित्रितः ।
प्रस्पन्दमानरोमाञ्चो युगराग इहेष्यते ।
चिन्तातित्रासखेदेन हृद्दाहाभिनयेन च ॥ १८७ ॥
तथानुगुणना (नी ?)यापि तथैवोर्ध्वनिरीक्षणात् ।
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ॥ १८८ ॥
स्पर्शनान्मोटनाच्चापि तथा पापा समाश्रयेत् ।
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ॥ १८९ ॥
कामस्थानानि सर्वाणि भूयिष्ठं संप्रयोजयेत् ।
स्रजो भूषणगन्धान्य (?) गृहाण्युपय( व ?) नानि वै ॥ १९० ॥

---

1. 'मृष्टा' ख.

कामाग्निना दह्यमाना [:] शीतलानि निषेवते ।
प्रदह्यमानकामार्तो बहुस्थानसमन्वितः ॥ १९१ ॥
प्रेषयेत्कामदूतीं तु स्वावस्थादर्शनं प्रति ।
संदेशये (?) मे दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।
तस्येयं समयस्थेति कथयेद्विनयेन सा ॥ १९२ ॥
अथ वेदितभावार्थै रत्युपायं विचिन्तयेत् ।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिभिः ॥ १९३ ॥
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ।
अभ्यन्तरगतं सम्यक् कामतन्त्रे समुपस्थितम् ॥ १९४ ॥
सुखदः स्वकृतान् भावान् नानाशीलसमुत्थितान् ।
यान् यान् प्रकुरुते राजा तांस्तांल्लोका(को ?)ऽनुवर्तते ॥ १९५ ॥
न दुर्लभः पार्थिवानां स्त्यर्थ(?)माज्ञाकृतो गुणः ।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ॥ १९६ ॥
बहुमानेन देवानां वल्लभानां भयेन च ।
प्रच्छन्नकामिनां राज्ञां कार्यं परिजनं प्रति ॥ १९७ ॥
यद्यप्यस्ति नृपाणां तु कामतन्त्रमनेकधा ।
प्रच्छन्ने कामिनं वक्तुं तद्धि रमि(ति ?) करं भवेत् ॥ १९८ ॥
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते ।
दुर्लभत्वं च यत्रार्या सा कामस्य रतिः परा ॥ १९९ ॥
राज्ञानन्तःपुरजने दिवसां(सं ?)भोग(?) इष्यते ।
वासोपचारो यच्चैव स रात्रौ परिकीर्तितः ॥ २०० ॥
परिपाट्या फलार्थे वा न च प्रमद एव च ।
दुःखे चैव प्रमादे च षडेते वासकाः स्मृताः ॥ २०१ ॥
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः ।
वेश्यानामपि कर्तव्यमिष्टानां योगसर्पणम् ॥ २०२ ॥
तत्र वासकसज्जा वा विरहोत्कण्ठितापि वा ।
स्वाधीनपतिका वापि कलहान्तरितापि वा ॥ २०३ ॥

खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः ॥ २०४ ॥
उचिते वासके या तु रतिसम्भोगलालसा ।
मङ्गलं कुरुते हृष्टा सा वै वासकसज्जिता[1] ॥ २०५ ॥
अनेककार्यव्यासङ्गाद् यस्या नागच्छति प्रियैः[2] ।
तस्यानुगमदुःखार्ता विरहोत्कण्ठिता मता ॥ २०६ ॥
सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः ।
सामोदे गुणसंयुक्ता भवेत्स्वाधीनभर्तृका ॥ २०७ ॥
ईर्ष्याकलहविक्रान्तौ(तो) यस्या नागच्छति प्रियः ।
आमर्षवेषसंतप्ता कलहान्तरिता भवेत् ॥ २०८ ॥
व्यासङ्गादुचिते यस्या नासकेनाग(तः) प्रियः ।
तदनागमनार्ता तु खण्डितेत्यभिधीयते ॥ २०९ ॥
तस्माद्भूतां प्रियः प्राप्य गत्वा संकेतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा मता ॥ २१० ॥
गुरुकार्यान्तरवशाद् यस्या विप्रोषितः प्रियः ।
सा रूडा(ढा ?)लककेशान्ता भवेत् प्रोषितभर्तृका ॥ २११ ॥
हित्वा लज्जां समाकृष्टा मदेन मदनेन या ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥ २१२ ॥
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रया [:] ।
एतासां ये च ( यच्च ) वक्ष्यामि कामतन्त्रमनेकधा ॥ २१३ ॥
चिन्तानिःश्वासखेदैश्च हृदयाभिनयेन च ।
सखिना (?) संप्रलापैश्च आत्मावस्थावलोकनैः ॥ २१४ ॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च ।
निर्भूषणाङ्गी विमृजा दुःखेन रुदितेन च ॥ २१५ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।

१. 'वासकदीक्षिता' ख. २. 'प्रिया' इति का.

तथा प्रोषितकान्ता च भावैरेवं (व) प्रयोजयेत् ॥ २१६ ॥
विचित्रोज्ज्वलवेषा च प्रमोदोद्द्योतिताननाः ।
उदीर्णशोभातिशया कार्या स्वाधीनभर्तृका ॥ २१७ ॥
वेश्यायां कुलजा(टा)यां वा प्रेष्यायां वा प्रयोक्तृभिः ।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥ २१८ ॥
सामदानादुपेष्टा ( ? ) च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः ॥ २१९ ॥
सली[1] वा (?) खेदगात्रेषु त्रस्ता विप्रेक्षिताननाः ।
अवगुण्ठनसंवीता गच्छेच्च कुलजाङ्गना ॥ २२० ॥
मदस्त्वभिनयालापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत्प्रेष्याङ्गनानया ॥ २२१ ॥
स्यादयं शेषितो[2] (?) व्यक्तं पश्येत्सुप्तं प्रियंवदा ।
प्रिया यथोत्थापयति तथा वक्ष्याम्यहं पुनः ॥ २२२ ॥
अलंकारेण कुलजा वेश्या गन्धैस्तु शीतलैः ।
प्रेष्या नु (तु ?) वस्त्रव्यजनैर्बोधये(त्) स्थायिनं प्रियम् ॥२२३॥
कुलाङ्गनानामेवायं प्रोक्तः कामाश्रयो विधिः ।
सर्वावस्थानुभावं तु यस्माद् भवति नाटकम् ॥ २२४ ॥
भयकामप्रयेता (?) या क्रुद्धा वा वामनागमे ।
सत्यादेशै[3]रुपायैस्तु ना(वा?)सकं संप्रकल्पयेत् ॥ २२५ ॥
नानालङ्कारमाभ्या(ल्या)भिधूपगन्धाम्बराणि च ।
नित्यं सुखान्युदात्तानि सेवेत मदनान्वितः ॥ २२६ ॥
न तथा भवति विशेषो मदनवशः कामिनीमलभमानः ।
द्विगुणोपजातहर्षो भवति यथा संगतः प्रियया ॥ २२७ ॥
विलासभावेभङ्गभ(?)वाक्यलीलाविशेषमाधुर्यगुणोपपन्नः ।
परस्परप्रेमनिरीक्ष (क्षि ?) तेन समागमः कामकृतस्तु कार्यः ॥२२८॥

---

१. 'सलीना' ख. २. 'शासितो' ख. ३. 'समादेशै' ख.

ततः प्रवृत्ते मदने उपचारसमुद्भवे ।
वासोपचारः कर्तव्यो नायकागमनं प्रति ॥ २२९ ॥
गन्धमाल्यं गृहीत्वा तु चूर्णद्वारस्तथैव च ।
स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् ॥ २३० ॥
वासोपचारे[1] नात्यर्थः (र्थं) भूषणग्रहणं भवेत् ।
रसनानूपुरप्रायं स्वनवच्च प्रशस्यते ॥ २३१ ॥
नाम्बरग्रहणं रङ्गे नानुरङ्गे विलेपनम् ।
नाञ्जनं नानुरागं च न च केशोपसंग्रहम् ॥ २३२ ॥
नानावृ[2]तानेकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि प्रकुर्यात् प्रमदा क्वचित् ॥ २३३ ॥
अधमानां भवेदेवं विधिः प्रकृतिसंभवः ।
तासामपि ह्यसभ्यं यत्तत्तत्कार्यं प्रयोक्तृभिः ॥ २३४ ॥
प्रमदाभिर्नरैर्वापि नानाभावं तु नाय(ट ?)के ।
भूषणग्रहणं कार्यं पुष्पाणां ग्रहणं तथा ॥ २३५ ॥
गृहीतमण्डना किंचित् प्रतीच्छेत प्रियागमम् ।
लीलया मण्डनं[3] शेषं कुर्याद् यत्र विरुध्यते ॥ २३६ ॥
वीक्ष्य (क्ष ?) माणा प्रियापत्यं (?) शृणुयान्नालिकाध्वनि [म्] ।
श्रुत्वा तु नालिकानादं नायकागमविक्लवा ।
वेपन्ती (?) त्रस्तहृदया तोरणाभिमुखी व्रजेत् ॥ २३७ ॥
वामेन तोरणं आद्यं कवाटं दक्षिणेन तु ।
हस्तेन संमुखीभूय उदीक्षेत प्रियागमम् ॥ २३८ ॥
वेमां(?) शङ्कां भये चैव कुर्यात्तोरणसंस्थितम् ।
अइन्द्रारमणं (?) सूर्यविषस्यां (?) तु क्षणे भवेत् ॥ २३९ ॥
दीर्घं चैव विनिःश्वस्य नयनाम्बु निपातयेत् ।
सत्र (त्र ?) च हृदयं कृत्वा विसृजेदङ्गमासने ॥ २४० ॥

---

१. '°चारो' ख. २. 'नान्नावृता' ख. ३. 'मण्डने' ख.

व्याक्षेप्याद्विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणैश्चापि शुभाशुभसमुत्थितैः ॥ २४१ ॥
गुरुकार्येण मित्रैर्वा ( मन्त्रैर्वा ? ) मन्त्रिणां राज्यचिन्तया ।
अनुबद्धः प्रियः किंतु धृतो वल्लभयापि वा ॥ २४२ ॥
उत्पातान्निर्दिशेच्चैव शुभाशुभसमुत्थितान् ।
निमित्तै राज्यसंस्थैस्तु स्फुरितैर्भेदितैस्तथा ॥ २४३ ॥
शोभनेषु तु कार्येषु निमित्तं वा मतः प्रिया (यम्) ।
दुरुक्तेषु कार्येषु निमित्तं दक्षिणं भवेत् ॥ २४४ ॥
सव्यं नेत्रं ललाटं भ्रूरधरोष्ठस्तथैव च ।
ऊरुर्बाहुः स्तनश्चैव स्फुरेद् यदि समागमम् (:) ॥ २४५ ॥
अतोऽन्यथा स्पन्दपाने दुरितं दक्षिणे भवेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत् क्षणं ततः ॥ २४६ ॥
अप्राप्तेऽथैव कर्तव्यः (?) प्रिये गण्डार्पितं (तः) करः ।
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ॥ २४७ ॥
ततश्च शोभनं पश्यन्निमित्तं वै प्रियागमे ।
सूच्यो नायिकयासन्नो गत्वा घ्राणेन नायकः ॥ २४८ ॥
दृष्ट्वा चोत्थाय हृष्टाङ्गी प्रत्युद्गच्छेद्धि नायकम् ।
यदि स्यादपराद्धस्तु ततस्तैस्तैरुपक्रमैः ॥ २४९ ॥
उपालम्भकृतैर्वाक्यैरभिभाष्यस्तु नायकः ।
मानापमानसंमोहैरवहित्थैर्यथाक्रमम् ॥ २५० ॥
वचनस्य समुत्पत्तिः स्त्रीणां गाथाकृता भवेत् ।
विश्रम्भस्नेहरागेषु संदेहे प्रणये तथा ॥ २५१ ॥
परितोषे च हर्षे च दाक्षिण्याक्षेपपातने ।
धर्मार्थकामसंयोगेषु प्रच्छन्नवचनेषु च ॥ २५२ ॥
हास्ये कुतूहले चैव संभ्रमव्यसने तथा ।
हास्योपस्थानसंप्राप्तौ दोषोपक्षेपनिह्नवे ॥ २५३ ॥

अनाभाष्योऽपि संभाष्यः प्रिययेतिस्तु (तु) कारणैः ।
यत्र स्नेहो भयं तत्र यत्रेष्यति च मन्मथः ॥ २५४ ॥
चतस्रो योनयस्तस्याः कीर्त्यमाना न (नि ?)बोधत ।
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ॥ २५५ ॥
एतेषां च समुत्पत्तिः प्रयोगं च निबोधत ।
निद्राखेदालसगतिं सचिह्नं सरसव्रणम् ॥ २५६ ॥
एवंविधं प्रियं दृष्ट्वा वैमनस्यं भवेत् स्त्रियाः ।
तीव्रा सूचितवचनाद् रोषा (द्) बहुशः प्रकम्पमानोष्ठी
साध्विति सुष्ठ्विति वाक्यैः शोभनमित्यभिनयं युज्यात् ॥ २५७ ॥
बहुशो वार्यमाणोऽपि प्रत्यस्मिन्नेव इष्यते ।
संहर्षात्तत्र मात्सर्याद् व्यलीकं तु भवेत् स्त्रियाः ॥ २५८ ॥
कृत्वोरसि वामकरं दक्षिणहस्तं रुषा विधुन्वाना ।
चरणविनिक्षेपणरसितत्र कुर्वीत साभिनयम् (?) ॥ २५९ ॥
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्यात् तद्विप्रियमिति स्त्रियाः ॥ २६० ॥
दूतीलेखप्रतिवचनभेदनक्रोधहसितरुदिते च ।
विप्रियकरणेऽभिनयः सशिरःकम्पः प्रयोक्तव्यः ॥ २६१ ॥
प्रतिपक्षविकाशात्तु यः सौभाग्यविकत्थनः ।
उपसर्पेत्सुचिह्नस्य पर्युंस्तत्र भवेत् स्त्रियाः ॥ २६२ ॥
वलयपरिवर्तनेन च सशिथिलमुपक्षेपणेन रसनयोः ।
मंधुस्यभिनेतव्यः (?) सशङ्कितं चास्य मोक्षेऽस्य ॥ २६३ ॥
दृष्ट्वा स्थितं प्रियतमं साशङ्कं सापराधमतिलज्जम् ।
ईर्ष्यावचनसमुत्थैः खेदयितव्यो ह्युपालम्भैः ॥ २६४ ॥
न च निष्ठुरमतिभाष्यो न चास्य (त्य ?) तिक्रोधनस्तु परिहार्यः ।
बाष्पोन्मिश्रैर्वचनैरात्मोपन्यासससंयुक्तैः ॥ २६५ ॥

---

१. 'मन्युः' इति भवेत् । २. 'मन्युरभिनेतव्यः' इति भवेत् ।

मध्याङ्गुल्योष्ठाग्रविष्पवात् (?) पाणिना ह्युरःस्थेन ।
उद्वर्तितनेत्रभावैरभिवीक्षणैश्चापि ॥ २६६ ॥
कटिहस्तनिविष्टस्य विच्छिन्नतया तथाङ्गुलैः करणात् ।
मूर्ध[1]भ्रमणनिकुञ्चितनखादिसंदर्शनाच्चापि ॥ २६७ ॥
अवहित्थवीक्षणेन च सा[2]ङ्गुलिभङ्गेन तर्जनैर्ललितैः ।
एभिर्भावविशेषै[3]स्याभिनयः प्रयोक्तव्यः ॥ २६८ ॥
शो[4]भसे साधु [5]दृष्टोऽसि गच्छ त्वं [6]किं विलम्बसे ।
मा मां स्प्राक्षीः प्रियां [7]याहि तव या हृदि संस्थिता ॥ २६९ ॥
गच्छेत्युक्त्वा परा[8]वृत्त्ये(त्त्य?) विनिवृत्तोत्तरेण तु ।
केनचिद् [9]व्यसनार्थेन प्रहर्षं यो[10]जयेत् पुनः ॥ २७० ॥
रभसग्रहणाच्चापि वस्त्रे [11]हस्तेऽथ मूर्धनि ।
[12]कार्यं प्रणमनं न (ना)र्या ह्यपराधं समीक्ष्य तु ॥ २७१ ॥
हस्ते वस्त्रेऽथ केशान्ते नार्याप्यथ गृहीतया ।
कान्तमेवोपसर्पन्त्या कर्तव्यं मोक्षणं शनैः ॥ २७२ ॥
गृहीतयाथ केशान्ते हस्ते वस्त्रेऽथवा पुनः ।
यथा प्रियो न पश्येद्धि स्पर्शो ग्राह्यस्तथा स्त्रिया ॥ २७३ ॥
पादाग्रस्थितया नार्या तथैवाकुञ्चिताङ्गया ।
अश्वक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः ॥ २७४ ॥
विमु[13]च्यमाने केशान्ते संजातस्वेदलेशया ।
[14]हुं हुं मुञ्चापसर्पेति [15]वासःस्पर्शालसाङ्गया ॥ २७५ ॥
गच्छेति रोषवाक्येन गत्वा[16]त्र विनिवृत्य च ।

---

१. 'मूर्धभ्रमणनिह्नुवन वियतः संदर्शनायापि ।' मु. २. 'अवहित्थवीक्षणैरप्यङ्गुलिभङ्गैश्च' का. ३. 'एभिर्भावविशेषैरचयेतेस्त्वभिनयः कार्यः ।' मु. ४. 'शोभने' का. ५. 'इष्टोऽसि'. ६. 'कस्माद्विलम्बसे' मु. ७. 'प्रिया य……तव' मु. ८. 'पारावृत्य मुनयः प्रतिनित्य च' मु. ९. 'वचनार्थेन प्रहर्षं संप्रयोज' मु. १०. वचनार्थेन येत्' मु. प्रहर्षं संयोजयेत् मु. ११. 'हस्ते वस्त्रे च मूर्धनि' मु. १२. 'कार्यं प्रसादनं नार्या अपराधं समीक्ष्य च' मु. १३. 'अमुच्यमाने' का. १४. 'ॐ ॐ' ख. १५. 'वाच्यः' का. १६. 'प्रतिनिवृत्त्य च' का.

केनचिद्वचनार्थेन त्वालापं[1] संप्रयोजयेत् ॥ २७६ ॥
विधूननेन[2] हस्तस्य हुंकारं संप्रयोजयेत्[3] ।
स चावधूनने कार्यः शपथे[4] व्याज एव च ॥ २७७ ॥
अक्ष्णोः संवरणं कार्यं मृष्टतल्पोपगूहनम्[5] ।
नार्यास्त्वपहृते वस्त्रे दीपच्छादनमेव[6] च ॥ २७८
तांदृशे[7] दयितव्येस्तु(तु)ययेत् (यावत्) पादगतो भवेत् ।
ततश्चतुर(रण ?)योः[8] पाते कुर्याद्दूतीनिरीक्षणम् ॥ २७९ ॥
स्पर्शस्य[9] ग्रहणं कृत्वा नायिका नायकं ततः ।
उत्थाप्य[10] विधिना हृष्टा शयनाभिमुखी भवेत् ॥ २८० ॥
एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गार[11]रसंयुक्तरतिसंभोग[12]कारणम् ॥ २८१ ॥
यदा चकाश[13] पुरुषं(?) परस्थवचनाशयम् ।
नयेत्का[14]व्ये तदा[15]म्येष तथाह्येष(?) कर्तव्योऽभिनयः स्त्रियाः[16] ॥२८२॥
यदन्तःपुरसंबद्धं[17] काव्यं[18] नाटकसंश्रयः ।
शृङ्गाररससंयुक्तं तदा[19]प्येष विधिर्भवेत् ॥ २८३ ॥
न कार्यं शयनं रङ्गे[20] नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन छेदमन्त्रं[21] प्रयोजयेत् ॥ २८४ ॥
यदा खेपेद[22]र्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गना[23]दीनि रङ्गमध्ये न कारयेत् ॥ २८५ ॥

---

१. 'चालापं योजयेत् पुमान्' का. २. 'विधूननं च' का. ३. 'स्त्री प्रयाजयेत्' का. ४. 'शपथैर्वाच्य एव च' का. ५. 'पृष्ठतश्चोपगूहनम्' का. ६. 'नीवीच्छादनमेव च' का. ७. 'तावत्खेदयितव्यस्तु यावत्पादहतो भवेत्' का. ८. 'ततश्चरणयोः' का. ९. 'तथाप्यालिङ्गयेदेनं' का. १०. 'उत्थाय' क. 'रतिभोगहता मृष्टा' का. ११. '°संयुक्तो' का. १२. 'संयोग' का. १३. 'काशपुरुषं' का. १४. 'भवेत्कार्यं' का. १५–१६. 'प्येष' इति भवेत्. १७. 'संबन्धं' का. १८. 'कार्यं भवति नाटके' का. १९. 'तत्राप्येष' का. २०. 'रङ्गे' का., 'रङ्गैः' मु. २१. 'अङ्कच्छेदो' का. २२. 'न विश्वसेदविश्वस्तम्' इतिवद्यथाकथंचित्साधु. २३. 'चुम्बनालिङ्गनं चैव तथा गुह्यं च यद्भवेत्' का.

दन्तं नखक्षतं छेद्यं नीवीश्रं(स्रं)सनमेव च ।
स्तनाधरविमर्दं च रङ्गमध्ये न कारयेत् ॥ २८६ ॥
भोजनं सलिलक्रीडां तथा न(ल)ज्जाकरं तु यत् ।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत् ॥ २८७ ॥
पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥ २८८ ॥
वाक्यैः[1] सातिशयैर्हृद्यैर्मधुरैर्न तु निष्ठुरैः[2] ।
हितोपदेशसंयुक्तैः[3] प्राज्ञः[4] कुर्वीत नाटकम् ॥ २८९ ॥
एवमन्तःपुरगतः[5] कार्यस्त्वभिनयो बुधैः ।
समागमेऽथ नारीणां वाच्यानि मदनाश्रये ॥ २९० ॥
प्रियेषु वचनानीह यानि तानि निबोधत ।
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम्[6] (तः) ॥ २९१ ॥
नन्दनश्चेत्यभिजनि[7](?)वर्चनानि[8] भवन्ति हि ।
दुःशीलोऽथ दुराचारः शठो वामो विकत्थनः[9] ।
निर्लज्जो निष्ठुरश्चेति प्रियं क्रोधेऽभिनिर्दिशेत्[10] ॥ २९२ ॥
यो विप्रियं न कुरुते नाना[11](न चा ?)युक्तं प्रभाषते ।
तथार्जवसमाचारः प्रिय इत्यभिधीयते[12] ॥ २९३ ॥
अन्यनारीसमुद्भूतं चिह्नं यत्र[13] प्रदृश्यते ।
अधरे वा शरीरे वा स कान्त इति भाष्यते[14] ॥ २९४ ॥
संक्रुद्धो(ष्टो)ऽपि हि यो नार्या नोत्तरं[15] प्रतिपद्यते ।
परुषं वा न वदति विनीतः सोऽभिधीयते ॥ २९५ ॥

---

१. 'श्राव्यैः' का. २. 'नातिनिष्ठुरैः' का. ३. '°जननैः' का. ४. 'तज्ज्ञः कार्यं तु नाटकम्' का. ५. एतत्पद्यार्धं का-पुस्तके नास्ति. ६. 'जीवितम्' का. ७. '°त्यभिप्रेतो' का. ८. 'वेदनानि' ख. ९. 'विरूपकः' का. १०. 'प्रायः क्रोधेऽभिधीयते' का. ११. 'नचायुक्तं' का. १२. 'प्रिय इत्युच्यते बुधैः' का. १३. 'यस्य न दृश्यते' का. १४. 'भाव्यते' क. 'भण्यते' का. १५. 'नोत्तरोत्तरभाषणम्' का.

[1]हितैषी [2]रक्षणेत्यु(श ?)क्तो न मानी न च मत्सरी ।
सर्वकार्येष्वसंमूढः [3]स नाथ इति संज्ञितः ॥ २९६ ॥
सामदानार्थसंभोगैस्तथा लालनपालनैः ।
[4]नारीं निषेवते यस्तु स स्वामीत्यभिधीयते ॥ २९७ ॥
[5]नारीस्थितैरभिप्रायैर्निपुणं शयनक्रियाम् ।
करोति यस्तु [6]संभोगैः स [7]जीवित इति स्मृतः ॥ २९८ ॥
कुलीनो धृति[8]र्मान्दक्षो दक्षिणो वाग्[9]विशारदः ।
श्लाघनीयः सखीमध्ये [10]नन्दनः सोऽभिधीयते ॥ २९९ ॥
एते वचनविन्यासा [11]रतिप्रीतिकराः स्मृताः ।
तथा [12]चाप्रीतिवाक्यानि गदतो मे निबोधत ॥ ३०० ॥
निष्ठुरश्चासहिष्णु[13]श्च मानी धृष्टो विकत्थनः ।
अनवस्थितचित्त[14]श्च दुःशील इति [15]कथ्यते ॥ ३०१ ॥
ताडनं बन्धनं चापि यो विमृश्य समाचरेत् ।
तथा परुषवाक्यश्च दुराचारः स [16]उच्यते ॥ ३०२ ॥
वाचैव मधुरो यस्तु कर्मणा नोपपादयेत् ।
[17]योषितां कंचिदप्यर्थं स शठः परिकीर्तितः ॥ ३०३ ॥
वार्यते यत्र यत्रार्थे तं तमेव करोति यः ।
[18]विपरीतनिषेवी च स च वाम इति स्मृतः ॥ ३०४ ॥
सरसव्रणचिह्नो यः स्त्रीसौभाग्यविकत्थनः ।
अभिमानी तथा [19]स्तब्धो विकत्थन इति स्मृतः ॥ ३०५ ॥

---

१. 'हितैषी' इत्यादिपद्यं स्वामिलक्षणत्वेन 'सामदानार्थ' इत्यादिपद्यस्याग्रे वर्तते का-पुस्तके. २. 'शक्तो' का. ३. 'यः स स्वामीति कीर्तितः' का. ४. 'नारीं संभजते यस्तु सनाथ इति संज्ञितः ।' का. ५. 'नारीप्सितैः' का. ६. 'संभोगे' का. ७. 'जीवितः सोऽभिसंज्ञितः' का. ८. 'नीतिमान्' का. ९. 'वा विशारदः'. १०. 'नन्दनो नाम संज्ञितः' का. ११. 'रतिस्मृतिकराः' का. १२. 'च प्रीतिशक्यानि(?)' का. १३. 'चा सहिष्णुर्यो' का. १४. 'उत्तरोत्तरमानी च' का. १५. 'स्मृतः' का. १६. 'संज्ञितः' का. १७. 'योषितं' का. १८. 'भवेदभिनिषेवी च स' का. १९. 'स्तब्धः स विरूप इति स्मृतः' का.

वार्यमाणो दृढतरं यो नारी[1]मुपसर्पति ।
सचिह्नः सापराधश्च [2]स निर्लज्ज इति स्मृतः ॥ ३०६ ॥
सापराधस्तु रभसा नारीं सेवितुमिच्छति ।
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते ॥ ३०७ ॥
एते वचनविन्यासाः प्रियाप्रिय[3]विभाषिताः ।
नर्तकी[4]संश्रिताः कार्या बह्वोऽन्येऽपि नाटके ॥ ३०८ ॥
एष गीति[5]विधानेन सु[6]कुमारविधिर्भवेत् ।
[7]शृङ्गाररससंभूतो रतिसंभोगखेदजम् ॥ ३०९ ॥
यश्चैवाकाशपुरुषपरस्थवचनाश्रयम् ।
शृङ्गार एवमेव स्यात्तत्राप्येष क्रमो भवेत् ॥ ३१० ॥
यद्वा पुरुषसंबद्धं काव्यं भवति नाटकम् ।
[8]शृङ्गाररससंयुक्तं तत्राप्येष विधिर्भवेत् ॥ ३११ ॥
[9]एवमन्तःपुरगतं(गतः) प्रयोज्योऽभिनयो बुधैः ।
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः ॥ ३१२ ॥
नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः ।
[10]सुखकालः सदा नित्यं देवीनां ललिताश्रयः ॥ ३१३ ॥
[11]ईर्ष्या लिप्सा न च क्रोधो नासूया न [12]प्रसाधनम् ।
[13]दृश्यते देवपुंसा हि शृङ्गारे योषितां(तं) प्रति ॥ ३१४ ॥
यदा मानुषसंयोगो दिव्यानां योषितां भवेत् ।
[14]सर्वे एव तदा कार्या भावा मानुषसंश्रयाः ॥ ३१५ ॥

---

१. 'अभिसर्पति' का. २. 'स विलज्ज इति संज्ञितः' का. ३. 'विभूषिताः' का. ४. 'नानावस्थां समासाद्य विपरीतान् समाचरेत्' का. ५. 'गीतविधाने तु' का. ६. 'सुकुमारो विधिर्भवेत्' का. ७. 'शृङ्गारे' ख. 'शृङ्गाररस–'इत्यादिपद्यद्वयं का. पुस्तके नास्ति. ८. 'शृङ्गाररसवाच्यः स्यात्' का. ९. 'एवमन्तःपुरगते प्रयोज्याभिनयो' मु. १०. 'नित्यमेव सुखः कालः' का. ११. 'न चेर्ष्यानैव च क्रोधो' का. १२. 'प्रसादनम्' का. १३. 'ईर्ष्यते' मु. १४. 'तदा सर्वे प्रकर्तव्या ये भावा मानुषाश्रयाः ।' का.

शाप[1]भ्रंशात्तु दिव्यानामङ्गनानां यदा भवेत् ।
मा[2]नुषैः सह संयोगस्तदेवमुपसर्पणम् ॥ ३१६ ॥
पुष्पैर्भूषणजैः शब्दैरदृश्या[3] विपुलो(ला ?) भवेत् ।
पुनः संदर्शनं दत्त्वा क्षणादन्तर्हिता भवेत् ॥ ३१७ ॥
वस्त्राभरणमाल्यैस्तु लेखसंप्रेक्षणैरपि ।
ईदृशैरभ्युपगमैः समुन्मादस्तु नाट[4]कः(के ?) ॥ ३१८ ॥
उन्मादनात्समुत्पन्नः कामो रतिकरो भवेत् ।
स्वभावोपगतो यस्तु नानारत्यर्थभावकः ॥ ३१९ ॥
ये भावा मानुषाणां स्युः स्वजनं यच्च चेष्टितम् ।
त[6]त्सर्वं मानुषात्प्राप्य कर्तव्यं दैवतैरपि ॥ ३२० ॥
एवं राजोपचारो हि कर्तव्यो ह्यन्तराश्रयः ।
बाह्यमप्युपचारं च[7] व्याख्यास्याम्यथ कै(वै)शिकैः ॥ ३२१ ॥

इति भारतीये नाट्यशास्त्रे सामान्याभिनयो नामा[9]ध्यायो द्वाविंशतितमः ।

---

त्रयोविंशोऽध्यायः ।

विशेषयेत् कलाः सर्वा यस्मात्तस्मात्तु वैशिकः[10] ।
[11]वेश्योपचरणाद्वापि वैशिकः स उदाहृतः ॥ १ ॥
[12]यो हि सर्वकलोपेतः [13]सर्वशिल्पविचक्षणः ।
स्त्रीचित्तग्राहकश्चैव वैशिकः स भवेत् पुमान् ॥ २ ॥
गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुद्भवाः ।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥ ३ ॥
शास्त्रविच्छि[14]ल्पसंपन्नो रूपवान् प्रियदर्शनः ।

---

१. 'शापाद् भ्रंशस्तु' का. २. 'कार्यो मानुषसंयोगस्तथा चैवोपसर्पणम्' का. ३. 'अदृश्यात्रापि' का. ४. 'नाटके' का. ५. 'तु तद्गतं' का. ६. 'तत्सर्वं मानुषं प्राप्य कार्यं दिव्यैरपि द्विजाः ।' का. ७. 'तु' का. ८. 'वैशिके' का. ९. 'नाम चतुर्विंशोऽध्यायः ।' का. १०. 'कै(वै ?)शिके' इति क. ११. 'वेश्योपचारतो वापि वैशिकः परिकीर्तितः' इति ख. १२. 'वस्तुतौर्यकलोपेतः' का. १३. 'सर्वशिल्पप्रयोजकः' इति क. १४. 'शीलसंपन्नः' इति क.

विक्रान्तो धृति[1]मांश्चैव वयोवेष[2]गुणान्वितः ॥ ४ ॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
[3]आशङ्कितः प्रियाभाषी चतुरः सुभगः शुचिः ॥ ५ ॥
कामोपचारकुशलो दक्षिणो देशकालवित् ।
[4]नदीनवाक्यः स्मितवाग् वाग्मी [5]दक्षः प्रियंवदः ॥ ६ ॥
अलुब्धः संविभागी च श्रद्धानो दृढ[6]व्रतः ।
गम्यासु चाप्यविस्रम्भी मानी [7]चेति स वैशिकः ॥ ७ ॥
अनुरक्तः शुचिर्[8]दान्तो दक्षिणः प्रतिपत्तिमान् ।
भवेच्[9]छिद्राभिशा(धा ?)यी च वयस्यास्त[10]स्य षड्गुणाः ॥ ८ ॥
प्रतिवेश्या सखी दासी कुमारी [11]दारुशिल्पिका ।
धात्री पाखण्डिनी चैव दूत्यस्त्वी[12]क्षणिका तथा ॥ ९ ॥
[13]न जडं रूपवन्तं च नार्थवन्तं न चातुरम् ।
दूतं वापि हि दूतीं वा बुधः कुर्यात् कदाचन ॥ १० ॥
[14]प्रोत्साहनेषु कुशला मधुरकथा दक्षिणा च कालज्ञा ।
लडहा संवृतमन्त्रा दूतीत्येभिर्गुणैः कार्या ॥ ११ ॥
तथा प्रोत्साहनं कार्यं ना[15]नादर्शनकारणम् ।
यथोक्तकथनं चैव तथा भावप्रदर्शनम् ॥ १२ ॥
कुलभोगधनाधिक्यं कार्यं चैव विकत्थनम् ।

---

१. 'वृत्तिमांश्चैव' इति क. २. 'कुलान्वितः' इति क. ३. 'अशङ्कितः' क. ४. 'अदीनवाक्यः' का. मु. ५. 'वशः' क. ६. 'दृढः स्मृतः' इति क. ७. 'चैव हि' क. ८. 'दक्षो' क. ९. 'च्छिद्राविधावी च' क. १०. 'प(व ?)यस्यस्य गुणा मताः' क. ११. 'कारुशिल्पिनी' का. १२. 'स्त्रीक्षणिकास्तथा' क.

१३. 'मृजारूपवयो येन मथावन्तं (?) जडं तथा ।
दूतं दूतीं वा......न कुर्याद्वैशिकाश्रये ॥' इति क.

१४. क-पुस्तके तु—
'प्रोत्साहनेषु कुशलां मधुरकथां दक्षिणां च कालज्ञाम् ।
लडहां संवृतमन्त्रां.......कृतामेवंविधां कुर्यात् ॥'

१५. 'अनुरागानुकीर्तनम्' इति क.

दूतीनिवेदनं[1] कार्यमर्थानां चैव भाषणम् ॥ १३ ॥
न च[2] कामप्रवृत्तायाः क्रुद्धाया वा समागमः ।
नानोपायैः प्रकर्तव्यो दूत्या[3] हि पुरुषाश्रयः ॥ १४ ॥
उत्सवे रात्रिसंचारे उद्याने ज्ञातिवेश्मनि ।
धात्रीगृहे[4] सखीगेहे तथा चैव निमन्त्रणे ॥ १५ ॥
व्याधितव्यपदेशेन शून्यागारसमाश्रये[5] ।
एवं[6] समागमः कार्यो नृणां प्रथमसंगमे ॥ १६ ॥
एवं[7] समागमं कृत्वा नानोपायविधानजम् ।
स्वभावभावातिशयैर्या नारी मदनार्दिता[8] ॥ १७ ॥
करोत्यनिभृतं लीलां ज्ञेया सा मदनातुरा ।
गुणाः(णान् ?)[9] सखीनामाख्याति स्वधनं प्रददाति च ॥ १८ ॥
संपूजयति[10] मित्राणि द्वेष्टि शत्रुजनं तथा ।
समागमं प्रार्थयते दृष्ट्वा हृष्यति[11] चाधिकम् ॥ १९ ॥
तुष्यत्यस्य[12] कथाभिश्च सस्नेहं च निरीक्षते ।
सुप्ते[13] च पश्चात् स्वपिति प्रथमं प्रतिबुध्यते ।
परिक्लेशांश्च सहते चुम्बिता प्रतिचुम्बति ॥ २० ॥
समा दुःखे सुखे च स्यान्न[14] क्रोधमुपयाति च ।
एवंविधैर्गुणैर्युक्ता यानुरक्ता[15] तु सा भवेत् ॥ २१ ॥

---

१. 'निवेदयेत्' का. २. 'नवकामप्रवृत्तायाः' क. ३. 'दूत्याभिपुरुषाश्रये' क. ४. 'धात्रीक्षये' क. ५. 'सूच्यागारनिवेशने' इति क. ६. 'कार्यः समागमो नृणामेष प्रथमसंगमे ।' क. ७. 'एवं स संगमं कृत्वा' क. ८. 'मदनातुरा' क. ९. 'गुणान् सखीमुच्चदले' क. १०. 'पूजयन्नपि मित्राणि शत्रुपक्षं च निन्दति' क. ११. 'दृष्टं चैव हि हृष्यति' क. १२. 'तुष्यन् यस्य कथाभिस्तु सस्नेहं च निरीक्षिते ॥' का. १३. काशीमुद्रितपुस्तके तु—

'सुप्ते च पश्चात् झटिति चुम्बिता प्रतिचुम्बति ।
उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि वा ॥'

१४. 'तत्क्रोधमुपयाति च' क. १५. 'रक्ता ज्ञेया हि कै(वै ?)शिकी' क.

विरक्तायास्तु लिङ्गानि चुम्बितास्यं प्रमार्जति[1] ।
अनिष्टां[2] च कथां ब्रूते प्रियमुक्तापि कुप्यति ॥ २२ ॥
मित्राणि[3] चास्य प्रद्वेष्टि शत्रुपक्षं प्रशंसति ।
शेते पराङ्मुखी चैव शय्यायां[4] पूर्वशायिनी ॥ २३ ॥
सुमहत्युपचारेऽपि[5] न तुष्यति कथंचन ।
न क्लेशं सहते चापि तथा कुप्यत्यकारणे[6] ॥ २४ ॥
[न[7] च चक्षुर्ददात्यस्य न चैनमभिनन्दति ।]
यस्मा(या स्या?)देवंप्रकारा तु विरक्तां तां विनिर्दिशेत् ॥ २५ ॥
हृदयग्रहणानि स्युर्व्यापारस्य[8] विचेष्टितम् ।
अर्थप्रदर्शनं चैव[9] तथा सद्भावदर्शनम् ॥ २६ ॥
अर्थोपन्यास एवं[10] स्यादुपन्यासस्तथैव[11] हि ।
व्याधितो[12] यैः परित्यागो भावोपक्षेप एव च ॥ २७ ॥
दारिद्र्याद्व्याधितो[13] द्दुःखात् पारुष्यादश्रुतात् तथा ।
प्रवासगमनोन्मादादतिलोभादतिक्रमात्[14] ॥ २८ ॥
अतीवाभिगमाच्चैव[15] तथा विप्रियसेवनात् ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ।
भावग्राहीणि नारीणां कार्याणि मदनाश्रये ॥ २९ ॥
यैर्न[16] कुप्यति वा नारी क्रुद्धा वापि प्रसीदति ।
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ॥ ३० ॥
चतुरां चैव चातुर्यैरनुवृत्त्या[17] तु भामिनीम्[18][19] ।

---

१. 'प्रमार्ष्टि हि' का. २. 'करोत्यनिष्टां च कथां' क. ३. 'प्रद्वेष्टि चास्य मित्राणि तस्य शत्रुं प्रशंसति ।' का. मु. ४. 'शय्यायां पूर्वशायिनी' का. ५. 'उपकारेऽपि' क. ६. 'अकारणात्' क. ७. एतत्पद्यार्धं का. मु. पुस्तक एव । ८. '°रस्या व्यापारचेष्टितम्' मु. ९. 'यच्च' मु. १०. 'एव' का. ११. 'अर्थदानं तथैव च' का. १२. 'व्याधितानां' का. १३. 'व्याधितो' का. १४. '°गमनान्मानाद' का. १५. 'अतिवेलागमनाच्च' का. १६. 'या न च प्रीयते नारी प्राप्यते पुरुषैरथ' का. १७. 'क्रीडनत्वेन' का. १८. 'मानिनीम्' का. १९. इतोऽग्रे 'भूषणग्रहणाच्चापि शृङ्गारमुखतो भवेत् ।' इत्यर्धमधिकं का. पुस्तके ।

पुरुषद्वेषिणीमिष्टैः [१]कथायोगैरुपक्रमेत् ॥ ३१ ॥

[२]बालां तामपि क्रीडन् वै भीरुमाश्वासवायु ( चाटु ? )भिः ।

[ [३]गर्वितां नीचसेवाभि- ] रुदात्तां शिल्पदर्शनैः ॥ ३२ ॥

सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृ[४]ता ।

उत्तमा मध्यमा चै[५]वं तृतीया चाधमा स्मृता ॥ ३३ ॥

या विप्रियेऽपि निष्टम्भं न वदत्यप्रियं प्रिय[६]म् ।

[७]न चिरं क्रोधमायाति दोषान् प्रच्छादयत्यपि ॥ ३४ ॥

काम्यते पुरुषैर्या तु कुलशो[८]भाधनाधिकैः ।

कुशला कामतन्त्रेषु दक्षिणा [९]रूपधारिणी ॥ ३५ ॥

गृह्णाति कारणाद् रोषं [१०]गतेर्ष्या प्रब्रवीति च ।

कार्यकालविशेषज्ञा सुभगा सा स्मृतोत्तमा ॥ ३६ ॥

पुंसः कामयते या तु पुरुषैर्या तु काम्यते ।

कामोपचारकुशला प्रतिपक्षाभ्यसू[११]यिनी ॥ ३७ ॥

ईर्ष्यातुरा [१२]वा ( चा ? ) निभृता क्षणक्रोधा [१३]चै गर्विता ।

[१४]क्षणं प्रसाद्यते या च सा नारी मध्यमा स्मृता ॥ ३८ ॥

अस्थाने कोप[१५]मायाति दुःशीला चातिमानिनी ।

[१६]परुषा प्रतिकूला च दीर्घरोषाधमा स्मृता ॥ ३९ ॥

सर्वासां नारीणां यौवनलाभा [१७]भवन्ति चत्वारः ।

नेपथ्यरूपवे[१८]षैर्गुणैस्तु शृङ्गारमासाद्य ॥ ४० ॥

---

१. 'चेष्टकथाभिः परिसान्त्वयेत् ।' का. २. 'उपक्रीडनकैर्बालां भीतामाश्वासनेन च ।' का. ३. क-ख. पुस्तकयोः पाठस्त्रुटितः । ४. 'मता' का. ५. 'नीचा वेश्यानां तु निबोधत ।' का. ६. 'त्यप्रियप्रियम्' का. ७. 'अदीर्घरोषा च तथा कलाशिल्पविचक्षणा ।' का. ८. 'कुलभोगधनादिकैः' का. ९. 'रूपशालिनी' का. १०. 'गतेऽप्यपि (?) ब्रवीति च' क-ख. 'गतेर्ष्या प्रब्रवीति च' का. ११. 'भ्यसूयिका' का. १२. 'चानिभृता' का. १३. 'क्षणक्रोधाभिगर्विता' का. १४. 'क्षणप्रसादा या नारी' का. १५. 'कोपना या तु' का. १६. 'चपला परुषा चैव' का. १७. 'यौवनलीलाश्चतस्रः स्युः' का. १८. '°चेष्टागुणैस्तु' का.

पीनोरुगण्डजघनस्तनाधरं[1] कर्कशं रतिमनोज्ञम्[2] ।
सुरतं प्रति सोत्साहं प्रथमं तद् यौवनं विद्यात् ॥ ४१ ॥
गात्रं पूर्णावयवं पीनौ [ च[3] ? ] पयोधरौ नतं[4] मध्यम् ।
कामस्य भा ( सा ? ) रभूतं यौवनमेतद् द्वितीयं तु ॥ ४२ ॥
सर्वश्रीसंपूर्णं रतिकरमुन्मादनं बहुगुणाढ्यम् ।
कामायार्पितशोभं[5] यौवनमेतत्तृतीयं तु ॥ ४३ ॥
नवयौवने[6] व्यतीते तदा[7] ( था ? ) द्वितीये तृतीयके[8] चापि ।
शृङ्गारशत्रुभूतं यौवनमेतच्चतुर्थं तु ॥ ४४ ॥
निर्मांसगण्डजघनाधरस्तनं[9] शुष्कलम्बितकपोलम् ।
कामे च निरुत्साहं यौवनमेतच्चतुर्थं तु ॥ ४५ ॥
नात्यर्थं क्लेशसहा नच[10] कुप्यति न हृष्यति प्रतिस्त्रीषु ।
सौख्यं[11] ( म्य ? ) गुणेष्वासक्ता नारी नवयौवना ज्ञेया ॥ ४६ ॥
किंचित् करोति मानं किंचित् क्रोधं च[12] मत्सरं चैव ।
क्रोधे च भवति तूष्णीं यौवनभेदे[13] द्वितीये तु ॥ ४७ ॥
रतिसंभोगे दक्षा [ प्रतिपन्ना-[14] ] सूयिका गुणाढ्या च ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥ ४८ ॥
पुरुषग्रहणसमर्था कामाभिज्ञा ह्यमत्सरोपेता[15] ।
अविरहने( मि ? )च्छति [ नित्यं[16] नारी ज्ञेया चतुर्थे तु ] ॥ ४९ ॥
[ यौवनलम्भा ह्येते विज्ञेया नाटके तु चत्वारः ।
पुनरेव तु पुरुषगुणान् ] कामिनं[17](त?) तन्त्रे प्रवक्ष्यामि ॥

---

१. '°जघनाधरस्तनकर्कशम्' २. 'ज्ञेयम्' का. ३. 'च' इति त्रुटितं क-ख. पुस्तकयोः । ४. 'कृशं' का. ५. 'कामाप्यायितशोभम्' का. ६. 'नवमे यौवने' (?) मु. ७. 'तथा' का. ८. 'तृतीयजे' का. ९. 'अम्लानगण्डजघनाधरस्तनशेषगात्रलावण्यम् ।' का. १०. 'न कुप्यति न हृष्यति प्रतिस्त्रीषु' का. ११. 'सौख्यं गुणेश्वासरक्ता(?)' मु. 'सौम्यगुणेश्वासक्ता' का. १२. 'समत्सरं चैव' का. १३. 'यौवनमेतद्द्वितीयं तु' का. १४. 'प्रतिपन्नासूयिनी' का. १५. '°प्यमत्सरोपेता' का. १६. 'कोष्टकबद्धः पाठ-स्त्रुटितः क-ख. पुस्तकयोः । १७. 'कामिततन्त्रे' का.

[1]चतुरोन्तामो(त्तमौ ?) सम ( मध्यमः ) स्तथाधमः संप्रवृत्तक(द्धकः)
श्चैव( श्च ) । स्त्रीणां प्रयोगविषये [2]ज्ञेयाः पुरुषास्त्वमी पञ्च ॥
[3]दुःखक्लेशसहिष्णुः प्रियवदनः प्रसादने कुशलः ।
रत्युपचारे निपुणो दक्षश्चतुरः [4]स बोद्धव्यः ॥ ५० ॥
यो विप्रियं न कुरुते धीरोदात्तः प्रियंवदो मानी ।
अज्ञातहृदयतत्त्वो ज्ञेयः स्मृतिमान् स तु ज्येष्ठः ॥ ५१ ॥
मधुरस्त्यागी रागं न याति [5]मदनस्य नापि वशमेति ।
[6]अपमानितश्च नार्या विरज्यते स च भवेज्ज्येष्ठः ॥ ५२ ॥
[7]सर्वार्थं मध्यस्थो भावग्रहणं करोति [8]नारीणाम् ।
[9]किंचिद्दोषं दृष्ट्वा विरज्यते [10]मध्यमध्यमोऽय[11]मिति ॥ ५३ ॥
[12]अपमानितोऽपि नार्या [13]निर्लज्जः समुपसर्पणे( ति ? ) तथैव ।
[14]अभिवर्क्षते ( अभिनवक्रुते ? ) व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ५४
[15]सुहृदापि वार्यमाणो विज्ञेयः सोऽधमो नाम ।
[16]अपि( वि ? ) गणितभयामर्षो ( [17]भूयः ? ) प्रत्यक्षप्रसक्तनाशश्च ॥५५॥
[18]एकान्तदृढता ( दार्ढ्य ? ) हीनो निर्लज्जः कामतन्त्रेषु ।
रतिकलहसंप्रहारेषु कर्कशः क्रीडनीयकः स्त्रीणाम् ॥ ५६ ॥
एवंविधो विधिज्ञैः [19]प्रवृत्तकोया( य ? )मपि ज्ञेयः ।
नानाशीलाः स्त्रियो ज्ञेया गूढार्थहृदयाश्च ताः ॥ ५७ ॥

---

१. 'चतुरोत्तमौ मध्यमस्तथाधमः सम्प्रवृद्धश्च ।' का. २. 'विज्ञेयाः पुरुषास्त्विमे पञ्च' का. ३. 'समदुःखः क्लेशसहः प्रणयकोधप्रसादने कुशलः ।' का. ४. 'च' का. ५. 'याति च' का. ६. 'अपमानितश्च' का. ७. 'सर्वार्थैः' का. ८. 'यो नार्याः' का. ९. 'कंचिद्दोषं' का. १०. 'मध्यमः पुरुषः' का. ११. 'अत्र का. पुस्तके—

'काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति ।
दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि ॥' इत्यधिकः श्लोकः ।

१२. 'अवमानितोऽपि' का. १३. 'निर्लज्जतयोपसर्पति य एनाम्' का. १४. 'अभिनवक्रुते' का. १५. 'मित्रैर्निवार्यमाणोऽपि सोऽधमो नाम विज्ञेयः ।' का. १६. 'अविगणितभयामर्षो' का. १७. 'मूर्खः प्रकृतिप्रकृष्टभावश्च' का. १८. 'एकान्तदृढग्राही' का. १९. 'विज्ञेयः संप्रवृद्धः स्यात्' का.

विर्त्तदे ( विज्ञाय ? ) च यथातत्त्वमुपसर्पेत्ततश्च ताः ।
भावाभावौ विदित्वा तु[1] ततस्तैस्तैरुपक्रमैः ॥ ५८ ॥
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु[2] ।
सामयोग्यै[3]प्रदानं च दण्डो भेदस्तथैव च ॥ ५९ ॥
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति ।
तवास्मि मम दैवत्यं ( चैव त्वं ? )[4] दासोऽहं त्वं च मे प्रिया ॥ ६० ॥
आत्मोपक्षेपणकृतं तत्सामेति हि[5] संज्ञितम् ।
काले काले प्रदातव्यं धनं विभवमात्रया ॥ ६१ ॥
[6]निमित्तान्तरसंभूतं प्रदानं नाम तत् स्मृतम् ।
भेदः स्यात् तत् प्रियस्येह प्रदानं[7] कोपदर्शनम् ॥ ६२ ॥
बन्धनं ताडनं वापि दण्ड इत्यभिधीयते ।
मध्यस्था[8]( स्थां ? ) मानयेत् साम्ना लुब्धायां[9] च प्रदानतः ॥ ६३ ॥
अन्यावबद्धभावां च भेदेन प्रतिपादयेत् ।
दुष्टाचारे समारब्धे त्वन्यभाव[10]समुत्थिते ॥ ६४ ॥
दण्डः पातयितव्यो हि मृदुबन्धनताडनैः ।
सामादीनां प्रयोगे[11] तु परिक्षीणे यथाक्रमम् ॥ ६५ ॥
न भवेद्वशमापन्ना[12] तामुपेक्षेत बुद्धिमान् ।
मुखरो(रा?)गेण[13] नेत्राभ्यां विज्ञेयः स्वाङ्ग[14]चेष्टितैः ॥ ६६ ॥
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ।
अर्थहेतोस्तु यस्यांना[15] ( वेश्यानां ? ) प्रियो वा यदि वा प्रियः ॥ ६७ ॥
[16]गम्य एव नरो नित्यं मुक्ता[17]( क्त्वा ? ) दिव्यनृपस्त्रियः ।

१. 'विज्ञाय च तथा तत्त्वमुपसर्पेत्तु ता बुधः ।' का. २. 'च' का. ३. 'चैव प्रदानं च' का. ४. 'चैव त्वं' का. ५. 'तत्सामेत्यभिधीयते' का. ६. 'सनिमित्तान्तरं कृतं' का. ७. 'सोपायं दोषदर्शनम्' का. ८. 'मध्यस्थां' का. ९. 'लुब्धामर्थप्रदानतः' का. १०. 'मध्यभावे समुत्थिते' का. ११. 'प्रमाणे तु' का. १२. 'वशगा या तु' का. १३. 'मुखरागेण' का. १४. 'स्वलज्ञचेष्टितैः' का. १५. वेश्यानामप्रियो वा यदि प्रियः का. १६. 'गम्यो हि पुरुषो नित्यं' का. १७. मुक्त्वा' का.

द्वेष्यं तु प्रियमित्याहुः प्रियं[1] प्रियतरं तथा ॥ ६८ ॥
दुःशीलं च सुशीलेति[2] निर्गुणं गुणवानिति ।
[3]अहसन्ती च (व?) नेत्राभ्यां यं दृष्टोत्फुल्ल[4]तारकाः (का?) ॥ ६९ ॥
प्रसन्नमुखरागा च लक्ष्यते भावरूपणैः ।
[5]भावाभावौ विधायैवं ततस्तैस्तैरुपक्रमैः ॥ ७० ॥
उपसर्पेत्तथा नारीं कामतन्त्रं समीक्ष्य तु ।
तु[6]षयाख ( उपचारफ ? ) लत्वाच्च विप्रलम्भकृतेन च ॥ ७१ ॥
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः ।
योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः ॥ ७२ ॥
कार्यः प्रकरणे [7]वापि यथायोगं च नाटके ।
[8]एवं विशेषाचारोऽयं तज्ज्ञैः कार्यो द्विजोत्तमाः ।
[9]अतः परं प्रवक्ष्यामि प्रकृतीनां तु लक्षणम् ॥ ७३ ॥

[10]इति भारतीये नाट्यशास्त्रे वैशिकनामाध्यायस्त्रयोविंशः ।

---

[11]चतुर्विंशोऽध्यायः ।

[12]समासतस्तु त्रिविधा[13] प्रकृतिः परिकीर्तिता ।
स्त्रीणां च पुरुषाणां च उत्त[14]माधममध्यमाः ॥ १ ॥
नाट्ये चत्वार एवैते नायकाः परिकीर्तिताः ।
[15]तत्रोत्तमायां प्रकृतौ नानालक्षणलक्षिताः ॥ २ ॥
धीरोद्धतो धीरललितो धीरोदात्तस्तथैव च ।

---

१ 'प्रियमप्यप्रियं तथा' का. २. 'सुशीलं च' का. ३. 'प्रहसन्तीव' का. ४. 'त्फुल्लतारका' का. ५. पद्यमेतत् काशीमुद्रितपुस्तके नास्ति । ६. 'उपचारफलत्वाच्च' का. ७. 'चापि' का. ८. 'एवं वेश्योपचारोऽयम्' का. ९. 'अत ऊर्ध्वं प्रवक्ष्यामि चित्रस्याभिनयं प्रति' का. १०. 'इति भारतीये नाट्यशास्त्रे बाह्योपचारो नाम पञ्चविंशोऽध्यायः ।' का. ११. चतुस्त्रिंशत्तमोऽध्यायः, इति मुद्रितपुस्तके पाठः । काशीमुद्रितपुस्तकेऽपि सोऽयमध्यायश्चतुस्त्रिंशत्तमः । १२. 'अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां च लक्षणम् । नायकानां च सर्वेषां चतुर्णामपि तत्त्वतः ॥' इत्यधिको मुद्रितपुस्तके पाठः । १३. 'विविधा' मु. १४. 'मध्यमाधमाः' मु. १५. 'मध्यमोत्तमायां' मु.

धीरप्रशान्तश्चैवेति नायका नाटकाश्रयाः[1] ॥ ३ ॥
देवा धीरोद्धता ज्ञेयाः स्युर्धीरललितौ[2] नृपाः ।
सेनापतिरमात्याश्च धीरोदात्ताः प्रकीर्तिताः ॥ ४ ॥
ब्राह्मणा वणिजश्चैव प्रोक्ता धीरप्रशान्तकाः ।
एतेषां च पुनर्ज्ञेयाश्चत्वारोऽथ विदूषकाः ॥ ५ ॥
एते तु नायका ज्ञेयाः काव्यबन्धेषु सर्वदा ।
नायिकाश्चैव वक्ष्यामि चतस्रः पुनरेव तु ॥ ६ ॥
दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा ।
एतास्तु नायिका ज्ञेया नानाप्रकृतिलक्षणाः ॥ ७ ॥
धीराश्च ललिताश्चैव उदात्ता निभृतास्तथा ।
दिव्या राजाङ्गना ह्येता गुणैर्युक्ता भवन्ति हि ॥ ८ ॥
उदात्ता निभृता चैव भवेत्तु कुलजाङ्गना ।
गणिका शिल्पकारी च उदात्तललिते स्मृते ॥ ९ ॥
प्रेष्या चैव हि विज्ञेया संकीर्णप्रकृतावपि ।
नपुंसकश्च विज्ञेयः संकीर्णोऽधम एव च ॥ १० ॥
संकरे[3] स्थविरश्चैव ये चान्येऽप्यधमा नराः ।
संकीर्णास्तेऽपि विज्ञेया नाटकेषु द्विजोत्तमाः ॥ ११ ॥
एते[4] ज्ञेयाः प्रकृत्या तु पुरुषस्त्रीनपुंसकाः ।
एतेषां चैव वक्ष्यामि विभागं शीललक्षणैः ।
सर्वासां प्रकृतीनां तु प्रकारो द्विविधः स्मृतः ॥ १२ ॥
तत्र राजोपचारो यो भवेदभ्यन्तरस्तु सः ।
बाह्योपचारो[5] यस्तस्माद्विज्ञेयो बाह्य एव सः ॥ १३ ॥
तस्माद्राजोपचारेषु पुनरभ्यन्तराश्रयम् ।
स्त्रीविभागं प्रवक्ष्यामि उपचारं तथैव च ॥ १४ ॥
महादेवी तथा देवी स्वामिनी स्थायिनी तथा ।

१. 'नाटकाश्रिताः' का. २. 'धीरललिताश्रयाः' क-ख. ३. 'शकारश्चैव चेटश्च' मु.
४. अयमर्धश्लोकः क-ख-पुस्तकयोर्नास्ति । ५. अयमर्धश्लोको मुद्रितपुस्तके नास्ति ।

भोगिनी शिल्पकारी च नाटकी[1]याथ नर्तकी ॥ १५ ॥
अनुचारी तथायुक्ता तथा च परिचारिका ।
तथा संचारिणी चैव तथा प्रेषणकारिका ॥ १६ ॥
महत्तरा प्रतीहारी कुमारी स्थविरा तथा ।
आयुक्तिकास्तु भूपानामेष आभ्यन्तरो गणः ॥ १७ ॥
तथा मूर्धावसिक्ता च कुलशीलविभूषिता ।
समतुल्य[2]चरित्रा च वयस्या क्रोधवर्जिता ॥ १८ ॥
[3]अनीर्ष्या नृपशीलज्ञा समदुःखसुखास्पदा ।
शान्तिस्वस्त्ययनैर्नित्यं भर्तृमङ्गलकाङ्क्षिणी ॥ १९ ॥
पतिव्रता क्षमायुक्ता अन्तःपुरहिते रता ।
एभिर्गुणैस्तु संयुक्ता महादेवी प्रकीर्तिता ॥ २० ॥
एभिरेव गुणैर्युक्ता बहुमानविवर्जिता ।
गर्विता राजपुत्री च रतिसंभोगतत्परा ॥ २१ ॥
बाला नित्योज्ज्वलगुणा प्रतिपक्षेष्वसूयिका ।
यौवनादिगुणोन्मत्ता सा देवीत्यभिधीयते ॥ २२ ॥
से[4]नापतेरमात्यानां दण्डिता तत्पराश्च या ।
त[5]नया नामतश्चैव स्वामिनीत्यभिसंज्ञिता ॥ २३ ॥
शीलरूपगुणैर्या तु संयुक्ता नृपवल्लभा ।
स्वामिसत्कारसंपन्ना स्वामिनीति हि संज्ञिता ॥ २४ ॥
रूपयौवनसंपन्ना कर्कशा ललिता तथा ।
रतिसंभोगकुशला प्रतिपक्षे[6]ऽभ्यसूयिका ॥ २५ ॥
दक्षा[7] स्फुटा ह्युदात्ता च गन्धमाल्योज्ज्वला तथा ।
नृपतिच्छन्दवृत्ता च सर्वत्रेर्ष्याविवर्जिता ।
उपस्थिता चा[8]प्रमत्ता निद्रालस्या ह्यनिष्ठुरा ॥ २६ ॥

---

१. 'नाटकी चाथ' क-ख. २. 'वयस्था च मध्यस्था' का. ३. 'अभीष्टा' मु. ४. 'रूपिणी पद्मिनी जातिः सावधाना नृपाङ्गना । सेनापतिरमात्यानी दण्डिनी तत्पराश्रये ॥' इति मु. ५. 'नतया' मु. ६. '°ष्वसूयिनाम्' का. ७. 'दत्ता' मु. ८. 'प्रमत्ता च' मु.

मान्यामान्यविशेषज्ञा स्थायिनी सं[1]प्रकीर्तिता ।
सुशीला लघुसंमाना मृदुर्ना[2]त्युद्धता तथा ।
मध्यस्था निभृता क्षान्ता योगिनीति हि सा स्मृता ॥ २७ ॥
नानाकलाविशेषज्ञा नानाशिल्पविचक्षणा ।
गन्धशिल्पविभागज्ञा नानालेख्यविशारदा ॥ २८ ॥
शयनासनयानज्ञा चतुरा चतुरा तथा ।
दक्षा चित्रास्फुटा श्ल[3]क्ष्णा निभृता शिल्पकारिका ॥ २९ ॥
ग्रहमोक्षलयज्ञा च रसभावविभा[4]विका ।
परभावेङ्गितज्ञा च आचार्यानुगता तथा ॥ ३० ॥
चतुराभिनयज्ञा च ऊहापोह[5]विचक्षणा ।
निपुणा भाण्डवाद्येषु नाट[6]कीया प्रकीर्तिता ।
यौव[7]नादिगुणोन्मत्ता नृत्तगीतविचक्षणा ॥ ३१ ॥
सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा ।
स[8]मागतासु नारीषु रूपयौवनकान्तिषु ॥ ३२ ॥
न दृश्यन्ते गुणैस्तुल्या नर्तकी सा प्रकीर्तिता ।
सर्वावस्थाप्रचारेषु अनुगच्छति या नृपम् ॥ ३३ ॥
विज्ञेयं ना[9]म तस्यास्तु नृपतेरनुचारिका ।
भाण्डागारे नियुक्ता च आयुधागार एव च ॥ ३४ ॥
औषधीफलमूलेषु बीजेषु[10] व्यापृता तथा ।
गन्धाभरणवस्त्रेषु आख्यानकथनेषु च ॥ ३५ ॥
[11]बह्वर्थेषु नियुक्ता या [12]आयुक्ता च इति स्मृता ।
छत्रशय्यासने युक्ता तथा व्यञ्जनकर्मणि ॥ ३६ ॥
संवाहने च गन्धे च[13] तथा चैव प्रसाधने ।

---

१. 'कथिता तथा' मु. २. 'संनदस्युद्धता' क-ख. ३. 'तीव्रा' मु. ४. '°विशारदा' मु. ५. °'विशारदा' मु. ६. 'नाटकी सा' क-ख. ७. 'नानावाद्यप्रयोगज्ञा' मु. ८. 'समानता च' मु. ९. 'विज्ञेया नामतः सा तु' का. १०. 'वाजेषु स्वावृता' मु. ११. 'बह्वर्थश्चनियुक्ता' क-ख. १२. 'आयुक्ता इति सा' मु. १३. 'गर्वे' मु.

तथाभरणसंयोगे माल्यासंग्रहणेषु च।[1]
विज्ञेया नामतः सा तु नृपतेः परिचारिका ॥ ३७ ॥
नानाकक्ष्यादिचारिण्यस्तथोपवनसंचराः।
देवतायतनक्रीडाप्रासादपरिसंचराः ॥ ३८ ॥
यामेषु च नियुक्ता यास्तथा च विविधाश्रये।[2]
संचारिक्यस्तु विज्ञेया नाट्यज्ञैरुपचारतः ॥ ३९ ॥
प्रेषणैः कामसंयुक्तैर्गुह्याद्गुह्यसमुत्थितैः।[3]
या नियुक्ता बुधैः सा तु ज्ञेयान्वेषणकारिका ॥ ४० ॥
सर्वान्तःपुररक्षायामाशीःस्वस्त्ययनादिभिः।
या नित्यमभिनन्दन्ति ज्ञेयास्ताः सुमहत्तराः ॥ ४१ ॥
संधिविग्रहसंबन्धनानाकार्यसमुत्थितम्।
निवेदयन्ति कार्यं याः प्रतीहार्यस्तु ताः स्मृताः ॥ ४२ ॥[4]
अप्राप्तरतिसंभोगा असंभ्रान्ता अनुद्धटाः।
निभृता या[ः] सलज्जाश्च ताः कुमार्य इति स्मृताः ॥ ४३ ॥
पूर्वराजनयाभिज्ञाः सर्वराजसु पूजिताः।
पूर्वराजोपचारज्ञास्ता वृद्धा इति संज्ञिताः ॥ ४४ ॥
समासाल्लक्षणं तासां प्रवक्ष्यामि द्विजोत्तमाः।
या नियोज्या नियोगेषु प्रयोगेषु तथैव हि ॥ ४५ ॥
अनुद्धटा ह्यसंभ्रान्ताः सुवेषाचारनिष्ठुराः।
क्षान्ता दीनाः सुशीलाश्च जितक्रोधा जितेन्द्रियाः ॥ ४६ ॥
प्रकामानिभृताश्चैव स्त्रीदोषैश्च विवर्जिताः।
ता नियोगे नियोक्तव्या वनिता मदवर्जिताः ॥ ४७ ॥
यत्स्यान्नपुंसकं नाम तृतीया प्रकृतिस्तु या।
साप्यन्तःपुरसंचारे योज्या पार्थिववेश्मनि ॥ ४८ ॥
स्नातकाः कञ्चुकीयाश्च तथा वर्षध(व)राश्च ये।[5]

१. 'माल्यासंग्रहणे तथा' मु. २. 'यन्त्रेषु' मु. ३. 'प्रेङ्खणैः' मु. ४. 'कीर्तिताः' मु. ५. 'कञ्चुका ये च' मु.

औपस्थायिकनिर्मुण्डाः कक्षास्थानेषु योजयेत् ॥ ४९ ॥
अपुमांसस्तु पुरुषा ये तु स्त्रीभोगवर्जिताः ।
एते त्वन्तःपुरचरा[ः] कार्या नित्यं हि नाटके ॥ ५० ॥
वस्त्वन्ते(?) स्नातकं कुर्यादार्यमाचारसंयुतम् ।
प्रेषणे वार्थसंयुक्ते कञ्चुकीयान्नियोजयेत् ॥ ५१ ॥
तथा वर्ष(व)धरांश्चैव कामचारेषु योजयेत् ।
औपस्थायिकनिर्मुण्डाः स्त्रीणां प्रेषणकारणे ॥ ५२ ॥
मानकार्येषु नारीणां नियुञ्जीतानुचारिकाः ।
सद्योवृत्तान्तयोगज्ञं नाट्यागारे नियोजयेत् ॥ ५३ ॥
ये त्वल्पसत्त्वाः कुशलाः क्लीबाश्च स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्ये च ते वै वर्षध(व)राः स्मृताः ॥ ५४ ॥
नपुंसका ये पुरुषाः स्त्रीस्वभावेन वर्जिताः ।
निर्मुण्डा नामतो ज्ञेयाः कामविज्ञानवर्जिताः ॥ ५५ ॥
ये विद्यासत्यसंपन्नाः कामदोषविवर्जिताः ।
ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ ५६ ॥
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया ।
अतः परं प्रवक्ष्यामि बाह्यं पुरुषसंचरम् ॥ ५७ ॥
राजा सेनापतिश्चैव कुमारो मन्त्रिणस्तथा ।
सचिवाः प्राड्विवाकाश्च प्रयोगाधिकृतास्तथा ॥ ५८ ॥
एते चान्ये च बहव[ः] समा(भा)स्तारा नृपस्य तु ।
विभागमेषां वक्ष्यामि लक्षणं च पृथक् पृथक् ॥ ५९ ॥
शीलवान् बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः ।
दक्षः प्रगल्भः स्मृतिमान् विक्रान्तो धृतिमाञ्शुचिः ॥ ६० ॥
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवागपि ।
लोकपालव्रतचरः शूरो धीरः क्षमान्वितः ॥ ६१ ॥

१. 'ये स्थायिकाश्च निर्मुण्डाः' मु. २. 'वास्तले' क-ख. ३. 'ये विप्राः' क-ख. ४. '०धरः' मु.

उत्थितश्चाप्रमत्तश्च वृद्धः स्मृत्यर्थशास्त्रवित् ।
नानानाय्य[1]प्रचारज्ञ ऊहापोहविचक्षणः ॥ ६२ ॥
परभावेङ्गितज्ञश्च षाड्गुण्येनाप्यलंकृतः ।
नानाशास्त्रार्थतत्त्वज्ञो नानाशिल्पप्रयोजकः ॥ ६३ ॥
स्थानवृद्धिक्षयज्ञश्च पररन्ध्रविचक्षणः ।
कृतज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः ॥ ६४ ॥
शीलवान् सत्यसंपन्नस्त्यक्तालस्यः प्रियंवदः ।
पररन्ध्रविधिज्ञ[2]श्च यात्राकालविशेषवित् ॥ ६५ ॥
अर्थशास्त्रार्थतत्त्वज्ञो ह्यनुरक्तः कुले वृतः ।
देशवित् कालविच्चैव भवेत् सेनापतिर्गुणैः ॥ ६६ ॥
कुलीना बुद्धिसंपन्नाः श्रुतिनीतिविशारदाः ।
स्वदेश्याश्चानुरक्ताश्च शुचयो धार्मिकास्तथा ॥ ६७ ॥
अमात्या मन्त्रिणश्चैव गुणैरेतैर्भवन्ति हि ।
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः ॥ ६८ ॥
मध्यस्था धार्मिका रक्ताः कार्याकार्यविचक्षणाः ।
शान्ता दान्ता जितक्रोधा नोद्धताः समदर्शिनः ॥ ६९ ॥
ईदृशाः प्राड्विवाकाश्च स्थाप्या धर्मासनेष्वथ ।
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितक्लमाः ॥ ७० ॥
स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा ।
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः ॥ ७१ ॥
नानारूपैः समायुक्ता गुणैरेतैर्भवन्ति हि ।
[3]बृहस्पतिमतादेशाद् गुणानां प्रविभावकम् ॥ ७२ ॥
विज्ञेयं [4]वाचि कर्मज्ञैः समास्तारादिकत्थ[5]नम् ।
अत्रोच्यते यथानाय्यमाहार्यगुणसंभवम् ॥ ७३ ॥
कथं राजगुणाः कार्या नटैरल्पपरिच्छदैः ।

---

१. 'नानानयप्रचारज्ञः' मु. २. 'विधिज्ञो यो' मु. ३. 'बृहस्पतिमतादेषां गुणानां' मु. ४. 'वापि' मु. ५. 'कल्पनम्' मु.

अत्रोच्यते यदा लोके नाट्यधर्माः प्रवर्तिताः ।
तदेव सर्वसंपन्नं नाट्यमेतन्मया कृतम् ॥ ७४ ॥
वर्णकैश्छादितस्तत्र भूषणैश्चाप्यलंकृतः ।
गाम्भीर्यौदार्यसंपन्नो राजवत्तु भवेन्नटः ॥ ७५ ॥
सप्तद्वीपाश्रयश्चैव एवमेको नटो भवेत् ।
वर्णकैश्छादितैर्नेह कार्यं त्वर्थविचेष्टितम् ॥ ७६ ॥
आचार्यबुद्ध्या शान्तस्तु सौष्ठवाङ्गपुरस्कृतः ।
राजवद्भरतस्तस्माद् राजापि नटवद्भवेत् ॥ ७७ ॥
यथा नटस्तथा राजा तथा च नट उच्यते ।
उभाभ्यां भावनिष्पत्तिः समलीलाङ्गसौष्ठवा ॥ ७८ ॥
यथाचार्योपदेशेन रङ्गशोभी भवेन्नटः ।
एवं स्वभावतो राजा नित्यमेवोर्ज्वलो भवेत् ॥ ७९ ॥
दिव्यानां यः परिवारः पार्थिवानां भवेदिह ।
नाटके संप्रयोक्तव्यो वेषभाषाक्रियान्वितः ॥ ८० ॥
यादृशं यस्य यद्रूपं प्रकृत्या तस्य तादृशम् ।
वयोवेषविधानेन कर्तव्यं प्रयुयुक्षुणा ॥ ८१ ॥
एवं राजोपचारेषु कार्यः पुरुषसंग्रहः ।
अत ऊर्ध्वं प्रवक्ष्यामि नानापुरुषलक्षणम् ॥ ८२ ॥
नानाशीलगुणे लोके उत्तमाधममध्यमे ।
प्रयोक्तव्याः पृथग्भावैर्विज्ञेया प्रकृतिर्बुधैः ॥ ८३ ॥
नानाशिल्पादिसंपन्ना ज्ञानवन्तो जितेन्द्रियाः ।
लोकक्रियाविशेषज्ञा धर्माधर्मविचक्षणाः ॥ ८४ ॥
शास्त्रेतिहासकुशलाः शीलवृत्तव्यवस्थिताः ।
अहिंसासत्त्वसंपन्नाः प्रकृत्या तूत्तमाः स्मृताः ॥ ८५ ॥

---

१. 'सर्वं संपन्नम्' मु. २. 'मध्यमेको' मु. ३. 'यथा राजा तथा नटः' मु. ४. '॰मेवोद्धतो' मु. ५. 'नायकः' मु. ६. 'प्रभुं पुनः' मु. ७. 'लोके तु ये विशेषज्ञाः' मु.

लोकोपचारतत्त्वज्ञाः शिल्पशास्त्रविचक्षणाः ।
मध्यप्रायगुणोपेताः प्रकृत्या मध्यमाः स्मृताः ॥ ८६ ॥
रूक्षवाक्या दुराचारा निःसत्त्वाः स्वल्पबुद्धयः ।
क्रोधना घातकाश्चैव कृतघ्ना[1]श्छिद्रदर्शिनः ॥ ८७ ॥
वृथारम्भप्रस[2]क्ताश्च यत्किंचिद्वादिनोऽल्पकाः ।
पिशुनाः पापनिरताः स्त्रीलोलाः कलहप्रियाः ॥ ८८ ॥
मान्यामान्यविशेषाणामनभिज्ञाश्च तस्कराः ।
एभिर्दोषैश्च संयुक्ताः प्रकृत्यैवाधमाः स्मृताः ॥ ८९ ॥
एवं तु शीलतो ज्ञेया प्रकृतिस्त्रिविधा बुधैः ।
अतःपरं प्रवक्ष्यामि प्रयोक्तॄणां तु स[3]द्गुणान् ॥ ९० ॥

तत्र सूत्रधारगुणान् वक्ष्यामः—अस्यादित एव तावल्लक्षणज्ञता, अहीनो वाक्यसंस्कारः, तथा गीतकालविधानज्ञता, स्वरवादित्रतत्त्ववादः ।

[4]चतुरो नाट्यकुशलः शास्त्ररीतिप्रतिष्ठितः ।
[5]नानापाषण्डकार्यज्ञो नीतिशास्त्रार्थवित्तथा ॥ ९१ ॥
वेश्योपचारनिपुणः काव्यशास्त्रविचक्षणः ।
नानागतिप्रचारज्ञो रसभावविशारदः ॥ ९२ ॥
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः ।
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ॥ ९३ ॥
ग्रहनक्षत्रतत्त्वज्ञो देशव्याहारतत्त्ववित् ।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च ॥ ९४ ॥
[6]प्रमाणाचारतज्ज्ञश्च राजवंशप्रसूतिवित् ।
[7]श्रोता शास्त्रा[8]र्थकार्याणां श्रुत्वा चैवावधारकः ॥ ९५ ॥
अवधार्य प्रयोक्ता च शा[9]स्त्र(?)श्चैवोपदेशने ।

---

१. 'कृत्यज्ञाः सर्वदर्शिनः' मु. २. '°प्रसन्नाश्च' मु. ३. 'तद्गुणान्' मु. ४. 'चतुरातोद्यकुशलः शास्त्रकर्म प्रति-°' मु. ५. 'नाना च खण्डकार्यज्ञो' मु. ६. 'प्रमाणचरितज्ञश्च' मु. ७. 'श्रोता शास्त्रार्थकर्माणां' क-ख. ८. 'चैवावधारया' क-ख. ९. 'श्रेयोक्तावोपदेशने' मु.

एवंगुणस्तथाचार्यः सूत्रधारो विधीयते ।
स्वाभाविकान् गुणांश्चैव गदतो मे निबोधत ॥ ९६ ॥
स्मृतिमान् मतिमान् धीर उदारः स्थिरवाक् शुचिः ।
अरोगो मधुरः क्षान्तो दान्तश्चैव प्रियंवदः ॥ ९७ ॥
सर्वदोषविनिर्मुक्तः सत्यवाग् दक्षिणस्तथा ।
अलुब्धः प्रतिमन्ता च स्वाभाविकगुणास्त्वमी ॥ ९८ ॥
सूत्रधारगुणैश्चैव किंचिदूनैः समन्वितः ।
मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्वकः ॥ ९९ ॥
उज्ज्वलो रूपवांश्चैव दृष्टोपकरणक्रियः ।
मेधावी च विधानज्ञः स्वकर्मकुशलो दृढः ।
सूत्रधारगुणैर्युक्ताः सर्व एव प्रयोगिणः ॥ १०० ॥
वेश्योपचारकुशलो मधुरो दक्षिणः कविः ।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो भवेत्[1] ॥ १०१ ॥
उज्ज्वलवस्त्राभरणः कुप्यत्यनिमित्ततः[2] प्रसीदति च ।
अधमो मागधभाषी भवति शकारो बहुविकारः ॥ १०२ ॥
वामनो दन्तुरः कुब्जो द्विजन्मा विकृताननः ।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः ॥ १०३ ॥
कलाप्रियो बहुकथो विरूपो गन्धसेवकः ।
मान्यामान्यविशेषज्ञश्चेटो[3] ह्येवंविधः स्मृतः ॥ १०४ ॥
एवंगुणैस्तु संयुक्तो यत्नजैश्चेतरैस्तथा ।
अन्तःपुरं प्रवक्ष्यामि स्त्रीणां च प्रकृतिं पुनः ॥ १०५ ॥
मितभाषा विदग्धा च सलज्जा न[4] च निष्ठुरा ।
कुलशीलगुणोपेता गुरूणां शासने रता ॥ १०६ ॥
धैर्यगाम्भीर्यसम्पन्ना उत्तमा प्रकृतिः स्मृता ।
नानाशिल्पप्रयोगज्ञा नानाशास्त्रविचक्षणा ॥ १०७ ॥

---

१. 'विभावयेत्' क-ख. २. 'क्रुध्यत्य°' मु. ३. 'खेटो' मु. ४. 'चाप्यनिष्ठुरा' मु.

[1]कैलोपभोग(?)राचार्यशुश्रूषाभिरता सदा ।
लीलया भावहावाभ्यां सत्त्वेन विनयेन च ॥ १०८ ॥
माधुर्येण च संयुक्ता चतुःषष्टिकलान्विता ।
नृत्तो[2]पचारकुशला स्त्रीदोषैस्तु विवर्जिता ॥ १०९ ॥
प्रियवादी प्रियकथा स्फुटा दक्षा जितश्रमा ।
एभिर्गुणैस्तु संयुक्ता गणिका परिकीर्तिता ॥ ११० ॥
रूपगुणशीलयौवनसुवर्ण[3]माधुर्य....संपन्ना ।
विशदा स्निग्धा मधुरा पेशलशुभरक्तकण्ठी च ॥ १११ ॥
भाण्डै[4]धैश्चाक्षुभिता लयतालज्ञा रसैश्च संयुक्[5]ता ।
एवंविधगुणयुक्ता कर्तव्या नायिका तज्ज्ञैः ॥ ११२ ॥
समागतासु नारीषु वयोरूपवतीषु च ।
न दृश्यते गुणैर्युक्ता सहस्रेष्वपि नर्तकी ॥ ११३ ॥
अस्थान[6]हासिनी रूक्षा आविद्धगतिचेष्टिता ।
दीर्घरोषा ह्यदीना च तदा[7] तु निभृतोद्धटा ॥ ११४ ॥
सर्वदोषाभिसंयुक्ता गन्धमाल्योपशोभिता ।
एवंविधा तु कर्त्तव्या प्रकृष्टाभिनये बुधैः ॥ ११५ ॥
एतदेव मया प्रोक्तं प्राग्बिव्बोकादिनिर्णयम् ।
अत ऊर्ध्वं प्रवक्ष्यामि चित्राभिनयनं मुने ॥ ११६ ॥

इति भारतीये नाट्यशास्त्रे सामान्याभिनयो नाम चतुर्विंशोऽध्यायः ॥

---

पञ्चविंशोऽध्यायः ।

अ[9]ङ्गाद्यभिनयस्यैव यो विशेषः क्वचित्क्वचित् ।
अनुक्त उच्यते चित्र[10]ः स चित्राभिनयः स्मृतः ॥ १ ॥

---

१. 'कालोपयोगे चार्या तु' मु. २. 'तत्रो°' मु. ३. 'सुवर्णमाल्याभरणसंपन्ना' मु. ४. 'भाण्डाद्यैश्च क्षु' मु. ५. 'संपन्ना' मु. ६. 'अवस्थासना' क-ख. ७. 'तथा चानि' मु. ८. 'प्रकृष्टा प्रकृति बुधैः' मु. ९. 'अङ्गाभिनयनस्येह' का. १०. 'यस्मात् का.

उत्तानौ तु करौ कृत्वा [1]स्वस्तिकौ पार्श्वसंस्थितौ ।
उद्वाहितेन शिरसा तथा [2]चोर्ध्वनिरीक्षणात् ॥ २ ॥

[3]प्रभासं(तं?)गम(ग?)नं रात्रिं प्रदोषं दिवसं तथा ।
[4]जन्तून्व्यस्तान्समस्तांश्च विस्तीर्णांश्च जलाशयात्(न्?) ॥ ३ ॥

दिशो ग्रहान्सन[5]क्षत्रा[ न् ? ] [6]दृष्टयश्च भवे(द्)दिह ।
तान्येवमभितो(ने)यानि [7]नानाभावरसार्थतः ॥ ४ ॥

एभिरेव करैर्भूयस्तेनैव शिरसा पुनः ।
[8]अधोनिरीक्षणेर्नाथ [9]भूमिष्ठं संप्रयोजयेत् ॥ ५ ॥

[10]स्पर्शस्य ग्रहणाच्चैव तथा(थो ?) त्सुकुशना(?)दपि ।
चन्द्रज्योत्स्नां सुखं वायुं रसगन्धौ [11]च निर्दिशेत् ॥ ६ ॥

[12]वस्त्रावगुण्ठनात्सूर्यं [13]रजधर्मानिलौ ( रजो धूमानिलौ ) तथा ।
भूमितापं तथोष्णं [14]च कुर्याच्छायाभिलाषतः ॥ ७ ॥

[15]ऊर्ध्वकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
उदयास्तं[16]गता ये च गम्भीरार्थैः प्रदर्शयेत् ॥ ८ ॥

यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
गात्रस्पर्शैः सरोमाञ्चैस्तेषामभिनयो भवेत् ॥ ९ ॥

यानि स्युस्तीक्ष्णरूपाणि तानि [17]चाभिनयेन्नरः ।
[18]अस्पर्शनसमुद्वेगैस्तथा मुखविकूणनैः ॥ १० ॥

गम्भीरोदात्तसंयुक्ता[19]नर्थानभिनयेत्पुनः ।
साटोपैश्च सवर्गै(गर्वै ?)श्च गात्रैः सौष्ठवसंयुतैः ॥ ११ ॥

---

१. 'पताके स्वस्तिकं तथा' **का.** २. 'तथा चोर्ध्वनिरीक्षितैः' **का.** ३. 'प्रभातं गगनं' **का.** ४. 'ऋतून् घनान्धकारांश्च' **का.** ५. 'सनत्रान्' **का.** ६. 'किंचित् स्वस्थं च यद्भवेत्' **का.** ७. 'तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ।' **का.** ८. 'अधोनिरीक्षणेनैव' **का.** ९. 'भूमिस्थान् संप्रदर्शयेत्' **का.** १०. 'स्पर्शस्य ग्रहणं चैव तथोत्सुकधनेन च ।' **का.** ११. 'विनिर्दिशेत्' **का.** १२. 'वक्त्रावकुण्ठनात्' **का.** १३. 'रजोधूमानलांस्तथा' **का.** १४. 'तथा चोष्णं' **का.** १५. 'ऊर्ध्वा केकरदृष्टिस्तु' **का.** १६. 'उदयास्तं गतं चैव' **का.** १७. 'त्वभिनयेन्नरः' **का.** १८. 'अङ्गस्पर्शैस्तथोद्वेगैस्तथा मुखविघूर्णनैः ।' **का.** १९. '°नेतानभिनयेद्बुधः' **का.**

यज्ञोपवीतदेशे तु कृत्वारालौ करावुभौ ।
स्वस्तिकौ विच्युतौ[1] हारस्रग्दामार्थान्निदर्शयेत् ॥ १२ ॥
भ्रमणा[2]द्यप्रदेशिन्या दृष्टेः परिगमेन च ।
पीडा[3](ड ?)नाच्चालय(प ?)ञ्चस्य(?) सर्वार्थग्रहणं भवेत् ॥ १३ ॥
श्रव्यं[4] श्रवणयोगेन दृश्यं दृष्टिविचारणैः[5] ।
आत्मस्थं वा परस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥ १४ ॥
विद्युदुल्का घनरवो[6] विस्फुलिङ्गार्चिषस्तथा ।
त्रस्ताङ्गा[7]क्षिनिमेषैश्च दर्शनीयानि[8] योक्तृभिः ॥ १५ ॥
उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः ।
असंस्पर्शेन[9] वानिष्टं जिह्मं[10]दृष्टेन कारयेत् ॥ १६ ॥
वायुमुष्णं तमस्तेजो[11] मुखसंछादनेन[12] तु ।
रेणुतोयपतङ्गानां भ्रमराणां च वारणम् ॥ १७ ॥
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदानां[13] निरूपणम् ॥ १८ ॥
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने ।
स्वस्तिकौ खेटकास्यौ[14] तु प्रतोदप्रग्रहादिषु[15] ॥ १९ ॥
एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त चाष्ट वा ।
नव[16] वा दशकं यावद्गणनाङ्गुलिभिर्भवेत् ॥ २० ॥
दशसंख्या[17] ससा(शता ?)ख्याश्च सहस्ता(स्रा)ख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यामभिनेयाः प्रयोक्तृभिः ॥ २१ ॥
दशम्ये[18](भ्यो) गणनायास्तु परतो या भवेदिह ।

---

१. 'विद्युतौ हस्तौ रन्ध्रदामानि निर्दिशेत्' का. २. 'भ्रमणेन प्रदेशिन्या' का. ३. 'अलपल्लवपीडातः' का. ४. 'श्राव्यं' का. ५. 'दृष्टिविलोकनैः' का. ६. 'घनरवौ' का. ७. 'त्रस्ताङ्गा°' का. ८. 'तेऽभिनेयाः प्रयोक्तृभिः' का. ९. 'असंस्पर्शो त्वनिष्टे च' का. १०. 'चिह्नदृष्टेन' का. ११. 'नभस्तेजो' का. १२. 'मुखप्रच्छादनेन च' का. १३. 'श्वापदांश्च निरूपयेत्' का. १४. 'कटकास्यौ' का. १५. 'प्रतोदग्रहणे स्मृतौ' का. १६. 'नव वा दश वा चैव गणानाङ्गुलिर्भवेत् ।' का. १७. 'दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च ।' का. १८. 'दशाख्यगणनायास्तु' का.

वाक्यार्थेनैव साध्यासौ[1] परोक्षाभिनयेन च ॥ २२ ॥
छत्रै[2]ध्वजपताकासु निर्देश्यं दण्डवा(धा ?)रणम् ।
नानाप्रहरणं चैव निर्देश्यं वाप्यनेकधा ॥ २३ ॥
एक[3]चित्ते ह्यधोदृष्टिः किंचिन्नतशिरस्तथा ।
कुर्वीत हस्तसंदंशं स्मृतेर्ध्यानवितर्किते ॥ २४ ॥
उद्वाहितं शिरः कृत्वा हंसपक्षं[4] तथोर्ध्वगम् ।
प्रा[5]सादमुच्छ्रयामानं दीर्घं गर्वं च निर्दिशेत् ॥ २५ ॥
कृ[6]त्वाग(रा ?)लं च शिरसः समुद्वाह्य तु वामनः (तः ?) ।
गते निवृत्ते ध्वस्ते च श्रान्ते[7](श्रुते ?) वाक्ये च योजयेत् ॥ २६ ॥
सर्वेन्द्रियस्वस्थतया दिक्प्रसन्नतया तथा ।
विचित्रकुसुमालोकैः शरदं तु विनिर्दिशेत् ॥ २७ ॥
गात्रसंकोचनाच्चापि[8] सूर्याग्निपटवेशनात् ।
हेमन्तश्चाभिनेतव्यः[9] पुरुषैर्मध्यमाधमैः[10] ॥ २८ ॥
शिरोदन्तोष्ठकम्पेन गात्रसंकोचनेन च ।
कूजितैः[11] श्वासशी(सी ?)त्कारैः शीतं हीनो विनिर्दिशेत् ॥ २९ ॥
अ[12]वस्थान्तरमासाद्य कदाचित्तूत्तमैरपि ।
शीतातपाभिनयनं कार्यं व्यसनसंभवम् ॥ ३० ॥
रू[13]क्षस्य वायोः स्पर्शेन समाघ्राणेन चैव हि ।
ऋतुजानां तु पुष्पाणां शिशिरं दर्शयेन्नरः ॥ ३१ ॥

---

१. 'साध्या सा' का. २. 'चित्रध्वजपताकाश्च निर्देश्या दण्डधारणैः । नानाप्रहरणं चैव निर्देश्यं धारणाश्रयम् ॥' का. ३. 'एकचित्तोऽप्यधोदृष्टिः शिरः किंचिन्नतं भवेत् । सव्यहस्तं च संदंशस्मृतौ ध्यानेन निर्दिशेत् ॥' का. ४. 'हंसपक्षौ प्रदक्षिणौ' का. ५. 'अपत्यरूपेण कार्यमुच्छ्रये च प्रयोक्तृभिः' का. ६. 'अरालं तु शिरःस्थाने समुद्वाह्यं तु वामतः ।' का. ७. 'श्रुते' का. ८. '°संकोचनेनापि' का. ९. '°स्त्वभिनेयः स्यात्' का. १०. 'मध्यमोत्तमैः' का. ११. 'कूजितैश्च ससीत्कारैरधमः शीतमादिशेत् ।' का. १२. 'अवस्थान्तरसंप्राप्तैरुत्तमैश्च कदाचन । शीताभिनयनं कार्यं दैवव्यसनसंभवम् ॥' का. १३. 'मधुदानात्तु पुष्पाणां गन्धघ्राणैस्तथैव च । रूक्षाच्च वायोः स्पर्शाच्च शिशिरं रूपयेद् बुधः ॥' का.

प्रमोद[1]जडता(नना)रम्भैः स च (रुप ?) भोगैः पृथग्विधैः ।
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥ ३२ ॥

[2]खेदप्रमार्जनैश्चैव भूमितापैः सवीजनैः[3] ।
[4]उष्णस्य वायोः स्पर्शेन ग्रीष्मं त्वभिनयेद्बुधः ॥ ३३ ॥

कदम्बनिम्बकुटजैः शाद्वलैः सेन्द्रगोपकैः ।
[5]मेघैर्वातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् ॥ ३४ ॥

मेघौघनादगम्भीरै[6]र्धाराप्रपतनैस्तथा ।
विद्युन्निर्घातघोषैश्च [7]वर्षारम्भं समादिशेत् ॥ ३५ ॥

[8]यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा ।
[9]निर्देश्यः सहितस्तेन इष्टानिष्टार्थदर्शनात् ॥ ३६ ॥

एतानृतूनर्थवशा[10]द्दर्शयेद्बिरहानुगान् ।
[11]सुखिनस्तु सुखोत्पन्नान्दुःखितान्दुःखसंयुतान् ॥ ३७ ॥

[12]यो येन भावेनोद्दिष्टः सुखदेनेतरेण वा ।
स तदाहितसंस्कारः सर्वं पश्यति तन्मयम् ॥ ३८ ॥

[13]विभावेनाहृतं कार्यमनुभावे निरूपणात् ।
तथैव चानुभावानां भावस्यानुगमेन च ॥ ३९ ॥

विभावेनाहृतं कार्यमनुभावेन नीयते[14] ।
आत्माभिनयनं भावो विभावः परदर्शनम् ॥ ४० ॥

गुरुर्मित्रं सखा स्निग्धः संबन्धी बन्धुरेव च[15] ।

---

१. 'जनना' ख., का. २. 'खेदाप्रमार्जनाच्चापि' का. ३. 'सुवीजनैः' का. ४. 'उष्णाच्च वायोः स्पर्शाच्च' का. ५. कदम्बकैर्मयूराणां प्रावृषं संनिरूपयेत् ।' का. ६. '°गम्भीरा धाराप्रपतनैरपि' का. ७. 'वर्षरात्रं विनिर्दिशेत्' का. ८. 'यद् यच्च' का. ९. 'ऋतुः स तेन निर्देश्यः' का. १०. 'प्रयुञ्जीत यथारसम्' का. ११. 'सुखितेषु सुखोपेतां दुःखार्तौ दुःखसंयुताम् ।' का. १२. 'भावाभिनयनं कुर्यात् विभावानां निदर्शनैः । तथैव चानुभावानां भावात् सिद्धिः प्रकीर्तिता ॥' का. १३. 'पद्यमेतत् का. मु. पुस्तके नास्ति । १४. 'रूप्यते' का. १५. 'वा' का.

[1]आवेद्यते तु यः प्राप्तः स विभाव इति स्मृतः ॥ ४१ ॥
[2]यस्तस्य संभ्रमोत्थानैरर्घपाद्यासनादिभिः ।
पूजनं क्रियते भक्त्या सोऽनुभाव इति स्मृतः ॥ ४२ ॥
एवमन्येष्वपि तथा नाना[3]कार्यार्थदर्शनात् ।
विभावो वापि भावो वा विज्ञेयोऽर्थवशाद्बुधैः ॥ ४३ ॥
यश्चापि प्रतिसंदेशो दूतस्येह [4]प्रदीयते ।
[5]अनुभावैस्तु विज्ञेयः प्रतिसंदेशदर्शनात् ॥ ४४ ॥
[6]एवं विभावो भावो वाप्यनुभावोऽथवा पुनः ।
अभिनेयस्तु पुरुषैः प्रमदाभिस्तथैव च ॥ ४५ ॥
स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् ।
आयतं [7]वावहित्थं वा स्त्रीणां [8]कार्यं स्वभावतः ॥ ४६ ॥
[9]प्रयोजनवशाच्चैव स्थानान्यन्यानि योजयेत् ।
नानाभावाभिनयनैः प्रयोगैश्च पृथग्विधैः ॥ ४७ ॥
[10]धैर्यलीलाङ्गहारं स्यात्पुरुषाणां तु चेष्टितम् ।
मृदुलीलाङ्गहारं तु कार्यं स्त्रीणां तु चेष्टितम् ॥ ४८ ॥
[11]हस्तपादाङ्गसंचारः स्त्रीणां [12]संललितो भवेत् ।
[13]सधीरस्तु ततोऽपि स्याद्व्यापारः पुरुषाश्रयः ॥ ४९ ॥
[14]यथारसं यथाभावं स्त्रीणां [15]संललितो भवेत् ।
नराणां प्रमदानां च [16]भावाभिनयनं पृथक् ॥ ५० ॥

---

१. 'आवेद्यते हि यः प्राप्तो विभावः स तु संज्ञितः ।' का. २. 'यस्त्वस्य संभ्रमो (?) स्थानमर्घ्यासनपरिग्रहः । पूजनं क्रियते वाचा सोऽनुभावः प्रकीर्तितः ॥' का. ३. 'नाना-कार्यत्वदर्शनात्' का. ४. 'प्रतीयते' का. ५. 'सोऽनुभाव इति ज्ञेयः प्रतिसन्देश-दर्शितः ।' का. ६. 'एवं भावो विभावो वा अनुभावस्तथैव च । अभिनेयस्तु पुरुषैः प्रमदादिभिरथापि वा ॥' का. ७. 'चावहित्थं वा' का. ८. 'कार्यप्रयोगतः' का. ९. 'पद्यमेतत् का-पुस्तके नास्ति । १०. 'धैर्यलीलाङ्गसंपन्नं पुरुषाणां विचेष्टितम् । मृदुलीलाङ्गहारैश्च स्त्रीणां कार्यं तु चेष्टितम् ॥' का. ११. 'कर°' का. १२. 'तु ललितो' का. १३. 'सधीरश्चोद्धतश्चैव पुरुषाणां प्रकीर्तितः ।' का. १४. पद्यार्धमेतत् का-पुस्तके नास्ति । १५. 'सलिलतो' क-ख. १६. 'शब्दार्थाभिनयः पृथक्' का.

भावानुभावसंयुक्तं व्याख्यास्याम्यनुपूर्वशः ।
आलिङ्गनेन गात्राणां सस्मितेन च चक्षुषा ॥ ५१ ॥
[1]तथोल्लुकुशनाश्चापि(तथाल्पकथनाच्चापि ?) हर्षं संदर्शयेन्नरः ।
क्षिप्रं संजातरोमाञ्चा वाष्पेणावृतलोचना ॥ ५२ ॥
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः ।
[2]उद्धृते(उद्धृत्त ?)रक्तनेत्रश्च संदष्टाधर एव च ॥ ५३ ॥
निश्वसे(श्वास ?)त्कल्पि(कम्पि ?)ताङ्गश्च क्रोधं त्वभिनयेन्नरः )
नेत्रा[3]भ्यां बाष्पपूर्णाभ्यां चिबुकोष्ठप्रकम्पनम्[4] ॥ ५४ ॥
शिरः[5]कम्पाद्भ्रूकुट्या च नेत्रसस्या(?)ञ्जनेन च ।
मौनेनाङ्गुलि[6]भङ्गेन माल्याभरणवर्जनात् ॥ ५५ ॥
आयतस्थानकच्छाँया[7] ईर्ष्याकोपो[8] भवेत्स्त्रियाः ।
निःश्वासोच्छ्वासबहुलैरधोमुखविचिन्तनैः ॥ ५६ ॥
[9]आकार्यवाञ्छनाच्चापि दुःखं पुंसां तुं[10] योजयेत् ।
[11]रुदितैः श्वसनैश्चैव [12]शिरोभिहननेन च ॥ ५७ ॥
[13]भूमिहस्ताभितस्वेदु(?) [14]देवं स्त्रीषु प्रयोजयेत् ।
[15]आनन्दं चार्तिर(?)भवमीर्ष्यासंभवमेव च[16] ॥ ५८ ॥
[17]हाँ मूर्खमुक्तं रुदितं तत्स्त्रीनीचेषु योजयेत् ।
[18]भ्रंशमावेगचेष्टाभिः शस्त्रसंपतनेन च ॥ ५९ ॥
पुरुषाणां भयं कार्यं धैर्याय[19] शबलादिभिः ।

---

१. 'तथाल्पकथनाच्चापि हर्षं संयोजयेद् बुधः ।' का. २. 'उद्वृत्तरक्तनेत्रं च संदंशेनाधरस्य च । निश्वासकम्पिताङ्गश्च क्रोधं त्वभिनयेद् बुधः ॥' का. ३. 'बाष्पपूर्णेक्षणाच्चैव' का. ४. '°प्रदर्शनात्' का. ५. 'शिरसः कम्पनाच्चैव भ्रुकुटीदर्शनेन च ।' का. ६. '°ङ्गुलिभागेन' का. ७. '°च्छाय' का. ८. 'ईर्ष्याकोपो भवेत् स्त्रियः' का. ९. 'आकाशवीक्षणाच्चापि' का. १०. 'प्रयोजयेत्' का. ११. 'रुदितैश्च स्मितैश्चैव' का. १२. 'उरोऽभिहननेन च' का. १३. 'भूमिघाताभिघातैश्च' का. १४. 'दुःखं' का. १५. 'आनन्दाश्रुसमुत्पन्नं' का. १६. 'वा' का. १७. 'यत्पूर्वयुक्तं सहितं स्त्रीनीचेषु प्रयोजयेत्' का. १८. 'संभ्रमोद्वेगचेष्टाभिः' का. १९. 'धैर्योद्वेगबलादिभिः का.

तत्र[1] प्रचलनस्तब्धगात्र[2]स्फुरणकम्पनैः ॥ ६० ॥
संत्रस्तहृदयत्वाच्च पार्श्वाभ्यां तु[3] विलोकनैः ।
शत्रु[4](त्रो)रन्वेषणाच्चापि तथोच्चैःक्रोशनादपि ॥ ६१ ॥
पुरुषालिङ्गनाच्चापि भय[5]कार्यं भवेत्स्त्रियाः ।
मयाः[6] ये वि(ऽभि)हिताः पूर्वं[7] तान्स्त्रीनीचेषु योजयेत् ॥ ६२ ॥
मृदुभिः स्खलितै[8]र्नित्य[9]माकारस्यावलम्बनात्[10] ।
नेत्रा[11]विघूर्णनैश्चैव विल[12]म्बैः कथितैस्तथा ॥ ६३ ॥
गात्राणां कम्पनाच्चैव मदः कार्यो भवेत्स्त्रि[13]याः ।
अनेन विधिना का[14]र्या[ः] प्रयोगे कारणोत्थि[15]ताः ॥ ६४ ॥
पौरुषाः[16] स्त्रीकृता वापि ना(भा)वास्त्वभि[17]नयं प्रति ।
सर्वे तु लल[18]नाभावाः स्त्रीणां कार्याः प्रयोक्तृ[19]भिः ॥ ६५ ॥
वीर्य[20]माधुर्यसंपन्ना भावाः कार्यास्तु[21] पौरुषाः ।
त्रिपताकाङ्गुलिभ्यां च मिलिताभ्यां प्र[22]योजयेत् ॥ ६६ ॥
शुक[23]सारिकानुष्ठाना(?)न्सूक्ष्मानन्यांश्च पक्षिणः ।
शिखिनः[24] सारसा हंसाः स्थूला[25] येऽन्ये च पक्षिणः ॥ ६७ ॥
पक्षा[26]ङ्गोदारगतिभिरभिनेयाः प्रयोक्तृभिः ।
खरो[27]ष्ट्रगोश्वाश्वतरान्सिंहव्याघ्रगजादिकान् ॥ ६८ ॥

---

१. 'चलतारकनेत्रत्वात्' का. २. 'गात्रैः स्फुरितकम्पितैः' का. ३. 'पार्श्वाभ्यामवलोकनैः' ४. 'त्रातुरन्वेषणाच्चापि उच्चैराक्रन्दितेन च' का. ५. 'भयं कार्यं' का. ६–७. 'मया ये विहिताः पूर्वं तान् स्त्रीनीचेषु योजयेत्' का. ८. 'ललितैः' का. ९. 'कार्यम्' का. १०. '°वलम्बनात्' का. ११. 'नेत्रावघूर्णनाच्चापि' का. १२. 'विलापकथितैस्तथा' का. १३. 'स्त्रियः' का. १४. 'कार्यः' का. १५. 'करणोत्थितः' का. १६. 'पौरुषस्त्रीकृतो' का. १७. 'भावाभिनयनं' का. १८. 'ललिता' का. १९. 'प्रयोगतः' का. २०. 'धैर्य°' का. २१. 'कार्याश्च' का. २२. 'मिलिताभ्यां' का. २३. 'शुकाश्च शारिकाश्चैव सूक्ष्मा ये चैव पक्षिणः' का. २४. 'शिखिसारसहंसाद्या' का. २५. 'स्थूला येऽपि स्वभावतः' का. २६. 'रेचकैरङ्गहारैश्च तेषामभिनयो भवेत्' का. २७. 'खरोष्ट्राश्वेभसिंहाश्च व्याघ्रगोमहिषादयः' का. 'गेश्वाश्वनूगान्' (?) क-ख.

[1]महापशूनङ्गहारैर्गतिभिश्च प्रदर्शयेत् ।
भूताः पिशाचा यक्षाश्च दानवा राक्षसास्तथा ॥ ६९ ॥
अङ्गहारैर्विनिर्देश्याः कर्मसंकीर्तनादपि ।
अङ्गहारैर्विनिर्देश्या अप्रत्यक्षा[2] भवन्ति ये ॥ ७० ॥
प्रत्यक्षा[3] अभिनेतव्या भयोद्वेगैः सविस्मये[4] (यैः ?) ।
देवाः प्रणामकरणै[5]र्भावैश्च विचेष्टितैश्च ललितैश्च ।
अर्थवशाद[6]भिनेया अप्रत्यक्षाः प्रयोगेषु ॥ ७१ ॥
भयोत्थितेन[7] भेदेन ह्यरालेन शिरः स्पृशेत् ।
नरेऽभिवादनं[8] ह्येतदप्रत्यक्षे[9] विधीयते ॥ ७२ ॥
खटिकावर्धमानेन नखंटाख्येन[10] वा पुनः ।
दैवतानि[11] गुरूंश्चैव प्रमदाश्चाभिवादयेत् ॥ ७३ ॥
दिवौकसश्च पूज्याश्चाप्रत्यक्षाश्च[12] भवन्ति ये ।
प्रणामैश्च[13] प्रभावैश्च गम्भीरार्थे[14] प्रयोजयेत् ॥ ७४ ॥
महाजनं[15] सखिजनं विटधूर्तजनं तथा ।
परिमण्डलसंज्ञेन हस्तेनाभिनयेद्बुधः ॥ ७५ ॥
पर्वतान्प्रांशुयोगेन वृक्षांश्चैव समुत्थितान् ।
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत् ॥ ७६ ॥
समूहं सागराणां बहुविस्तीर्णमेव च ।
पताकाभ्यां तु हस्ताभ्यां विक्षिप्ताभ्यां प्रदर्शयेत् ॥ ७७ ॥
धैर्यं[16] शौर्यं च दर्पं च गर्वमौदार्यमुद्दयम्[17](?) ।

---

१. 'गतिप्रचारैरङ्गैश्च तेऽभिनेयाः प्रयोक्तृभिः' का. २. 'प्रत्यक्षा न भवन्ति ये' का. ३. 'प्रत्यक्षं त्वभिनेयास्तु' का. ४. 'सविस्मयैः' का. ५. 'देवाः प्रमाणकरणैः भावैश्चापि विचेष्टितैः' का. ६. 'चिह्नैरभिनेया ह्यर्थवशादप्रत्यक्षः प्रयोगज्ञैः' का. ७. 'पार्श्वोत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत्' का. ८. 'नराभिवादनं' का. ९. 'अप्रत्यक्षैः' का. १०. 'कपोताख्येन' का. ११. 'देवताभिर्गुरूंश्चैव प्रमदाभिश्च वादयेत् ।' क-ख. १२. 'पूज्याश्च प्रत्यक्षाश्च' का. १३. 'तान् प्रणामैश्च प्रभावैश्च' का. १४. 'गम्भीरार्थैः' का. १५. इत आरभ्य श्लोकत्रयी का. पुस्तकेऽस्मदीय-संस्करणोद्धृतैव. १६. 'ततः' का. १७. 'उच्छ्रयम्' का.

ललाटदेशसंस्थेन ह[1]रालेन विनिर्दिशेत् ॥ ७८ ॥
व[2]क्षोदेशादपावृत्तौ करौ तु मृगशीर्षकौ ।
विस्तीर्णाय द्रुतक्षिप्तौ योज्यौ य[त्] स्यादपावृतम् ॥ ७९ ॥
अधोमुखोत्तानतलौ हस्तौ किंचित्प्रदर्शयेत् ।
........................................ ॥ ८० ॥
........................................ ।
कृत्वा प्र[3]दर्शयेत्तद्वद्वहध्वान्तं बिलं गुहाम् ॥ ८१ ॥
का[4]मपाशग्रहग्रस्ता ज्वरोपहतमानसाः ।
एवंविधा नरा ये च तेषां का[5]र्यं विचेष्टितैः ॥ ८२ ॥
दो[6]लाभिनयनं कु[7]र्याद्दोलानां त्ववदोलनैः ।
संक्षोभणेन गा[7]त्राणां रज्जुप्रग्रहणेन च ॥ ८३ ॥
य[8]दा चाङ्गवती दोला भवेत्प्रत्यक्षसंश्रया ।
आ[9]सनैरुपविष्टानां कार्यं तत्वा(त्रा ?)पि दोलनम् ॥ ८४ ॥
नयेद[10]ङ्गवती दोला प्रत्यक्षाभिनये भवेत् ।
आकाशवचनानीह वक्ष्याम्यात्मगतं त[11]था ॥ ८५ ॥
अपवारितकं चैव जनान्तिकमथा[12]पि वा ।
दू[13]रस्थान्वेषणं यत्स्यादशरीरनिवेशन[14]म् ॥ ८६ ॥
परोक्षान्तरितं य[15]च्चाप्याकाशवचनं तु तत् ।
तत्रोत्तरकृतैर्वाक्यैः संलापं त[16]त्र योजयेत् ॥ ८७ ॥
नानाकारणसंयुक्तै र[17]सभावसमुत्थितैः ।

---

१. 'हस्तौ किंचित् प्रसारितौ' का. २. 'वक्षोदेशाद्' इत्यारभ्य सार्धश्लोकः का. पुस्तके नास्ति । ३. 'कृत्वा निदर्शयेत्तत्तद्' का. ४. 'कामपाशगृहग्रस्ता' क-ख. 'कामशापग्रहग्रस्ता' का. ५. 'तेषामभिनयः कार्यो मुखगात्रविचेष्टितैः' ६. 'कार्यं दोलायास्तु विलोलनैः' का. ७. 'गात्राणां रज्ज्वाः प्रग्रहणेन च' का. ८. 'तदा कम्पवती दोला भवेत् प्रत्यक्षसंश्रया' का. ९. 'आसने ह्युपविष्टानां कीर्तितं तत्र दोलनम्' का. १०. 'एतत्पद्यार्धं का. पुस्तके नास्त्येव । ११. 'वक्ष्याम्यात्मगतानि च' का. १२. 'चापि' का. १३. 'दूरस्थभाषणं' का. १४. 'निवेदनम्' का. १५. 'वाक्यम्' का. १६. 'संप्रयोजयेत्' का. १७. 'काव्यभावसमुत्थितौ' का.

[1]अतिहर्षमदोन्मादा रागद्वेषभयार्दितः ॥ ८८ ॥
विस्मयः क्रोधदुःखार्तादेशादेकोऽपि भाषत(?) ।
हृदयस्थं स[2] वै यत्तु तदात्म(त्म)गतमिष्यते ॥ ८९ ॥
निगूढभावसं[3]युक्तमपवारितके[4]व (न?) च ॥ ९० ॥
कार्यवशादश्रवणं पार्श्वगतै[5]र्जनान्तिकं च स्यात् ।
[6]हृदयगतं सविकल्पं भाववशादात्मगतमेव ॥ ९१ ॥
यानि गुह्यार्थयुक्तानि वचनानीह नाटके ।
[7]जनान्तिकानि कर्णे तु संनियोज्यानि योक्तृभिः ॥ ९२ ॥
[8]सकृदुक्तं तु यत्कार्यं भूयः कस्मात्तु कारणात् ।
[9]तत्कर्णे श्रावयेद्येन न याति पुनरुक्तताम् ॥ ९३ ॥
[10]अव्यभिचारेण यावदाकाशजनं नि(नान्ति)कात्मगतपाठात् ।
[11]प्रत्यक्षपरोक्षगतानात्मसमुत्थान् परोत्थांश्च ॥ ९४ ॥
[12]हस्तमन्तरतः कृत्वा त्रिपताकं प्रयोजयेत् ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥ ९५ ॥
[संभ्रमोत्पातरोषेषु शोकावेगकृतेषु च ।
यानि वाक्यानि उच्यन्ते पुनरुक्तानि तेष्विह ॥
ब्रूह्यहो साधु हा हेति गच्छ किं मुञ्च मा वद ।
एतानि वचनानीह द्वित्रिसंख्यानि कारयेत् ।
प्रत्यङ्गहीनं यद्वाक्यं विकृतं च प्रयुज्यते ।
न लक्षणकृते तत्र कार्यस्त्वभिनयो बुधैः ॥

---

१. 'अतिहर्ष—' इत्याद्यर्धद्वयी का. पुस्तके नास्ति २. 'वचो यत्तदा-' का. ३. 'संसक्तम्' का. ४. 'अपवारितकं स्मृतम्' का. ५. 'पार्श्वगतैर्यज्जनान्तिकं तत् स्यात्' का. ६. 'हृदयस्य सवितर्कं भावस्थं चात्मगतमेव' का. ७. 'कर्णे निवेद्यमेवमेवमित्यभिधाय च' का. ८. 'पूर्ववृत्तं तु यत् कार्यं भूयः कथ्यं तु कारणात्' का. ९. 'कर्णप्रदेशे यद्वाक्यमगात्तत् पुनरुक्तताम्' का. १०. 'अव्यभिचारेण पदैराकाशजनान्तिकात्मगतवाक्यैः ।' का. ११. 'प्रत्यक्षपरोक्षकृतानात्मसमुत्थान् परस्थांश्च ।' का. १२. 'हस्तमन्तरितं कृत्वा त्रिपताकः प्रयोक्तृभिः ।' का.

भावो य उत्तमानां तु न तं मध्येषु योजयेत् ।
यो भावश्चैव मध्यानां न तं नीचेषु योजयेत् ॥
पृथक्कू पृथक्कु(ग् ?) भावरसैरात्मचेष्टासमन्वितः ।
ज्येष्ठमध्यमनीचेषु नाट्यं रागं च वाञ्छति ॥]
[1]स्वप्नायितवाक्यार्थस्याभिनयो च खलु हस्तसंचारैः ।
[2]सुप्ताभिहितैरेव तु वाक्यार्थैः सोऽभिनेयः स्यात् ॥ ९६ ॥
मन्दस्वरसंचार(रं ?) व्यक्ताव्यक्तं द्विरुक्तवचनार्थम् ।
पूर्वानुस्मरणकृतं कार्यं स्वप्नान्ति(यि)ते पाठ्यम्[3] ॥ ९७ ॥
[4]प्रशिथिलगुरुकरणाक्षरघण्टानिश्वनि(स्वान ?) वाक्यगद्गदैको हि ।
[5]कासश्वासोपेतां काकुं कुर्यान्मरणकाले ॥ ९८ ॥
[6]हिक्काश्वासोपेतो मूर्च्छोपगमे तु मरणवत्कथयेत् ।
[7]अतिमतेष्वपि कार्यं पाठ्यं पुनरुक्तसंप्रयुक्तम् ॥ ९९ ॥
वृद्धानां योजयेत्पाद्यं[8] (?) गद्गदं सलिलाक्षरम्[9] ।
अस्पष्टवर्णसंयुक्तं बालानां तु कलस्वनम् ॥ १०० ॥
[10]नानाभावोपगतो मरणाभिनयो बहुप्रकारस्तु ।
[11]विक्षिप्तहस्तपादैः · · · संत्रै(सवै)स्तथा कार्यः ॥ १०१ ॥
व्याविद्धते तु मरणं विषण्णगात्रेण संप्रयोक्तव्यम् ।
[12]हिक्काश्वासोपेतं · · · यत्पराधीनगात्रं वा ॥ १०२ ॥
[13]विषवेगेऽपि च मरणं कार्यं विक्षिप्तगात्र[14]करणं च ।
विषवेगे(गः?)संप्रयुक्तं विस्फुरिताङ्गक्रियोपेतम् ॥ १०३ ॥

---

१. 'स्वप्नायितेषु भावाः कर्तव्या न खलु हस्तसंचारैः' का. २. 'सत्त्वाभिनयेनैव वाक्यार्थेनैव ते साध्याः' का. ३. 'पापम्' (?) मु. ४. 'प्रशिथिलकरणाक्षरघण्टानुस्वरित-वाक्यगद्गदवत् ।' का. ६. 'हिक्काश्वाससकफां' का. ६. 'हिक्काश्वासोपेतमनपेक्षित-मूर्च्छितं मरणम्' का. ७. इतःप्रभृति सार्धं पद्यमेकं का. पुस्तके नास्ति । ८. 'पाठ्यम्' इति स्यात्. ९. सलिलक्षरमित्यर्थः स्यात्. १०. 'कथनीयो नानाभावतो' का. ११. 'विक्षिप्तहस्तपादैर्निवृत्तैः सर्वैस्तथा गात्रैः ।' का. १२. 'हिक्काश्वासोपेतमनवेक्षित-गात्रसंचारम् ।' का. १३. 'विषपीतेऽपि' का. १४. 'विक्षिप्तगात्रकरचरणम्' का.

प्रथमे योगे[1] कार्यं त्वभिनेयं वेपथुं[2] द्वितीये तु ।
दाहस्तदा[3] तृतीये विलल्लिका[4] स्याच्चतुर्थे तु ॥ १०४ ॥
फेनस्तु[5] पञ्चमस्थे तु नीचा(ग्रीवा?)षष्ठे तु भज्यते ।
जडता[6] सप्तमे तु स्यान्मरणं त्वष्टमे भवेत् ॥ १०५ ॥
प्रवृद्धताल(र?)के[7] नेत्रे कपोलोऽधर[8] एव च ।
अंशो(शां)सोदरभुजानां च[9] कृशता कार्यं[10](र्श्य)रूपि(प?)णे ॥१०६॥
हस्तयोः पादयोर्मूर्ध्नो[11] युगपत्पृथगेव वा ।
कम्पनेन यथायोगे[12](गं?)वेपथुं संप्रयोजयेत् ॥ १०७ ॥
सर्वाङ्गवेपनं[13] वेपथुस्तु कण्डूयनं[14] तथाङ्गानाम् ।
विक्षिप्तहस्तगात्रं[15] दाहं नाट्ये प्रयुञ्जीत ॥ १०८ ॥
उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः ।
अव्यक्ताक्षरकथनैर्विलल्लिकामभिनयेदेवम्[16] ॥ १०९ ॥
वमनोद्गारनिपातैः[17] शिरसश्च विलोडनैरनेकविधैः ।
फेनस्य(?)भिनेतव्यो[18] निःसंज्ञितया निमेषश्च ॥ ११० ॥
अंशकपोलस्पर्शाच्छिरसश्च विनामनाच्छिरोभङ्गात् ।
सर्वेन्द्रियैर्मूढतया[19] जडतामेवं प्रयुञ्जीत ॥ १११ ॥
संमीलितनेत्रत्वाद्व्याधिविवृद्ध्या भुजङ्गदर्शनाद्वा[20] ।
एवं हि नाट्ययोगे मरणानि[21] बुधैः प्रयोज्यानि ॥ ११२ ॥

---

१. 'विषवेगसंप्रयुक्तं' का. 'वेगे' का. २. 'वेपथुः' का. ३. 'दाहस्तथा' का. ४. 'हिक्कां कुर्याच्चतुर्थे तु' का. ५. 'फेनं च पञ्चमे वै' का. 'ग्रीवाभङ्गं तथैव षष्ठे तु' का. ६. 'जडतां तु सप्तमे वै प्रोक्तं मरणं तथाष्टमे चैव' का. ७. 'प्रविष्टतारके' का. ८. 'कपोलोऽधर एव च' का. ९. 'तु' का. १०. 'कार्श्यरूपणम्' का. ११. 'मूर्ध्नि' का. १२. 'यथायोगं' का. १३. 'सर्वाङ्गवेपनोद्वेजनेन' का. १४. 'कण्डूयनात्' का. १५. 'विक्षिप्तहस्तगात्रैर्दाहश्चैवाभिनेतव्यः' का. १६. 'हिक्कामेवं त्वभिनयेत्तु' का. १७. 'उद्गारवमनयोगैः सृक्कालेहैर्विवर्तनाच्छिरसः' का. १८. 'फेनस्याभिनेतव्यो' इत्यार्धद्वयी का. पुस्तके नास्ति। १९. 'सर्वेन्द्रियसंमोहात्' का. २०. 'भुजङ्गदंशाद्वा' का. २१. 'नाट्यधर्मे' का.

[1]संभ्रमेष्वथ रोषेषु शोकवेगकृतेषु च ।
यानि काव्यानि युञ्जीत पुनरुक्तं तु तेष्विह ॥ ११३ ॥
साध्वतो मुञ्च हा हेति किं किं मा मा वदेति च ।
एतानि वचनानीह द्वित्रिसंख्यानि कारयेत् ॥ ११४ ॥
प्रत्यं(ति)गृहीतं यत्काव्यं विकृतं च प्रयुज्यते ।
न लक्षणकृतस्तस्य कार्यस्त्वभिनयो बुधैः ॥ ११५ ॥
भावा ये उत्तमानां तु न तान्मध्येषु योजयेत् ।
ये भावाश्चैव मध्यानां न तान्नीचेषु योजयेत् ॥ ११६ ॥
पृथक्पृथग्भावचेष्टैरात्मचेष्टासमुत्थितैः ।
ज्येष्ठमध्यमनीचेषु भवेन्नाट्ये तु रागकृत् ॥ ११७ ॥
[2]अभिनयपरिशेषाः कर्तव्याः सर्वभावसंयुक्ताः[3] ।
अन्येऽपि लौकि[4]तो ये ते सर्वे लोकतः साध्याः ॥ ११८ ॥
नानाविधैर्यथा पुष्पैर्माल्यं ग्रथ्नाति माल्यकृत् ।
अङ्गोपाङ्गै[5]रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥ ११९ ॥
या यस्य लीला नियता गतिश्च रङ्गप्रवृत्तस्य[6] विधानयुक्ताः ।
तामेव कुर्यादविमुक्तसत्त्वो यावन्न रङ्गात्प्रतिनिःसृतः स्या[7]त् ॥१२०॥
एवमेते मया प्रोक्ता भावा[8] ह्यभिनयं प्रति ।
[9]नोक्ता येऽपि तु तेऽप्यत्र लोकाद्ग्राह्यास्तु पण्डितैः ॥ १२१ ॥
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
लोका[10]ध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम्[11] ॥ १२२ ॥
[12]तदध्यात्माभिसंभूतं छन्दःशब्दसमन्वितम् ।

---

१. 'संभ्रमेष्वथ' इत्यादि समारभ्य श्लोकपञ्चकं का. पुस्तके नास्ति । २. 'एतेऽभिनयविशेषाः' का. ३. 'सत्त्वभावयुक्ताः स्युः' का. ४. 'लौकिका ये' का. ५. 'अङ्गोपाङ्गरसैः' का. ६. 'रङ्गप्रविष्टस्य विधानतः स्युः' का. ७. 'सः' का. ८. 'वागङ्गाभिनयाः क्रमात्' का. ९. 'नोक्ता ये च मया तत्र लोकाग्रा(द्रा ?) ह्यास्तु ते बुधैः' का. १०. 'वेदाध्यात्मपदार्थेषु' का. ११. 'प्रतिष्ठितम्' का. १२. 'वेदाध्यात्मोपपन्नं तु शब्दश्छन्दःसमन्वितम्' का.

लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं त्विदम् ॥ १२३ ॥
देवतानामृषीणां च राज्ञां लोकस्य चैव हि ।
पूर्ववृत्तानुचरितं नाम(ट्य?)मित्यभिधीयते ॥ १२४ ॥
लोकस्य चरितं यत्तु नानावस्थान्तरात्मकम् ।
तदङ्गाभिनयोपेतं नाट्यमित्यभिधीयते ॥ १२५ ॥
एवं लोकस्य या वार्ता नानावस्थान्तरात्मिका ।
सा नाट्ये संविधातव्या नाट्यहेतोः प्रयोक्तृभिः ॥ १२६ ॥
यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः ।
लोकधर्मप्रवृत्तानि नाट्यमित्यभिसंज्ञितम् ॥ १२७ ॥
न च शक्यं हि लोकस्य स्थावरस्य चरस्य च ।
शास्त्रेण नियमं कर्तुं नानाचेष्टाविधिं प्रति ॥ १२८ ॥
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम् ।
तस्माल्लोकप्रमाणं हि ज्ञेयं नाट्यं प्रयोक्तृभिः ॥ १२९ ॥
नाट्यप्रकाराः कथिता मयैते विज्ञाय सम्यङ्मनुजैः प्रयोज्याः ।
नाट्यस्य तत्त्वानुगतः प्रयोगः संमानमग्र्यं लभते हिरण्यम् ॥ १३० ॥

इति भारतीये नाट्यशास्त्रे चित्राभिनयाध्यायः पञ्चविंशः ।

---

१. 'लोकस्वभावजम्' का. २. 'इतोऽग्रे तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते' इति पद्यार्धमधिकं का. पुस्तके. ३. 'अथ कुटुम्बिनाम्' का. ४. 'कृतानुकरणं लोके नाट्यम्' का. ५. 'इत्यभिसंज्ञितम्' का. ६. 'नाट्यवेदविचक्षणैः' का. ७. 'तानि नाट्यं प्रकीर्तितम्' का. ८. 'हि' का. ९. 'निर्णयं कर्तुं भावचेष्टाविधिं प्रति' का. १०. 'कर्तव्यं नाट्ययोक्तृभिः' का. ११. इतः पूर्वं का. पुस्तके—

'एवं भावानुकरणे नानाप्रकृतिसंभवे ।
भावाङ्गसत्त्वसंयुक्तो यत्नः कार्यः प्रयोक्तृभिः ॥' इत्यधिकम् ।

१२. पद्यस्यास्य स्थाने का. पुस्तके—

'येऽभिक्रमैर्योभिनयं तु सम्यक् विज्ञाय रङ्गे मनुजः प्रयुञ्ज्यात् ।
स नाट्यतत्त्वाभिनयप्रयोगसंमानमग्र्यं लभते च लोके ॥
ज्ञेयास्त्वभिनया ह्येते वाङ्नेपथ्याङ्गसंश्रयाः ।
प्रयोगज्ञेन कर्तव्या नाटके सिद्धिमिच्छता ॥' इति पद्यद्वयी ।

१३. 'इति भारतीये नाट्यशास्त्रे चित्राभिनयाध्यायः पञ्चविंशः' इति का. १४. 'चित्राभिनयः षड्विंशतितमोऽध्यायः' क-ख.

षड्विंशोऽध्यायः[1]।

अनुरूपा बृहद्रूपा[2] अविरूपानुरूपिणी[3] ।
त्रिप्रकारा भवेन्नाट्ये प्रकृतिस्तु विभूषिता ॥ १ ॥
स्त्रियास्तु स्त्रीकृतो भावः पौरुषः पुरुषस्य च ।
यथा वयस्तथा तस्मिन्ननुरूपा तु सा भवेत् ॥ २ ॥
यो बालः स्थाविरीं भूमिं वृद्धो वा बालभूमिकाम् ।
तद्भावैः कुरुते नाट्ये विरूपेति हि सा स्मृता ॥ ३ ॥
पुरुषः स्त्रीगतं भावं यत्र प्रकुरुते पुनः ।
रूपानुरूपा सा ज्ञेया प्रयोगे प्रकृतिस्तथा ॥ ४ ॥
छन्दतः पौरुषीं कुर्याद्भूमिकां स्त्रीप्रयोगतः ।
न परस्परचेष्टाभिः कुर्यातां वृद्धबालिशौ ॥ ५ ॥
भूयिष्ठं सुकुमारं तु वृत्तं स्त्रीभिरधिष्ठितम् ।
इत्यर्थं प्रकृतीनां तु दिव्यमानुषयोस्तथा ॥ ६ ॥
रम्भोर्वशीप्रभृतिभिः स्वर्गे नाट्यं प्रवर्तते[4] ।
तथैव मानुषे लोके पार्थिवानां गृहेषु च ॥ ७ ॥
उपदेष्टव्यमाचार्यैः शास्त्रबुध्य(द्ध्या)ङ्गनास्वपि ।
.................................. ॥ ८ ॥
संगीतमरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ।
यन्मधुरकर्कशत्वं भजते नाट्यं प्रयोगेण ॥ ९ ॥
न[5] स्वयं भूमिकान्यासं बुधः स्त्रीणां प्रयोजयेत् ।
तुल्यावस्थक्रियोपेतो(ता) भूमिका प्रकृतिस्तथा ॥ १० ॥
भृशमुद्द्योतयेन्नाट्यं स्वभावकरणाश्रया: (यात्) ।
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥ ११ ॥
यस्मात्स्वभावोपगतो विलासः स्त्रीषु दृश्यते ।

---

१. सोऽयं षड्विंशोऽध्यायः का. पुस्तके चतुस्त्रिंशत्तमः । २. 'विरूपा च तथा रूपानुरूपिणी' इति पाठो भवेदुत्तरलक्षणग्रन्थानुसारात्. ३. 'रूपानुरूपिणी' इति भवेत्. ४. 'प्रवर्तिते' क-ख. ५. 'ना' ख.

तस्मात्स्वभावमधुरस(म)ङ्गं सुलभसौष्ठवम् ॥ १२ ॥
ललितं पौरुषं यच्च सोऽलंकारः परो भवेत् ।
बहुबाहो बहुमुखास्तथा च विकृताननाः ॥ १३ ॥
पशुश्वापदवक्राश्च खरोष्ट्राश्वाननास्तथा ।
एते चान्ये च बहवो नानारूपा भवन्ति ये ॥ १४ ॥
आहार्ययुक्ताः कार्यास्तैर्मृत्काष्ठजतुमर्मभिः ।
स्वाभाविकेन रूपेण प्रविशेद्रङ्गमण्डले ॥ १५ ॥
आत्मरूपं समाच्छास(द्य) वर्णकैर्भूषणैरपि ।
यादृशं यस्य यद्रूपं प्रकृत्या तस्य तादृशम् ॥ १६ ॥
वयोवेशानुरूपेण प्रयोज्यं नाट्यकर्मणि ।
यथाजीवस्वभावस्य परित्यज्यान्यदैहिकम् ॥ १७ ॥
परभावं प्रकुरुते परदेहं समाश्रितः ।
एवं बुधः परं भावं सोऽस्मीति मनसा स्मरन् ॥ १८ ॥
वेषवागङ्गलीलाभिश्चेष्टाभिश्च समाचरेत् ।
.......................... ॥ १९ ॥
प्रयोगो द्विविधश्चैव विज्ञेयो नाट्यमाश्रितः ।
सुकुमारस्तथाविद्धो नानाभावरसाश्रयः ॥ २० ॥
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च ।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ॥ २१ ॥
सुकुमाराः प्रयोगा ये राज्ञामामोदकारकाः ।
शृङ्गाररसमासाद्य स्त्रीणां भाणं प्रयोजयेत् ॥ २२ ॥
युद्धोद्धता वेगकृताः संरम्भबहुलाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः प्रयोज्याः पुरुषैस्तु ते ॥ २३ ॥
अनुद्धव (ट)मसंभ्रान्तमनाविद्धाङ्गचेष्टितम् ।
लयतालकलोपेतं प्रमाणनियताक्षरम् ॥ २४ ॥
सुविभक्तपदालापमनिष्ठुरसकाहलम् ।
यदीदृशं भवेन्नाट्यं नारीणां तु प्रयोजयेत् ॥ २५ ॥

एवं कार्यं प्रयोगज्ञैर्भूमिकानां विकल्पनम् ।
अतः परं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् ॥ २६ ॥

इति भारतीये नाट्यशास्त्रे प्रकृतिविकल्पनाध्यायः षड्विंशः ।

---

सप्तविंशोऽध्यायः[1] ।

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् ।
यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थः[2] संप्रदर्शितः ॥ १ ॥
सिद्धिस्तु द्विविधा ज्ञेया मानुषी[3] दैविका तथा ।
वाङ्मनःकायसंभूता नानाभावरसाश्रया ॥ २ ॥
दशाङ्गा मानुषी सिद्धिर्दैवी[5] तु द्विविधा स्मृता ।
नानासत्त्वाश्रयकृता शारीरी वाङ्मयी तथा ॥ ३ ॥
स्मितार्धहासा[6] विज्ञेया साव(ध्व?)हो[7] कष्टमेव च ।
प्रवृद्धनादावकुष्टा[8] सिद्धिर्ज्ञेया च वाङ्मयी ॥ ४ ॥
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च ।
चै(चै?)लादां(द?)ङ्गुलिविक्षेपैः[9] शारीरी सिद्धिरिष्यते ॥ ५ ॥
किंचिच्छ्लि[10](च्छ्लि?)ष्टो रसो हास्यो नृत्यद्भिर्यः प्रयुज्यते ।
स्मितेन संप्रतिग्राह्यं[11] प्रेक्षकैर्नित्यमेव च[12] ॥ ६ ॥
किंचिदस्पष्टहास्यं यत्तथा वचन[13] एव च ।
अर्धहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि[14] ॥ ७ ॥
विदूषकोच्छेक(द?)[15]कृतं भवेच्छिल्पकृतं च[16] यत् ।
अतिहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि ॥ ८ ॥

---

१. 'अथ सप्तविंशोऽध्यायः' का. पुस्तके । २. 'सिद्ध्यर्थे संप्रतिष्ठितः' का. ३. 'वाक्सत्त्वाङ्गसमुद्भवा' का. ४. 'दैविकी मानुषी चैव' का. ५. 'दैविकी द्विविधाश्रया' का. ६. 'स्मितार्धहासातिहसा' का. ७. 'साध्वहो' का. ८. 'प्रवृद्धनादा च तथा ज्ञेया सिद्धिस्तु वाङ्मयी ।' का. ९. 'चैलदानाङ्गुलिक्षेपैः' का. १०. 'किंचित् श्लिष्टो' का. ११. 'संप्रतिग्राह्यं' का. १२. 'तु' का. १३. 'वचनमेव वा' का. १४. 'तु' का. १५. 'विदूषकोच्छेदकृतं' का. १६. 'तु' का.

यद्वर्गपदसंयुक्तं तथातिशयसंभवम्।
तत्र साध्विति सद्वाक्यं[1] प्रयोक्तव्यं हि साधकैः॥ ९॥
अहंकारस्तदा[2] कार्यो नृणां[3] प्रकृतिसंभवः।
विस्मयादिषु भावेषु प्रहर्षार्थे[4] तथैव च॥ १०॥
करुणेषु[5] प्रयोक्तव्यं कष्टं शास्त्रकृतेन तु।
प्रवृद्धनादः कर्तव्यो विस्मयोत्थो[6] हि सर्वदा॥ ११॥
साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः।
कुतूहलोत्तरावेधैर्बहुमानेन[7] साध्यते॥ १२॥
दीप्तप्रदेशं यत्कार्यं[8] छेद्यभेद्याहवात्मकम्।
सविद्रवमथोत्फुल्लं[9] तथा युद्धनियुद्धकम्॥ १३॥
प्रकम्पितांसमरसं[10] साश्रमोत्थानमेव च।
तत्प्रेक्षकैस्तु[11] कुशलैः साध्यमेवं विधानतः॥ १४॥
एवं[12] साधयितव्ये या तज्ज्ञैः सिद्धिस्तु मानुषी।
दैवीमपि[13] तथा सिद्धिं संप्रवक्ष्यामि तत्त्वतः॥ १५॥
या[14] भावातिशयोपेता सत्त्वयुक्ता तथैव च।
सा प्रेक्षकैस्तु मन्तव्या दैवी सिद्धिः प्रयोगतः॥ १६॥
न शब्दो नैव च क्षोभो न चोत्पातनिदर्शनम्।
संपूर्णता च रङ्गस्य सा सिद्धिर्दैविकी स्मृता॥ १७॥
दैविकी[15] मानुषी चैव सिद्धिरेषा मयोदिता।

---

१. 'वाक्यं तु' का. २. 'अहोकारस्तथा कार्यो' का. ३. 'नृणां' का. ४. 'शृङ्गाराद्भुतविक्रमैः' का. ५. 'करुणेति प्रयोक्तव्यं सास्रं कष्टेति चैव हि' का. ६. 'विस्मयार्थे क.', 'विस्मयार्थेषु नित्यशः' का. ७. 'कुतूहलान्तावेद्यं' का. ८. 'दीप्तप्रदेशं काव्यं यद्' का. ९. 'सविद्रवमथोत्पातं तथा लघुनियुद्धजम्' का. १०. 'सकम्पितांसकशिरः सास्रं सोच्छ्वासमेव च।' का. ११. 'तत्प्रेक्षकैः सकुशलैः' का. १२. 'एवं साधयितव्यैषा' का. १३. 'दैविकीं च तथा सिद्धिं कीर्त्यमानां निबोधत' का. १४. 'सा सत्त्वातिशया ज्ञेया भावयुक्ता तथैव च। नाट्ये संप्रेक्षकैर्ज्ञेया नित्यं सिद्धिस्तु दैविकी॥' का. १५. 'एवं सिद्धिस्तु विज्ञेया प्रेक्षकैर्दिव्यमानुषी।' का.

अत ऊर्ध्वं प्रवक्ष्यामि घातान्वै दिव्यमानुषान् ॥ १८ ॥
दैवपरात्मसमुत्थास्त्रिविधा घाताः समासतो ज्ञेयाः ।
औत्पातिकश्चतुर्थः कादाचित्कः स विज्ञेयः ॥ १९ ॥
वाताग्निवर्षकुञ्जरभुजङ्गसंक्षोभमण्डपनिपाताः ।
कीटव्यालपिपीलिकपशुवेशनजास्तथैव······ ॥ २० ॥
मात्सर्याद्द्वेषाद्वा तत्पक्ष्यत्वात्तथार्थभेदाद्वा ।
एते परप्रयुक्ता ज्ञेया घाता बुधैर्नित्यम् ॥ २१ ॥
अररितवामतविस्फुरितानाथोकुष्टतालिकापाता(?) ।
गोमयलोष्टतृणोपलविक्षेपाश्चारिसंभूताः ॥ २२ ॥
औत्पातिकाश्च घाताः पशुवेषोन्मत्तलिङ्गकृताः ।
पुनरात्मसमुत्थाः स्युर्घाता लक्ष्या बुधैश्चापि ॥ २३ ॥
वैलक्षण्यमचेष्टाविभूमिकत्वं स्मृतिप्रसूतिश्च ।
अन्यवचनं च काव्यं तथार्तनादौ विहस्तत्वम् ॥ २४ ॥
अतिहसितरुदितविश्वर(?)पिपीलिकाविटकीटगवाश्च ।
उभयचरणनिपातः पुष्करवाततदोषाश्च (?) ॥ २५ ॥
अतिरटितहसितानि सिद्धेर्भावस्य दूषणानि स्युः ।
कीटपिपीलिकपाताः सिद्धे[ः] सर्वात्मना घ्नन्ति ॥ २६ ॥
विस्वररज्यततालं(?)वर्णस्वरसंपदादप(?)विहीनम् ।
अज्ञातस्थानलयं स्वरगतमेवंविधन्यायात् ॥ २७ ॥
मुकुटाभरणनिपातः प्रबद्धनादस्य नाशनो भवति ।
पशुवेशनं तथा स्याद्बहुवचनघ्नं प्रयोगेषु ॥ २८ ॥
विषमं मार्गविहीनं विमार्जनं बहुलप्रहारं च ।
अविभक्तग्रहमोक्षं पुष्करगतमारशं (?) हन्ति ॥ २९ ॥
पुनरुक्तं ह्यसमासो विभक्तिभेदो विसंधयो पार्थः(?) ।

---

१. 'घातान् दिव्यसमुत्थितान्' का. २. 'देवात्परसमुत्थास्त्रिविधा घातका बुधैर्ज्ञेयाः' का. ३. 'कदाचिदपि संभवत्येव' का. ४. 'विश्वर' ख.

त्रिलिङ्गजाश्च दोषाः प्रत्यक्षपरोक्षसंमोहाः ॥ ३० ॥
छन्दोवृत्तत्यागा गुरुलाघवसंकरोत्पातभेदाः ।
एतानि यथास्थूलं घातस्थानानि काव्यस्य ॥ ३१ ॥
ज्ञेयौ तु काव्यजातौ द्वौ घातौ यः प्रतिकृतौ नित्यम् ।
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकत्वं च ॥ ३२ ॥
[1]अतिभानः (सः ?) स्खलनं विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं पतनं[2] मुकुटस्य च भ्रंशः ॥ ३३ ॥
[3]व्यासिस्पन्दनकुञ्जरखरोष्ट्रशिबिकाविमानगा(या ?)नानाम् ।
[4]आरोहणावतरणैरनभिज्ञत्वं विहस्तत्वम् ॥ ३४ ॥
[5]प्रहरणमनेकवचनानम्यग्रहणं(?) विचारणं वापि ।
अस्फुटभूषणयोगश्चिरप्रवेश····वाचाङ्गे ॥ ३५ ॥
[6]एभिः स्थानविशेषैश्च(?)तिलक्ष्यास्तु स्वसूरिभिः कुशलैः ।
[7]रूपाग्निवचनदर्भा······भाण्डपरिग्रहान्मुक्ताः ॥ ३६ ॥
[8]सिद्ध्या मिश्रो घातः सर्वगतश्चैकदेशजो वापि ।
[9]सिद्धिकुशलैः स लेख्यः सिद्धिर्वास्या विधानो वा ॥ ३७ ॥
[10]नालेख्या बहुदिनतः सर्वगतो यस्तु लक्षणविशेषः ।
[ [11]यस्त्वेकदेशजातं न प्रत्यवरोहिलेख्यस्तु । ] ॥ ३८ ॥
जर्जरमोक्षस्यान्ते[12] सिद्धेर्मोक्षस्तु नालिकायास्तु ।
[13]कर्तव्यस्त्विह सततं नाट्यज्ञैः प्राश्निकैर्विधिना ॥ ३९ ॥

---

१. 'अप्रतिभासस्खलितं' का. २. 'मुकुटनिपातश्च भूषणग्रहणम्' का. ३. 'भ्रंशं रथनागवाजिकुञ्जर' का. ४. 'आरोहणवितरणेष्वनभिज्ञतया' का. ५. 'प्रहरणकवचानां वा यथावद्ग्रहणसाधनं वापि । अमुकुटभूषणया या रङ्गे तु चिरप्रयोगो वा ॥' का. ६. 'एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः ।' का. ७. 'यूपानि चयनदर्भस्रुक्भाण्डपरिग्रहांस्त्यक्त्वा ।' का. ८. 'सिद्धैर्मिश्रो घातः सर्वगतश्चैकदेशोऽपि ॥' का. ९. 'नाट्यः कुशलेन लेख्या नैव हि सिद्धिर्न घातस्य ।' का. १०. 'सिद्धिर्वा घातो वा सर्वगतो व्यक्तलक्षणो बहुशः ।' का. ११. 'यस्त्वेकदेशजातं न प्रत्यवरोहिलेख्यस्तु ।' का. १२. 'जर्जरमोक्षस्यान्तनीलीकसिद्धिश्च लेख्यसिद्धिश्च ।' का. १३. 'कर्तव्यं त्विह सततं नाट्येऽस्मि प्राश्निकैः सम्यक् ।' का.

[1]योऽन्यस्य महेश[2]मूढो नान्दिश्लोकं पठेद्धि देवस्य[3] ।
[4]सुवसन(?)पूर्वरङ्गे सिद्धेर्घातः प्रयोक्तव्यः ॥ ४० ॥
[5]यो देशवेषभाषारहितं काव्यं प्रयोजयेद्दुष्टम् ।
[6]तस्याप्यभिलेख्यः स्याद्धातस्तज्ज्ञैरदोषजः.... ॥ ४१ ॥
कः शक्तो नाट्यविधौ यथावदुपपादने प्रयोगस्य[7] ।
[8]कर्तव्यं वाग्रसना( चात्र मनो )यथावदुक्तं परिज्ञातुम् ॥ ४२ ॥
तस्माद्गम्भीरार्थाः शब्दा ये वेद[9]लोकसंसिद्धाः ।
[10]सर्वजनग्राह्यास्ते संयोज्या नाटकैर्वि( के वि )धिवत् ॥ ४३ ॥
न च किंचिद्गुणहीनं दोषैः [11]परिवर्जितं च न कदाचित् ।
तस्मान्नाट्यप्रकृतौ दोषा नात्यर्थतो ग्राह्याः ॥ ४४ ॥
न च नारदस्तु( [12]नानादरस्तु )कार्यो नटेन वा[13]गङ्गसत्त्वनेपथ्ये ।
रसभावगीतनृ[14]त्ये घा( त्यैरा? )तोद्यैर्लोकयुक्ते तु ॥ ४५ ॥
एवमेतद्धि विज्ञेयं सिद्धीनां लक्षणं बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्राश्निकानां तु[15] लक्षणम् ॥ ४६ ॥
चारित्राभि[16]निर्योपेताः शा[17]न्तवृत्तश्रुतान्विताः ।

---

१. 'योऽन्यस्य महे मूढो' का. २. 'मूढस्य' का. ३. 'दैवस्य पूर्वरङ्गे घातस्तस्याविलेख्यः स्यात् ।' का. ४. इतोऽग्रे—

'योऽन्यस्य कवेः काव्ये मिश्रयेत्तथान्येन ।
तस्यापि वलद्रङ्गे तज्ज्ञैर्घातो विलेख्यस्तु ॥
योऽन्यस्य कवेर्नाम्ना काव्येन मिश्रयेन्मोहात् ।
निर्दिष्टदोषतोऽस्मिन् सिद्ध्यालेख्यो बुधैःक्रमशः ॥'

इति श्लोकद्वयमधिकं का. पुस्तके.

५. '°भाषाव्यपेतमपि च प्रयोजयेत् काव्यम् ।' का. ६. 'तस्यापि विलेख्यः स्यात् घातोद्देशविधौ तज्ज्ञैः ।' का. ७. 'प्रयोगे च' का. ८. 'धृष्टो व्यग्रमना वा' का. ९. 'लोकवेदसंसिद्धाः' का. १०. 'सर्वजनेन ग्राह्या संयोज्या नाटके विधिवत् ।' का. ११. 'दोषैः परिवर्जितं न वा किंचित् ।' का. १२. 'नानादरस्तु कार्यो' का. १३. 'गौणवागङ्गनेपथ्यैः' का. १४. 'रसभावनृत्तगीतैरातोद्यैर्लोकयुक्त्या तु ।' का. १५. 'प्रेक्षणानां तु लक्ष[ण ?]म्' का. १६. 'चारित्राभिजनोपेताः' का. १७. 'शान्तिवृत्त°' का.

यशोधर्मरताश्चैव[1] मध्यस्था वच(य?)सान्विताः ॥ ४७ ॥
षडङ्गनाट्यकुशला अलुब्धाः[2] शुचयः समाः।
चतुरातोद्यकुशला वृत्तज्ञास्तत्त्वदर्शिनः[3] ॥ ४८ ॥
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः[4]।
चतुर्धाभिनयज्ञाश्च[5] रसभावविकल्पने ॥ ४९ ॥
शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः।
एवंविधास्तु कर्तव्याः प्राश्निका[6] दश रूपतः ॥ ५० ॥
अव्यग्रैरिन्द्रियैः[7] शुद्ध ऊहापोहविशारदः।
व्यक्ता(क्त?)दोषो[8]ऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥ ५१ ॥
यस्तुष्टे[9] तुष्टिमायाति शोके शोकमुपैति च।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः ॥ ५२ ॥
नवैवैते[10] गुणाः सर्वे एकस्मिन्प्रेक्षके स्मृताः।
विज्ञेयस्याप्रमेयत्वादल्पत्वादायुषस्तथा[11] ॥ ५३ ॥
उत्तमाधममध्यानां संकीर्णायां च[12] संसदि।
अशक्यमधमैर्ज्ञातुमुत्तमानां[13] तु[14] चेष्टितम् ॥ ५४ ॥
यद्यस्य शिल्पं नेपथ्यं कर्म वाक्चेष्टितं तथा।
तस्य तेनैव तत्साध्यं स्वकर्मविषयीकृतम्[15] ॥ ५५ ॥
नानाशीलाः[16] प्रकृतयः शीलान्नाट्यं विनिर्मितम्।
उत्तमाधममध्यानां वृद्धबालस्य(क?)योषिताम्[17] ॥ ५६ ॥
तुष्यन्ति तरुणाः कामे विदग्धाः समयान्विते[18]।

---

१. 'वयसान्विताः' का. २. 'प्रबुद्धाः' का. ३. 'नेपथ्यज्ञाः सुधार्मिकाः' का. ४. '॰शिल्पविचक्षणाः' का. ५. 'चतुराभिनयज्ञाश्च सूक्ष्मज्ञा रसभावयोः।' का. ६. 'प्रेक्षका नाट्यदर्शने' का. ७. 'अव्यग्र्यै(ग्रै?)' का. ८. 'व्यक्तदोषो' का. ९. 'यस्तुष्टौ' का. १०. 'न चैते गुणाः सर्व एकस्मिन्' का. ११. 'तस्माद् बहुलाद् ज्ञानाम्' का. १२. 'तु' का. १३. 'न शक्यमधमैः' का. १४. 'विचेष्टितम्' का. १५. '॰कर्मविषयाश्रयम्' का. १६. एतदर्धं का. पुस्तकेऽत्र नास्ति, किंतु षष्टितमश्लोकस्योत्तरार्धत्वेनाग्रे वर्तते। १७. 'वृद्धबालकयोषिताम्' का. १८. 'समयाश्रिते' का.

अर्थेष्वर्थपराश्चैव मोक्षे वाथ विरागिणः ॥ ५७ ॥
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति सर्वदा ॥ ५८ ॥
एवं भावानुकरणे यो यस्मिन्प्रविशेन्नरः ।
स तत्र प्रेक्षको ज्ञेयो गुणैरेतैरलंकृतः ॥ ५९ ॥
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दर्श रूपतः ।
संह(घ ?)र्षे च समुत्पन्ने प्राश्निकान्संनिबोधत ॥ ६० ॥
यज्ञविन्नर्तकश्चैव छन्दोविच्छेदवित्तथा ।
अस्त्रविद्वद्भभावैश्च [ गन्धर्वो राजसेवकः । ] ॥ ६१ ॥

---

१. 'मोक्षेष्वथ' का. २. 'नित्यशः' का. ३. 'भावानुकरणैः' का. ४. 'प्रेक्षकस्तु स मन्तव्यो' का. ५. 'तु' का. ६. 'नाट्यसंश्रये' का. ७. 'संघर्षे' का. ८. 'इष्वस्त्रचित्रविद्वेश्या गन्धर्वो राजसेवकः' का.

९. इतोऽग्रे का. पुस्तके—

'यज्ञविद् यज्ञयोगे च नर्तकोऽभिनये तथा ।
छन्दो उद्वृत्तबन्धे तु शब्दवित् पाठ्यविस्तरे ॥
विभूतिगुणा संयोगे तथान्तःपुरचेष्टिते ।
राजात्मचरिते च स्यादिष्टवाक् सौष्ठवे तथा ॥
प्रणामकृतिचेष्टासु वस्त्राभरणा योजने ।
नाट्यमूले च नेपथ्ये चित्रकृत् संप्रशस्यते ॥
कामोपचारे वेश्या च गान्धर्वस्वरतालयोः ।
सेवकस्तूपचारे च दशैवे प्राश्निकाः स्मृताः ॥
एभिर्धर्मैमभिप्रेक्ष्य दोषा वाच्यास्तथा गुणाः ।
अशास्त्रज्ञे विवादो हि यदा भवति कर्मतः ॥
तदैव प्राश्निका ज्ञेया गदिता ये मयानघाः ।
शास्त्रज्ञाने यदा तु स्यात् संघर्षः शास्त्रसंशयः ॥
शास्त्रप्रमाणनिर्माणो व्यवहारो भवेत्ततः ।
स्वामि(मि ?)नियोगादन्योन्यविग्रहस्पर्धया च भरतानाम् ॥
अर्थपताकाहेतोः संघर्षो नाम संभवति ।
तेषां व्यवहारगतावपक्षपातेन दर्शनं कार्यम् ॥

लेखं(लोके ?)गणकसख्य(हा ?) सह सिद्धिभिर्याता।
नात्यासन्ने दूरेऽनलसस्थि(मि)तैः प्रेक्षकैश्च भवितव्यम् ॥ ६२ ॥
तेषामासनयोगा द्वादशहस्तस्थितौ ज्ञेयाः।
यान्युक्तानि हि पूर्वं सिद्धिस्था[ना]नि तानि लक्ष्याणि ॥ ६३ ॥
घाताच्च लक्षणीया यथोत्थिता नाट्यवेदेषु।
दैवोत्पातसमुत्थास्तथा परोत्था बुधैर्नवैर्लेख्याः ॥ ६४ ॥
घाता नाट्यसमुत्था आत्मसमुत्थाश्च लेख्याः स्युः।
घाता यस्य त्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः ॥ ६५ ॥
विदितं कृत्वा राज्ञस्तस्मै देया पताका हि।
सिद्ध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देया ॥ ६६ ॥
अथ नरपतिः समः स्यादुभयोरपि सा तदा ज्ञेया।
[कुशलौ सिद्ध्यधिके तु पताका समसिद्धा वा ज्ञेया नृपतेः ॥ ६७ ॥]
एवं विधिज्ञैर्द्रष्टव्यो व्यवहारः समञ्जसम्।
स्वस्थचित्तैः सुखासीनैः सुविशिष्टैर्गुणादिभिः ॥ ६८ ॥
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्मुखैः।

कृत्वा पणं पताका सव्यवहारं गमयितव्यम्।
तैः संभावितमतिभिः सुखोपविष्टैर्विशुद्धभावैश्च ॥'
इयन्तः श्लोकाः समधिकाः।

१. 'लोके गणकसहायैः सिद्धेर्घाताः समभिलेख्याः।' का. २. 'नात्यासन्नैर्नच दूरस्थितिभिः' ३. 'तेषामासन यावद् द्वादशहस्तस्थितिः कार्या।' का. ४. इतोऽग्रे—'घाता यस्य स्वल्पाः संघातसिद्धयश्च बहुधा स्युः। विदितं कृत्वा राज्ञे तस्मै देया पताका तु ॥' इति पद्यमधिकम्। ५. 'यानि विहितानि' का. ६. 'याः काश्च लक्षणीया' का. ७. 'नाट्ययोगे तु' का. ८. 'दैवोत्पन्नसमर्थाः पताकोत्थिता वा बुधैर्लिखितव्याः।' का. ९. 'यास्ता नाट्यसमुत्था ह्यात्मसमुत्थातु (स्तु ?) १०. का. पुस्तके पद्यमेतत् पञ्चसप्ततिमं पूर्वमेव समायातम्। ११. 'प्रथमं समकर्णगुणाः स्युस्तस्मिन् भरतप्रयोगेषु।' इति का. १२. 'कुशला सिद्ध्यधिके तु पताका समिद्धा वा ज्ञेया नृपतेः। अथ नरपतिः समः स्यादुभावपि तु लम्भनीयौ तौ ॥' इति का. पुस्तके। १३. 'एवं विधिज्ञैः' इत्याद्यारभ्य श्लोकयुग्मं का. पुस्तके नास्ति।

साधनं दूषणाभासः प्रयोगसमयाश्रितैः ॥ ६९ ॥
[1]समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ।
गानं वाद्यं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः[2] ॥ ७० ॥
[3]गीतवादित्रतालेन कें(का ?)लान्तरकलासु(च ?)[4] ।
यदङ्गं क्रियते नाट्ये समन्तात्[5]समुच्यते ॥ ७१ ॥
[6]अङ्गोपाङ्गसमायोगं गीततालल्लयान्वितम् ।
भाण्डवाद्यं समं चैव यस्मिंस्तत्समुच्यते ॥ ७२ ॥
[7]संनिर्भुग्नमुरः कृत्वा [8]चतुरस्रकृतौ करौ ।
ग्रीवाञ्चिता तथा कार्या [9]त्वङ्गमाधुर्यमुच्यते ॥ ७३ ॥
पूर्वोक्तानीह शेषाणि यानि प्रेक्ष्याणि[10] साधकैः ।
[11]वाद्यं प्रकृतयो ज्ञानं वक्ष्यमाणानि निर्दिशेत्[12] ॥ ७४ ॥
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् ।
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् ॥ ७५ ॥
[13]वारकालश्च विज्ञेया नाट्यज्ञैर्विविधाश्रयाः ।
दिवसश्चैव रात्रिश्च [14]तयोर्वारं निबोधत ॥ ७६ ॥
[15]पूर्वाह्णेष्वथ मध्याह्ने ह्यपराह्णे तथैव च ।
दिवासमुत्था विज्ञेया नाट्यवाराः प्रयोगतः ॥ ७७ ॥
[16]प्रदोषिकार्धरात्रं च तथा प्राभातिकोऽपरः ।

---

१. 'एवं विधिं तु दृष्ट्वा कार्यो (?) पाठ्यं प्रकृतयो रसाः ।' का. २. 'प्रयोक्तृभिः' का. ३. 'ध्रुवानाट्यप्रयोगे तु' का. ४. 'कालान्तरकलासु च' का. ५. 'समर्थैः' का. ६. 'अङ्गोपाङ्गसमायोगं' इत्यादिपद्यं का. पुस्तके नास्ति । ७. 'अनिर्भुग्नम्' का. ८. 'चतुरश्रायतौ भुजौ' का. ९. 'तु' इति का. पुस्तके नास्ति । १०. 'साध्यानि' का. ११. 'वाद्यप्रकृतयोऽज्ञानां' का. १२. दर्शयेत्' का. १३. 'परः कालश्च विज्ञेयो विविधो नाट्ययोक्तृभिः ।' का. १४. 'विशेषाश्चानयोः स्मृताः' का. १५. 'पूर्वाह्णेष्वथ' इत्यादिपद्यं का. पुस्तके नास्ति । १६. 'प्रादोषिकोऽर्धरात्रं च तथा प्राभातिकोऽपि च ।' का.

नाट्यवारा भवन्त्येते [1]रात्रिजा ह्यनुपूर्वशः ॥ ७८ ॥[2]
[3]एतेषां यत्र यद्योज्यं नाट्यकार्यं रसाश्रयम् ।
तदहं संप्रवक्ष्यामि [4]वारकालसमाश्रयम् ॥ ७९ ॥
यच्छ्रोत्ररमणीयं स्या[5]द्धर्मोत्थानकृतं च यत् ।
[6]पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं च यत् ॥ ८० ॥
सत्त्वोत्थाने[7](न ?)गुणैर्युक्तं वाक्य[8](द्य ?)भूयिष्ठमेव च ।
पुष्कलं सत्त्व[9]संयुक्तमपराह्णे प्रयोजयेत् ॥ ८१ ॥
कैशिकीवृत्तिसंयुक्तं श्रृङ्गाररससंश्रयम् ।
[10]नृत्तवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते ॥ ८२ ॥
[11]यत्र(तु ?)माहात्म्यसंयुक्तं करुणप्रायमेव च ।
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ॥ ८३ ॥
[12]न प्रयुञ्जीत मध्याह्ने नार्धरात्रे कथंचन ।
संध्याभोजनकाले च [13]न नाट्यं संप्रयोजयेत् ॥ ८४ ॥
एवं कालं च देशं [14]च पर्णदं च समीक्ष्य तु ।
[15]नाट्यं नित्यं प्रयुञ्जीत यथासत्त्वं यथारसम् ॥ ८५ ॥
अथवा देशकालौ [16]च न परीक्ष्यौ प्रयोक्तृभिः ।
यदै[17]वाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ॥ ८६ ॥

---

१. रात्रगर्भसमाश्रिताः' का. २. इतोऽग्रे—
'पौर्वाह्णिकस्तथा ज्ञेया आपराह्णिक एव च ।
दिवा समुत्थितावेतौ नाट्यवारौ प्रकीर्तितौ ॥'
का. पुस्तकेऽधिकं पद्यम् ।

३. 'एतेषां तु यथायोग्यं नाट्यं कार्यं रसाश्रयम् ।' का. ४. 'वारं कालसमुत्थितम्' का. ५. 'धर्माख्यानकृतं तथा' का. ६. 'तत् पूर्वाह्णे बुधै[ः] कार्यं शुद्धं तु विकृतं तथा ।' का. ७. 'सत्त्वोत्थानगुणैर्युक्तं' का. ८. 'वाद्यभूयिष्ठमेव च' का. ९. 'सिद्धियुक्तं तु' का. १०. 'गीतवादित्रभूयिष्ठं' का. ११. 'यत्तु' का. १२. 'अर्धरात्रे न युञ्जीत न मध्याह्ने तथैव च ।' का. १३. 'नाट्यं न च कदाचन' का. १४. 'वर्णनं च' इति भवेत् । 'प्रसमीक्ष्य ससंश्रयम्' का. १५. 'नाट्यवारं प्रयुञ्जीत यथासत्त्वं यथारसम् ।' का. १६. 'तु न परीक्ष्यौ कदाचन' का. १७. 'यत्र चाज्ञापयेद्भर्ता तत्र' का.

तथा[1] समुदिताश्चैव विज्ञेया नाटकाश्रयाः ।
पात्रं प्रयोगमर्थश्च विज्ञेयास्तु त्रयो गुणाः ॥ ८७ ॥
बुद्धिः[2] सत्त्वं सुरूपत्वं लयतालज्ञतान्य[3](त ?)था ।
रसभावज्ञता चैव वयः[4]स्त्वकुतूहलम् ॥ ८८ ॥
ग्रहणं धारणं चैव गात्रवैकल्यमेव च ।
जितसाध्वसतोत्साह[6] इति पात्रगतो विधिः ॥ ८९ ॥
सुँचये( वाद्य )ता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः प्रयोगः सं[8]प्रकीर्तितः ॥ ९० ॥
सुविभूषणता या तु सुमाल्याम्बरता तथा ।
विचित्रा[9] रचना चैव समृद्धिरिति सा स्मृता ॥ ९१ ॥
यँदा[10] समुदयाः सर्वे एकीभूता भवन्ति हि ।
अलंकारः स तु तदा[11] मन्तव्यो नाटका[12]श्रयः ॥ ९२ ॥
एतदुक्तं द्विजश्रेष्ठाः[13] सिद्धीनां लक्षणं मया ।
अत उर्ध्वं प्रवक्ष्याम्यातोद्यानां[14] च विकल्पनम् ॥ ९३ ॥
इति भारतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नामाध्यायः[15] सप्तविंशतितमः ।

---

अष्टा[16]विंशतितमोऽध्यायः ।

आतोद्यविधिमिदानीं वक्ष्यामः । तद्यथा—

ततं चैवावनद्धं च घनं सुषिरमेव च ।

---

१. 'यथासमुदयश्चैव प्रयोगाश्च समृद्धयः' का. २. 'बुद्धिसत्त्वस्वरूपं च' का. ३. 'तथा' का. ४. 'वयःस्थलं कुतूहलम्' का. ५. 'गानं नाट्यकृतं तथा' का. ६. '°त्साहाविति' का. ७. 'सुवाद्यता' का. ८. 'स तु संज्ञितः' का. ९. 'या लङ्गरचना चैव' का. १०. 'यदा सर्वे समुदिता' का. ११. 'तथा' का. १२. 'नाट्ययोक्तृभिः' का. १३. 'एतदुक्तं मया सम्यक् सिद्धीनां लक्षणं द्विजाः ।' का. १४. 'ह्यातोद्यानां विकल्पनम् । का. १५. 'सिद्धिव्यञ्जको नाम सप्तविंशोऽध्यायः ।' का.

१६. अध्यायोऽयं पारिसनगरस्थैः जे. ग्रोसेट् पण्डितैर्विरचितात् "La Musique Hindoue" इत्याख्यात्पुस्तकादुत्तरितः. पुस्तकं चेदं तैरस्मभ्यं सबहुमानं प्रेषितमिति तेषामुपकारगौरवं शिरसा वहामः.

चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ १ ॥
ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम् ।
घनं तालस्तु विज्ञेयः सुषिरो वंश एव च ॥ २ ॥
प्रयोगस्त्रिविधो ह्येषां विज्ञेयो नाटकाश्रयः ।
ततं चैवावनद्धं च तथा नाट्यकृतश्च यः ॥ ३ ॥
तते कुतपविन्यासो गायनः सपरिग्रहः ।
वैपञ्चिको वैणिकश्च वंश[1]वादस्तथैव च ॥ ४ ॥
मार्दङ्गिकः पाणविकस्तथा दार्दुरिको बुधैः ।
अव[2]नद्धविधावेषः कुतपः समुदाहृतः ॥ ५ ॥
उत्तमाधममध्याभिस्तथा प्रकृतिभिर्युतः ।
कुतपो नाट्ययोगे तु[3] नानादेशसमाश्रयः ॥ ६ ॥
ए[4]वं गीतं च वाद्यं च नाट्यं च विविधाश्रयम् ।
अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः ॥ ७ ॥
यत्तु तन्त्रीकृतं प्रो[5]क्तं नानातोद्यसमाश्रयम् ।
गान्धर्वमिति तज्ज्ञेयं स्[6]वरतालपदाश्रयम् ॥ ८ ॥
अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः ।
ग[7]न्धर्वाणां च यस्माद्धि तस्माद्गान्धर्वमुच्यते ॥ ९ ॥
अस्य योनिर्भवेद्गात्रं(नं ?)[8] वीणा वंशस्तथैव च ।
एतेषां चैव वक्ष्यामि विधिं स्वरसमुत्थितम् ॥ १० ॥
ग[9]ान्धर्वं त्रिविधं विद्यात्स्वरतालपदात्मकम् ।

---

१. 'वंशवादक एव च' का. २. 'अनाविद्धविद्यावेष' का. ३. 'अत्र' का. ४. 'एवं गानं च नाट्यं च वाद्यं च विविधाश्रयम् ।' का. ५. 'तन्त्रीगतं' का. ६. 'विज्ञेयम्' का. ७. 'गन्धर्वाणामिदं यस्मात्' का. ८. 'गानं' का. ९. इतः पूर्वं का. पुस्तके—

'द्व्यधिष्ठानाः स्वरा ज्ञेया वैणाः शारीरकास्तथा ।
उभाभ्यामपि वक्ष्यामि विधिं स्वरसमुत्थितम् ॥ इति द्वादशं पद्यम्.

त्रिविधस्यापि वक्ष्यामि लक्षणं कर्म चैव हि ॥ ११ ॥
द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्च प्रकीर्तिताः ।
उभाभ्यामपि वक्ष्यामि विधानं लक्षणान्वितम् ॥ १२ ॥
स्वरा ग्रामौ मूर्च्छनाश्च नानास्थानानि वृत्तयः ।
स्वनसाधारणे वर्णा ह्यलंकाराः सधातवः ॥ १३ ॥
श्रुतयो जातयश्चैव विधिस्वरसमाश्रयाः ।
दारव्यां समवायोऽयं वीणायां समुदाहृतः ॥ १४ ॥
स्वरा ग्रामावलंकारा वर्णाः स्थानानि जातयः ।
साधारणे च शारीर्यां वीणायामेष संग्रहः ॥ १५ ॥
व्यञ्जनानि स्वरा वर्णाः संधयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धितास्तथा ॥ १६ ॥
छन्दोविधानं च तथा ज्ञेयः पदगतो विधिः ॥ १७ ॥
अनिबद्धं निबद्धं च द्विविधं तत्पदं स्मृतम् ।

---

१. 'चैव कर्मभिः' का. २. 'ज्ञेया वैणाः शारीरकास्तथा' का. ३. 'विधिं स्वरसमुत्थितम्' का. ४. इतोऽग्रे का. पुस्तके—

'स्वराश्च श्रुतयो ग्रामा मूर्च्छनाः स्थानसंयुताः ।
स्थानं साधारणे चैव जातयोष्टादशैव च ॥
वर्णाश्चत्वार एव स्युरलंकाराश्च धातवः ॥
अलंकाराश्च वर्णाश्च गीतयश्च शरीरजाः ।
आवापस्त्वथ निष्कामो विक्षेपश्च प्रवेशकः ॥
शम्यातालः सन्निपातः परिवर्तः सवस्तुकः ।
मात्राविदार्याङ्गुलया यतिः प्रकरणं तथा ।
गीतयोऽवयवा मार्गा पादभागाः सपाणयः ।
इत्येकविंशको ज्ञेयो विधिस्तालगतो बुधैः ॥
व्यञ्जनानि स्वरा वर्णाः संधयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृताः ।
छन्दोवृत्तानि जात्यश्च नित्यं पदगतात्मकाः ।
गान्धर्वसंग्रहो ह्येष विस्तारं च निबोधत ।
इत्येते श्लोकास्त्रयोदशश्लोकादेकविंशतिमश्लोकस्थाने वर्तन्ते ।

अतस्तालगतस्यापि संप्रवक्ष्यामि वै द्विजाः ॥ १८ ॥
आवापस्त्वथ निष्क्रामो विक्षेपोऽथ प्रवेशनम् ।
शम्याताल: संनिपातः परिवर्तः सवस्तुकः ॥ १९ ॥
मात्राप्रमाणबीजानि विदारी च यतिर्लयः ।
गीतयोऽवयवा मार्गाः पादभागाः सपाणयः ॥ २० ॥
इत्येकविंशको ज्ञेयो विधिस्तालगतो बुधैः ।
गान्धर्वसंग्रहो ह्येष विस्तरं तु निबोधत ॥ २१ ॥

तत्र स्वराः—

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव [1]सप्तमश्च निषादवान् ॥ २२ ॥
चतुर्विधत्वमेतेषां विज्ञेयं श्रुतियोगतः ।
वादी चैवाथ संवादी [2]ह्यनुवादी विवाद्यपि ॥ २३ ॥

तत्र यो यत्रांशः स [3]तत्र वादी । ययोश्च नवत्रयोदश[4]कं परस्परतः श्रुत्यन्तरे तावन्योन्यसंवादिनौ । यथा—[5]षड्जपञ्चमौ ऋषभधैवतौ गान्धार-निषाद[6]वन्तौ षड्जमध्यमाविति षड्जग्रामे । मध्यमग्रामेऽप्येवमेव षड्जपञ्च-मवर्ज्यं पञ्चमर्षभयोश्चात्र संवाद इति । अत्र श्लोकः—

संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च ।
षड्जग्रामे च षड्जस्य संवादः पञ्चमस्य च ॥ २४ ॥

विवादिनस्तु [7]ये तेषां स्याद्विंशतिकमन्तरम् । तद्यथा—ऋषभगान्धारौ धैवतनिषादौ । एवं वादिसंवादिविवादिषु स्थापितेषु शेषा [8]ह्यनुवादिनः संज्ञकाः । यथा—षड्जस्यर्षभगान्धारधैवतनिषादाः । ऋषभस्य मध्यमपञ्चम-निषादाः । गान्धारस्यापि मध्यमपञ्चमधैवताः । मध्यमस्य धैवतपञ्चमनि-

---

१. 'निषादः सप्त च स्वराः' का. २. 'हि' इति का. पुस्तके नास्ति । ३. 'तस्य' का. ४. 'नवकत्रयोदशश्रुत्यन्तरे तावन्योन्यसंवादिनौ' का. ५. का. पुस्तकेतु 'षड्ज-मध्यमौ षड्जपञ्चमौ' इत्यादि वर्तते । ६. 'गान्धारनिषादौ' का. ७. 'ते येषां विंश-तिस्वरमन्तरम् ।' का. ८. 'हि' इति का. पुस्तके नास्ति ।

षादाः । पञ्चमस्य धैवतषड्जौ[1] । धैवतस्य षड्जमध्यमपञ्चमाः[2] षड्जग्रामे । मध्यमग्रामेऽपि मध्यमस्य पञ्चमधैवतनिषादाः । पञ्चमस्यर्षभषड्जगान्धाराः । धैवतस्य षड्जर्षभगान्धाराः । निषादस्य षड्जर्षभगान्धाराः । वदनाद्वादी संवदनात्संवादी[3] विवदनाद्विवाद्यनुवदनादनुवादीति[4] । एतेषां[5] च स्वराणां न्यूनाधिकत्वं तन्त्रीवादनदण्डेन्द्रियवैगुण्यादुपजायते । स्वरविधानमेतच्चतुः-[6]प्रकारमिति ।

अथ ग्रामौ[7]—षड्जग्रामो मध्यमग्रामश्चेति । तत्र वा द्वाविंशतिश्रुतयः । यथा—

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च ।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम् ॥ २५ ॥

मध्यमग्रामे तु श्रुत्यपकृष्टः पञ्चमः कार्यः । पञ्चमश्रुत्युत्कर्षादपकर्षाद्वा[8] यदन्तरं मार्दवादायतत्वाद्वा तत्[9]प्रमाणश्रुतिः । निदर्शनं त्वासामभिव्याख्यास्यामः[10] । यथा—द्वे वीणे तुल्यप्रमाणतन्त्र्युपवादनदण्डमूर्च्छने[11] षड्जग्रामाश्रिते[12] कार्ये । तयोरेकतरस्यां[13] मध्यमग्रामिकीं कृत्वा[14] पञ्चमस्यापकर्षे श्रुतिं तामेव पञ्चमवशात्षड्जग्रामिकीं[15] कुर्यात् । एवं श्रुतिरपकृष्टा भवति । पुनरपि तद्वदेवापकर्षाद्[16]गान्धारनिषादवन्तावितरस्यां[17] धैवतर्षभौ प्रविशतो द्विश्रुत्यधिकत्वात्[18] । पुनस्तद्वदेवापकर्षाद्धैवतर्षभावितरस्यां[19] पञ्चमषड्जौ प्रविशतः श्रुत्यधिकत्वात् । तद्वत्पुनरपकृष्टायां तस्यां पञ्चममध्यमषड्जा इतरस्यां मध्यमगा-[20]

---

१. 'धैवतनिषादौ' का. २. 'ऋषभपञ्चममध्यमाः' का. ३. 'संवादात्संवादी विवादित्वाद्विवादी, अनुवादादनुवादी' का. ४. 'इति' इति नास्ति का. पुस्तके. ५. 'एतेषां स्वराणां मूर्च्छनाधिकारत्वं तु तन्त्र्युपपादनदण्डेन्द्रिय वैगुण्यादुपजायते ।' इति का. ६. इत्येतत्स्वरविधानचतुर्विधम् ।' का. ७. 'अथ द्वौ ग्रामौ षड्जो मध्यमश्चेति । तत्राश्रिता द्वाविंशतिः श्रुतयः ।' इति का. ८. 'पञ्चमस्य श्रुत्युत्कर्षापकर्षाभ्यां' का. ९. 'तावत्' का. १०. 'च समभिव्याख्यास्यामः' का. ११. 'तन्त्र्युपपादन°' का. १२. '°मूर्च्छिते' का. १३. 'तयोरन्यतरीं' का. १४. 'कुर्यात्' का. १५. 'पञ्चमस्य श्रुत्युत्कर्षवशात्' का. १६. 'तदेवापकर्षात्' का. १७. '°निषादावपि' का. १८. 'द्वि' इति का. पुस्तके नास्ति । १९. 'तदेव' का. २०. 'मध्यमनिषादगान्धारवन्तः' का.

न्धारनिषादवन्तः प्रवेक्ष्यन्ति चतुःश्रुत्यधिकत्वात् । एवमनेन श्रुतिनिदर्शनेन[1] द्वैग्रामिक्यो द्वाविंशतिश्रुतयः[2] प्रत्यवगन्तव्याः ।

अत्र श्लोका भवन्ति[3]—

षड्जश्चतुःश्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिस्तथा[4] ।
द्विश्रुतिश्चैवं[5] गान्धारो मध्यमश्च चतुःश्रुतिः ॥ २६ ॥
चतुःश्रुतिः पञ्चमः स्याद्धैवतस्त्रिश्रुतिस्तथा[6] ।
निषादो[7] द्विश्रुतिश्चैव षड्जग्रामे भवन्ति[8] हि ॥ २७ ॥
चतुःश्रुतिस्तु विज्ञेयो मध्यमः पञ्चमः पुनः ।
त्रिश्रुतिर्धैवतस्तु स्याच्चतुःश्रुतिक एव[9] हि ॥ २८ ॥
निषादषड्जौ विज्ञेयौ द्विचतुःश्रुतिसंभवौ ।
ऋषभस्त्रिश्रुतिश्च स्याद्गान्धारो द्विश्रुतिस्तथा ॥ २९ ॥

अन्तरनिदर्शनमपि व्याख्यातम् ।

अथ मूर्च्छनाः—द्वैग्रामिक्यश्चतुर्दश । यथा[10]—

आदावुत्तरमन्द्रा[11] स्याद्रजनी चोत्तरायता ।
चतुर्थी शुद्धषड्जा च पञ्चमी मत्सरीकृता ॥ ३० ॥
अश्वक्रान्ता तथा[12] षष्ठी सप्तमी चाभिरुद्गता ।
षड्जग्रामाश्रिता ह्येता[13] विज्ञेयाः सप्त मूर्च्छनाः ॥ ३१ ॥

आसां षड्जनिषादधैवतपञ्चममध्यमगान्धारर्षभाद्याः[14] स्वरा इति ।

अथ[15] मध्यमग्रामे—

सौवीरी हरिणाश्वा च[16] स्यात्कलोपनता तथा ।
शुद्धमध्या[17] तथा चैव मार्गी स्यात्पौरवी तथा ॥ ३२ ॥

---

१. 'श्रुतिदर्शनविधानेन' का. २. 'द्वाविंशाः श्रुतयः' का. ३. 'भवन्ति' इति का. पुस्तके नास्ति । ४. 'स्मृतः' का. ५. 'अपि' का. ६. 'त्रिश्रुतिर्धैवतस्तथा' का. ७. 'द्विश्रुतिस्तु निषादः स्यात्' का. ८. 'स्वरान्तरे' का. ९. 'च' का. १०. 'तद्यथा' का. ११. 'आद्यो ह्युत्तरमन्द्रा' का. १२. 'तु षष्ठी स्यात्' का. १३. 'हि' इति नास्ति का. १४. '°गान्धारर्षभाः षड्जग्रामे' का. १५. 'मध्यमग्रामे तु' का. १६. 'च' का. १७. 'चतुर्थी शुद्धमध्या तु मार्गवी पौरवी तथा' का.

> हृष्यका चेति[1] विज्ञेया सप्तमी द्विजसत्तमाः ।
> मध्यमग्रामजा ह्येता विज्ञेयाः सप्त मूर्च्छनाः ॥ ३३ ॥

आसां मध्यमगान्धारर्षभषड्जनिषादधैवतपञ्चमा आनुपूर्वाद्याः[2] स्वराः । तत्र षड्जग्रामे—षड्जेनोत्तरमन्द्रा, निषादेन रजनी, धैवतेनोत्तरायता, पञ्चमेन शुद्धषड्जा, मध्यमेन मत्सरीकृता, गान्धारेणाश्वक्रान्ता, ऋषभेणाभिरुद्गता, इति ।

अथ मध्यमग्रामे—मध्यमेन सौवीरी, गान्धारेण हरिणाश्वा, ऋषभेण कलोपनता, षड्जेन शुद्धमध्यमा, निषादेन मार्गी, धैवतेन पौरवी, पञ्चमेन हृष्यका, इति । एवमेताः[3] प्रक्रमयुक्ताः पूर्णाः षाडवौडवितीकृताः साधारणकृताश्चेति चतुर्विधाश्चतुर्दश मूर्च्छनाः ।

> क्रमयुक्ताः स्वराः सप्त मूर्च्छनास्त्वभिसंज्ञिताः ।
> संपञ्चकस्वरास्तासां[4] षाडवौडविताः स्मृताः ॥ ३४ ॥
> साधारणकृताश्चैव काकलीसमलंकृताः ।
> अन्तरस्वरसंयुक्ता मूर्च्छना ग्रामयोर्द्वयोः ॥ ३५ ॥

द्विविधैकमूर्च्छनासिद्धिः । तत्र—द्विश्रुतिप्रकर्षाद्धैवतीकृते गान्धारे मूर्च्छनाग्रामयोरन्यत्र[5] षड्जग्रामे । मध्यमग्रामेऽपि[6] धैवतमार्दवान्निषादोत्कर्षाद्वैविध्यं भवति । तुल्यश्रुत्यन्तरत्वाच्च संज्ञान्यत्वम्[7] । चतुःश्रुतिकमन्तरं[8] पञ्चमधैवतयोः । तद्वद्गान्धारोत्कर्षाच्चतुःश्रुतिकमेव भवति । शेषाश्चापि मध्यमपञ्चमधैवतनिषादषड्जर्षभा मध्यमादित्वं प्राप्नुवन्ति । तुल्यश्रुत्यन्तरत्वात् । अन्तरनिदर्शनमपि[9] श्रुतिनिदर्शने प्रोक्तम् ।

---

१. 'चैव' का. २. 'आनुपूर्वाद्याः स्वराः' इति का. पुस्तके नास्ति । ३. 'एवमेताः क्रमयुताः षट्पञ्चाशत् स्वराः स्मृताः । षाडवोडवितसंज्ञिताः पूर्णासाधारणकृताश्चेति चतुर्विधश्चतुर्दश मूर्च्छनाः ।' का. ४. 'षट्पञ्चकस्वरास्तासां षाडवोडुवितस्मृताः ।' का. ५. '°रन्यतरत्वम् । तद्वशान्मध्यमादयो यथा संख्येन निषादादिमत्त्वं प्रतिपाद्यन्ते' का. ६. 'मध्यमग्रामे धैवतमार्दवाद् द्वैविध्यं भवति' का. ७. 'संज्ञान्यत्वं' का. पुस्तके नास्ति । ८. 'श्रुत्यन्तरं पञ्चमधैवतयोस्तद्वत् गान्धारोत्कर्षाश्चतुश्श्रुतिकमन्तरं भवति ।' इति का. ९. 'अन्तरदर्शनमपि' का.

तत्र मूर्छना[1]संश्रितास्तानाश्चतुरशीतिः । तत्र—एकोनपञ्चाशत्षट्स्वराः, पञ्चत्रिंशत्पञ्चस्वराः । लक्षणं तु षट्स्व[2]राणां सप्तविधम् । यथा—ष[3]ड्जर्षभपञ्चमनिषादहीनाश्चत्वारस्तानाः षड्जग्रामे । मध्यमग्रामे तु षड्जर्षभगान्धारहीना[4]स्त्रयस्तानाः । एवमेते[5] सर्वासु मूर्छनासु क्रियमाणा भवन्त्येकोनपञ्चाशत्तानाः । पञ्चस्वराणां तु पञ्चविधमेव लक्षणम् । यथा—षड्जपञ्चमहीना ऋषभपञ्चमहिना गान्धारनिषादव[6]द्धीना इति त्रयस्तानाः षड्जग्रामे । मध्यमग्रामे तु गा[7]न्धारनिषादवद्धीनावृषभधैवतहीनाविति द्वौ तानौ । एवं प[8]ञ्च स्वराः सर्वासु मूर्छनासु क्रियमाणास्तानाः पञ्चत्रिंश[9]द्भवन्ति । षड्जग्राम एकविंशतिर्मध्यमग्रामे चतुर्दश । एवमेत एकत्र गम्यमानाश्चतुरशीतिर्भवन्ति । द्विवि[10]धा तानक्रिया तन्त्र्याम्—प्रवेशो निग्रहश्च । अ[11]त्र—प्रवेशो नामधरस्वरप्रकर्षनादुत्तरमार्दवाच्च निग्रहश्चा[12]संस्पर्शः । मध्यमस्वरासंस्पर्शः । मध्यमस्वरेण तु वैणेन मूर्छनानिर्देशो भवत्यनाशित्वात् । मध्यमस्वरस्य निग्रहः प्रवेशो वा । इ[13]त्थं प्र[14]योक्तुः श्रोतुः सुखार्थं तानमूर्छनातत्त्वम् । [15]मूर्छनाप्रयोजनमपि स्थानप्राप्त्यर्थः[16] । स्थानं तु त्रिविधं पूर्वोक्तलक्षणं काकुविधा[17]विति ।

साधारणविधिमिदानीं वक्ष्यामः । तत्र—साधारणं नामान्तरस्वरता । कस्मात् । द्वयोरन्त[18]रे योऽर्थो भवति साधारणः । यथार्त्वन्तरे—

छायासु भवति शीतं प्रस्वेदो भवति चातपस्थस्य ।
न च नागतो वसन्तो न च निःशेषः शिशिरकालः ॥ ३६ ॥

इति कालसाधारणता[19] ।

---

१. 'मूर्च्छनातानाः' का. २. 'षाडवानां' का. ३. 'ऋषभनिषादपञ्चमहीनाश्चत्वारस्तानाः षड्जग्रामे' का. ४. '°हीनाश्चयाः' का. ५. 'एवमेतेऽपि षाडवा सुमूर्च्छनासु' का. ६. 'गान्धारनिषादहीनाः' का. ७. षड्जधैवतहीनौ निषादगान्धारहीन इति द्वौ स्ता ( ता ? ) नाविति' का. ८. 'पञ्चस्वरासु सर्वासु' का. ९. 'षट्त्रिंशद्' का. १०. 'द्विविधास्तानक्रिया' का. ११. 'तत्र' का. १२. 'निग्रहस्त्वसंस्पर्शः' का. १३. 'इत्थं' इति नास्ति का. पुस्तके. १४. प्रयोक्तृश्रोतृसुखार्थं' का. १५. 'मूर्च्छना' इति नास्ति का. पुस्तके । १६. 'स्थानप्राप्तिः' का. १७. 'काकुविधाने' का. १८. 'द्वयोरन्तरस्थं तत् साधारणम्' का. १९. 'इति कालसाधारणः' का.

द्वे साधारणे—स्वरसाधारणं जातिसाधारणं चेति । स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र—द्विश्रुतिप्रकर्षनान्निषादवान्[1]काकलीसंज्ञो निषादः, न षड्जः । द्वाभ्यामन्तरस्वरत्वात् । साधारणत्वं प्रतिपद्यते । एवं गान्धारोऽप्य-न्तरस्वरसंज्ञो गान्धारो न मध्यमः । तयोरन्तरस्वरत्वात् । अत एव स्वरसाधा-रणम् । [2]क(त ?)स्मात् निषादः काकलीसंज्ञः । कलत्वात्काकली क(कृ ?)[3]ष्ट-त्वाद्वाति[4]सौक्ष्म्यादथवा काक्षित्वात् । उभयसंबन्धा[5]त्काकलीसंज्ञा । यथा—षण्णां रसानां मध्ये लवणः क्षारसंज्ञः, एवं निषादः का[6]कलीसंज्ञो [7]गान्धार-श्चान्तरसंज्ञो भवति ।

जातिसाधारणमेकांशा[8]नां विशेषाज्जातीनां तु समवायात् । प्रत्यक्षेण संज्ञा इति । स्वरसाधारणं द्विविधं द्वैग्रामिक्यम् । कस्मात् । षड्जग्रामे षड्जसाधारणं मध्यमग्रामे मध्यमसाधारणम् । साधारणोऽत्र स्वरविशेष इति षड्ज[9]साधारणम् । एवं मध्यमग्रामेऽपि[10] साधारणत्वम् । अस्य तु प्रयोगसौक्ष्म्यात्कैशिकमिति[11] नाम निष्पद्यते । एवं स्वरसाधारणम् । अस्या-ल्पनिषादगान्धारासु जातिषु प्रयोगः ।

[12]अत्र श्लोकौ—

अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः ।
[13]कार्यः स्वल्पविशेषेण नावरोही कदाचन ॥ ३७ ॥
क्रियमाणोऽवरोही स्यादल्पो वा यदि वा बहुः[14] ।
जातिरागं श्रुतिं चैव नयन्ते त्वन्तरस्[15]वराः ॥ ३८ ॥

[16]जातीरिदानीं वक्ष्यामः—

---

१. 'निषादादयः' का. २. 'तस्मात्' का. ३. 'कृष्टत्वाद्वा' का. ४. '°तिसौक्ष्म्य-त्वाद्वा' का. ५. उभयसंबन्धत्वात्' का. ६. 'काकलीसंज्ञाय' इति मु. ७. 'साधारण-स्वः' का. ८. 'एकाग्रामांशानां जातीनां जात्योर्वा अन्यस्मिन् ग्रामे प्रत्यङ्गदर्शनं स्वराणामवगमात्' का. ९. 'षट् साधारणम्' का. १०. 'अपि साधारणम्' इति नास्ति का. पुस्तके । ११. 'इति' इति नास्ति का. पुस्तके. १२. 'अत्र श्लोकौ' इति का. पुस्तके नास्ति । १३. 'कार्यस्स्वल्पो विशेषेण' का. १४. 'बहु' का. १५. 'त्वन्तरे स्वराः' का. १६. 'जातिं' का.

स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः ।
मध्यमा पञ्चमी चैव षड्जमध्या तथैव च ॥ ३९ ॥
आसामङ्गा[1]स्तु विज्ञेयाः षड्जमध्यमपञ्चमाः ।
यथा[स्वं दुर्बलतरा] व्यक्ता सा पञ्चमी तथा ॥ ४० ॥
जा[3]तयोऽष्टादशेत्येव पूर्वं या गदिता मया ।
तास्त्वहं वर्तयिष्यामि न्यासा(सो ?)पन्याससंयुताः ॥ ४१ ॥
षा[4]ड्जी चैवार्षभी चैव धैवती सनिषादिनी ।
षड्जोदीच्यवती चैव तथा वै षड्जकैशिकी ॥ ४२ ॥
षड्जमध्या तथा चैव षड्जग्रामसमाश्रया ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥ ४३ ॥
गा[5]न्धारी मध्यमा चैव गान्धारोदीच्यवा तथा ।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥ ४४ ॥
मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च ।
कर्मारवी च विज्ञेया तथान्ध्री कैशिकी तथा ॥ ४५ ॥

एतासामष्टादशानां सप्त[6] स्वराख्याः । तच्च[7] द्विविधाः—शुद्धा विकृताश्च ।

---

१. 'अङ्गानि' का. २. 'दुर्बलतरा' का. ३. का. पुस्तके पद्यमिदमन्तिमम् ।
४. का. पुस्तके—
'षड्जर्षभी धैवती च नैषादी च तथा परा ।
षड्जोदीच्यवती षड्जकैशिकी षड्जमध्यमा ।
षड्जग्रामाश्रया ह्येता विज्ञेयाः सप्त जातयः ।
५. का. पुस्तके तु—
'गान्धारी रक्तगान्धारी गान्धारोदीच्यवा तथा ।
मध्यमोदीच्यवा चैवं मध्यमा पञ्चमी तथा ।
गान्धारपञ्चमी चान्ध्री नन्दयन्ती तथा परा ।
कर्मारवी कैशिकी च ज्ञेयास्त्वेकादशापरा ।
जातयोऽष्टादशेत्येव याः पूर्वं गदिता मया ।
तास्त्वहं संप्रवक्ष्यामि न्यासोपन्याससंयुताः ।
इति श्लोकद्वयस्थाने श्लोकत्रयी ।
६. सप्त स्वरनामधेयाः सप्तस्वराः । ७. जातयो द्विविधाः ।

तत्र शुद्धाः—षड्जग्रामे षाड्जा(जी?)आर्षभी धैवती[1] निषादवती च[2]। गान्धारी मध्यमा पञ्चमी चेति[3] मध्यमग्रामे। शुद्धा अन्यूनस्वराः स्वरांशग्रहन्यासाः। एषाम[4]न्यतमेन द्वाभ्यां बहुभिर्वापि लक्षणैर्विक्रियामुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति। तेन[5] ता एव शुद्धास्ता एव च विकृताः। न्यासविधावप्यासां मन्द्रो नियमाद्भवति शुद्धासु विकृतास्वनियमात्। तत्रैकादश संसर्गजा[6] विकृताः। परस्परं संयोगादेकादश निर्वर्तयन्ति। यथा—

शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते।
ता एव शुद्धविकृता भवन्ति चैकादशान्यास्तु॥ ४६॥
तासां या निर्वृत्ता स्वरेष्वथांशेषु जातिषु च जातिः।
तां वक्ष्यामि यथावत्संक्षेपेण क्रमेणेह॥ ४७॥
स्यात्षड्जमध्यमाभ्यां निर्वृत्ता षड्जमध्यमा जातिः।
गान्धारीषाड्जीभ्यां संयोगात्षड्जकैशिकी[7] वापि॥ ४८॥
षाड्जीगान्धारीभ्यां धैवत्याश्चापि या विनिष्पन्ना।
संसर्गाद्विज्ञेया[8] सा षड्जोदीच्यवा जातिः॥ ४९॥
षाड्जी[9] गान्धारी पञ्चमी तथा धैवती च खलु जातिः।

---

१. 'सधैवती' का. २. 'च' इति नास्ति क. पुस्तके. ३. 'चेति' इति नास्ति क. पुस्तके. ४. 'एभ्यो' का. ५. 'तेन ताः' इत्यादि पङ्क्तिर्नास्ति का. पुस्तके. ६. 'जातयोऽधिकृता।' का. ७. एतदर्धं का. पुस्तके नास्ति। ८. 'संसर्गाद्वा विज्ञेया' का.

९. 'षड्जगान्धारीभ्यां संभूता षड्जकैशिकी जातिः।
षाड्जी गान्धारीभ्यां धैवत्याश्चापि मध्यमायाश्च।
गान्धारोदीच्यवा स्यात् निर्वृत्तो नामतो जातिः।
गान्धारीपञ्चमीभ्यां धैवत्याश्चापि मध्यमाया वा।
निर्वृत्ता या जातिः सा मध्यमोदीच्यवानाम्ना।
गान्धारीपञ्चमीभ्यां नैषादीमध्यमाभ्यां च।
रक्तगान्धारी नामजातिः स्याच्चतसृभिस्ताभिः।
गान्धारीषड्जाभ्यां संसर्गाज्जायते चान्ध्री।
गान्धारीपञ्चमीभ्यामार्षभीभ्यां चैव नन्दयन्ती तु।
गान्धारीपञ्चमीभ्यां जाता गान्धारी पञ्चमी जातिः।

गान्धारोदीच्यवतीं जातिं निर्वर्तयन्त्येताः ॥ ५० ॥
गान्धारपञ्चमाभ्यां मध्यमया विरचिता च धैवत्या ।
जातिस्तु मध्यमोदीच्यवेति सद्भिः सदा ज्ञेया ॥ ५१ ॥
गान्धारीपञ्चमयोः सप्तम्याश्चैव रक्तगान्धारी ।
गान्धार्यार्षभीभ्यामान्ध्री संजायते जातिः ॥ ५२ ॥
योनिस्तु नन्दयन्त्यास्त्वार्षभी पञ्चमी सगान्धारी ।
कर्मारवीं निषादी सार्षभी पञ्चमी कुर्युः ॥ ५३ ॥
गान्धारीपञ्चमयोर्योगाद्गान्धारपञ्चमी जातिः ।
धैवत्यार्षभीभ्यां हीनां खलु कैशिकीं कुर्युः ॥ ५४ ॥
एवं परस्परोत्पन्ना विज्ञेया[1] जातयो बुधैः ।
पृथग्लक्षणसंयुक्ता द्वैग्रामिक्यः स्वराश्रयाः ॥ ५५ ॥
आभ्यश्चतस्रो नियमाज्ज्ञेयाः सप्तस्वरा बुधैः ।
दश पञ्चस्वरा ज्ञेयाश्चतस्रश्चैव षट्स्वराः ॥ ५६ ॥
मध्यमोदीच्यवा चैव तथा च[2] षड्जकैशिकी ।
कर्मारवी च संपूर्णास्त(र्णा त)[3]था गान्धारपञ्चमी ॥ ५७ ॥
षाड्जान्ध्री[4] नन्दयन्ती च गान्धारोदीच्यवा तथा ।
चतस्रः षट्स्वरा शेषाः पञ्चवस्तुस्वरा दश ॥ ५८ ॥
निषादिन्यार्षभी चैव धैवती षड्जमध्यमा ।
षड्जोदीच्यवती चैव पञ्च षड्जाश्रिताः स्मृताः ॥ ५९ ॥
गान्धारी[5] रक्तगान्धारी मध्यमा पञ्चमी तथा ।

---

नैषाद्यार्षभीभ्यां पञ्चम्याश्चैव संसर्गात् ।
कर्मारवी नाम्ना जातिः पूर्णा हि भवति चेयम् ।
धैवत्यार्षभहीनाः पञ्चाद्याः कैशिकीं कुर्युः ॥'

एवं पाठः क. पुस्तके.

१. ज्ञेया ह्येतास्तु जातयः' का. २. 'वै' का. ३. 'संपूर्णा तथा' का. ४. 'षड्जान्ध्री' इत्याद्यारभ्य 'षड्जाश्रिताः स्मृताः' इति पर्यन्तं का. पुस्तके नास्ति । ५. 'तथैव रक्तगान्धारी' का.

[1] कैशिकी चैव पञ्चैता मध्यमग्रामसंश्रयाः ॥ ६० ॥ [2]
[3] यास्ताः पञ्चस्वराः प्रोक्ता याश्चैताः षट्स्वराः स्मृताः ।
कदाचिदौडवीभूताः कदाचित्षाडवीकृताः ॥ ६१ ॥
षड्जग्रामे तु संपूर्णा विज्ञेया षड्जकैशिकी ।
षट्स्वरा चैव विज्ञेया षाड्जी वै गानयोक्तृभिः ॥ ६२ ॥
संपूर्णा मध्यमग्रामे ज्ञेया कर्मारवी बुधैः । [5]
[6] गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा ॥ ६३ ॥
पुनश्च षट्स्वरा ज्ञेया गान्धारोदीच्यवा बुधैः ।
आन्ध्री च नन्दयन्ती च मध्यमग्रामसंश्रयाः ॥ ६४ ॥
एवमेता बुधैर्ज्ञेया द्वैग्रामिक्यश्च जातयः ।
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् ॥ ६५ ॥
षट्स्वरी सप्तमे त्वंशे नेष्यते षड्जमध्यमा ।
संवादिलोपाद्गान्धारस्तत्रैव न भविष्यति ॥ ६६ ॥
गान्धारीरक्तगान्धारीकैशिकीनां तु पञ्चमः । [9]
षांड्जायां चैव गान्धारमनंशं विद्धि षाडवे ॥ ६७ ॥ [10]

---

१. 'कौशिकी चेति विज्ञेया पञ्चैता मध्यमाश्रयाः ।' का. २. इतोऽग्रे का. पुस्तके—

'आर्षभी धैवती चैव नैषादी षड्जमध्यमा ।
षड्जोदीच्यवती चैव षड्जग्रामसमाश्रया ॥'
इति पद्यं 'निषादिन्यार्षभी' इत्यादिपद्यस्थाने वर्तते ।

३. का. पुस्तके तु—

'पञ्चस्वरा दशैताश्च जातयो नित्यमेव हि ।
गान्धारोदीच्यवा चैव नन्दयन्ती तथैव च ॥
मध्यमग्रामसंभूता षट् स्वरास्तित्र एव च ।'
इत्यादि सार्धं पद्यं पद्यार्धस्यास्य स्थाने वर्तते ।

९. 'पञ्चमम्' का. १०. पद्यार्धद्वयस्थाने का. पुस्तके—

'षाडवे धैवतो नास्ति षड्जोदीच्यवियोगता ।' इदं पद्यार्धम् ।

षड्जोदीच्यवत्याश्चैव धैवतांशे न षाडवम्।
संवादिलोपात्सप्तैताः[1] षाट्स्वर्ये तु विवर्जिताः॥ ६८॥

गान्धारीरक्तगान्धार्योः[2] षड्जमध्यमपञ्चमाः।
सप्तमश्चैव[3] विज्ञेया येषु चौडवितं भवेत्॥ ६९॥

द्वौ षड्जमध्यमांशौ[4] तु गान्धारोऽथ निषादवान्।
ऋषभश्चैव पञ्चम्यां[5] कैशिक्यां[6] चैव धैवतः॥ ७०॥

एवं हि[7] द्वादशैते[8] स्युर्वर्ज्याः पञ्चस्वरे सदा।
तास्त्वनौडविता नित्यं कर्तव्या जातयो बुधैः॥ ७१॥
सर्वस्वराणां[9] नाशस्तु विहितस्त्वथ जातिषु।
न[10] मध्यमस्य नाशस्तु कर्तव्यो हि कदाचन॥ ७२॥
सप्तस्वराणां[11] प्रवरो ह्यनाशी[12] चैव मध्यमः।
गान्धर्वकल्पे विहितः[13] सामगैरपि[14] मध्यमः॥ ७३॥

दशविधं जातिलक्षणम्[15]—

ग्रहांशौ तारमन्द्रौ च न्यासोपन्यास एव च।
अल्पत्वं च बहुत्वं च षाडवौडविते तथा॥ ७४॥

अथ ग्रहाः—

ग्रहास्तु[16] सर्वजातीनामंशवत्परिकीर्तिताः[17]।
यः[18] प्रवृत्तौ भवेदंशः सोऽशो ग्रहविकल्पितः॥ ७५॥

---

१. 'सप्तैते' का. २. '°गान्धार्यौ' का. ३. 'सनिषादाश्च विज्ञेया येषु नोडुविते इमे।' का. ४. '°मध्यमांशेषु' का. ५. 'पञ्चम्याः' का. ६. 'कैशिक्याश्चैव धैवतः' का. ७. 'च' का. ८. 'द्वादशै वैते' का. ९. 'सर्वस्वराणां विहितो विनाशस्त्वथ जातिषु।' का. १०. 'मध्यमस्य विनाशस्तु कर्तव्यो न कदाचन।' का. ११. 'सप्तस्वराणां' का. १२. 'ह्यविनाशी तु मध्यमः' का. १३. '°ऽभिमतः' का. १४. 'सामगैश्च महर्षिभिः' का. १५. 'दशविधजातिलक्षणम्' का. १६. 'ग्रहस्तु' का. १७. 'अंश एव हि कीर्तितः' का. १८. 'यत् प्रवृत्तौ भवेद्गानम्' का.

तत्रांशो नाम—

[1]रागश्च यस्मिन्वसति यस्माच्चैव प्रवर्तते[2] ।
[ तेन वै तारमन्द्राणां योऽत्यर्थमुपलभ्यते । ]
मन्द्र[3]तारविषया च पञ्चस्वरपरा गतिः ॥ ७६ ॥
[4]अनेकस्वरसंयोगे(गो ?) योऽत्यर्थमुपलभ्यते ।
अन्य[5]श्च बलिनो यस्य संवादी चानुवाद्यपि ॥ ७७ ॥
[6]ग्रहापन्यासविन्यासन्याससंन्यासगोचरः ।
परिचा(वा ?)र्य[7] स्थितो यस्तु सोंऽशः[8] स्याद्दशलक्षणः ॥ ७८ ॥

[9]पञ्चस्वरपरा तारगतिः । यथा—

अंशात्तारगतिं विन्द्यादाचतुर्थस्वरादिह ।
आपञ्चमात्पञ्चमाद्वा नातः परमिहेष्यते ॥ ७९ ॥

त्रिविधा मन्द्रगतिः—अंशपरा न्यासपरापन्यासपरा चेति ।

मन्द्रस्त्वंशपरो नास्ति न्यासे तु द्वौ व्यवस्थितौ ।
गान्धारे न्यासलिङ्गे तु दृष्टमृषभधैवतम् ॥ ८० ॥

अथ न्यासः—एकविंशतिविधो ह्यङ्गसमाप्तौ । तद्वदपन्यासोऽप्यङ्गमध्ये षट्पञ्चाशत्संख्यः । यथा—

न्यासो ह्यङ्गसमाप्तौ स चैकविंशतिविधो विधातव्यः ।
षट्पञ्चाशत्संख्योऽङ्गमध्येऽपन्यास एव स्यात् ॥ ८१ ॥

द्विविधमल्पत्वम्—लङ्घनादनभ्यासाच्च । तत्र षाडवौडवितकरणत्वमंशानां गीतानामन्तरमार्गमुपगतानां स्वराणां लङ्घनादनभ्यासाच्च सकृदुच्चारणं यथाजातिः । तद्वद्बहुत्वमल्पत्वविपर्ययाद्द्विविधमेवान्येषामपि बलिनां संचारः ।

---

१. 'यस्मिन् वसति रागस्तु' का. २. का. पुस्तके तु—
'तेन वै तारमन्द्राणां योऽत्यर्थमुपलभ्यते ।' इत्यधिकमत्र ।

३. 'मन्द्रं च तारविषया । का. ४. 'अनेकस्वरसंयोगो' का. ५. 'अन्यच्च' का. ६. 'ग्रहोपन्यासविन्यासविन्यासाभ्यासगोचरः ।' का. ७. 'परिवार्य' का. ८. 'सोंऽशोः' का. ९. 'पञ्चस्वरपरागतिः' इत्यारभ्य 'ह्यवकृष्टध्रुवास्वथ' इति पर्यन्तं पाठः का. पुस्तके नास्ति ।

अल्पत्वे च बहुत्वे च तथा पूर्वविनिश्चयात्।
जातिस्वरैस्तु नित्यं स्याज्जात्यल्पत्वं द्विधा च तत्॥ ८२॥
संचारोंऽशबलस्थानामल्पत्वं दुर्बलासु च।
द्विविधान्तरमार्गस्तु जातीनां व्यक्तिकारकः॥ ८३॥

षट्स्वरं षाडवितं चतुर्दशविधं सप्तचत्वारिंशत्प्रकारम्। पूर्वोक्तविधानं यथाजात्यंशप्रकारैरिति।

पञ्चस्वरमौडवितं विज्ञेयं दशविधं प्रयोगज्ञैः।
त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं त्वस्य॥ ८४॥
षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च।
चतुःस्वरप्रयोगोऽस्ति ह्यवकृष्टध्रुवास्वथ॥ ८५॥
द्विग्रामिकीनां जातीनां सर्वासामपि नित्यशः।
त्रिषष्टिरंशा[1] विज्ञेयास्तासां चैव तथा ग्रहाः॥ ८६॥

अंशग्रहानिदानीं[2] व्याख्यास्यामः। तत्र[3]—

मध्यमोदीच्यवायास्तु नन्दयन्त्यास्तथैव च।
तथा गान्धारपञ्चम्याः पञ्चमोंऽशो ग्रहस्तथा[4]॥ ८७॥
धैवत्याश्च तथैवांशौ विज्ञेयौ धैवतर्षभौ।
पञ्चम्यास्तु ग्रहावंशौ भवतः पञ्चमर्षभौ।
गान्धारोदीच्यवायास्तु ग्रहांशौ षड्जमध्यमौ॥ ८८॥
आर्षभ्यां[5] तु निषादस्तु तथा चर्षभधैवतौ।
निषाद्यां[6] च निषादस्तु गान्धारश्चर्षभस्तथा॥ ८९॥
तथा[7] च षड्जकैशिक्यां षड्जगान्धारपञ्चमाः।
तिसृणामपि जातीनां ग्रहास्त्वंशाश्च कीर्तिताः॥ ९०॥
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा।

---

१. 'अंशास्त्रिषष्टिः' का. २. 'अंशग्रहविधिमिदानीं वक्ष्यामः' का. ३. 'तत्र' इति का. पुस्तके नास्ति ४. 'स्मृतः' का. ५. 'आर्षभ्याश्च तथैवांशा निषादर्षभधैवताः।' का. ६. 'नैषादिन्या निषादस्तु' का. ७. 'अंशाश्च षड्जकैशिक्याः' का.

षड्जोदीच्यवतीजाते[1]ग्रहास्त्वंशाश्च कीर्तिताः ॥ ९१ ॥
पञ्चमेनर्षभश्चैव निषादो धैवतस्तथा ।
[2]कर्मारव्या बुधैरंशा ग्रहाश्च परिकीर्तिताः ॥ ९२ ॥
गान्धारश्चर्षभश्चैव [3]पञ्चमोऽथ निषादवान् ।
[4]चत्वारोंऽशा भवन्त्यान्ध्या ग्रहाश्चैते तथैव हि ॥ ९३ ॥
ऋषभश्चैव षड्जश्च मध्यमः पञ्चमस्तथा ।
मध्यमाया ग्रहा[5] ज्ञेया अंशाश्चैव सधैवताः ॥ ९४ ॥
[6]निषादषड्[7]जगान्धारा मध्यमः पञ्चमस्तथा ।
गान्धारीरक्तगान्धार्यो[8]ग्रहांशाः परिकीर्तिताः ॥ ९५ ॥
[9]षा(ष ?)ड्जाया षड्जगान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्चा(स्या ?)पि[10] विज्ञेया ग्रहाश्चांशाः प्रकीर्तिताः ॥ ९६ ॥
[11]कैशिक्या चर्षभहीना ग्रहांशाः षट्स्वराः स्मृताः ।
सर्वस्वरग्रहांशाश्च विज्ञेयाः षड्जमध्यमाः ॥ ९७ ॥
एवं त्रिषष्टिर्विज्ञेयाः ग्रहाश्चांशाश्च जातिषु ।
अंशवच्च ग्रहास्[12]त्वासां सर्वासामेव नित्यशः ॥ ९८ ॥
सर्वासामेव जातीनां त्रिजातिस्तु गणाः[13] स्मृताः ।
सर्वथा चैव विज्ञेया वर्धमानस्वरै[14] यथा ॥ ९९ ॥
एकस्वरो द्विस्वरश्च त्रिस्वरोऽथ चतुःस्वरः ।

---

१. 'अंशग्रहास्तु चत्वारः षड्जोदीच्यवतीश्रिताः' का. २. 'कर्मारव्यास्तथैवांशाश्च-त्वारः संप्रकीर्तिताः ।' का. ३. 'निषादः पञ्चमस्तथा' का. ४. एतदर्धं का. पुस्तके नास्ति । ५. '°ग्रहास्त्वंशा धैवतश्च प्रकीर्तितः ।' का. ६. पद्यमेतत् का. पुस्तके 'षड्जाया षड्जगान्धारौ' इति श्लोकस्याग्रे वर्तते । ७. 'निषादर्षभगान्धारा' का. ८. 'ग्रहांशास्तु बुधैः स्मृताः' का. ९. 'षड्जायाः' का. १०. 'धैवतस्यापि' का. ११. का. पुस्तके तु—

'वर्जितर्षभयोगास्तु कैशिक्यंशाः षडेव तु ।
स्वराः सर्वे च विज्ञेया षड्जमध्यांशजा ग्रहाः ॥'

१२. 'ग्रहास्तासां' का. १३. 'गुणः स्मृतः' का. १४. 'स्वरास्तथा' का.

पञ्चस्वरः षट्स्वरश्च तथा सप्तस्वरोऽपि च[1] ॥ १०० ॥
पूर्वमुक्तमिदं[2] त्वासां ग्रहांशपरिकल्पनम् ।
मध्यमोदीच्यवा जातिस्तथा गान्धारपञ्चमी ॥ १०१ ॥
नन्दयन्ती रतिश्रेष्ठा परमेकांशकाः स्मृताः ।
धैवती पञ्चमी चैव षाडवेन्द्रे प्रकीर्तिते ॥ १०२ ॥
गान्धारोदीच्यवा चाभ्यां समा स्याद्व्यंशकेत्यपि ।

---

१. 'वा' का. २. का. पुस्तके तु—'पूर्वमुक्तमिदं त्वासां ग्रहांशपरिकल्पनम्' इत्याद्यारभ्य 'वर्धमापभौविता (?)' इत्यन्तानां श्लोकानां परिवर्ते पाठः—

'द्विविधमन्यत्वं लङ्घनादनभ्यासाच्च । गीतान्तरमार्गमुपगतानां षाडवौडवितकरणक्षमंशानां च स्वराणां लङ्घनादनभ्यासाच्च सकृदुच्चारणं यथाजाति तद्वत् बहुलमल्पत्वविपर्ययाद् द्विविधमेषामन्येषामपि बलिनां संचारः ।

अल्पत्वं च बहुत्वं च यथापूर्वं विनिश्चयात् ।
जातिस्वरैश्च नित्यं स्यात् जात्यल्पत्वं विधानतः ॥
संचारोंऽशबलस्थानमल्पत्वं दुर्बलेषु च ।
विविधोऽन्तरमार्गस्तु जातीनां व्यक्तिकारकः ॥
अथ पञ्चस्वराः कण्ठ्यां(ण्ठां) शात् (?) तारगतिः ।
अंशात्तारगतिं विद्यादाचतुर्थस्वरादिह ।
पञ्चमं त्वथवा गच्छेत्ततोंऽशविहितं त्विह ॥
आपञ्चात् पञ्चमाद्वा नातःपरमिहेष्यते ।

त्रिविधा मन्द्रगतिः—अंशपरा न्यासपरा चेति अपन्यासपरा चेति वा ।

मन्द्रो ह्यंशपरो नास्ति न्यासे तु द्वौ व्यवस्थितौ ।
गान्धारे च ग्रहे न्यासे दृष्टमार्षभदैवतम् ॥
पञ्चस्वरमौडवितं विज्ञेयं दशविधं प्रयोगज्ञैः ।
त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं चास्य ॥
षड्स्वरस्य प्रयोगोऽयं तथा पञ्चस्वरस्य च ।
चतुःस्वरप्रयोगोऽपि देशापेक्षः प्रयुज्यते ॥

अथ न्यासः ।

अंशसमाप्तौ स चैकविंशतिविधः ।
स च कदाचित् जात्यन्तरोपन्यासः स षट्पञ्चाशत्संख्यः ॥
एवमुक्तमिदं सम्यक् जातीनां लक्षणं मया ।
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् ॥

आर्षभ्यामृनिधा अंशा निषादी रिनिगास्त्रयः ॥ १०३ ॥
सगपाः षड्जकैशिक्यास्त्रिस्त्रोंऽशकाः प्रकीर्तिताः ।
चतुरंशा समनिधा षड्जोदीच्यवती स्मृता ॥ १०४ ॥
कर्मारवी रिपनिधैरान्ध्री रिपनिगः स्मृता ।
सगमपधैः षाड्जी स्यात्पञ्चभिश्चापि मध्यमा ॥ १०५ ॥
सपरिमधैरंशैः स्याद्गान्धारी समगानिपैः ।
तद्वत्स्याद्रक्तगान्धारी चतस्रोंऽशैश्च पञ्चभिः ॥ १०६ ॥
कैशिकी च षडंशा स्यात्सगमपनिधैः स्मृता ।
षड्जमध्या तु सप्तांशा त्रिषष्टिरिति तेंऽशकाः ॥ १०७ ॥
अंशकैः····················प्रीतिजाः ।
आस्तां प्रयोगकाले तु पुरमाश्रावणाविधिः ॥ १०८ ॥
मार्गैस्त्रिभिः प्रयोक्तव्यश्चित्रवार्तिकदक्षिणैः ।
चतुर्भिर्गीतिभिश्च स्यान्मागध्यादिभिरेव च ॥ १०९ ॥
पूर्वरङ्गे कृते शुद्धे काण्डिकाश्रावणाविधिः ।
आसारितानि पश्चाच्च ततो जात्यंशजल्पनम् ॥ ११० ॥
स्वराणामङ्गहारैः स्यात्पदेष्वभिनयक्रमैः ।
वर्धमापमौविता (?)················॥ १११ ॥
अंशाः स्युः पञ्च षाड्जाया निषादर्षभवर्जिताः ।
[1]अपन्यासो भवत्यत्र गान्धारः पञ्चमस्तथा ॥ ११२ ॥
[2]न्यासश्चात्र भवेत्षड्जो लोप्यः सप्तम एव तु ।
षाडवं सप्तमोपेतमल्पौ वै सप्तमर्षभौ ॥ ११३ ॥
षड्जगान्धारसंचारस्तथा धैवतषड्जयोः ।
गान्धारस्य च[3] बाहुल्यं त्वत्र कार्यं प्रयोक्तृभिः ॥ ११४ ॥
[4]आर्षभ्यां तु भवन्त्यंशा धैवतर्षभसप्तमाः ।
एत एव ह्यपन्यासा न्यासश्च ऋषभः स्मृतः ॥ ११५ ॥

---

१–२ एतत्पद्यार्धद्वयस्थानेऽर्धमेतत्—'न्यासः सर्वे उपन्यासौ स्यातां गान्धारपञ्चमौ ।' का. पुस्तके ३. 'तु' का. ४. 'अत ऊर्ध्वं प्रवक्ष्यामि न्यासोपन्यासकल्पनम् ।' का.

अल्पत्वं च विशेषेण भवेत्षाडवकारिणः ।
लङ्घनं पञ्चमस्यैव स्यादारोहणसंश्रयात् ॥ ११६ ॥
षट्स्वरं सप्तमहीनं [1]पञ्चस्वर्यं च पञ्चमः[2] ।
विवादिनां स्वराणां च संचारोऽत्र विधीयते ॥ ११७ ॥
[3]धैवत्यां धैवतर्षभावंशौ न्यासः स्याद्धैवतः ।
अपन्यासा भवन्त्यत्र धैवतर्षभमध्यमाः ॥ ११८ ॥
षड्जपञ्चमहीनं च पञ्चस्वर्यं विधीयते ।
[4]पञ्चमेन विना चैव षाडवं परिकीर्तितम् ॥ ११९ ॥
[5]आरोहिणौ च तौ कार्यौ लङ्घनीयौ तथैव च ।
[6]निषादश्चर्षभश्चैव गान्धारो बलवांस्तथा ॥ १२० ॥
निषादिन्यां निषादोंऽशा गान्धारस्त्वर्षभः स्मृतः ।
एत एव ह्यपन्यासा न्यासश्चैवात्र सप्तमः ॥ १२१ ॥
धैवत्या इव कर्तव्यौ षाडवौडविते तथा ।
तद्वच्च लङ्घनीयौ तु बलवन्तौ तथैव च ॥ १२२ ॥
अंशास्तु षड्जकैशिक्यां षड्जगान्धारपञ्चमाः ।
अपन्यासा भवन्त्यत्र षड्जसप्तमपञ्चमाः १२३ ॥
गान्धारश्च भवेन्न्यासो हीनस्वर्यं न चात्र तु ।
दौर्बल्यं चात्र कर्तव्यं धैवतस्यर्षभस्य च ॥ १२४ ॥
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा[7] ।
स्युः षड्जोदीच्यवत्यंशा [8]न्यासश्चैव तु मध्यमः ॥ १२५ ॥
[9]अपन्यासो भवत्यस्या धैवतः षड्ज एव च ।
[10]परस्परमिहांशानां संचारश्च विधीयते ॥ १२६ ॥

---

१. 'सप्तमहीने' का. २. 'पञ्चमम्' का. ३. 'धैवत्या धैवतो न्यासः स्यादंशौ धैवतर्षभौ ।' का. ४. श्लोकार्धमेतत् का. पुस्तके नास्ति । ५. 'आरोहिणौ च कर्तव्यौ लङ्घनीयौ धैवतर्षभौ ।' का. ६. इतः प्रभृति सार्धं श्लोकचतुष्टयं का. पुस्तके नास्त्येव । ७. 'स्मृतः' का. ८. 'न्यासो मध्यम इष्यते' का. ९. 'उपन्यासाविह स्यातां धैवतर्षभ एव च ।' का. १०. 'परस्परांशानुगमो गन्धारोनुपमो भवेत् ।' का.

पञ्चमर्षभहीनं तु पञ्चस्वर्यं तु तत्र वै ।
ऋषभः षाडवे हीनो गान्धारश्च बली भवेत् ॥ १२७ ॥
सर्वेऽशाः षड्जमध्याया अपन्यासास्त एव च ।
षड्जो वा मध्यमो वापि न्यासः कार्यः प्रयोक्तृभिः ॥ १२८ ॥
गान्धारसप्तमोपेतं पञ्चस्वर्यं तु तत्र वै ।
षाडवं सप्तमोपेतं चात्र कार्यं प्रयोगतः ॥ १२९ ॥
सर्वस्वराणां संचार इष्टस्तस्यां प्रयोक्तृभिः ।
षड्जग्रामाश्रया ह्येता विज्ञेयाः सप्त जातयः ॥ १३० ॥
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रिताः ।
गान्धार्याः पञ्च स्युरंशा धैवतर्षभवर्जिताः ॥ १३१ ॥
अपन्यासो भवेच्चात्र षड्जः पञ्चम एव च ।
गान्धारोऽत्र भवेन्न्यासः षाडवं चर्षभं विना ॥ १३२ ॥
ऋषभधैवतोपेतं तथा चौडवितं भवेत् ।
लङ्घनीयौ च तौ नित्यमृषभो धैवतं व्रजेत् ॥ १३३ ॥
गान्धारीविहितं न्यासं हीनस्वर्यं च लक्षणम् ॥ १३४ ॥
सर्वं च रक्तपूर्वाया गान्धार्याश्च विनिर्दिशेत् ।
बलिनौ भवतश्चात्र धैवतः सप्तमस्तथा ॥ १३५ ॥

---

१. 'पञ्चमस्वरहीनं तु पञ्चस्वर्यं विधीयते ।' का. २. 'लङ्घने च तयोर्भवेत्' का. ३. 'सर्वेषां' का. ४. 'अपन्यासा' का. ५. 'षड्जश्च मध्यमश्चैव न्यासौ कार्यौ प्रयोक्तृभिः ।' का. ६. 'पञ्चस्वर्यं विधीयते' का. ७. 'ऋषभः षाडवे हीनो दुर्बलः स विशेषतः ।' का. ८. 'तस्याः' का. ९. '°श्रिता' का. १०. 'ऊर्ध्वं' का. ११. 'अंशाः स्युः पञ्चगान्धार्याः' का. १२. 'अपन्यासत्वमस्यास्तु षड्जपञ्चमयोरपि ।' का. १३. 'गान्धारश्च' का. १४. काशीमुद्रितपुस्तके श्लोकस्यास्य स्थाने सार्धं पद्यमेवम्—

'धैवतर्षभगान्धार्यां कर्तव्यं स्वरयोगतः ।
षड्जमध्यमयोरत्र बाहुल्यं संविधीयते ॥
प्रयोक्तृभिः प्रयोक्तव्यं गान्धारस्य च लङ्घनम् ।'

१५. 'गान्धारो विहितन्यासो' का. १६. 'बलवन्तौ विधातव्यौ' का.

गान्धारषड्जयोश्चैव[1] संचारश्चर्षभं[2] विना ।
अपन्यासस्तथा[3] चात्र एको वै मध्यमः स्मृतः ॥ १३६ ॥
गान्धारोदीच्यवांशौ[4] च विज्ञेयौ षड्जमध्यमौ ।
पञ्चस्वर्यं न[5] चास्त्यत्र षाट्स्वर्यमृषभं[6] विना ॥ १३७ ॥
अस्यास्त्वल्पबहुत्वस्य[7] न्यासापन्यासयोस्तथा ।
यः षड्जोदीच्यवायास्तु सर्वोऽत्र स विधिः स्मृतः ॥ १३८ ॥
मध्यमायां[8] भवन्त्यंशा विना[9] गान्धारसप्तमौ ।
एत[10] एव ह्यपन्यासा न्यास एव हि मध्यमः ॥ १३९ ॥
गान्धारसप्तमोपेतं[11] पञ्चस्वर्यं विधीयते ।
षाट्स्वर्यं चाप्यगान्धारं कर्तव्यं तु प्रयोगतः ॥ १४० ॥
षड्जमध्यमयोश्चात्र कार्यं बाहुल्यमेव च ।
गान्धारलङ्घनं चात्र नित्यं कार्यं प्रयोक्तृभिः ॥ १४१ ॥
मध्यमोदीच्यवायास्तु पञ्चमोऽ[12]शः प्रकीर्तितः ।
शेषो विधिस्तु कर्तव्यो[13] गान्धारोदीच्यैवां[14] गतः ॥ १४२ ॥

---

१. 'अत्र' का. २. 'संचारः ऋषभं' का. ३. 'अपन्यासस्तु कार्यः स्यादेक एवात्र मध्यमः ।' का. ४. 'गान्धारोदीच्यवायां तु तावंशौ' का. ५. 'भवेन्नात्र' का. ६. 'चार्षभं' का.

७. 'कार्योऽत्रान्तरमार्गस्तु न्यासोपन्यास एव तु ।
तत्राल्पत्वाद् द्विविधयः षड्जोदीच्यवती समाः ॥' का.

८. 'मध्यमाद्वा' का. ९. 'स षड्जर्षभमध्यमाः' का. १०. अस्य पद्यार्धस्य स्थाने का. पुस्तके तु—

'पञ्चमो धैवतश्चैवापन्यासस्तत्र एव तु ।
न्यासो मध्यम एवात्र द्विश्रुत्योर्हीनता भवेत् ॥' इति ।

११. इतः प्रभृति पद्यद्वयस्थाने का. पुस्तके—

'गान्धारहीनबाहुल्यं षट्स्वर्यं षड्जमध्ययोः ।
गान्धारस्य च दौर्बल्यं मध्यमाया विधीयते ॥' पद्यमेतद्वर्तते ।

१२. 'पञ्चमांशो न हीयते' का. १३. 'च' का. १४. '°दीच्यवांशतः' का.

द्वावंशावथ[1] पञ्चम्या ऋषभः[2] पञ्चमस्तथा ।
[3]संनिषादावपन्यासौ न्यासश्चैवात्र पञ्चमः ॥ १४३ ॥
[4]मध्यमायां तु कर्तव्ये षाडवौडविते तथा ।
दौर्बल्यं चात्र विज्ञेयं षड्जगान्धारपञ्चमैः ॥ १४४ ॥
कुर्यादस्यां[5] च संचारं पञ्चमस्यर्षभस्य[6] च ।
गान्धारगमनं चैव[7] कार्यमल्पश्च सप्तमः ॥ १४५ ॥
अथ गान्धारपञ्चम्याः पञ्चमोऽंशः[8] प्रकीर्तितः ।
[9]पञ्चमश्चर्षभश्चैव अपन्यासौ प्रकीर्तितौ ॥ १४६ ॥
[10]न्यासश्चात्र तु गान्धारः स च पूर्णस्वरो भवेत् ।
गान्धारपञ्चमाभ्यां च संचारोऽत्र विधीयते ॥ १४७ ॥
ऋषभः पञ्चमश्चैव गान्धारोऽथ[11] निषादवान् ॥
चत्वारोंऽशा भवन्त्यान्ध्र्यामपन्यासास्त[12] एव तु[13] ॥ १४८ ॥
गान्धारश्च भवेन्न्यासः षड्जोपेतं[14] च षाडवम् ।
गान्धारर्षभयोश्चापि[15] संचारस्तु[16] परस्परम् ॥ १४९ ॥
[17]सप्तमस्य च षड्जस्य न्यासो गत्यनुपूर्वशः ।
षड्जस्य लङ्घनं कार्यं[18] नास्ति चौडवितं सदा[19] ॥ १५० ॥

---

१. 'अपि' का. २. 'भवतः पञ्चमर्षभौ' का. ३. 'अपन्यासो निषादश्च पञ्चमर्षभसंयुतः ।' का. ४. पद्यस्यास्य स्थाने का. पुस्तके—

'न्यासः पञ्चम एव स्यात् मध्यमर्षभहीनता ।
दुर्बलाश्चात्र कर्तव्या [ : ] षड्जगान्धारपञ्चमाः ॥' इति ।

५. 'चाप्यत्र' का. ६. 'मध्यमस्य' का. ७. 'चाल्पं सप्तमात् संप्रयोजयेत्' का. ८. 'पञ्चमांशः' का. ९. 'पञ्चमं चर्षभं' का.

१०. 'गान्धारोऽत्र भवेन्न्यासौ हीनस्वर्यं च नेष्यते ।
पञ्चम्यास्त्वथ गान्धार्याः सञ्चरश्च विधीयते ॥' इति का.

११. 'गान्धारोऽत्र' का. १२. 'आन्ध्रया' का. १३. 'च' का. १४. 'षड्जापेतश्च षाडवः' का. १५. 'गान्धारषड्जयोरत्र' का. १६. 'संचारः स्यात्' का. १७. 'षष्ठसप्तमयोश्चात्र न्यासगत्यानुपूर्वशः ।' का. १८. 'नास्ति' का. १९. 'तथा' का.

[1]नन्दयन्त्याः क्रमान्न्यासस्त्वपन्यासोंऽश एव च ।
[2]गान्धारो मध्यमश्चैव पञ्चमश्चेति नित्यशः ॥ १५१ ॥
[3]षड्जेनांशो लङ्घनीय आन्ध्रीसंचार इष्यते ।
लङ्घनमृषभस्यात्र तच्च मन्द्रगतं स्मृतम् ॥ १५२ ॥
तारगत्या तु[4] षड्जः स्यात्[5]कदाचिन्नातिवर्तते ।
[6]गान्धारश्च ग्रहः कार्यस्तथा न्यासश्च[7] नित्यशः ॥ १५३ ॥
कर्माख्याः स्मृता[8] ह्यंशा ऋषभः पञ्चमस्तथा ।
धैवतश्च[9] निषादश्चाप्यपन्यासास्त एव तु ॥ १५४ ॥
[10]पञ्चमश्च भवेन्न्यासो हीनस्वर्यं न चात्र तु ।
गान्धारस्य विशेषेण सर्वतो गमनं भवेत् ॥ १५५ ॥
[11]कैशिक्यांशास्तु विज्ञेयाः स्वराः सर्वेऽर्षभं विना ।
एत एव ह्यपन्यासा न्यासौ गान्धारसप्तमौ ॥ १५६ ॥
धैवतेंऽशे निषादे च न्यासः पञ्चम इष्यते ।
[12]अपन्यासः कदाचिच्च ऋषभोऽपि भवेदिह ॥ १५७ ॥

---

१. 'नन्दयन्त्या भवन्त्यंशः (शाः?) पञ्चमो नित्यमेव तु ।' २. 'स्यातामस्यामुपन्यासो मध्यमः पञ्चमस्तथा ।' का. ३. श्लोकस्यास्य स्थाने का. पुस्तके त्वेवं सार्धः श्लोको वर्तते—

'षाडवं षड्जहीनं तु लङ्घनीयः स एव तु ।
आन्ध्रीवत्संचरो नित्यमृषभस्य च लङ्घनम् ॥
तत्र मन्द्रगतिः प्रोक्ता नित्यं गानप्रयोक्तृभिः ।'

४. '°थ' का. ५. '°स्तु' का. ६. 'गान्धारे च' का. ७. 'नाशश्च' का. ८. 'भवन्त्यंशाः पञ्चमर्षभधैवताः' का. ९. 'निषादश्चेति चत्वारो ग्रहाश्च परिकीर्तिताः ।' का. १०. पद्यार्धस्यास्य स्थाने का. पुस्तके पद्यार्धद्वयी—

एत एव ह्यपन्यासा[ :? ] न्यासः पञ्चम इष्यते ।
हीनस्वर्याच्च चात्र स्यादनंशा बलिनस्तथा ॥'

११. 'कैशिक्यास्तु भवन्त्यंशाः सर्वे चर्षभवर्जिताः ।' का. १२. अत्र का. पुस्तके श्लोकयोः पौर्वापर्यं पाठभेदश्चैवम्—

'दौर्बल्यं चर्षभं चास्या लङ्घनं च विशेषतः ।
अपन्यासत्वमङ्गत्वं बाहुल्यं च कदाचन ॥

आर्षभ्यं षाडवं चात्र धैवतर्षभवर्जितम् ।
तथा चौडवितं कार्यं बलिनौ षड्जपञ्चमौ ॥ १५८ ॥
दौर्बल्यमृषभस्यात्र लङ्घनं च विशेषतः ।
षड्जमध्यावदत्रापि संचारस्तु भवेदिह ॥ १५९ ॥
एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः ।
स्वैस्वैश्च करणैर्योज्याः पदेष्वभिनयैरपि ॥ १६० ॥
आसामिदानीं वक्ष्यामि रसभावविकल्पनम् ।
यथा यस्मिन्रसे यश्च तत्त्वं मे संनिबोधित ॥ १६१ ॥

इति भारतीये नाट्यशास्त्रे जातिलक्षणो नामाध्यायोऽष्टाविंशतितमः ।

---

एकोनत्रिंशत्तमोऽध्यायः ।

षड्जोदीच्यकरं चैव बहुमध्यं तथैव च ।
मध्यपञ्चमबाहुल्यात्कार्यं शृङ्गारहास्ययोः ॥ १ ॥
षाड्जी त्वथार्षभी चैव स्वरांशपरितस्ग्रहात् ।
वीररौद्राद्भुतेष्वेते प्रयोज्यो(ज्या) गानयोक्तृभिः ॥ २ ॥
निषादं(दां ?) शे ष(च ?)नैवा(षा ?)दी गान्धारो(री ?) षड्जकैशिकी ।
करुणे च रसे कार्या जातिर्गानविशारदैः ॥ ३ ॥

---

भवेदस्यैव सञ्चारः षड्जमध्यवदिष्यते ।
ऋषभः षाडवे हीनो धैवतश्चर्षभं विना ॥
कार्यश्चौडवितो नात्र बलिनौ चान्यपञ्चमौ ।'

१. 'विधीयते' का. २. इतोऽग्रे पद्यार्धद्वयी का. पुस्तके नास्ति । ३. 'कार्या यस्मिन् रसे यश्च तत्त्वं मे संनिबोधत' का. ४. 'आतोद्यविधिर्नाम अष्टाविंशोऽध्यायः' का.

५. 'षड्जोदीच्यवती चैव षड्जमध्या तथैव च ।
षड्जमध्यमबाहुल्यात् कार्यं शृङ्गारहास्ययोः ॥' इति का.

६. 'आर्षभी चैव षाड्जी च षड्जर्षभग्रहस्वरान् ।
वीराद्भुते च रौद्रे च निषोदाङ्गपरिग्रहात् ॥' इति का.

७. 'निषादांशे च नैषादी गान्धारी षड्जकैशिकी ।' इति भवेत् । श्लोकस्यास्य स्थाने का. पुस्तके तु—

'गान्धार्यंशोपपत्त्या च करुणे षड्जकैशिकी ।' इति पद्यार्धमेव ।

धैवती धैवतांशे[1] तु बीभत्से सभयानके ।
[2]धैवती करुणे योज्या चोन्मादे षड्जमध्यमाः ॥ ४ ॥
ध्रुवा विधाने कर्तव्या जातिगाने प्रयत्नतः ।
षड्जग्रामाश्रिता ह्येताः[3] प्रयोज्या जातयो बुधैः ॥ ५ ॥
अतः परं प्रवक्ष्यामि [4]मध्यमग्रामसंश्रयाः ।
गान्धारीरक्तगान्धार्योर्गान्धारांशोपपत्तितः ॥ ६ ॥
करुणे तु रसे कार्यो निषादे[5]ऽशे तथैव च ।
मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च ॥ ७ ॥
[6]गान्धारपञ्चमी चैव मध्योदीच्यवती तथा ।
मध्यपञ्चमबाहुल्यात्कार्यो(र्यं ?) शृङ्गारहास्ययोः ॥ ८ ॥
[7]कार्मारवी तथा चान्ध्री गान्धारोदीच्यवा तथा ।
[9]वीररौद्रेऽद्भुते कार्या षड्जर्षभांशयोजिता ॥ ९ ॥
कैशिकी धैवतांशा स्याद्बीभत्से[10] सभयानके[11] ।
एकैव षड्जमध्या ज्ञेया सर्वरससंश्रया[12] जातिः ।
[13]तस्यास्त्वंशा सर्वे स्वरास्तुविज्ञेया(स्तु विहिताः) प्रयोगविधौ ॥ १० ॥
यो यदा बलवान्यस्मिन्स्वरो जातिसमाश्रयः[14] ।

---

१. 'धैवतांशा च' का. २. पद्यार्धमेतत् का. पुस्तके नास्त्येव । ३. 'ह्येता विज्ञेयाः' का. ४. मध्यग्रामसमाश्रयाः' का. ५. 'जातिगाने प्रयोक्तृभिः' ६. एतत् पद्यार्धं का. पुस्तके नास्ति. । ७. इतःपूर्वं काशीमुद्रितपुस्तके—

'मध्यमोदीच्यवा चैव गान्धारोदीच्यवा तथा ।
षड्जर्षभांशनिष्पत्त्या कर्तव्या वीररौद्रयोः ॥' इत्यधिकः श्लोकः ।

८. 'निषादांशोपपत्तितः' का. ९. 'अद्भुते तु रसे कार्ये जातिगाने प्रयोक्तृभिः ।' का. १०. 'तथा गन्धारपञ्चमी' का. ११. इतोऽग्रे—

'प्रयोक्तव्या बुधैः सम्यक् बीभत्से सभयानके ।'

इत्यधिकं पद्यार्धं का. पुस्तके ।

१२. 'सर्वरसा संश्रया जातिः' का. १३. 'तस्यास्त्वंशाः सर्वे स्वरास्तु विहिताः प्रयोगविधौ ।' का. १४. 'जातिसमाश्रयात्' का.

तत्प्रवृत्ते[1] रसे कार्यं गानं गेये प्रयोक्तृभिः ॥ ११ ॥
मध्यपञ्चमभूयिष्ठं गानं श्रृङ्गारहास्ययोः[2] ।
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च ॥ १२ ॥
गान्धारः[3] सप्तमप्रायः करुणे गानमिष्यते ।
तथा धैवतभूयिष्ठं बीभत्से सभयानके ॥ १३ ॥
( एकैव[4] षड्जमध्या ज्ञेया तु सकलरसाश्रया जातिः ।
तस्या ह्यंशाः सर्वे स्वराश्च विहिताः प्रयोगविधौ[5] ॥ १४ ॥ )
सर्वेष्वंशेषु रसा नियमविधानेन संप्रयोक्तव्याः ।
काकल्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः ॥ १५ ॥
एवमेता बुधैर्ज्ञेया[6] ज्ञातयो नाट्यसंश्रयाः[7] ।
अत ऊर्ध्वं प्रवक्ष्यामि वर्णालंकारलक्षणम् ॥ १६ ॥
आरोही चावरोही च स्थायी(यि)संचारिणौ तथा ।
वर्णाश्चत्वार एवैते ह्यलंकारास्तदाश्रयाः[8] ॥ १७ ॥
आरुहन्ति स्वरा यत्र आरोही[9] स तु संज्ञितः ॥
यत्र चैवावरोही[10] च सोऽवरोहीति भण्यते[11] ॥ १८ ॥
स्थिराः[12] स्वराः समा यत्र स्थायी[13] वर्णः स उच्यते ।

---

१. 'तत्प्रयुक्ते रसे गानं कार्यम्' का. २. 'हास्यश्रृङ्गारयोर्भवेत्' का. ३. 'गान्धार-सप्तमप्रायं' का. ४. गाथेयं का. पुस्तके नास्ति । अत्रापि पुनरुक्तैव । ५. 'प्रयोग-विहिताः प्रयोगविधौ' क-ख ६. 'जातयो रससंश्रयाः' का. ७. इतोऽग्रे का. पुस्तके—

'बाह्यप्रयोगविहितान् स्वरांश्चैव निबोधत ।
हास्यश्रृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ॥
षड्जर्षभौ च कर्तव्यौ वीररौद्राद्भुतेष्वथ ।
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ॥
धैवतश्च प्रयोक्तव्यो बीभत्से सभयानके ।'

सार्धपद्यद्वयी समधिका

८. 'हि' इति नास्ति का. पुस्तके । ९. 'आरोहीति स भण्यते' का. १०. 'यत्र चैवावरोहन्ति' का. ११. 'संज्ञितः' का. १२. 'स्थिरस्वराः' का. १३. 'स्थायिवर्णः स संज्ञितः' का.

संचरन्ति[1] स्वरा यत्र स संचारीति कीर्तितः[2] ॥ १९ ॥
शारीरस्वरसंभूतै[3](ता ?)स्त्रिस्थानगुणगोचरैः[4](राः ?) ।
चत्वारो लक्षणोपेता वर्णास्तत्र[5] प्रकीर्तिताः ॥ २० ॥
एवं[6] लक्षणसंयुक्तं यदा वर्णौ तु कर्षति ॥
तदा वर्णस्य निष्पत्तिर्विज्ञेया रससंभवा[7] ॥ २१ ॥
एते वर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकाः[8] ।
एतानेवाश्रुतो[9](तान्) भूयो ह्यलंकारान्निबोधत ॥ २२ ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा क्रमरो(रे)चित[10] एव च[11] ॥ २३ ॥
प्रस्तारश्च प्रसादश्च स्थायिवर्णसमाश्रयः ।
अथ संचारितान्[12]भूयः कीर्त्यमानान्निबोधत ॥ २४ ॥
मन्द्रस्तथा[13] प्रसन्नादिबिन्दुः प्रेङ्खोलितस्तथा ।

---

१. 'संचरन्ति स्वयं यत्र' का. २. 'संज्ञितः' ३. '°संभूता' का. ४. '°गोचरा' का. ५. '°ह्यते' का. ६. 'पदं' का. ७. 'स्वरसंभवा' का. ८. 'गानयोगतः' का. ९. 'एतान् समाश्रितान् सम्यगलंकारान्निबोधत' का. १०. 'समोऽन्यस्थिर एव च' का. ११. इतोऽग्रे श्लोकषट्कमधिकं का. पुस्तके—

'स्थान्निवृत्तिः प्रवृत्तिश्च कम्पितः कुहरस्तथा ।
रेचितव्यस्तथा चैव प्रेङ्खोलितक एव च ॥
मन्द्रतारप्रसन्नश्च तारमन्द्रप्रसन्नतः ।
प्रसारश्च प्रसादश्च ततोद्वाहित एव च ।
अवलोकितस्ततश्चैव निष्कूजितक एव च ।
उद्गीतो ह्लादमानश्च रञ्जितश्च तथा परः ॥
आवर्तकाख्यो विज्ञेयः परिवर्तक एव च ।
उद्घट्टितस्तथा क्षिप्तः संप्रदानं तदा परः ।
हसिताख्योऽथ हुंकारः संधिप्रच्छादनस्तथा ।
विधूनाख्यस्तदा गात्रवर्णस्तथैव च ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
तथा प्रसन्न एवं च समोऽनुचित एव च ॥' इति ।

१२. 'संचारिजान्' का. १३. 'मन्द्रतारः प्रसन्नश्च' का.

[1]संनिवृत्तप्रवृत्तश्च रेचितः कम्पितः स यः ॥ २५ ॥
[2]कुंद(हु?)रश्चैव वेणुश्च र[3]ञ्जिता(तो?) ह्यवलोकितः ।
आवर्तितः [4]परावृत्तौ [5]ज्ञेयः(याः?)संचारिणस्तथा ॥ २६ ॥
[6]निकर्षोऽप्युच्चयश्चैव हसितो बिन्दुरेव च ।
प्रेङ्खोलितस्तथाक्षिप्तो विस्तीर्णो ह्यालितस्तथा ॥ २७ ॥
[7][नि]स्पन्दमानः संप्रदानः संधिः प्रच्छादनस्तथा ।
प्रसन्नादिः प्रसन्नान्त इति [8]वारोहिणः स्मृताः ॥ २८ ॥
[9]विधूतः स्यात्रिवर्णश्च तथो[10]द्वाहित एव च ।
[11]ऊहितश्च तथा वेणिर्विज्ञेया ह्यवरोहिणः ॥ २९ ॥
सप्तरूपगता ज्ञेया अलंकारास्त्विमे बुधैः ।
[12]नैतेऽस्माकं ध्रुवास्विष्टा अतिवर्णप्रकर्षणैः[13] ॥ ३० ॥
[14]ते ध्रुवाणां प्रयोगे तु कार्या ह्यारोहिणः स्वराः ।
यस्मादर्थानुरूपादि[15]र्ध्रुवा का[16]र्व्यार्थदर्शिकाः(का?) ॥ ३१ ॥
वर्णानां तु [17]मुने कार्यं कृशत्वं [18]पदसंश्रयम् ।
[19]यत्र प्रयोगे यच्छन्ति तांश्च वर्णान्निबोधत ॥ ३२ ॥
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
[20]प्रसन्नमध्यश्च तथा बिन्दुः कम्पितरेचितौ ॥ ३३ ॥

---

१. 'तारमन्द्रप्रसन्नश्च सन्निवृत्तप्रवृत्तकः ।' का. २. 'कुहरश्चैव' का. ३. 'रुञ्जितो' का. ४. 'आवर्तकपरावृत्तौ' का. ५. 'ज्ञेयाः' का. ६. 'निष्कूजितः सहुंकारहसितं बिन्दुरेचितम् । प्रेङ्खोलितं तथाक्षिप्तं विधूमोद्घटितं तथा ॥' इति का. ७. 'ह्लादमानः संप्रदानं संधिः प्रह्लादनं तथा ।' का. ८. 'चारोहिणः' का. ९. 'विधूमो गात्रवर्णश्च' का. १०. 'तथाद्वाहित एव च' का. ११. 'उद्गीतश्च तथा वेणुरित्येते ह्यवरोहिणः ।' का. १२. 'नेष्यन्ते हि ध्रुवा ह्येते जातिवर्णप्रकर्षणात् ।' का. १३. इतोऽग्रे का. पुस्तके—
'बिन्दुर्वापि हि वेणुर्वा ये चान्येऽपि प्रकीर्तिताः ।' का.

१४. 'ते ध्रुवाणां प्रयोगेषु न कार्या स्वप्रमाणतः ।' का. १५. '॰रूपा हि' का. १६. 'कार्यार्थ दर्शिका' का. १७. 'पुनः' का. १८. 'कृशलं तु' का. १९. 'ये तु प्रयोगं गच्छन्ति' का. २०. 'तथा प्रसन्नमध्यश्च बिन्दुकम्पितरे[illegible]ता ।' का.

[1]प्रेङ्खोलितस्तथा[2] मन्द्रो मन्द्रतारः समस्तथा ।
स्यान्निवृत्तः प्रवृत्तश्च प्रसादोऽपाङ्ग एव च ॥ ३४ ॥
[3]ऊर्मिखोषावलोकश्चेत्पि(?)त्येके सर्ववर्णगाः ।
[4]स्थायिवर्णा इवैतेषां [5]संप्रवक्ष्यामि लक्षणम् ॥ ३५ ॥
क्रमशो दी[6]पितो यः स्यात्प्रसन्नादिः स कथ्यते ।
व्यस्तोच्चारित एवैष प्रसन्नान्तो विधीयते ॥ ३६ ॥
आद्यन्तयोः प्र(श?)[7]मनात्प्रसन्नाद्यन्त इष्यते ।
प्रसन्नमध्यो मध्ये तु प्रसन्न[8]ः स्यादुदाहृतः ॥ ३७ ॥
सर्वसाम्यात्समो ज्ञेयः स्थितस्त्वेकं[9]स्वरेऽपि यः ।
[10]श्रुतयोऽन्या द्वितीयस्या मृदुमध्यायताः स्मृताः ॥ ३८ ॥
आयतत्वं तु चेन्नीचं मृदुत्वं तु विपर्ययम् ।
स्वस्वरे मध्यमत्वं च श्रुतीनामेष निर्णयः ॥ ३९ ॥
दीप्त्यायते करुणानां मृदुमध्यमयोस्तथा ।
[11]बिन्दुरेककलो ज्ञेयः कम्पितश्च कलाद्वयम् ॥ ४० ॥

---

१. इतः पूर्वं—

'तारश्च तारमन्द्रश्च तथा तारतरः पुनः ।' का.

इत्यर्धमधिकं का. पुस्तके

२. 'प्रेङ्खोलितस्तथा तारमन्द्रस्तारः समस्तथा ।' का. ३. 'अवलोकस्तथा वेणुरित्येते सर्ववर्णगाः ।' का. ४. 'स्थायिवर्णादृते त्वन्ये सर्ववर्णाः प्रयोगिनः ।' का. ५. इतोऽग्रे का. पुस्तके—

'अत ऊर्ध्वं प्रवक्ष्यामि वर्णालंकारलक्षणम् ।' इत्यर्धमधिकम् ।

६. 'दीप्यते यस्तु' का. ७. 'प्रशमनात्' का. ८. 'प्रसन्नत्वाद्' का. ९. 'स्थिरलेकस्वरोऽपि' का. १०. इत आरभ्य श्लोकद्वयी का. पुस्तके नास्ति । ११. का. पुस्तके तु—

बिन्दुरेककलस्तारः स्पृष्ट्वा तु पुनरागतः ।
स्यान्निवृत्तः प्रवृत्तश्च मन्दं गत्वा समागतः ॥
आक्रीडितलयो यश्च स वेणुः परिकीर्तितः ।
कण्ठे निरुद्धपवनः कुहरो नाम जायते ।
त्रिकला कल्पनात् तद्वदेचिताख्यः शिरोगतः ॥
उरोगतः कम्पितः स्यात् कम्पनात्तु कलत्रयम् । इत्यधिकम् ।

गतागतप्रवृत्तो यः स प्रेङ्खोलित ईष्यते[1] ।
यस्य कण्ठे स्वरोऽथ स्यात्स[2] तु तारः प्रकीर्तितः ॥ ४१ ॥
उरोगतस्तथा मन्द्रो मूर्ध्नि मन्द्रप्रचारतः[3] ।
क्रमागतस्तु यस्तारः षष्ठः पञ्चमं[4] एव च ॥ ४२ ॥
तारमन्द्रप्रसन्नेसु(षु)[5] ज्ञेयो मन्द्रगतस्[6] च ।
लङ्घयित्वा परान्मन्द्रात्[7]परां तारगतिं गतः ॥ ४३ ॥
मन्द्रतारः प्रसन्नस्तु विज्ञेयो ह्यवरोहणात्[8] ।

---

१. 'उच्यते' का. २. 'स्वरोऽधस्तात्' का. ३. 'तारतरः स्मृतः' का. ४. 'पञ्चमोऽपि वा' का. ५. 'तारमन्द्रः प्रसन्नस्तु' का. ६. 'ज्ञेयो मन्द्रगतिस्तु सः' का. ७. 'मन्द्रात् क्रमात्' का. ८. ज्ञेयो ह्यारोहणाद् बुधैः' का. ९. इतोऽग्रे का. पुस्तके श्लोकत्रयस्थाने—

'एकस्वरादिरूढः क्रमशः प्रस्तारसंज्ञितो ज्ञेयः ।
प्रस्तारस्तु निवृत्तः शनैः प्रसन्नः प्रसादः स्यात् ॥
समनन्तरौ द्वावपि चरत्युद्वाहितो द्विकल एव ।
आरोहयत्येककलां पुनरेककलां प्रसादयति ॥
उद्वाहित एव स्यात् अवलोकितसंज्ञको द्विरभ्यस्तः ।
एकं द्वौ त्रीन् गच्छन् स्वरान् क्रमेण क्रमो ज्ञेयः ।
एकान्तरमारुह्य प्रत्येकान्तरं स्वरो यस्तु ।
अनिष्कूजितसंज्ञोऽसौ ज्ञेयोऽलंकार उद्गीतः ।
क्रमयोगेनाने तु ( न ? ) संचार्यैकान्तरस्वरो द्विकालम् ।
ह्यवरः षट् पर एव ह्यारोही ह्यादमान[ : ] स्यात् ॥
अथ रञ्जितस्तु समनन्तरस्वरे द्वे कले पुनः स्थित्वा ।
अर्धकलामारोही पुनरेव तथावरोही स्यात् ॥
आवर्तकश्चतुर्षु स्वरेषु समनन्तरेषु संचरति ।
आरोहणावरोहणविधिना कोध्यो( ? )न्तरेष्वपि च ।
ज्ञेयो निरन्तरकृतस्त्वष्टकलः सान्तरस्तथा कार्या ।
तज्ज्ञैः कलाश्चतस्रस्त्ववृत्त्यावर्तको भवति ॥
अधिरुह्य तु स्वरान् त्रीन् स्वरान्तरं लङ्घयति तद्वतौ( तौ ? ) ।
पुनरपि च प्रत्यावृत्त्या स स्यात् परिवर्तकोऽष्टकलः ।
यस्य स्वरावतीतौ यथापरं ह्यन्तरस्वरो भवति ।
एककलं चैव तथा स भवेदुद्ध( द्वा ? )टितो नित्यम् ॥

प्रसन्नान्तःस्वरो[1] यत्र प्रसादः स तु संज्ञितः ॥ ४४ ॥
अपाङ्गिकस्तु विज्ञेयः स्वराणामथ संचरात् ।
रेचितः शिरसि ज्ञेयः कम्पितस्तु कलात्रयम् ॥ ४५ ॥
कण्ठे निरुद्धपवनः कुहरो[2] नाम जायते ।
एवमेते त्वलंकारा विज्ञेया वर्णसंश्रयाः ॥ ४६ ॥
अथातः संप्रवक्ष्यामि छन्दोक्षरसमन्विताः ।
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।

---

आक्षिप्तकस्त्रिस्वरजः कर्तव्यः षड्विधः कलामात्रः ।
एककलस्व( स्त्व ? )धरः स्याद्विज्ञेयः षट्कलस्तु परः ।
आक्षिप्तवच्चतुर्भिः स्वरैस्तु काले कलान्तरोपेतैः ।
एकान्तरस्वरक्रम इह गदितः संप्रदायस्तु ।
द्विरपि विकलं गदितं हिंसितमिव चारितं तथा हसितम् ।
समनन्तरं कृतं तत्तज्ज्ञैराक्षिप्तमित्येव ॥
समनन्तरस्वरैस्तु च हसिता ( त ? ) व्यपरश्चतुःपरो वापि ।
आरोहत्येककलाः हुंकाराख्यः स विज्ञेयः ।
स्थानानन्तरमारुह्य प्रत्येति ततश्चतुष्कलं क्रमशः ।
नोर्ध्वपरिक्षेपः स्यात् संधिः प्रच्छादनो नाम ॥
आदौ पदमुत्पाद्य तु यत्र स्याद्विस्वरे लघुनि वर्णे ।
समनन्तरमारोहत्येककलं तद्विधूतं तु ॥
आदौ आरोही स्यात् प्रस्वारोऽन्तेऽवरोही तु ।
यत्र क्रमात् कलासु वदन्त्यलंकारमुद्गीतम् ।
ओङ्कारवदारोहेदनन्तरं तु स्वरं कलान्तरयोः ॥
द्वौ द्वौ प्रकम्प्यमानौ स्वरौ ततश्च प्रसन्नौ द्वौ ।
एषोऽलंकारविधो विज्ञेयो गात्रवर्ण इत्येव ॥
एकारौकारकृते दीर्घाक्षरमन्यदपि योज्यम् ।
गीतालंकाराणां करणा( ण ? )विधिरयं यथावदुपदिष्टः ।
एभिरलंकर्तव्या गीतिर्वर्णाविरोधेन ॥
स्थाने चालङ्कारं कुर्यान्न ह्युरसि काञ्चिकां बध्येत् ।
अतिबहवोऽलंकारा वर्णविहीनास्तु योक्तव्याः ॥' इति ।

१. इतः प्राक् प्रवृत्त-निवृत्तिलक्षणं त्रुटितं भवेत्. २. 'कुदरः' इति प्राक्.

अनलक्ष्यते[1] च नारीगीतिरलंकारहीना स्यात्[2] ॥ ४७ ॥
प्रथमा मागधी ज्ञेया द्वितीया त्वर्धमागधी[3] ।
संभाविता तृतीया च चतुर्थी पृथुला स्मृता ॥ ४८ ॥
विनिवृत्तप्रवृत्ता[4] या सा ज्ञेया मागधी बुधैः ।
अर्धतः संनिवृत्ता च विज्ञेया ह्यर्धमागधी ॥ ४९ ॥
संभाविता च विज्ञेया गुर्वक्षरसमन्विता ।
लघ्वक्षरकृता[5] या तु पृथुला सा प्रकीर्तिता ॥ ५० ॥
एतास्तु गीतयो ज्ञेया ध्रुवयोगं[6] विनैव हि ।
गीतयो[7] गदिताः सम्यग्धातूंश्चैव निबोधत ॥ ५१ ॥
विस्तारः करणश्च[8] स्यादाविद्धो व्यञ्जनस्तथा ।
चत्वारो धातवो ज्ञेयाश्चाद्यन्तकरणाश्रयाः[9] ॥ ५२ ॥
संघातजोऽर्थं[10] समवायजश्च विस्तारजोऽनुबन्धकृतः[11] ।
ज्ञेयश्चतुःप्रकारो धातुर्विस्तारसंज्ञश्च[12] ॥ ५३ ॥

---

१. 'अभावे नह्यनो नापि' इत्यत्र "अनशब्दोऽपि निषेधे 'अनोपमा ते बुद्धिः' इति मुकुटपीयूषव्याख्यायामुपलम्भात् 'न लक्ष्यते' इत्येवार्थः प्रतिभाति, 'अविभूषितेव च स्त्रीगीत्यलंकारहीना स्यात् ।' का.

२. 'अलंकारास्त्रयस्त्रिंशदेवमेते मयोदिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि गीतीनामपि लक्षणम् ॥'

इत्यधिकमत्र का. पुस्तके.

३. 'चार्धमागधी' ४. का. पुस्तके तु—

'भिन्नवृत्तिप्रगीता या सा गीतिर्मागधी मता ।
अर्धकालप्रवृत्ता च विज्ञेया त्वर्धमागधी ॥' इति ।

५. 'लघ्वक्षरकृता नित्या पृथुला संप्रकीर्तिता ।' का. ६. 'ध्रुवायोगं' का. ७. अस्यार्धस्य स्थाने का. पुस्तके तु—

गान्धर्वे एव योज्यास्तु नित्यं गानप्रयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यावि ( मि ? ) साधुवाद्यस्य लक्षणम् ॥' इति ।

८. 'करणश्चैव' का. ९. 'वादित्रकरणाश्रयाः' का. १०. संघातजश्च' का. ११. '°ऽनुबन्धश्च' का. १२. 'तु' का.

विधर्य[1]स्तु स्मृतास्तस्य पूर्वं विस्तार एव च[2] ।
संघातसमवायौ तु[3] विज्ञेयौ च[4] द्विकत्रिकौ ॥ ५४ ॥
पूर्वश्चतुर्विधस्तत्र पश्चिमोऽष्टविधः स्मृतः ।
करणानां विशेषेण विज्ञेयौ[5] वै पृथक्पृथक् ॥ ५५ ॥
अधश्चोर्ध्वे च[6] विज्ञेयावधरोत्तरजौ स्वरौ[7] ।
संघातजो विधिस्त्वेष विज्ञेया(यो ?) व(वा ?)दनं प्रति ॥ ५६ ॥
द्वावृ(वु)[8]त्तरौ द्विरधरस्व(स्त्व ?)धरादि(दिः ?)स्वा(श्चो ?)त्तरावसानश्च ।
ज्ञेयः प्रयो[9](स्त्वथो ?)त्तरादिः पुनरप्यधरावसानश्च ॥ ५७ ॥
समवायजस्तथा स्यात्रिरुत्तरधरं[10]श्च विज्ञेयः ।
द्विर[11]थोत्तराधरान्तौ द्विरधरश्चोत्तरविरामश्च ॥ ५८ ॥
द्विर[12]थोत्तरर(त्तरा)वसानोऽधरादिरुत्तरमुखो द्विरधरश्च ।

---

१. 'विधिर्यस्तु स्मृतस्तस्य' का. ३. 'तौ' का. ४. 'च' इति नास्त्येव का. पुस्तके । ५. 'विधिश्चैव पृथक् पृथक्' का. ६. 'अधश्चोर्ध्वश्च' का. ७. 'स्मृतौ' का. ८. 'द्वावुत्तरौ द्विरधस्त्वधरादिश्च' का. ९. 'स्त्वथोत्तरादिः' का. १०. 'त्रिरुत्तरस्त्रिरधश्च' का. ११. 'ह्यधरोत्तरावसानो द्विरुत्तरस्त्वाधरान्तस्तु ।' का. १२. इतःप्रभृतिश्लोकत्रयस्थाने का. पुस्तके—

'प्रागुत्तराद्वि ( द्वि ? ) रधरादिर्द्विर ( रु ? ) त्तरावसानश्च ।
उत्तरमध्यश्च तथा मध्ये त्वधरः पुनर्ज्ञेयः ॥
व्यञ्जनधातुर्ज्ञेयः कलतलनिष्कोटितान्यथोन्मृष्टम् ।
रेफावमृष्टपुष्पानुस्वरितं बिन्दुरनुबन्धः ।
अङ्गुष्ठाभ्यां तु तन्त्रीणां स्पर्शनं यत्कलं तु तत् ॥
वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तलम् ।
सव्याङ्गुष्ठप्रहारश्च निष्कोटितमिहोच्यते ।
सव्यप्रदेशिनी घातमुन्मृष्टमिति संज्ञितम् ॥
सर्वाङ्गुलिसया क्षेपाद्रेफ इत्यभिधीयते ।
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामधोगतम् ॥
तन्त्रीषु त्रिप्रकारं वाप्यवमृष्टमिति स्मृतम् ।
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिधीयते ॥
तलस्थानेऽधरन्यास्तानध्वनितमुच्यते ।

मध्योत्तरो द्विरधरो द्विरुत्तरोऽप्यधरमध्यश्च ॥ ५९ ॥
अनुबन्धस्तु ज्ञेयो व्याससमासात्त्व(?)नियतमेवादि ।
एवं चतुर्दशविधौ नित्यं विस्तारधातुः स्यात् ॥ ६० ॥
(?)रिमिदितोघनीचरदितह्लदोस्वतथानुबन्ध एवं स्यात् ।
(?)एवंविधोऽपि विज्ञेयो वीणावाद्ये करणधातुः ॥ ६१ ॥
त्रिकपञ्च[1]सप्तनवकैर्यथाक्रमं स मुनो(?)भवेद्वाद्ये ।
सर्वैरनुबन्धकृतैर्गुर्वन्तः स्यात्करणधातुः ॥ ६२ ॥
क्षेपः स्तु[2](ष्ठु)ता···नियतोऽतिकीर्णमनुबन्धसंज्ञितश्चैव ।
आविद्धो विज्ञेयो धातुर्वै[3] पञ्चविध एव ॥ ६३ ॥
द्विस्त्रिश्चातु[4]ष्कनवकैः प्रहारैः क्रमशः शनैः ।
आविद्धधातुर्विज्ञेयः सानु[5]बन्धविभूषितः ॥ ६४ ॥
[6]व्यञ्जनधातोः पुष्पं कलतलनिष्कोटितं तमोघृ(थोद्धृ)ष्टम् ।
रेफानुबन्धसंज्ञोऽनुस्वनितं बिन्दुरवमृष्टम् ॥ ६५ ॥
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिधीयते ।
अङ्गुष्ठाभ्यां समं तत्रो(?) स्पर्शनं य(त्)कलं तु तत् ॥ ६६ ॥
वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तले ।
सव्याङ्गुष्ठप्रहारस्तु निष्कोटितमिहेष्यते ॥ ६७ ॥

---

गुर्वक्षरैकतन्त्र्यां तु बिन्दुरित्यभिसंज्ञितः ।
व्याससमासादेषामनुबन्धः सार्वधातुको ज्ञेयः ॥
इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः ।
रुभिताह्लादश्च तथानुबन्धसंज्ञश्च करणधातुः ।
पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः ॥' इति ।

१. 'त्रिकपञ्चकसप्तकनवकैर्घातैर्युक्तो यथाक्रमं विहितः ।' का. २. 'क्षेपप्लुतातिपातोतिकीर्णाबन्धसंज्ञिताश्चेति ।' का. ३. 'वाद्यप्रयोगे तु' का. ४. 'द्विस्त्रिचतुष्कैर्नवकैः प्रकारैः क्रमशः कृतैः ।' का. ५. 'स्त्वनुबन्धविभूषितः' का. ६. 'व्यञ्जनधातोः पुष्पं' इत्यारभ्य 'वीणायां व्यञ्जको धातुः' इतिपर्यन्तं ये सप्त श्लोकास्ते काशीमुद्रितपुस्तकेऽत्र न सन्ति परं पौर्वापर्येण 'द्विरथोत्तरावसानो' इत्यादि ५९ श्लोकात् पुरत एव पूर्वपृष्ठमुद्रितपाठानुसारेण सन्ति ।

प्रहारो वामतर्जन्यामङ्गु(मुद्धृ)ष्टमिति संज्ञितम् ।
सर्वाङ्गुलिसमाक्षेपै रेफ इत्यभिसंज्ञितः ॥ ६८ ॥
तलस्थानेऽथ तन्त्रीणामनुस्तनितमुच्यते ।
गुर्वक्षरकृता तन्त्री बिन्दुरित्यभिसंज्ञितः ॥ ६९ ॥
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणा....मधोमुखम् ।
तन्त्रीषु त्रिप्रहारं वाप्यवमृष्टं प्रकीर्तितम् ॥ ७० ॥
व्याससमासा देष्टा(षा ?)मनुबन्धः स(सा ?)र्वधातुको ज्ञेयः ।
इति दशविधः प्रयोज्यो वीणायां व्यञ्जको धातुः ॥ ७१ ॥
इत्येते धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः ॥
तिसृणामपि वृत्तीनां यस्तु[1](यासु ?) वाद्यं प्रतिष्ठितम् ॥ ७२ ॥
[2]तिस्रस्तु वृत्तयश्चित्रा दक्षिणावृत्तिसंज्ञिताः ।
वाद्यगीतोभयगुणा निर्दिष्टास्ता यथाक्रमम् ॥ ७३ ॥
सर्वासामेव वृत्तीनां ललिताद्यास्तु[3] जातयः ।
धातुभिः सह संभर्क्ता[4] भवन्ति गुणवत्तराः ॥ ७४ ॥
ए[5]तेषां धातूनां समवाया[ज्]जातयस्तु जायन्ते ।
स्यात्स्वादुदात्तललितरिभितघनसंज्ञाश्चतस्रश्च ॥ ७५ ॥
तत्रोदात्ता विस्तारधातुविषया बहुविषयत्वाद्वा ।
ललिता व्यञ्जनहेतोर्ललितत्वादेव संप्रोक्ता ॥ ७६ ॥

---

१. 'यासु' का. २. काशीमुद्रितपुस्तके तु—
'तिस्रो गतिवृत्तयः प्राधान्येन ग्राह्याः चित्रा वृत्तिर्दक्षिणा चेति । तासां वाद्यताललय-गीतियतिमार्गप्रधानानि यथास्वं व्यञ्जनानि भवन्ति । तत्र चित्रायां संक्षिप्तवाद्यं तालद्रुत-लयसमा यतिः अनागतग्रहाणां प्राधान्यम् । तथावृत्तौ गीतिवादित्रद्विकलतालमध्यलय-स्रोतो गता यतिः । समग्रमार्गाणां प्राधान्यम् । दक्षिणायां गीतिचतुष्कलतालविलम्बित-लयगोपुच्छा यतिः । अतीतमाग्रहमार्गाणां प्राधान्यम् ।' श्लोकस्यास्य स्थाने गद्यभागः । ३. 'ललिताद्या हि' का. ४. 'संयुक्ता' का. ५. 'एतेषां धातूनां' इत्याद्यारभ्य 'गुरुलघुसंचयात्तस्य' इति पर्यन्तं श्लोकत्रयं का. पुस्तके नास्ति ।

आविद्धधातुविषया रिभिन(नि ?)र्घातसंचयाद्विनिर्दिष्टा ।
करणविषया घनसंज्ञा गुरुलघुसंचयात्तस्य ॥ ७७ ॥
[1]त्रिविधं गीते कार्यं वाद्यं वीणासमुद्भवं तज्ज्ञैः ।
तत्त्वं [तथा] ह्यनुगतमोष(घ ?)श्चानेककरणसमायुक्ताः(क्तः ?) ॥७८॥
लयतालवर्णपदयतिगीत्यक्षरभावकं च[2] यत्तत्त्वम् ।
गीतं तु[3] यदनु[4]गच्छत्यनुगतमिति तद्धेवनवाद्यम्(तद्भवेद्वाद्यम् ?) ॥७९॥
आविद्धकरणबहुलं ह्यु[5]पर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं त्वोघे[6] विधातव्यम्[7] ॥ ८० ॥

---

१. 'त्रिविधं वैणवं वाद्यं कर्तव्यं गीतसंश्रयं तज्ज्ञैः ।
तत्त्वं तथानुगतमोघश्चानेककरणसंयुक्तम् ॥' इति का.

२. 'भवेत्तत्त्वम्' का. ३. 'च' का. ४. 'यदनुगच्छेदनुगतमित्युच्यते वाद्यम्' का. ५. 'हि' इति का. पुस्तके नास्ति । ६. 'चौघं बुधैर्ज्ञेयम्' का. ७. इतोऽग्रे का. पुस्तके—

'स्थिते तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ।
द्रुते चौघं प्रयुञ्जीयादेष वाद्यगतो विधिः ॥
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतः स्मृतः ।
ओघस्तृतीये कर्तव्यो लयतालविचक्षणैः ॥
एवं तज्ज्ञैर्ज्ञेया वीणावाद्ये तु धातवः प्रोक्ताः ।
वक्ष्येऽधुना विपञ्चीवाद्यविधाने तु करणार्थम् ॥
रूपकृतं प्रतिकृतं प्रतिभेदो रूपशेष ओघश्च ।
षष्ठी च प्रतिशुष्का ह्येवं ज्ञेयं करणजातम् ॥
वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद् रूपम् ।
रूपं रूपं प्रति भेदकृतं प्रतिकृतमित्युच्यते वाद्यम् ॥
युगपत्कृतेऽन्यकरणं प्रतिभेदो दीर्घलाघवकृतः स्यात् ।
वीणावाद्यविरामेऽप्यविरतकरणं तु रूपशेषः स्यात् ॥
आविद्धकरणयुक्तो ह्युपर्युपरिपाणिकस्त्वोघः ।
प्रतिशुष्का विज्ञेया वाद्ये सहैकतन्त्रिकृता ॥
कार्यं ध्रुवाप्रयोगे प्रायेण हि कोणवादनं तज्ज्ञैः ।
द्वाभ्यामपि वीणाभ्यां गाने वा वादने वापि ।

एवं ज्ञेया वैण[व ?]वाद्यविधाने तु धातवस्तज्ज्ञैः ।
वक्ष्याम्यतःपरमहं निगीतविधानसमवायम् ॥ ८१ ॥
आश्रावणा तथारम्भो वक्त्रपाणिस्तथैव च ।
संखोटता(ना ?) तथा कार्या मुनेश्च परिदेवनम् ॥ ८२ ॥
मार्गासारितमन्यत्स्याल्लीलाकृतमथापि च ।
आसारितानि च तथा त्रिप्रकारकृतानि तु ॥ ८३ ॥
एतानि च बहिर्गीतान्यादौ योज्यानि योक्तृभिः ।
सत्त्वान्यलपतालानि चित्त(त्र ?)वृत्तौ स्मृतानि च ॥ ८४ ॥
प्रयोजनं च तज्ज्ञेयं पूर्वरङ्गविधौ मया ।
एतेषां संप्रवक्ष्यामि दर्शनानि यथाक्रमम् ॥ ८५ ॥

तथा(त्रा ?)श्रावणा नाम—

विस्तारधातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः ।
द्विर्स्यपि(?)संनिवृत्तैः करणोपश्चमैः(पचयैः ?) क्रमेण स्यात् ॥ ८६ ॥
गुरुणात्य(रूणित्वा ?)दावेकादशं च सचतुर्दशं सपञ्चदशम् ।
सचतुर्विंशकामय(कमेव ?)द्विगुणीकृतमेतदेव स्यात् ॥ ८७ ॥

---

स्थानं पात्रं वा स्यात् तन्त्रिषु विभावयेत् समं गानम् ।
तच्चौघतुल्यकरणं वाद्यं कार्यं विपञ्च्याख्यु ।
सप्ततन्त्री भवेच्चित्रा विपञ्ची नवतन्त्रिका ।
विपञ्ची कोणवाद्या स्यात् चित्रा चाङ्गुलिवादना ॥

इयानधिकः पाठः ।

१. 'एवं वेद्या तज्ज्ञैर्नानाकरणाश्रया विपञ्ची तु ।
अत ऊर्ध्वं व्याख्यास्ये लक्षणयुक्तं बहिर्गीतम् ॥' इति का. २. 'आश्रवणारम्भविधी' का. ३. 'परिघट्टना च विज्ञेया तथा संघोटनैव च ।' का. ४. 'पुनश्च परिघट्टना' इत्यग्रिमग्रन्थानुसारी पाठः । ५. '°मेव स्यात्' का. ६. 'त्रिप्रमाणानि वै तथा' का. ७. 'चित्रवृत्तगतानि च' का. ८. 'हि पूर्वोक्तं' का. ९. 'तेषां चैव च वक्ष्यामि लक्षणं सनिदर्शनम् ।' का. १०. 'तत्राश्रवणा' का. ११. 'विश्वापि (?)' का. १२. 'करणोपचयैः' का. १३. 'गुरूणि लादावेकादशकचतुर्दशकसपञ्चदशकम् ।' का. १४. 'सचतुर्विंशकमेव' का.

लघुगुरुणी च ततः स्याद् (अष्टं) तथाष्टमं गुरु भवेत्तथा[1] च पुनः ।
षट् च लघूनि तथान्त्यं गुरु बाह्याश्रावणायां तु ॥ ८८ ॥

(?)त्रिः[3]शम्योपरिपाणौ पित्त्वोववाममेव चैककवान ।
(?)समपाणौ द्वे साम्य(शम्ये ?)तालौ(ला)वाम्ये(वप्ये)वमे वाथ (भूषय)(?) ८९
[ भूयः ? ] शम्या तालावचयाणापुत्वर(नुगुणादुत्तरः ?) तथा चैव ।
(?)वच्चत्पुरस्तथा······स्यादंवं (देव ?)ह्याश्रावणातालः ॥ ९० ॥

अत्रोदाहरणम्[5]—

(?) क्वंदुं जगति यवलितकजम्बुकङ्करतितिसलकुचसलवादिर्द्रिगणपति ।
पशुपति कञ्चुकदिद्देपरभुञ्जदिगिनिगिवादिगिवादिगिवादि[6]गिगिनि च पशुपति ति च ॥

अथारम्भः—

दीर्घाण्यादावष्टौ द्वादश[7] च लघूनि नैधनं चैव ।
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घं च ॥ ९१ ॥
लघुसंज्ञानि चतुर्धा[8] निधनद्विगुणीकृतानि दीर्घ(र्घोऽ)न्ते ।
अष्टौ लघूनि नैधनमित्यारम्भेऽक्षरविधानम् ॥ ९२ ॥

यथा[9]—

कार्यं[10] त्रिपर्वविहितैरुद्वहनैरप्यधःसमवरोहैः ।
तलरिभि तद्वाद(द्धेद ?)युतैः करणैर्विस्तारभूयिष्ठैः ॥ ९३ ॥

---

१. 'स्यातामथाष्टमं' का. २. 'तदा च' का.

३. 'त्रिःशम्योपरिपाणौ तालोऽपि ह्येष निर्दिष्टः ।
समपाणौ द्वे शम्ये तालावप्येवमेव स्यात् ॥' इति का.

४. 'भूयः शम्यातालानुगुणादुत्तरस्तथा द्विकलश्च ।
घटपरस्तथा च युक्तैः स्यादेव ह्याश्रावणातालः ॥' इति का.

५. 'अत्रोदाहरणम्' इत्याद्यारभ्य 'पशुपतिति च' इति पर्यन्तं का. पुस्तके पाठो नास्ति । ६. 'दिनिनि च' ख. ७. 'द्वादशं' का. ८. 'च चत्वारि द्विगुणीकृतानि दीर्घे द्वे' का. ९. 'यथा' इति का. पुस्तके नास्ति ।

१०. 'अस्य तु वाद्यं कार्यं त्रिपर्वहीनैरुपवहनैः ।
रथसंवारोह सुलरहितगुरुयुक्तैः (?) करणैर्विस्तारभूयिष्ठैः ॥' इति का.

अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैस्तथा द्विरभ्यस्तैः ।
आरम्भोऽस्य(स्या ?)वतरणत्रिपर्वयुक्तैश्च कर्तव्यः ॥ ९४ ॥

[ अस्योदाहरणम्— ]

ऋजं[2] दुड्ड जगति अवलिनकदिगिवा दिंजेतिनिकालकुचकुशजम्बुकं तिनिवा । आगणपति पशुपति [ वा आगणपति पशुपति ] वा ॥

अस्य[3] तु वाद्यम्—

तालस्त्रिकलस्त्वादो( स्त्वादौ ?) शम्यैककला कलाद्वये तालः ।
द्विकला च पुनर्व्यञ्जनधातुविधिर्वक्रपाणौ तु ॥ ९५ ॥
द्विकालमद्रके[6] यत्र शम्यातालादि योजितम् ।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकलान्वितम् ॥ ९६ ॥

---

१. 'द्विः कृत्या च निवर्तितैर्द्विरभ्यस्तैः ।'
आरम्भे वाद्यविधिः कार्यस्त्वेवं प्रयोगज्ञैः ॥' इति का.

२. ऋजं दुड्डजगति' इत्यादिगद्यभागः का. पुस्तके नास्त्येव । ३. 'अस्य तु वाद्यं' इति का. पुस्तके श्लोकांशत्वेन निर्दिष्टम् ।

४. 'तालस्त्रिकलात्वादौ शम्यैककलता तालं द्वयमेतालः ।
पुनश्शम्यातालो द्विकलश्च कर्तव्यः ॥ इति' का.

५. '°स्त्वादौ' इति भवेत् ।

६. 'द्विकालमद्रके यत्र शम्यातालादि योजितम् ।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकलान्वितम् ॥' इति का.
गुरूणि पञ्च ह्रस्वानि षट् गुरूणि चतुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि च ॥
चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वक्रपाणौ विधीयते ॥
द्विकले मन्त्रके यत्तु शम्यातालनिपातनम् ।
तत्सर्वं वक्रपाणौ तु मुख्ये ह्यष्टौ कलाः स्मृताः ॥
शम्यातालौ तालशम्ये तेषु कुर्यात् क्रमेण तु ।
तालं शम्या च तालं च संनिपातं तथैव च ॥
तस्याधस्तात्ततः कार्यं पञ्चपाणिचतुष्टयम् ।
वक्रपाणेरयं तालो मुखप्रतिमुखाश्रयः ॥

अथवा[1]—

द्विकले मद्रके[2] यत्र शम्यातालादियोजितम् ।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकले मुखे[3] ।
तस्याधस्तात्पुनः[4] कार्यं पञ्चपाणिचतुष्टयम्[5] ॥ ९७ ॥

---

अतिदण्डां हस्ताभ्यां वीणामुपदक्षिणाङ्गुल्या ।
अङ्गुष्ठाभ्यां च सदा कार्यं संघोटनावाद्यम् ॥
संघोटने स्वराणां संवादिविवादिनश्चापि ।
संघोटनात् त्वभिहिता······शेषादिभिश्चैव ॥
विस्तारधातुकरणैस्त्रिभिश्च चित्रैस्तथा निवृत्तैश्च ।
त्रिस्ताभ्यस्तोपचयैर्वदन्ति···घोटजावाद्यम् ॥' इयान् पाठः ।

१. का. पुस्तके त्वत्र—

'अथ वक्रपाणिः—

'आविद्धकरणयुक्तो ह्यङ्गः स्यादेककः प्रवृत्ते वा ।
अर्धव्यञ्जनधातुर्वाद्येऽप्यथ वक्रपाणिस्तु ॥
गुरूणि पञ्च ह्रस्वानि षट् गुरूणि चतुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि च ॥
चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वक्रपाणौ विधीयते ॥' इत्यधिकमत्र ।

२. 'द्विकले मन्त्रके यत्तु शम्यातालनिपातनम् ।' इति का. ३. 'मुख्ये ह्यष्टौ कलाः स्मृताः ।' इति का. ४. अत्र का. पुस्तके—

'शम्यातालौ तालशम्ये तेषु कुर्यात् क्रमेण तु ।
तालं शम्या च तालं च सन्निपातं तथैव च ॥' इत्यधिकम्.

५. 'ततः' का. ६. 'इतोऽग्रे का. पुस्तके—

'वक्रपाणेरयं तालो मुखप्रतिमुखाश्रयः ।
अतिदण्डां हस्ताभ्यां वीणामुपदक्षिणाङ्गुल्या ॥
अङ्गुष्ठाभ्यां च सदा कार्यं संघोटनावाद्यम् ।'
संघोटने स्वराणां संवादिविवादिनश्चापि ।
संघोटनात् त्वभिहिता···शेषादिभिश्चैव ॥
विस्तारधातुकरणैस्त्रिभिश्च चित्रैस्तथा निवृत्तैश्च ।
त्रिस्ताभ्यस्तोपचयैर्वदन्ति [ सं ? ]घोटजा ( ना ? ) वाद्यम् ॥

इत्यधिकम् ।

अथ संखोटना[ना]सु—

गुरुणी लघून्यथाष्टौ[1] दीर्घं[2] द्विगुणं तथा च कर्तव्यम् ।
लघुदीर्घे लघु च पुनश्चतुर्गुणं [3]संप्रकर्तव्य[म्?] ॥ ९८ ॥
पुनरष्टौ ह्रस्वानि[4] स्युरिहं[5] तथा नैधनं च कर्तव्यम् ।
[6]संखोटनवस्तुविधौ ह्रस्वगुरुविधिः समुद्दिष्टः ॥ ९९ ॥

अस्य वाद्यविधिः—

अधिदण्डहस्तशम्या ताला······द्विकलश्च कर्तव्यः ।
द्विकलश्च संनिपातः पुनः पितापुत्रकम्पपपूर्वः[7] (?) ॥ १०० ॥
[8]विश्वक्पुरस्तथा चेत्यारम्भे तालयोगस्तु ।
······································ ॥ १०१ ॥

अथ वक्रपाणिः—

गुरूणि[9] पञ्च ह्रस्वानि षट् स्वरश्च [च]तुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि च ॥ १०२ ॥
चत्वार्यथ गुरूणि[10] स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वक्रपाणौ भवेद्विधिः[12] ॥ १०३ ॥

अत्रोदाहरणम्[13]—

दिद्धिःकुंदुंजंबुकगजपतियाः ऋतुङ्गादिद्भेयेङ्घिषि ठुनकिटिड्नादुंघट्ट-चट्टकिटिमटदु ॥

---

१. 'तथाष्टौ' का. २. 'द्वीर्घद्वितयं' का. ३. 'चतुर्गुणश्चापि कर्तव्यम् ।' का. ४. 'ह्रस्वाः स्युः' का. ५. 'स्लथ गुरु निधनं तथा कार्यम् ।' का. ६. 'संघोटनं वस्तुविधौ विज्ञेयं गुरुलाघवविधानम् ।' का.

७. 'पिता पुत्रकश्च षट्' का. ८. 'पूर्वश्चञ्चत्पुटस्तस्याद्वास्तैस्तालसंयोगैस्तु (?) ॥' इति का. ९. 'आविद्धकरणयुक्तो व्यङ्गः स्यादेककः प्रवृत्ते वा । अर्धव्यञ्जनधातुर्वाद्येऽप्यथ वक्रपाणिस्तु ॥' इत्यधिकमत्र ।' १०. 'गुरूणि' का. ११. 'लघूनि स्युः' का. १२. 'विधीयते' का. १३. का. पुस्तके 'अत्रोदाहरणम्' इत्यादि—'वदन्ति संखोटनावाद्यम् ॥ १०५ ॥' इत्यन्तपाठस्य स्थाने—

अस्य वाद्यम्—

आविद्धकरणयुक्ताद्वाङ्गः स्यादेककः प्रवृत्तो वा ।
संखोटय स्वरं या(वा)दिना तु संवादिना तथाधिवलम्(?) ॥ १०४ ॥

समवायिभिश्च शेषा न तु वादिभिरल्पकैश्चांशैः ।
विस्तारकरणे चित्रद्वित्रिविभिषवर्तौ तो (?) द्विरभ्यस्तैः ।
उपाश्रययुक्तौ च सदा वदन्ति संखोटनावाद्यम् ॥ १०५ ॥

[1]अस्य लघुक्रिया—

[2]गुरुणी लघून्यथाष्टौ दीर्घे द्विगुणे तथा च कर्तव्या ।
लघुदीर्घे लघु च पुनश्च[3]तुर्गुणं संप्रवक्तव्यम् ॥ १०६ ॥

[4]पुनरस्यैद्धस्याणिस्यस्तूतै (पुनरष्टौ ह्वास्युस्त्वथगुरु(?)) नैधनं तथा कार्यम् ।
संखोटनवस्तुवि[ धौ ?]प्रत्वमशोधवं ( विज्ञेयं गुरुलाघवविधानम् )॥ १७० ॥

[5]झंडं जगति यवलितकडुंडुडुंडुं महायोगिक्षुकक्पलयासुपतिगणपतिक ।
अस्यास्तानः—शीर्षकवपाणिविहितः (?) ।

अथ परिघट्टना—

······समुत्थं वाद्यं······ऊहस्तु वादनाकार्यम् ।
व्यञ्जनधातुसमुत्थं नाना[6]करणायोवत(श्रयोपेतम्?) ॥ १०८ ॥

दीर्घाण्यादावष्टौ लघू[7]नि कुर्यात्पुनर्द्विगुणितानि ।
[8]ह्स्वान्यपि चत्वारि द्विगुणानि स्युः सदीर्घाणि ॥ १०९ ॥

---

१. 'अस्य लघुक्रिया' इति का. पुस्तके नास्ति । २. 'गुरूणि लघूनि तथाष्टौ दीर्घद्वितयं तथा च कर्तव्यम् ।' का. ३. 'चतुर्गुणश्चापि कर्तव्यम् ।' का. ४. 'पुनरष्टौ ह्स्वाः स्युस्त्वथ गुरु निधनं तथा कार्यम् । संघोटनं वस्तुविधौ विज्ञेयं गुरुलाघवविधानम् ॥ इति का. ५. 'झंडं जगति' इत्याद्यारभ्य 'ऊहस्तु वादनाकार्यम्' इत्यन्तस्य पाठस्य स्थाने 'अस्यास्तालशीर्षकवत् पञ्चपाणि विहितः । परिघट्टनासमक्षं वाद्यं तथास्ते लाघवात् कार्यम्' इति का. पुस्तके पाठः । ६. 'नानाकरणाश्रयोपेतम्' का. ७. 'लघुनी च द्वे गुरूण्यपि च कुर्यात्' का. ८. 'लघुनी द्वे सर्वाणि गुरूणि सहैक दीर्घेण ।' इति का.

[1]षोडश लघूनि च स्युः सह निधनगतेन वात्र कार्याणि ।
[2]एष परिघट्टनायां गुरुलघुवसु(स्तु?)क्रमः प्रोक्तः ॥ ११० ॥
[3]वाद्यं चास्य तु तज्ज्ञैः सोद्वहनं हस्तलाघवात्कार्यम् ।
व्यञ्जनधातुसमुत्थं नानाकरणाश्रयोपेतम् ॥ १११ ॥
[4]संपिष्टकवज्ञास्यास्तालः करणैस्तु धातुसंयुक्तैः ।
[5]गुरुलघुयोगादेवं विहितं कार्यं बुधैर्नित्यम् ॥ ११२ ॥
[6]मार्गासारितपाद्यं* विस्ताराविद्धकरणसंयुक्तम् ।
[7]तालैः सकलैरथ गुरुलघुसंचयस्यायम् ॥ ११३ ॥
[8]चत्वारि गुरूणि लघूनि च चत्वारि च गुणितानि ।
ह्रस्वानि गुरूणि तथा स्युर्मार्गासारिते ह्येवम् ॥ ११४ ॥
[9]अत्रोदाहरणम्—

दिग्लत्संट्टुं जगति पचतिनकदिह्ले संट्टुं ।

अथ वा ।

चत्वारि तु गुरूणि स्युर्ह्रस्वान्यष्टौ भवन्ति हि ।
गुरुणि तव ह्रस्वाणि दीर्घमत्यमथापि वा ॥ ११५ ॥

अत्राप्युदाहरणम्—

दिकंट्टुं जगति यवति यवलि । ऋंड्दुं तिति ऋल कुलतिति वा ॥

---

१. 'षोडश लघूनि स्युः सगुरुण्यन्ते तथैव कार्याणि ।' इति का. २. 'एष स परिघट्टनाया गुरुलघुवस्तुक्रमः प्रोक्तः ।' का. ३. पद्यमेतदत्र का-पुस्तके नास्ति । ४. 'संपिष्टकवज्ञायास्तालः' का. ५. 'सकलैर्वाद्यं वाद्यं विस्ताराविद्धकरणसंयुक्तम् ।' का. ६. * 'माद्यं' इति भवेत्. 'मर्गासारिगुरूणि स्युर्लघूनि चत्वार्यथ द्विगुणितानि ।' का. ७. 'एतदर्धं' का-पुस्तके नास्ति । गुरूणि च लघूनि तथा स्युर्मार्गासारिते च वस्तूनि ॥' इति का. ८. 'गुरूणि लघूनि चाष्टावन्त्यं गुरु चेति कर्तव्यम् । ९. 'इत आरभ्याध्यायसमाप्ति का. पुस्तके—

'कनिष्ठासारितविधौ चास्य तालश्रवणमधुराणि लीलाकृतानि ।
चाभिकृतपरिवृत्तानि तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगज्ञैः ॥
अथासारितानि ज्येष्ठमध्यकनिष्ठानि तानि च तालप्रमाणानि निर्दिष्टानि ।
तानि तालविधानेन यथाक्रमं व्याख्यास्ये ॥' इति पाठः ।

बालासारितवश्चैव ताभौ(?)स्य परिकीर्तिता ।

.......................................... ॥ ११६ ॥

श्रवणमधुराणि लीलाकृतानि स्तपरिस्तेतरकृतानि ।

तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगज्ञैः ॥ ११७ ॥

अथासारितानि ज्येष्ठमध्यकनिष्ठानि तत्प्रमाणनिर्दिष्टानि तानि च तालविधाने व्याख्या[स्या]मः—

एवमेतत्स्वरकृतं[1] ज्ञेयं वीणाशरीरजम् ।

विपञ्च्याद्यनुवक्तानि (?) करणानि निबोधत ॥ ११८ ॥

रूपं कृतप्रतिकृतं[2] प्रतिभेदो रूपशेषमोघश्च ।

षष्ठी वै प्रतिशुक्का त्वेवं विज्ञेयं करणजातम् ॥ ११९ ॥

वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम् ।

(?) रूपमेवानुकृतप्रतिन्यूनमित्युच्यते वाद्यम् ॥ १२० ॥

युगपत्कृतेऽन्यविकरणं प्रतिभो(भेदो) दीर्घलाघवकृतः स्यात् ।

कृतमेकस्यान्त आ···प्रतिशुक्कं नाम विज्ञेयम् ॥ १२१ ॥

वीणावाद्यविरामेऽस्य विरतकरणं तु रूपशेषं स्यात् ।

आविद्धकरणयोगादुपर्युपरिपाणिकैश्चोघः ॥ १२२ ॥

कार्यं ध्रुवाविधानेन प्रायेण हि कोणवादनं तज्ज्ञैः ।

स्थानप्राप्त्यर्थं चेद्यत्तत्त भ(द्ध?)वेदयं नियमः ॥ १२३ ॥

सप्ततन्त्रीभवे चिन्ता विपञ्चीभिभवे तथा ।

कोणवाद्या विपञ्ची स्याद्चित्रा चाङ्गुलिवादनात् ॥ १२४ ॥

ततवाद्यविधानमिदं सर्वं प्रोक्तं मया समासेन ।

वक्ष्याम्यतश्च[3] भूयाः(यः?) शुषिरातोद्यस्य लक्षणम् ॥ १२५ ॥

इति भारतीये नाट्यशास्त्रे ततोद्यतिजातिविधानो[4] नामाध्याय एकोनत्रिंशत्तमः ।

---

१. 'स्वरगतं' का. २. 'कृतप्रतिकृत' इति भवेत्. ३. ११८ पद्यस्योत्तरार्धत्वेन–'अत ऊर्ध्वं प्रवक्ष्यामि सुषिरातोद्यस्य लक्षणम् का. ४. 'ततोद्यत' का.

त्रिंशत्तमोऽध्यायः ।

आतोद्यं शु(?)षिरं नाम ज्ञेयं वंशगतं[1] बुधैः ।
वैण एव विधिस्तत्र स्वरग्राम्यसमाश्रयः ॥ १ ॥
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः ।
कम्पमानो[2]र्धमुक्ताश्च व्यक्तमुक्तास्तथैव च ॥ २ ॥
तत्रोपरि यथा ह्येकः स्वरो वैणः स्वरोत्तरे[3] ।
प्राप्नोत्यन्यत्वमेवाह तथा वंशगतोऽपि हि ॥ ३ ॥
द्विकस्त्रिकश्चतुष्को वा श्रुतिसंख्या[4] भवेत्स्वरः ।
अनीरणात्तु रो(शे ?)षाणां स्वराणां श्रुतिसंभवः ॥ ४ ॥
अङ्गुली[5]वादनकृतस्तच्च मे संनिबोधत ।
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः ॥ ५ ॥
कम्पमानाङ्गुलिश्चैव त्रिश्रुतिः[6] परिकीर्त्यते ।
द्विकार्धाङ्गुलिमुक्तः स्यादिति[7] श्रुत्याश्रिताः स्वराः ॥ ६ ॥
एते स्युर्[8]मध्यमग्रामे भूयः षड्जाश्रिताः पुनः ।
व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः ॥ ७ ॥
धैवतश्चा[9]र्षभश्चापि कम्पमानाङ्गुलीकृतौ ।
अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान् ॥ ८ ॥
स्वरसाधारणं[10] चापि त्र्यन्तर[11]स्वरसंस्थया ।
निषादगान्धारकृतौ[12] षड्जमध्यमयोरपि ॥ ९ ॥
विपर्ययः संनिकर्षे श्रुतिलक्षणसिद्धिदः[13] ।
वैणकं तु[14] प्रवेशेन सिद्धाः कण्ठाश्रिताः स्वराः ॥ १० ॥
येयं[15] गीता (यं यं गतः) स्वरं गच्छेत्तं तं वंशेन वादयेत् ।
शारीर[16]वैणवंशानामेकीभावः प्रशस्यते ॥ ११ ॥

---

१. 'कृतं' का. २. 'कम्पिताद्यर्थं' का. ३. 'स्वरान्तरे' इति का. ४. 'स्वरः स्याच्छ्रुति संख्यया' का. ५. 'स्वराणी(णि ?) च श्रुतिस्तं' का. ६. 'त्रिश्रुतिश्च स्वरो भवेत्' का. ७. 'स्तु एवं' का. ८. 'तु' का. ९. 'श्चर्षभश्चापि' का. १०. 'साधारणे' का. ११. 'काकल्यन्तरसंज्ञके' का. १२. 'वंशाश्रिताः' का. १३. 'सिद्धितः' का. १४. 'वेणुदण्डप्रवेशेन' का. १५. 'यं यं गता' इति भवेत्. 'यं यं गतः' का. १६. 'वंशवैणानां' का.

अविचलितमविकृष्टं[1] वर्णालंकारसंयुतं विधिवत्[2] ।
ललितं[3] मधुरं स्निग्धं वेणोरेवंविधं वाद्यम् ॥ १२ ॥
एवमेतत्स्वरकृतं[4] विज्ञेयं गानयोक्तृभिः[5] ।
अत ऊर्ध्वं प्रवक्ष्यामि तालवाद्यविकल्पनम्[6] ॥ १३ ॥
इति भारतीये नाट्यशास्त्रे शु(सु?)षिरातोद्याधिकारो नामाध्यायस्त्रिंशत्तमः[7] ।

---

एकत्रिंशोऽध्यायः ।

वाद्यं तूर्यायनं प्रोक्तं[8] कलापात[9]लयान्वितः ।
कला[काल]स्तस्य[10] प्रमाणं हि विज्ञेयं तालयोगतः ॥ १ ॥
या लौकिकी कला काष्ठा निमेषश्च[11] स्मृतो बुधैः[12] ।
न सा तालकला ज्ञेया ह्यन्यैषा तालजा कला ॥ २ ॥
निमेषाः[13] पञ्च विज्ञेया गीतकाले कलान्तरम् ।
ततः कलाकालकृतो लय इत्यभिसंज्ञितः ॥ ३ ॥
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ।
यस्तत्र तु लयो मध्यस्तत्प्रमाणकला स्मृता[14] ॥ ४ ॥
त्रिविधा सा च विज्ञेया त्रिमार्गनियमा[15] बुधैः ।
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा[16] द्विगुणा स्मृता ॥ ५ ॥
चतुर्गुणा दक्षिणे[17] स्यादित्येवं त्रिविधा कला ।
कलाकालप्रमाणेन[18] ताल इत्यभिसंज्ञितः ॥ ६ ॥

---

१. '°विच्छिन्नं' का. २. 'विधिवत्' इति नास्ति का. पुस्तके । ३. 'मन्दं विधिललितमधुरं वेणोरेव स्मृतं वाद्यम् ।' का. ४ 'सुषिरस्वरकृतं' का. ५. 'वंशयोक्तृभिः' का. ६. 'घनातोद्यविकल्पनम्' का. ७. 'सुषिरातोद्यविधानं नाम त्रिंशोध्यायः' का. [ निमेषाः पञ्चमात्रा स्यात् मात्रायोगात् कला स्मृता ] का. ८. 'ताले घन इति प्रोक्तः' का. ९. 'कलपात' का. १०. 'कालस्तस्य' ख. 'कालस्य तु प्रमाणं वै' का. ११. 'निमेषाश्च' का. १२. 'निमेषाः पञ्चमात्रा स्यात्' मात्रायोगात् कला स्मृता ।' इति समधिकमत्र का-पुस्तके. १३. 'मन्दो-ऽथ लयः' का. १४. 'भवेत्' का. १५. 'त्रिमार्गा नियता' का. १६. 'वार्तिके द्विगुणा तु सा' का. १७. 'दक्षिणा' का. १८. पद्यार्धमेतत् पञ्चमश्लोकस्य पूर्वार्धरूपमासीत् प्रथमसंस्करणे ग्रन्थस्यास्य ।

त्र्यस्रश्च[1] चतुरस्रश्च स तालो द्विविधः स्मृतः ।
द्विविधस्यापि तालस्य त्वेका[2] प्रकृतिरिष्यते ॥ ७ ॥
तथा योनिद्वयं (तालौ) चान्या(स्य?)कीर्त्यमानं[3] निबोधत ।
चञ्चूपुटस्तु[4] विज्ञेया (यः?) (ये?) तथा चाय (प?) पुटा(टो?) बुधैः ॥८॥[5]
चतुरस्रस्तु विज्ञेयस्तालश्चञ्चूपुटो[6] बुधैः ।
त्र्यस्रश्चञ्चूपुटश्चैव[7] गुरुलघ्वक्षरान्वितः ॥ ९ ॥
आदौ द्वे गुरुणी यस्य लघ्वेकं प्लुतमेव च ।
अक्षराणां निवेशेन स तु चञ्चूपुटस्तदा ॥ १० ॥
आदौ गुर्वक्षरं यत्र अन्ते लघुनि चैव हि ।
त्र्यस्रः स खलु विज्ञेयस्तालश्चञ्चूपुटाश्रयः[8] ॥ ११ ॥[9]
संनिपातस्ततः[10] शम्या तालः शम्यामथापि वा ।
संनिपातादिको ज्ञेयः शम्यादिश्च तथापरः ॥ १२ ॥

---

१. 'चतुरस्रश्च त्र्यस्रश्च तालो विविध एव हि ।' का. २. 'त्वेका' काशीमुद्रितपुस्तके लत्र । ३. 'चास्य कीर्त्यमानं' का. ४. 'चञ्चत्पुटस्तु विज्ञेयस्तथा चापपुटोऽपि चा' का. ५. 'चतुष्कलोऽथ द्विकलस्तालो यस्मात् प्रवर्तते' इत्यधिकमत्र का-पुस्तके । ६. 'चञ्चूत्पुटो' का. ७. 'काशीमुद्रितपुस्तके तु—

'प्रथमगुरुणी कृत्वा लघु चान्त्यं प्लुतं तथा ।
कुर्यात् चञ्चत्पुटस्यैव बुधश्चापपुटस्य तु ।
आद्यं गुर्वक्षरं ज्ञेयं लघुनी गुरु चैव सः ।'

इति पाठो नवमश्लोकोत्तरार्धदशमश्लोकयोः स्थाने ।
८. 'तालश्चापपुटो भवेत्' ९. का-पुस्तके तु समधिकावत्रैव—

'अनयोर्मिश्रभावाच्च मिश्रस्तालः प्रकीर्तितः ।'
षट्पिता पुत्रकश्चैव पञ्चपाणिः स चेष्यते ॥
यथोक्तैरभिनिष्पन्नः स्वसंज्ञागुरुलाघवैः ॥

सप्तदशाष्टादशौ श्लोकौ ।

१०. 'समासयोगात्तालोऽयं त्रिविधः परिकीर्तितः ।
शम्यातालौ द्विरभ्यस्तौ तालः शम्या तथापि वा ॥
संनिपातादिकानेयः शम्यादिश्च तथापरः ॥'

इति सार्धश्लोकोऽस्ति का-पुस्तकेस्य पद्यस्य स्थाने ।

तालादिश्च[1] त्रिभिर्भेदैः पुनश्चञ्चूपुटो भवेत्[2] ।
शम्यादिकस्तु विज्ञेयस्तज्ज्ञैरासारितादिषु[3] ॥ १३ ॥
तालादिकस्तथा प्रोक्तो विद्वद्भिः पाणिकादिषु ।
चञ्चूपुटस्य[4] ये भावाः संनिपातादयस्तु ये ॥ १४ ॥
त एव भेदा विज्ञेया बुधैश्चञ्चूपुटस्य[5] च ।
संनिपातादिकः[6] स्वस्य बलवान्नेतरस्तथा ॥ १५ ॥
षट्कलोऽष्टकलश्चैव[7] तालो ह्यस्मात्प्रवर्तते ।
द्विप्रकारः पुनश्चायं निःशब्दः शब्दवांस्तथा ॥ १६ ॥
अनयोर्मिश्रभावं तु मिश्रस्तालः प्रकीर्तितः ।
शम्यातालप्रवेशेन अन्योस्तेपि(?)[8] ( त्र्यस्रोऽन्योऽपि ? ) विधीयते १७
षट्पितापुत्रकक्कृतः पञ्चपाणिरुदाहृतः ।
आद्यं प्लुतं द्वितीयं च लघु यत्राक्षरं भवेत् ॥ १८ ॥
तृतीयं च चतुर्थं च गुरूणि[9] ( रुणी ? ) पञ्चमं लघु ।
प्लुतान्तः षट्पितापुत्रो गुरुलाघवसंयुतः ॥ १९ ॥
पञ्चपाणिः[10] स विज्ञेयः षट्पातस्तु षडक्षरः ।
संनिपातस्ततस्तालः[11] शम्या तालस्तथैव च ॥ २० ॥
शम्या चैव हि तालश्च षट्पातस्तस्य कीर्तितः ।
तालादिस्त्र्यस्रभेदोऽन्यः[12] संपक्वेष्टकसंज्ञितः[13] ॥ २१ ॥

---

१. 'तथा तालादिभिर्भावैर्युग्मश्चञ्चत्पुटो भवेत् ।' का. २. 'संनिपातादिके नाट्ये चतुरस्रो भवेदयम् ।' इत्यधिकमत्र का-पुस्तके । ३. '°रासादितेषु च' का. ४. 'चञ्चत्पुटस्य ये भेदाः संनिपातादयस्त्रयः ।' का. ५. 'चापपुटे पृथक्' का. ६. 'संनिपातादिकस्तेस्य बलवानितरेऽपि च ।' का. ७. 'षोडशमेतत् पद्यमथ सप्तदशश्लोकपूर्वार्धं च का-पुस्तके न स्तः । ८. 'त्र्यस्रोऽन्येऽपि' का. ९. 'गुरुणी' का. १०. 'पद्यार्धमेतत् का-पुस्तके नास्ति ।

११. 'अस्यादौ संनिपातः स्यात्तालशम्येतरः परः ।
तालशम्ये च तालश्च षट् पाताश्च प्रकीर्तिताः ॥' इति का-पुस्तके ।

१२. '°भेदेऽन्यः' का. १३. 'संपर्कैष्टाकसंज्ञितः' का.

[1]गुरुपञ्चाक्षराद्यन्तप्लुतमात्रासमन्वितः ।
त्र्यस्रं सर्वगुरुं कृत्वा निष्कामं [2]त्वत्र योजयेत् ॥ २२ ॥
शम्याद्वयं ततस्तेषु [3]उद्घट्टः कथितो बुधैः ।
[4]व्युदस्य युग्मतो ये च पञ्चताला भवन्ति हि ॥ २३ ॥
मिश्रा गीताङ्गसंयुक्ता ज्ञेया क्षुद्घट्टकादयः ।
कलाः पञ्च तथा सप्त पुनर्नव च कीर्तिताः ॥ २४ ॥
दशैकादश चैवैते संकीर्णाः समुदाहृताः ।
न ह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवासु च ॥ २५ ॥
[5]प्रवृत्तादिषु कर्तव्या एते भूयः प्रयोक्तृभिः ।
यथाक्षरोऽथ द्विकलस्तथै[6]व च चतुष्कलः ॥ २६ ॥
त्रयो भेदा हि तालस्य लस्यार्थं(?) ([7]द्विगुणा ?) द्विगुणाः स्मृताः ।
चतुरस्रस्त्रिभिर्भेदैस्तालस्तु परिकीर्तितः ॥ २७ ॥
चतुःकलो ह्यष्टकलः क[8]लाः षोडश चैव हि ।
त्र्यस्रताल[9]स्तु षड्भेदस्त्रिकलः षट्कलस्तथा ॥ २८ ॥
[10]कला द्वादश चैवास्याश्चतुर्विंशतिरेव च ।
चत्वारिंशत्तथाष्टौ च तथा षण्णवतिः कलाः ॥ २९ ॥
तालो नवविध[11]श्चायं [12]समासात्परिकीर्तितः ।

---

१. 'का-पुस्तके तु—

'गुरुसर्वाक्षरो यस्तु प्लुतादन्तः प्रकीर्तितः ।
संनिपातस्ततः शम्या तालशम्यैकतालकः ॥'

इति पद्यमस्य श्लोकार्धस्य स्थाने ।

२. 'तत्र' का. ३. 'ततस्तेष उद्घट्टः' का. ४. 'इतोऽग्रे सार्धपद्यद्वयी का-पुस्तके नास्ति । ५. 'एवमेककलो ज्ञेयः शुद्धश्च[ च ? ]चपुटादिकः । का. ६. 'तथा चैव' का. ७. 'द्विगुणा द्विगुणाः' का. ८. 'कलषोडशकः पुनः' का. ९. 'त्र्यस्रस्तालस्तु' का.

१०. 'कला द्वादश चैवास्याश्चतुर्विंशतिरेव च ।
चत्वारिंशत्तथाष्टौ च तथा षण्णवतिः कला ॥' इति का.

११. 'नवविधिः' का. १२. 'अयुग्मः परिकीर्तितः' का.

तत्र चालापनिष्क्रामौ विक्षेपोऽथ प्रवेशनम् ॥ ३० ॥
चतुर्द्विकल इत्येवं **निःशब्दः** परिकीर्तितः ।
शम्यातालो ध्रुवश्चैवं संनिपातस्तथापरे ॥ ३१ ॥
इतिशब्देन संयुक्तो विज्ञेयस्तु चतुर्विधः ।
एतेषां चैव वक्ष्यामि हस्ताङ्गुलिविकल्पनम् ॥ ३२ ॥
[ लक्षणं च प्रमाणं च यथावदनुपूर्वशः । ]
उत्तानाङ्गुलिसंकोच आला(वा ?)प इति संज्ञितः ।
**निष्क्रमो**ऽधोगतस्य(तानां?) स्यादङ्गुलीनां प्रसारणात् ॥ ३३ ॥
तस्य दक्षिणतः क्षेपो **विक्षेप** इति संज्ञितः ।
निवर्तनं च हस्तस्य **प्रवेशो**ऽधोमुखस्य तु ॥ ३४ ॥
यदा चतुष्कलो योगस्तदा त्वेष विधिः स्मृतः ।
निष्क्रमश्च प्रवेशश्च द्विकले(लौ ?) परिकीर्तितौ ॥ ३५ ॥
एषामन्तरपातास्तु पातसंज्ञाः प्रकीर्तिताः ।
सव्यहस्तनिपातस्तु सम्यन(ता ?)लश्च वामतः ॥ ३६ ॥

---

१. का-पुस्तके तु—
'द्विप्रकारस्त्वयं तालो निःशब्दः शब्दवांस्तथा ।
प्रयोगं द्विविधं चास्य कीर्त्यमानं निबोधत ॥
तत्रावापोऽथ निष्क्रामो विक्षेपश्च प्रवेशकः ।
चतुर्विकल्पं इत्येवं निःशब्दः कथितो बुधैः ॥'
२. 'चात्माथ' क-ख. ३. 'ध्रुवश्चेति' का. ४. '°परः' का. ५. 'च' का. ६. 'चतुर्विधम्' का. ७. '°मथ' का. ८. एतदर्धमधिकमत्र का. पुस्तके । ९. 'सर्वाङ्गुलिसमाक्षेप आवाप इति संज्ञितः ।' का. १०. '°धोगतः सव्यादङ्गुलीनां प्रसारणम् ।' का. ११. 'क्षेपात् विक्षेपः परिकीर्तितः ।' का. १२. 'च' का. इतोऽग्रे का. पुस्तके—
'कृत्वाङ्गुलीनामाक्षेपं निष्कामं च भवेदथ ।
विक्षेपश्च पुनः कार्यः पुनश्चैव प्रवेशनम् ॥' इत्यधिकमत्र ।
१३. 'भवेत्' का. १४. का. पुस्तके तु—
'शम्यातालश्च विज्ञेयः संनिपातस्तथैव च ।
शम्या दक्षिणहस्तः स्यात्तालः पातस्तु वामतः ॥'
इति पूर्णः श्लोकोऽर्धस्यास्य स्थाने ।

हस्तयोस्तु समः पातः संनिपात इति स्मृतः[1] ।
कला[2] या त्रिविधा प्रोक्ता तस्याः पातो ध्रुवः स्मृतः ॥ ३७ ॥
यथाक्षरस्य तालस्य स रा (तु ?) गुर्वक्षरे[3] स्मृतः ।
यथाक्षरकृतैः पातैस्ताले[4] ज्ञेयो यथाक्षरः[5] ॥ ३८ ॥
गुर्वक्षरैस्तु[6] विश्लिष्टैः स नैव[7] (एव ?) द्विकलः स्मृतः[8] ।
द्विर्भावो[9] द्विकलस्यात्र[10] विज्ञेयस्तु चतुष्कलः[11] ॥ ३९ ॥
त्र्यस्रश्च चतुरस्रश्च षट्कलोऽष्टकलस्तथा ।
ध्रुवाणां तु भवेत्तालैस्तं[12] च[13] वक्ष्यामि तत्त्वतः ॥ ४० ॥
कनिष्ठाङ्गुलिनिष्क्रामः स(श?)म्या चैवं[14] ततो भवेत् ।
कनिष्ठानामिकाभ्यां तु निष्क्रामोऽतो[15] विधीयते ॥ ४१ ॥
ततश्च तालः[16] कर्तव्या (व्यः ?) शम्या चैव तु पञ्चमी ।
प्रवेशो ह्यष्टमो[17](मः ?) षष्ठः कर्तव्यस्तर्जनीकृतः ॥ ४२ ॥

---

१. 'ध्रुवं तु माद्रिकं पातः रागमार्गप्रयोजकः ।' इत्यधिकमत्र । २. 'कलायास्त्रिविधा [:] प्रोक्ता तासां पातो ध्रुवः स्मृतः ।' का. ३. 'गुर्वक्षरः' का. ४. 'तालो' का. ५. 'यथास्थितः' का. ६. 'च' का. ७. 'एव' का. ८. 'भवेत्' का. ९. 'द्विर्भावो' का. १०. 'द्विकलस्यैव' का. ११. अत्र का. पुस्तके—

'यदाक्षरकृतैः पातैः सर्वैरेव प्रकीर्तिताः ।
चञ्चत्पुटस्य विज्ञेयस्तथा चापपुटस्य च ॥
पञ्चपाणेश्च विहिता भेदा ह्येते त्रयः स्मृताः ।
व्युदस्य युग्मराजं तु पञ्चताला भवन्ति हि ॥
मिश्रा गीताङ्गसंयुक्तात् ज्ञेया ह्युद्धट्टकादयः ।
कला[:] पञ्च तथा सप्त पुनर्नव च कीर्तिताः ॥
दश चैकादशैते च संकीर्णाः समुदाहृताः ।
न ह्येषा मुपयोगोऽस्ति सप्तरूपे ध्रुवास्वपि ॥
प्रवृत्तादिषु कर्तव्या एते गानप्रयोक्तृभिः ॥' इत्यधिकः पाठः ।

१२. 'तालं' का. १३. 'संप्रवक्ष्यामि' का. १४. 'शम्याश्चैव' का. १५. 'निष्क्रामौ तौ (?)' का. १६. 'तालस्तु कर्तव्यः' का. १७. 'मध्यमाङ्गुष्ठे' का.

निष्काम[ः?] संनिपातान्ते[1] नित्यमष्टकलो भवेत् ।
एष युग्मे कलापात[2]विकल्पोऽङ्गुलिभिः[3] कृतः ॥ ४३ ॥
कनिष्ठाङ्गुलिनिष्क्रामः प्रथमे[4] तु कलो(ला ?) भवेत्[5] ।
शम्यापातो द्वितीया च[6] तृतीया ताल एव च ॥ ४४ ॥
शम्या तत्र चतुर्थी च[7] पञ्चमी तर्जनीक्रमात् ।
षष्ठ्यर्धे[8] संनिपातः स्यादेष वै षट्कलो विधिः ॥ ४५ ॥
एष[9] त्र्यस्रे कलापाते विकल्पोऽङ्गुलिभिः कृतः ।
कनिष्ठाङ्गुलिनिष्क्रामे प्रवेशश्च तथा भवेत् ।
कनिष्ठानामिकास्थाने तालो ज्ञेयस्तृतीयके ॥ ४६ ॥
शम्यापातश्चतुर्थी स्यान्निष्क्रामो मध्यमाकृतः ।
षष्ठतालं[10]स्तथा ज्ञेयो निष्कामस्तर्जनीकृतः ।
शम्याष्टमी ततस्तालो नवमी तु कला स्मृता ॥ ४७ ॥
कनिष्ठिकां[11] प्रवे(दे ?)शस्तु दशमी तु कला[12] भवेत् ।
निष्क्रामश्चैव तर्जन्यास्त[13]दनन्तरमिष्यते ॥ ४८ ॥
संनिपातस्तथाते[14](न्ते?) च कलाद्वादशकं[15] भवेत् ।
एषतो वात[16](त्त्वावाप ?) विक्षेपव्यवधानै[17]श्च पण्डितैः ।
विधिश्चतुष्कलो ज्ञेयः प्रागुक्ताङ्गुलिभिः कृतः ।
द्विकल[18]श्चतुःकलश्च पादभागः प्रकीर्तितः ॥ ४९ ॥
चत्वारः पादभागाश्च मात्रे (?) हि परिनाट्यते ।
चञ्चत्पुटस्य तालस्य तथा चञ्चुपुटस्य च ॥ ५० ॥

---

१. 'निष्कामः संनिपातेऽन्त्ये' का. २. कलोपेतो' का. ३. 'विकल्पाङ्गुलिभिः' का. ४. 'प्रवेशश्च तथा भवेत्' का. ५ का. पुस्तकेऽत्र—'कनिष्ठानामिकास्थाने ततस्तालस्तृतीयकः । शम्यातालश्चतुर्थी च निष्कामो मध्यमा कृतः । कनिष्ठाङ्गुलिनिष्क्रामः प्रथमानुकलो भवेत् ॥' इत्यधिकं सार्धं पद्यम् । ६. 'द्वितीये तु तृतीये' का. ७. 'तु' का. ८. 'षष्ठस्य' का. ९. 'एष त्र्यस्रे' इत्यादिश्लोकद्वयी का. पुस्तकेऽत्र नास्ति । १०. 'षष्ठस्तालस्ततो ज्ञेयो' का. ११. 'प्रदेशस्तु' का. १२. 'च' का. १३. 'तर्जन्या' का. १४. 'तथान्ते च' का. १५. 'कलद्वादशके विधिः' का. १६ 'एष त्वावाप' का. १७. 'व्यवधानेन' का. १८. एतदर्धमथाग्रिमं सार्धं पद्यं च का. पुस्तके न स्तः ।

पञ्चबाणैश्च विज्ञेया भेदा ह्येते पृथक् पृथक्।
एवमेष[1] मया तालः समासात् [2]परिकीर्तितः ॥ ५१ ॥
आसारिते वर्धमाने गीतेष्व[3]पि हि यः स्मृतः।
[4]अथासारितकानां तु संप्रवक्ष्यामि लक्षणम् ॥ ५२ ॥
[5]भेदो च( दश्च ? )ञ्चत्पुटस्यादौ तथा गुरुलघुप्लुतैः।
पञ्चपाणिं ततः कुर्याद्द्विरभ्य[6]स्तं प्रयोगवित् ॥ ५३ ॥
यथाक्षरं तु सर्वत्र[7] यथावद्विनिवेशयेत्।
शम्यातालः पुनश्चैव शम्यातालमथापि च[8] ॥ ५४ ॥
अधिक्षरे संनिपातं[9] पञ्चबाण( पाणे ? )श्च[10] यो भवेत्।
तालं [11]शम्यां च तालं च शम्यातालौ ततः परम्।
एष एव द्वितीयेऽपि पञ्चबाणो ( पाणौ ? ) [12]विधिः स्मृतः ॥ ५५ ॥
[13]द्रुतच्छेदेऽपि तस्येष्टः संनिपातः प्रयोक्तृभिः।
एवं यथाक्षरं ज्ञेयं कनिष्ठासारितं बुधैः ॥ ५६ ॥
[14]यथाक्षरस्याक्षरैश्च तालपातान्निबोधत।
चकारे तु भवेच्छम्या द्वितीये [15]ताल एव च।
प्रकारे तु भवेच्छम्या टकारे ताल एव च ॥ ५७ ॥
एवं चञ्चत्पुटे[16] ज्ञेयं पञ्चपाणेर[17]तः परम्।
[18]षडारे संनिपातः स्यात् पिंकारे ताल एव च ॥ ५८ ॥
तकारे तु भवेच्छम्या एकारे ताल एव च।

---

१. 'एवमेव' का. २. 'समुदाहृतः' का. ३. 'गीताङ्गेषु च यः स्मृतः' का. ४. एतदर्धं का. पुस्तके नास्ति। ५. 'ज्ञेयं चञ्चत्पुटस्यादौ कुला तु गुरुलाघवम्।' इति का. ६. 'द्विरभ्यस्तप्रयोगवित्' का. ७. 'पूर्वत्र' का. ८. 'वा' का. ९. 'संनिपातः' का. १० 'पञ्च पाणै(णे ? )श्च योजयेत्' का. ११. 'शम्यातालं च तालं च शम्यातालमतः परम्' का. १२. 'पञ्चपाणौ' का. १३. 'द्रुतस्यान्ते कृतस्येष्टः' का. १४. 'यथाक्षरं चाक्षरैश्च वामपातान्निबोधत।' का. १५. 'द्वितीयस्ताल' का. १६. 'एवं चञ्चत्पुटो ज्ञेयः' का. १७. 'पञ्चपाणिरतः परम्' का. १८. 'षडारे संनिपातः' इत्यादि पद्यद्वयं का. पुस्तके नास्ति।

त्रकारे तु भवेच्छम्या ककारे ताल एव च ॥ ५९ ॥
द्वितीयेऽप्येवमेव स्यात् संनिपातस्ततः परम् ।
गुर्वक्षराणां विश्ले[1]षादेवमेव तु मध्यमम् ॥ ६० ॥
वि[2]श्लेषितानामेषां तु द्विर्भावे या कला भवेत् ।
पातान्ते सा प्रयोक्तव्या यथावदनुपूर्वशः ॥ ६१ ॥
द्विर्भा[3]वान्मध्यमस्येव ज्ये[4]ष्ठमित्यभिधीयते ।
मध्य[5]मस्य विधानेन न्यसेच्च द्विगुणाः कलाः ॥ ६२ ॥
संनिपा[6]तैर्निपातैश्च तेषां वस्तु प्रकीर्तितम् ।
स[7]मानलक्षणांश्चैव गदतो मे निबोधत[8] ॥ ६३ ॥

---

१. 'विक्षेपात्' का. २. पद्यमेतत् का. पुस्तके नास्ति । ३. 'विभावो मध्यमस्येव' का. ४. 'ज्येष्ठ इत्यभिधीयते' का. ५. 'मध्यमव्यवधानेन' का. ६. 'संनिपातनिपातैश्च' का. ७. एतदर्धं का. पुस्तके नास्ति । ८. का. पुस्तकेऽत्र—'अतः परं प्रवक्ष्यामि लयान्तरितलक्षणम् ।' इत्यादिश्लोकादि 'मुखं प्रति मुखं चैव' इत्यादि ८५ श्लोकपर्यन्तं पाठस्थाने १२५ श्लोकाः कुहचन कुहचन संवदन्तोप्यधिकास्ते यथा—

'अतः परं प्रवक्ष्यामि लयान्तरितलक्षणम् ।
तालो यस्य कनिष्ठः स्यात् स लयान्तरितः स्मृतः ॥
कला कलान्तरकृता केवलं तु कलान्तरम् ।
अयमेव तालयोगो विशेषसिद्धिस्तु पूर्वनिर्दिष्टा ॥
भवन्ति हि लयान्तरिते शब्दाद् भेदो लयाच्चैव ।
द्विगुणोक्षरसंयोगादन्यमार्गप्रयोजनात् ॥
वृत्तेर्विशिष्टकालाच्च लयादन्यलयान्तरम् ।
एवं तालविधानं तु कनिष्ठसंज्ञे लयान्तरे चैव ॥
मध्यासारिततालं पुनरेवं संप्रवक्ष्यामि ।
द्विगुणान्तरवृत्त्या ह्यस्यैव तु मध्यमं विधातव्यम् ॥
प्रस्तारेण कलानां शम्या तालान्तरोपेतम् ।
उत्तरतालः प्रथमे वस्तुन्यादौ कलात्रयं त्यक्त्वा ॥
कार्यौ मध्ये नित्यं द्वौ परिवृत्तौ च संपूर्णौ ।
पूर्वं शम्या कार्या द्विकलस्तालः कल( ला ? )द्वये गम्या ॥
पुनरेककलस्तालस्त्रिकलस्य सन्निपातश्च ।
त्रिकलोऽथ पुनस्तालः शम्ये( म्यै ? )ककलाद्वये तालम् ॥

द्विकला कार्याणामनुस्मृतिरुदाहृता ।
नैवासने शयने धृतिमुपलभेत स्वकर्मणि विहीना ॥
तच्चित्तोपहत्वात् तृतीयमेवं प्रयुञ्जीत ।
अङ्गप्रत्यङ्गलीलाभिः या चेष्टाहसितेक्षितैः ॥
नास्त्यन्यः सदृशस्तेनेत्येतत्स्यात् गुणकीर्तनम् ।
गुणकीर्तनोल्लसनैरास्रखेदप(प्र ?)मार्जनाद्वापि ॥
दूत्यविरहविस्रंभैरभिनययोगश्चतुर्थे तु ।
आसने शयने वापि न तुष्यति न हृष्यति ॥
नित्यमेवोत्सुका च स्यात् उद्वेगस्थानमेव तत् ।
चिन्तानिःश्वासखेदैश्च हृत्तापाभिनयेन च ॥
कुर्यात्तदेवमत्यर्थमुद्वेगाभिनयेन च ।
इहास्थित इहासीन इह चोपगतो मया ॥
इति तैस्तैर्विलपितैः विलापस्त्वभिदर्शितः ।
उद्विग्नात्यर्थमौत्सुक्यात् रत्या चापि विलापिनी ॥
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता ।
तत्संश्रयकथायुक्ता सर्वावस्थागतापि हि ॥
पुंसः प्रद्वेषिता चैव स्यादुन्मादः प्रकीर्तितः ।
तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम् ॥
रोदिति विहारकाले नाट्यमिदं स्यात्तदोन्मादे ।
समदनार्थसम्भोगैः काम्यैः संप्रेक्षणैरपि ॥
सर्वैर्निराकृतैः पश्चात् व्याधिः समुपजायते ।
मुह्यति हृदयं दह्यत्यङ्गं शिरसश्च वेदना तीव्रा ॥
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत ।
पृष्टा न किञ्चित् प्रब्रूते न शृणोति न पश्यति ॥
तूष्णीं हा कष्टभावा च नष्टचित्ता जडा स्मृता ।
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ॥
श्वासग्रस्तानना चैव जडताभिनयो भवेत् ।
प्रतीकारैः कृतैः सर्वैर्यदि नास्ति समागमः ॥
कामाग्निना प्रदीप्ताया भवेत्तु मरणं तु तत् ।
एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु ॥
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ।
विविधैः पुरुषोऽप्येवं विप्रलम्भानुपूर्वकैः ॥

भावैरेतानि कामस्य नानारूपाणि कारयेत् ।
एवं भावयमानानां नृणां स्त्रीणामथापि वा ॥
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ।
चिन्तानिःश्वासखेदेन देहस्यायासनेन च ॥
तथानुगमनाच्चापि तथा चैव निरीक्षणात् ।
आकाशवीक्षणाच्चापि तथा दीर्घप्रभाषणात् ॥
स्पर्शनान्मोदनाच्चापि तथा चोपश्रयाश्रयात् ।
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ॥
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत् ।
वासोभूषणगन्धांश्च गृहाण्युपवनानि च ॥
भूयिष्ठं दह्यमानो हि शीतलानि निषेवते ।
प्रसह्यमानः कामार्तो बहुस्थानसमर्दितः ॥
प्रेषयेत् कामतो दूतीमात्मावस्थाप्रदर्शिनीम् ।
सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ॥
इयं तस्या व्यवस्थेति निवेद्य प्रश्रयादिभिः ।
अथावेदितभावार्थैं रत्युपायं विचिन्तयेत् ॥
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिते ।
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ॥
अभ्यन्तरगतान् सम्यक् कामतन्त्रैः समुत्थितान् ।
सुखदुःखकृतान् भावान् नानाशीलसमुत्थितान् ॥
यान्यान् प्रकुरुते राजा तांस्तांल्लोकोऽनुवर्तते ।
न दुर्लभा नृपाणां तु स्त्रियो ह्याज्ञाकृता गुणाः ॥
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ।
बहुमानेन देवीनां वल्लभानां भयेन च ॥
प्रच्छन्नकामितं राज्ञः कार्यं परिजनं प्रति ।
यद्यप्यस्तु नृपाणां तु कामतन्त्रमनेकधा ॥
प्रच्छन्नकामितं यत्तु तद्वै रतिकरं भवेत् ।
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते ॥
दुर्लभत्वं च नार्याः सा कामस्य रतिः परा ।
राज्ञामन्तःपुरजने दिवासम्भोग इष्यते ॥
बाह्योपचारो यत्रैव स रात्रौ परिकीर्तितः ।
परिपाट्यां फलार्थे वा नवप्रवस एव वा ॥

दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ।
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः ॥
द्वेष्यानामथवेष्टानां कर्तव्यमुपसर्पणम् ।
तत्र वासकशय्या वा विरहोत्कण्ठितापि वा ॥
स्वाधीनभर्तृका चैव कलहान्तरितापि च ।
खण्डिता विप्रलब्धा च तथा प्रोषितभर्तृका ॥
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः ।
उचिते वासके या तु रतिसम्भोगलालसा ॥
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका ।
अनेककार्यव्यासङ्गाद् यस्या नागच्छति प्रियः ॥
अनागमनदुःखार्ता विरहोत्कण्ठिता तु सा ।
सुरतैश्चरितैर्बद्धो यस्याः पार्श्वे तु नायकः ॥
सामोदगुणसम्प्राप्ता भवेत् स्वाधीनभर्तृका ।
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः ॥
सामर्षवशसम्प्राप्ता कलहान्तरिता भवेत् ।
व्यासङ्गादुचिते यस्या वासके नाऽऽगतः प्रियः ॥
तस्यानागमदुःखार्ता खण्डिता साभिधीयते ।
यस्या दूती प्रियं प्रेष्य दत्वा सङ्केतमेव वा ॥
नागतः कारणेनेह विप्रलब्धा तु सा स्मृता ।
नानाकार्यार्थसम्पन्नैर्यस्या विप्रोषितः प्रियः ॥
सारूढालकशोभान्ता भवेत् प्रोषितभर्तृका ।
हित्वा लज्जां समाकृष्टा मदनेन मदेन वा ॥
अभिसारयते कान्तं सा भवेदभिसारिका ।
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रयाः ॥
एतासां चैव वक्ष्यामि यथा योज्यं प्रयोक्तृभिः ।
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन वा ॥
सखीनां सम्प्रलापैश्च आत्मावस्थाविलोकनैः ।
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च ॥
निर्भूषणमृजात्वेन दुःखेन रुदितेन च ।
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ॥
तथा प्रोषितकान्ता च भावैरेवं प्रयोजयेत् ।
विचित्रितोज्वलवेषा तु प्रमदोद्योतितानना ॥

उदीर्णशोभाऽतिशया कार्या स्वाधीनभर्तृका ।
वेश्यायाः कुलजातायाः प्रेष्याया वाऽथवा नृपैः ॥
एभिर्भावविशेषैस्तु कर्त्तव्यमभिसारणम् ।
समागदितसञ्चारा गच्छेत्प्रेष्या समुद्धतम् ॥
गत्वा सा वदति व्यक्तं पश्येत्सुप्तं प्रियं ततः ।
अनेन तु प्रकारेण कुर्याद्वै प्रतिबोधनम् ॥
निर्भत्सनपरः प्रायस्तथा श्वसनपेशलम् ।
निष्ठुरं मधुरं चैव सखीनामपि जल्पनम् ॥
नवकामप्रवृत्तायाः कुद्धाया वा समागमे ।
सापदेशैरुपायैस्तु वासकं प्रतियोजयेत् ॥
नानालङ्कारवस्त्राणि गन्धमाल्यानि चैव हि ।
नित्यं सुखान्युदात्तानि निषेवेत मुदान्विता ॥
न तथा भवति मनुष्यो मदनवशः कामिनीमलभमानः ।
द्विगुणोपचारहर्षो भवति यथा सङ्गतः प्रियया ॥
विलासभावेङ्गितवाक्यलीला विशेषमाधुर्यगुणोपपन्ना ।
परस्परप्रेमनिरीक्षितेन समागमः कामगतस्तु कार्यः ॥
नार्याप्यथ विशेषेण प्रमोदरससम्भवः ।
वासोपचारः कर्तव्या(व्यो ?) नायकागमनं प्रति ॥
गन्धमाल्ये गृहीत्वा तु चूर्णवासस्तथैव च ।
आदर्शः संगृहीतव्यो कृतार्थोऽपि पुनः पुनः ॥
वासोपचारो नात्यर्थं भूषणग्रहणं भवेत् ।
रशनानूपुरप्रायस्वप्रवच्चैव यद्भवेत् ॥
न मञ्चग्रहणं रङ्गे न स्नानं नानुलेपनम् ।
नाञ्जनं नाङ्गरागो वा स्तनकेशग्रहौ न च ॥
नापावृता नैकवस्त्रा न रागमधरस्य च ।
उत्तमा वापि मध्या वा प्रयोक्तव्याङ्गना क्वचित् ॥
अधमानां भवेदेष विधिः प्रकृतिसम्भवः ।
कारणान्तरमासाद्य तासामपि न कारयेत् ॥
वेश्यादीनां तु नारीणां नराणामपि नाटके ।
भूषणग्रहणं कृत्वा पुष्पाणां ग्रहणं भवेत् ॥
निर्युक्तमण्डना चापि प्रतीक्षेत प्रियागमम् ।
लीलया मण्डितं वेषं कुर्याद्यन्न विरुध्यते ॥

वासोपचारं कृत्वैव नायिका नायकागमम् ।
शृणुयान्नायिका घोषं तत्प्रतीक्षासनस्थिता ॥
श्रुत्वा तु नायिका घोषं नायकागमविह्वला ।
वेपन्ती सन्नहृदया तोरणाभिमुखी व्रजेत् ॥
वामेन तोरणं गृह्य कवाटं दक्षिणेन तु ।
हस्तेनाधोमुखीभूय प्रतीक्षेत प्रियागमम् ॥
शङ्काञ्चिता भयञ्चैव प्रकुर्यात् कारणाश्रिता ।
अदृष्ट्वा रमणं नारी विषण्णा च क्षणं भवेत् ॥
दीर्घञ्चैव विनिःश्वस्य आस्यञ्चैव विपातयेत् ।
सन्नञ्च हृदयं कृत्वा विमुञ्चेदङ्गमासने ॥
व्याक्षेपात् विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणैश्चैव शुभाशुभसमन्वितैः ॥
गुरुकार्यैश्च मित्रैर्वा मन्त्रिणां राज्यचिन्तया ।
अनुबद्धः प्रियः किन्तु धृतो वल्लभयापि वा ॥
आकारं दर्शयेदेवं शुभाशुभसमुत्थितम् ।
निमित्तैरात्मसंस्थैस्तु स्फुरितैः स्पन्दितैस्तथा ॥
शोभनेष्वथ कार्येषु निमित्तं वामतः स्त्रियः ।
अनिष्टेष्वथ सर्वेषु निमित्तं दक्षिणं भवेत् ॥
सव्यनेत्रललाटं च भ्रूरथोष्ठं तथैव च ।
ऊरुबाहुस्तनं चैव स्फुरेद्यदि समागमः ॥
अथोऽन्यथास्पन्दमानमनिष्टं चापि निर्दिशेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत् क्षणं ततः ॥
अनागमे नायकस्य हस्तो गण्डाश्रितो भवेत् ।
प्रसाधनेऽप्यवज्ञानं रोदनञ्च समाचरेत् ॥
ततश्च शोभनं पश्येन्निमित्ते नायकागमे ।
सूच्यो नायिकयाऽऽसन्नो गन्धाघ्राणेन नायकः ॥
दृष्ट्वा चोत्थापनं हृष्ट्वा प्रत्युद्गच्छेत्तु नायकः ।
ततः कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना ॥
सखीहस्तार्पितकरा कृत्वा स्थानकमायतम् ।
दर्शयेत्तु ततः कान्तं सचिह्नं सरसव्रणम् ॥
यदि स्यादपराधस्तु ततस्तैस्तैरुपक्रमैः ।
उपालम्भकृतैर्वाक्यैरुपालभ्यस्तु नायकः ॥

मानावमानसम्मानैरवहित्थैर्यथाक्रमम् ।
अवहित्थप्रयोगेषु प्रच्छन्नवचनेषु च ॥
हास्ये कुतूहले चैव सम्भ्रमे व्यसने तथा ।
हास्योपस्थानसम्प्राप्ते दोषोपक्षेपनिह्नवे ॥
अनाभाष्योऽपि सम्भाष्यः प्रिय एभिस्तु कारणैः ।
यत्र स्नेहो भयं तत्र यत्रेर्ष्या मदनस्ततः ॥
चतस्रो योनयस्तस्याः कीर्त्यमाना निबोधत ।
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ॥
एतेषां सम्प्रवक्ष्यामि लक्षणानि यथाक्रमम् ।
निद्राखेदालसगतिं सचिन्हं सरसव्रणम् ॥
एवंविधं प्रियं दृष्ट्वा वैमनस्यं विधीयते ।
तीव्रासूयितवदना रोषात् बहुशः प्रवेपमानाङ्गी ॥
साध्विति सुष्ठ्विति वाक्यैः शोभनमित्येवमभिनेयः ।
बहुशोऽवधीर्यमाणोऽपि यस्तत्रैव हि तिष्ठति ॥
संहर्षाच्चात्र मात्सर्यात् व्यलीकमुपजायते ।
कृत्वोरसि वामकरं दक्षिणहस्तं तथा विधुन्वाना ॥
चरणविनिष्टम्भेन च कार्योऽभिनयो व्यलीके तु ।
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वञ्च मे प्रिया ॥
उक्त्वैवं योऽन्यथा कुर्यात् एतद्वै विप्रियं भवेत् ।
दूतीलेखप्रतिवचनभेदनैः क्रोधसहितरुदितैश्च ॥
विप्रियकरणाभिनयः स्वशिरःकम्पैश्च कर्तव्यः ।
प्रतिपक्षसकाशात्तु यः सौभाग्यविकत्थनः ॥
उपसर्पेत् सचिह्नश्च मन्युस्तत्रोपजायते ।
वलयपरिवर्तनैरथ सशिथिलमुत्क्षेपणेन रशनायाः ॥
मन्युस्त्वभिनेतव्यः सशङ्कितं बाष्पपूर्णाक्ष्या ।
दृष्ट्वा स्थितं प्रियतमं शङ्कितं सापराधमतिलज्जम् ॥
ईर्ष्यावचनसमुत्थैरथ खेदयितव्यो ह्युपालम्भेन ।
मध्याङ्गुल्याङ्गुष्ठा न ( ? ) विध्यात् पाणिना ह्युरःस्थेनातः ॥
उद्वर्तितनेत्रतया तथा प्रततवीक्षणाच्चापि ।
कटिहस्तनिविष्टतया विच्छिन्नतया तथा च ॥
पुनश्शम्याह्वितालो द्विकलश्च कर्तव्यः ।
त्रिकलश्च सन्निपातो भूत्वयो ( भूयो ? ) विधिरेष कर्तव्यः ॥

द्वादशकलस्तृतीये तस्यान्ते सन्निपातश्च ।
प्रथमस्त्वष्टकलः स्यात् द्वादशकलिकौ तथा स्मृतौ द्वौ च ॥
अन्त्यश्च सन्निपाते मध्यः स्यात् सारितस्योक्तम् ।
ये पूर्वमङ्गुलिकृता प्रवेशनिक्षेपनिष्क्रमा गदिताः ॥
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञैः ।
अथ ज्येष्ठे च कर्तव्यं शम्यातालयात्मकम् ॥
शरीरं हि बुधैर्नित्यं पञ्चषष्टिकलान्वितम् ।
तस्यावापोऽथ निष्क्रामो निक्षेपश्च निवेशनम् ॥
अङ्गुलीनां प्रकर्तव्यं कलामानं चतुष्कलम् ।
ज्येष्ठं चतुष्कलं स्यादावापैः संयुक्तं सविक्षेपैः ॥
वस्त्वन्यत्तत्र स्यात् सप्तदशकलं तु शम्यादि ।
पूर्वं शम्या कार्या चतुष्कलो वै भवेत् तालः ॥
शम्या चतुष्कला स्याद् द्विकलस्तालस्ततः कार्यः ।
कार्यश्च सन्निपातः षट्कलिकस्पर्शकलश्च तालः स्यात् ॥
द्विकला च पुनश्शम्या चतुष्कलः स्यात् पुनस्तालः ।
शम्या चतुष्कला स्यात्तालो द्विकलश्च कर्तव्यः ॥
पुनरेव सन्निपातः षट्कलः संविधातव्यः ।
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि सन्निपातान्ते ॥
पुनरेवैषामङ्गुलिविक्षेपं सम्प्रवक्ष्यामि ।
आवापः सह शम्यायां निष्क्रामश्च ततः परम् ॥
विक्षेपश्च ततः कार्यः तालश्चावाप इष्यते ।
अनामिका वा निष्क्रामो विक्षेपोऽनन्तरः स्मृतः ॥
शम्या वा सह आवापस्तालो विक्षेपणं पुनः ।
मध्यमयाङ्गुल्या प्रवेशश्च आवापश्च ततः कार्यः ॥
तर्जनीनिष्क्रमस्तथा विक्षेपश्च ततः कार्यः सन्निपातान्त्य एव च ।
कलाः सप्तदश ह्येता सन्निपातादनन्तरम् ॥
आवापश्च पुनः कार्यः मध्यमयाङ्गुल्या पुनः प्रवेशश्च ।
आवापश्च ततः कार्यं तर्जनीनिष्क्रमस्तथा ॥
विक्षेपः पञ्चदशकः शम्यया सह कीर्तितः ।
आवापश्चैव कर्तव्यः पुनस्तालप्रयोक्तृभिः ॥
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ।
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः ॥

निहत्य दानवं घोरं रुद्रेणामिततेजसा ।
नृत्तमुत्पादितं चित्रं पूर्वं ताण्डवसंज्ञितम् ।
अथ भूतगणैः सर्वैस्तस्मिन् काले महात्मभिः ॥ ६४ ॥
वर्धमानमिदं दृष्टं पिण्डीबन्धैर्विभूषितम् ।
परितुष्टश्च तद्दृष्ट्वा सपत्नीको वृषध्वजः ।
प्रददौ तु वरं श्रेष्ठं सह देवैर्गणाधिपैः ॥ ६५ ॥
लक्ष्यलक्षणसंपन्ना मार्गयुक्तिविधिः(धि ?)क्रमैः ।
वर्धमानप्रयोक्तारो यास्यन्ति शिवगोचरम् ॥ ६६ ॥
एवमेतन्मया दृष्टं पिण्डीबन्धनिमित्ततः ।
अधुना तु प्रवक्ष्यामि लक्षणं शृणुत द्विजाः ॥ ६७ ॥
वृत्तिदक्षिणचित्रेषु मार्गेषु विनियोजितम् ।

---

सन्निपातस्तथा यश्च चतुर्विंशतिको भवेत् ।
तृतीये सन्निपातः स्यात् एष एव विधिः स्मृतः ॥
वस्त्वस्या द्वे ह्यज्येष्ठेषु द्वे चान्ये पूर्ववद् योज्ये ।
षट्कम्पमष्टपातं त्रिसन्निपातं त्रिवस्तु चाप्येवम् ॥
सप्तदशायतनयुक्तं विद्यादासारितं सर्वम् ।
एवं ज्येष्ठस्य विज्ञेयस्तालोऽङ्गुलिविकल्पतः ॥
प्रथमः षोडशकलश्चतुर्विंशतिकः स्मृतः ।
द्वितीयश्च तृतीयस्तु सन्निपातः कलाधिकः ॥
प्रत्येकपतनं येषु दश सप्त भवन्ति हि ।
शम्यातालकृतानीह सन्निपातकृतानि च ॥
अष्टौ तालास्तु षट् शम्याः सन्निपाताश्रयास्तथा ।
आसारिते विधौ ह्येष एकैकस्मिन् प्रकीर्तितः ॥
आसारितानां वक्ष्यामि प्रस्तारं लघुलक्षणम् ।
मुखं प्रतिमुखं चैव देहः संहरणस्तथा ॥' इति ।

१. 'दारुणं' का. २. 'चित्रताण्डव' का. ३. 'सृष्टं' का. ४. 'तं दृष्ट्वा' का. ५. 'च' का. ६. 'देव्या महासुरः' का. ७. 'तल्लक्ष्यलक्षणयुतं' का. ८. 'वर्धमानं प्रयोक्तारो' का. ९. शिवगौरवम्' का. १०. 'पुरा सृष्टं' का. ११. 'पिण्डीबन्धाय शंभुना' का. १२. संप्रवक्ष्यामि' का.

द्विविधं वर्धमानं स्यात् स्वप्रमाणविनिर्मितम् ।
अतालं च सतालं च तत्प्रमाणं द्विजाः स्मृतम् ॥ ६८ ॥
चतस्रः कण्डिकाश्चैव तावन्त्यासारितानि तु ।
ध्रुवकेण कलाभिस्तु कण्डिका देवकल्पिता ॥ ६९ ॥
वर्धमानशरीरे तु क्रियते मार्गयोजना ।
आद्या नवकला तु स्यादष्टाभिस्तत्परा स्मृता ॥ ७० ॥
दश षट् च तथा चैव तृतीया कण्डिकेष्यते ।
चतुर्थी कण्डिका चैव द्वात्रिंशत्कलिका स्मृता ।
कलाभिरेवं निर्दिष्टा कण्डिका वर्धमानके ॥ ७१ ॥
केवलं मार्गसंभूता स्वालयोपाङ्गवर्जिता ।
एकद्वित्रिचतुर्योगात्ताभिरासारितानि तु ॥ ७२ ॥
वर्धमाने प्रसूयन्ते मार्गतालाङ्गयोगतः ।
प्रथमां[1] कण्डिकां कृत्वा बालतालप्रयोजितम्[2] ॥ ७३ ॥
अन्तिमार्धकलाहीनं [3]कुर्यादेवं कनिष्ठकम् ।
द्वितीयां कण्डिकां [4]कृत्वा प्रथमा[5] सकला यदि ॥ ७४ ॥
योज्यते[6] पूर्वतालेन तदा[7] तत् स्याल्लयान्तरम् ।
[8]वर्धमानं विना चित्रे नहि वृत्तौ लयान्तरम् ॥ ७५ ॥
बहिर्वा वर्धमाने वा कनिष्ठां नहि दक्षिणे ।
द्विगुणक्षीर(णाक्षर ?)संयोगा[9]दन्यमार्गनियोजनात् ॥ ७६ ॥
नृत्त[10]कालविशेषाच्च बाला[11]दन्यल्लयान्तरम्[12] ।
तृतीया स द्वितीया च प्रथमा चैव तत्[13]कला ॥ ७७ ॥

---

१. 'प्रथमं कण्डिकां' का. २. 'प्रयोजिताम्' का. ३. 'बालमासारितं तु तत्' का. ४. 'कर्णिकां' का. ५. 'प्रथमं' का. ६. 'पूज्यते' का. ७. 'यदा यत्तल्लयान्तरम्' का. ८. पद्यमेतत् का. पुस्तके नास्ति । ९. 'द्विगुणाक्षरसंयोगादन्यमाश्च (?) प्रयोजनम्' का. १०. 'वृत्त°' का. ११. 'बालताललयान्तरम्' का. १२. इतोऽग्रे—

'कनिष्ठासारिते तालो यो मया परिकीर्तितः ।
स एव सर्वः कर्तव्यः प्रथमे कण्डिकाद्वये ॥' इत्यधिकमत्र का. पुस्तके ।

१३. 'तद्भवेत्' का.

द्विकलं योगमाश्रित्य मध्यमासारितं तु तत्[1] ।
चतुर्थीमादितः[2] कृत्वा चतस्रः कण्डिका यथा[3] ॥ ७८ ॥
चतुष्कलो(ले?)[4] न युद्य(ज्य?)न्ते (?) ज्येष्ठमासारितं तु[5] तत्[6] ।
प्रयोगस्तु यदा[7] त्वेषां पिण्डीबन्धैर्विकल्प(ल्प्य?)ते[8] ॥ ७९ ॥
प्रत्येकं[9] तु (त्व ?)ङ्गविन्यासस्तदा तेषां पृथक् पृथक् ।
मुखं प्रतिमुखं चैव देहसंहरणं[10] तथा ॥ ८० ॥
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेष्विह[11] ।
उपोहनं मुखं तेषां युग्मं प्रतिमुखं भवेत् ॥ ८१ ॥
ओजःशरीरसंहारावेवयमङ्गविधिक्रमः[12] ।
इत्येवं[13] चतुरङ्गानि ज्ञेयान्यासारितानि तु ॥ ८२ ॥
चतुरासारितैर्बद्धं[14] वर्धमानकमुच्यते ।
वर्णताललयग्रन्थवाद्याभिनयवर्धनात् ॥ ८३ ॥
पात्राणां वृद्धियोगाच्च वर्धमानकमुच्यते ।
वर्धमाने शरीरस्य भवेदासारितस्य च ॥ ८४ ॥
कार्यकारणभावेन परस्परविकल्पनम् ।
यथा वृक्षाद्भवेद्बीजो बीजाद्वृक्षस्य संभवः ॥ ८५ ॥
अन्योन्यहेतुसंयोगः प्रसर्तव्यस्तथैव तु ।

---

१. 'तथा' का. २. 'चतुर्थमादितः' का. ३. 'यदा' का. ४. 'चतुष्कयोगमाश्रित्य' का. ५. 'तथा' का. ६. का. पुस्तके त्वत्र—

'ज्येष्ठत्वं सारिते तालो निःशब्दः शब्दवांस्तथा ।
त एव सर्वः कर्तव्यो बुधैश्चतरुणामपि ॥
संयोगे कण्डिकालोपः······परिकीर्तितः ।' इत्यधिकः पाठः ।

७. 'यथा' का. ८. 'पिण्डीबन्धैर्विकल्प्यते' का. ९. 'प्रत्येकं ह्यङ्गविन्यासः सर्वेषां च पृथक् पृथक् ।' का. १०. का. पुस्तके त्वियमेव सार्धपद्यद्वयी १९३, १९४ संख्यया वर्तते । तत्र च देहः संहरणस्तथा' इति पाठः । ११. 'सर्वेष्वासारितेषु च' का. १२. 'वेवमङ्गविधिक्रमः' का. १३. 'इत्येवं' का. १४. 'चतुरासारितैर्बद्धं' इत्यादि ८८ श्लोकमारभ्य 'तेषां संमुखतालं' इत्यादि ९८ श्लोकपर्यन्तः पाठः का. पुस्तके नास्ति ।

योगादेककलात्सूते कनिष्ठकलयान्तरे।
द्विकलान्मध्यमं चैव ज्येष्ठं चैव चतुःकलात् ॥ ८६ ॥
चञ्चत्पुटपरिवर्तः शम्यादि द्वौ च पञ्चपाणिकृतौ।
अन्ते च संनिपातः पातविधिरयं कनिष्ठस्य ॥ ८७ ॥
अयमेव तालयोगो विशेषसिद्धिश्च सूर्यवद्दिष्टा।
भवतीह लयान्तरिते शब्दाद्भेदो लयश्चैव ॥ ८८ ॥
उत्तरकालान्कृत्वा त्वादौ विप्राः कलाः परित्यज्य।
एतत्पातविधानं मध्यमकासारिते प्रोक्तम् ॥ ८९ ॥
ज्येष्ठस्य भवति नियमादादावेका चतुःकला मात्रा।
मात्रा कंदुगता स्यात्कृत्वौ तौ द्वौ च परिवर्तौ ॥ ९० ॥
वा(ता ?)लं नवकलं वे(ये ?)षां न तेषां साधु संमतम्।
संनिपाताङ्गविन्यासं कलानियमतः कृतम् ॥ ९१ ॥
तेषां संमुखतालं ध्रुवपातैरेव नियमतात्मानम्।
तस्य कलापाक्षरगुरुलघुवर्णस्थितिं वक्ष्ये ॥ ९२ ॥
ज्येष्ठस्य कला ह्यष्टौ मुखं भवेन्मध्यमस्य समूलकम्[1]।
षडि(ष्टि?)र्लयान्तरे स्यात्पञ्चैव कलाः कनिष्ठस्य ॥ ९३ ॥
आदावन्ते गुरुणी मध्ये च[2] लघूनि बालतः[3] प्रभृति।
अष्टौ द्वादश षोडश विंशतिरपि वाक्षराणि[4] स्युः ॥ ९४ ॥
आसारितोपवहनेष्वादावासारणानि युक्तानि।
तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मगीतानि ॥ ९५ ॥

[ यथा—] 'कूहुं जगति यदि गिनि गिजं हुं प्रथमे लयान्तरे वापि तितिजलकुचकलयमध्ये इति तिकुचवलितकज्येष्ठे ।'

इत्यक्षरपतनकलागुरुलघुवर्णस्थितिप्रतिविभक्तः।
आसारितमुखसंज्ञे उपवहनविधिः समुद्दिष्टः ॥ ९६ ॥
एवमेतत्सविस्तारं[5] कथितं परिमाणकम्।

१. 'सप्त कलाः' का. २. 'तु' का. ३. 'सावतः' का. ४. 'चा' का. ५. 'एतदर्धं' का. पुस्तके नास्ति।

चत्वारस्तु गुणा युग्मे ओजे षड्ढा(ट् प)रिकीर्तिताः ॥ ९७ ॥
पञ्चपाणौ द्वितीये तु सार्धषट् परिकीर्तिताः ।
कनीय एवं कर्तव्यमक्षरै(क्षरैः)स्तालमानतः ॥ ९८ ॥

यथा—'देवं देवैः संस्तुतं नमितं दैत्यैर्यज्ञै(क्षैः)र्नागैः पितृभिश्च नमितचरणं त्रैलोक्यहेतुमीशं रुद्रं शरणमस्म्यहमुपगतः ।'

अष्टावेव गणाः कार्याः पूर्वताले यथाविधि ।
द्वादशैव तु कर्तव्याः कथिताः पुत्रके गणाः ॥ ९९ ॥
अर्धत्रयोदशगणास्तृतीये वसुसंज्ञिताः ।
एवमक्षरविन्यासो मध्यमासारिते स्मृतः ॥ १०० ॥

यथा—'भूताधिपतिं भगनेत्रहरं देवैर्वन्द्यं सुरवरमथनं रौद्रं भयदं गजचर्मवृतं शंभुं त्र्यक्षं ज्वलननिभजटम् भुजगपरिकरं त्रिदशगणवृतं दैत्यैर्नित्यं परिपठितचरितममरपतिनमितमभिमतसुखदं शरणं सुरनुतचरणमहमुपगतः ।'

कार्याः षोडश युग्माख्ये ताले तु प्रथमे गणाः ।
चतुर्विंशतिरोजाख्ये द्वितीये वसु(स्तु?)संज्ञिते ॥ १०१ ॥
चतुर्विंशतिरर्धं च तृतीये वसुसंज्ञिके ।
ज्येष्ठेष्वासारिते कार्य एवमक्षरसंचयः ॥ १०२ ॥

[ यथा—]'अमरप्रवरं मदनाङ्गहरं भुवनैकनाथमभयप्रदं त्रिपुरान्तकरं देवं

---

१. '°ट्ट परि°' का. २. 'र्धाः' का. ३. 'एव' का. ४. 'क्षरैः' का. ५. '°मीशं' का. ६. '°र्य क्षैः प्रणमितचरणं' का. ७. 'हितं हरं शं शरणमहमुपगतः' का. ८. 'षट्ट पिता पुत्रके' का. ९. 'तथा' का. १०. 'वसुसंज्ञिनि' का. ११. '°हरणमीशं देवं' का. १२. 'सुरमखमथनं' का. १३. 'गजचर्मपटं' का. १४. 'भुजङ्गपरिकरं त्रिदशपरिगणं दैत्यैर्नित्यं परिपठितचरितममरपतिचरितम् ।
'अभिमतसुखदं रुद्रं पीतं पितृवननिलयम् ।
गङ्गाप्लावनगोभिजरं तं शरणं गतोऽस्मि वरदं च महेश्वरम् ॥' इति का.
१५. 'वसुसंज्ञिते' का. १६. '°ष्वासारिते' का. १७. 'कार्यस्त्वेव°' का. १८. 'त्रिपुरनाशकरं' का.

तमहं प्रणतः सुरपितृगणनतचरणं पृथिवीसलिलज्वलनभैरवरूपं खट्वाङ्गकपालधरं पवनः सूर्यश्चन्द्रो यजारमाप्योमाख्याः (?) कार्या मुनिभिर्यस्य प्रोक्तास्त्रैलोक्यगुरुं तमचिन्त्यमजं विद्यानिलयं भैरवरूपं खट्वाङ्गकपालधरं स्थित्युत्पत्तिप्रलयनिमित्तं चन्द्रार्धधरं तिलकार्धधरं रसनार्धधरं बहुभिर्विकृतैर्विविधैर्विकटैर्विद्यति(?)विमुखैः प्रमथैः परिवृतमीशं सुखदं सततं प्रणतः ॥'

आसारितानां सर्वेषां ये भेदाः परिकीर्तिताः ।
यथाक्षरं द्विसंख्यातं त्रिसंख्यातं यथापि वा ॥ १०३ ॥
तालच्छेदो द्विगुणितैः समवर्णगणैः कृतम् ।
अनिवृत्ताक्षरपदं यथाक्षरमिति स्मृतम् ॥ १०४ ॥
निवृत्त्या यत्समायुक्तं द्विसंख्यातं तमु(दु?)च्यते ।
निर्वृत्तद्वयसंपन्नं त्रिसंख्यातमितीष्यते ॥ १०५ ॥
चतुष्कादौ चतुर्मात्रा यथोक्तगुरुलाघवौः ।
यथायोगं गणाः कार्या गीतेष्वासारितेषु च ॥ १०६ ॥
अक्षरैर्या चतुर्मात्रा द्विमात्रा वर्णतस्तु सा ।
चित्रे कला भवेद्या तु वृत्तौ सा द्विगुणा स्मृता ॥ १०७ ॥
वृत्तौ या वर्णमात्राभिश्चतुर्मात्राः (त्रा ?) प्रकीर्तिता ।
द्विगुण(णौ?)द[क्षि?]णे सा तु कला ज्ञेया प्रयोक्तृभिः ॥ १०८ ॥
न मार्गभेदोऽक्षरेषु कश्चिदप्युपपद्यते ।

---

१ 'सुरगणपितृमुनिगणमहितं' का. २. 'पृथिवी सलिलानलपवनयज्ञाधिपतिः' का. ३. 'सूर्यश्चन्द्रो व्योमाख्याः' का. ४. 'अष्टौ मुनिभिर्यस्य सुताः' का. ५. 'खट्वाङ्गधरं' का. ६. 'सूक्ष्माक्षमचिन्त्यं चन्द्रार्धधरम्' का. ७. 'त्रिकलार्धधरं नेत्रार्धधरं मुखार्धधरं कान्तार्धधरं' का. ८. 'बहुलैर्विधैर्विधृतैर्विकटैर्मुण्डैर्विषमैः प्रमथैः परिवृत्तमहमीशं सततं प्रणतः' का. ९. 'त्रयो भेदाः प्रकीर्तिताः' का. १०. 'यथाक्षरद्विसंख्येति त्रिसंख्यातमथापि च' का. ११. 'तालच्छेदद्विगुणितैः' का. १२, 'समवर्णै[:] गुणैः कृतः' का. १३. 'तदुच्यते' का. १४. 'निवृत्तित्रयसंपन्नं' का. १५. '°गुरुलाघवः' का. १६. 'कला' का. १७. '°सारिते च' का. १८. 'स्तथा' का. १९. 'वृत्ते' का. २०. 'वर्णमात्रा तु' का. २१. 'द्विगुणा दक्षिणे या तु' का.

वर्णमात्राद्द्विगुणिता[1]द्वर्णभेदः प्रकीर्तितः ॥ १०९ ॥
यथाक्षरेषु भूयिष्ठं गीतेष्वासारितेषु च ।
विधिरेष समुद्दिष्टो वर्णतालपदा[2]श्रयः ॥ ११० ॥

द्विसंख्याते निवृत्तिस्तु कार्याद्यस्या[3]र्धयोगतः ।
द्विसंख्याता[4]र्धयोगेन त्रिसंख्यातेऽपि चेष्यते ॥ १११ ॥
न[5] चित्रे द्वित्रिसंख्यातं कदाचिदपि योजयेत् ।
न[6] च वृत्तित्रिसंख्यातं गीतेष्वासारितेषु च ॥ ११२ ॥

दक्षिणे स्यात्त्रिसंख्यातं द्विसंख्यातं च वार्तिके ।
चित्रे यथाक्षरं प्रोक्तमि[7]ति मार्गविनिश्चयः ॥ ११३ ॥
दक्षिणेनैव [8]गत्वादौ निवृत्तौ वृत्तिवद्व्रजेत् ।
चित्रवच्च यथान्यायं त्रिसंख्याते विधिः स्मृतः ॥ ११४ ॥

अनेनैव विधानेन द्विसंख्यातमपीष्यते ।
वृत्तौ वा दक्षिणो(णे?) वा[9]पि प्रयोगोऽस्यं[10] सदैव तु ॥ ११५ ॥
वस्त्वा(?)स्त्वा दौ[11] वस्तु(स्तु?)मध्ये च वस्व(स्त्व?)न्ते या निवृत्तयः ।
प्रयोक्तव्यैः[12] (व्याः?) प्रयोगज्ञैर्विचार्याङ्गबलाबलम् ॥ ११६ ॥
निवृत्तौ तु कला न्यूना यदा वस्तुवंशा[13]द्भवेत् ।
अकाल[14]पातनात्तस्या वर्णः कार्यो निवृत्तिमान् ॥ ११७ ॥

वर्णालंकारसौभाग्यं विच्छेदः[15] करणस्य च ।
तत्त्वादीनां प्रयोगश्च निवृत्तीनां प्रयोजनम् ।
वर्णतालाक्षराणां तु[16] संयोगोऽयं मया स्मृतः ॥ ११८ ॥

---

१. 'द्विगुणनात्' का. २. '°समाश्रयः' का. ३. 'कार्या चार्धवियोगतः' का. ४. 'द्विसंख्यातकयोगेन' का. ५. 'न च वृत्तौ त्रिसंख्यातं' का. ६. 'न च वृत्तौ त्रिसंख्यातं' का. ७. '°मेषां' का. ८. 'दक्षिणेन तु गीतादौ' का. ९. 'दक्षिणे वापि' का. १०. '°स्यैव चेष्यते' का. ११. 'वस्त्वादौ वस्तुमध्ये च वस्त्वन्ते वा' का. १२. 'प्रयोक्तव्या' का. १३. 'वस्तुवद्भवेत् (?)' का. १४. 'आकलापतनात्त्वस्या' का. १५. 'विच्छेदकरणस्य च' का. १६. 'च' का.

आसारितेषु गीतेषु वर्धमानेषु चैव हि[1] ।
वर्धमानं तु विज्ञेयं (याः?) चतस्रः कण्डिका बुधैः[2][3] ॥ ११९ ॥
विशाला संगता[4] चैव सुतदा(नन्दा?)[5] सुमुखी तथा[6] ।
उपोहनं विशालायाः कला[:] पञ्च[7] भवेदिह ॥ १२० ॥
षडङ्ग(द्द संग)ताया[8] विज्ञेयाः सुनन्दायाश्च सप्त च ।
सुमुख्याश्चोपवहनं नित्यमष्टकलं भवेत्[9] ॥ १२१ ॥
आदौ गुरुद्वयं कार्यं चतुर्दश लघून्यथ[10] ।
उपोहनं विशालायाः पुनरन्ते गुरुः[11] स्मृतः ॥ १२२ ॥
यथा[12]—ऋदुं जगति अवलितकदिगिनिगिकुचक्कततिति वा ।(?)
चतुर्भिरधिकैरेवं[13] लघुभिर्गुरुसंस्तुतैः ।
सुनन्दायाश्च विज्ञेयो ह्यपोहनविधिर्बुधैः ॥ १२३ ॥

---

१. का. पुस्तके—
'आसारितानां संयोगो वर्धमानक इष्यते ।
उत्पत्तिलक्षणं चास्य गदतो मे निबोधत ॥' इत्यधिकमत्र ।
२. पद्यार्धमेतन्नास्ति का. पुस्तकेऽत्र ३. का. पुस्तकेऽत्र 'निहत्य दारुणं घोरं' इत्यादि 'चतस्रः कण्टका ज्ञेया वर्धमाने प्रयोक्तृभिः ।' इत्यन्तः पाठः समधिकः ४. 'संमता' का. ५. 'सुनन्दा' का., 'सुनादा' ख. ६. 'का. पुस्तके लत्रैव—
'ततः पूर्वा नव कला द्वितीयाष्टकला स्मृता ।
तृतीया षोडशकला द्वात्रिंशच्च तथोत्तरा ॥
शम्यातालस्तथा शम्या पुनस्ताला यथा क्रमम् ।
त्रिकलः संनिपातश्च विशाला याः प्रकीर्तितः ॥
चच्चत्पुटस्तु द्विकलः संगतायाः प्रकीर्तितः ।
उपोहनविधिस्तासामधुना तु मयोच्यते ॥'
श्लोक १३४-१३७ श्लोकत्रयात्मकः पाठः ।
७. 'कलापञ्चकमेव हि' का. ८. 'षट्कलाः संगतायाश्च सुनन्दायाश्च सप्तकम् ।' का. ९. 'एतेषां चैव वक्ष्यामि गुरुलघ्वक्षरक्रमम् । इत्यर्धमधिकमत्र । १०. 'लघून्यपि' का. ११. 'विधिः' का. १२. 'एष गद्यभागः का. पुस्तके नास्ति । १३. 'अस्य श्लोकस्य स्थाने का. पुस्तके पद्यद्वयी—
'चतुर्भिरधिकैर्ह्रस्वैर्गुरुत्रयसमन्वितम् ।
संगतायाभिमुनिभिरुपोहनमिति स्मृतम् ॥

यथा—ॠदुं जगति अवलितकदिगिति ॠलकुचलति विभो ।(?)

षड्विंशतिर्लघूनि[2] स्युः सुमुख्याश्च गुरूणि[3] च ।
उपोहनविधानेन[4] ज्ञेयानि मुनिसत्तमाः ॥ १२४ ॥

यथा[5]—ॠदुं जगति अवलिकदिगिविगितितिॠलॠचकुलतिति जगतिति वा ।

उपोह्यन्ते श्व(स्व?)रा यत्र[6] येन गीतं प्रवर्तते ।
तस्मादुपोहनं प्रोक्तं शुष्काक्षरसमन्वितम्[7] ॥ १२५ ॥

अथवा मो(वोपो?)ह्यते[8] यस्मात्प्रयोग[:][9]सूचनादिभिः ।
तस्मादुपोहनं ह्येतज्ज्ञा[10](द्गा?)नभाण्डसमाश्रयम् ॥ १२६ ॥

शम्यातालौ द्विरभ्यस्तौ संनिपातान्त्य एव च ।
उपोहनं[11] विशा[लार्यास्तालोऽयं[12] परिकीर्तितः ॥ १२७ ॥
द्विकलः संगतायाश्च[13] तालश्चञ्चुपुटः[14] स्मृतः ।
त्रिकलो[15] युक्तता]लादि सुनन्दायास्तथैव च ॥ १२८ ॥

चञ्चत्पुटस्तु द्विकलः सुमुख्याः[16] स्यादुपोहने ।
उपोहने द्विरभ्यस्तैस्ततः कार्या तु कण्डिका[17] ॥ १२९ ॥
एतान्युपोहनानीह चत्वारि गदितानि हि[18] (तु?) ।
आनुपूर्व्या प्रयोगं च कण्डिकानां निबोधत ॥ १३० ॥

---

चतुर्भिरधिकैरेवं लघुभिर्गुरुसंयुतम् ।
सुनन्दयो(न्दाया?)श्च विज्ञेय उपोहनविधिर्बुधैः ॥'

१. 'एतदुदाहरणगद्यमपि का. पुस्तके नास्ति । २. 'अष्टाविंशल्लघूनि स्युः' का. ३. 'गुरुत्रयम्' का. ४. 'तु ज्ञेयं तु द्विजसत्तमाः' का. ५. एष गद्यभागोऽपि का. पुस्तके नास्ति । ६. 'यस्मात्तस्मात्' का. ७. 'ज्ञेयं स्थायिस्वरसमाश्रयम्' का. ८. 'अथवोपोह्यते' का. ९. 'प्रयोगः' का. १०. 'गानभाण्डसमाश्रयम्' का. ११. 'उपोहने' का. १२. ख. पुस्तके त्रुटितः १३. '°श्च' का. १४. 'श्चापुटः (?)' का. १५. 'तस्यैव संनिपातोऽन्त्ये' का. १६. 'सुमुख्यां' का. १७. 'सुकण्डिका' का. १८. 'तु' का.

[1]शम्यातालो(लौ?) पुनः शम्या ततस्तालो यथाक्रमम्।
त्रिकलः संनिपातश्च विशालायाः प्रकीर्तितः ॥ १३१ ॥
चञ्चत्पुटस्तु वि(द्वि?)कलः संगताया अपि स्मृतः।
चतुष्कलः सुनन्दायाः स एव गदितो बुधैः ॥ १३२ ॥
संनिपातद्वयोपेताद्विचित्रस्तु प्रयोक्तृभिः।
कार्यश्चतुष्कलो युग्मः सुमुख्याश्च यथाक्रमम् ॥ १३३ ॥
वर्धमानस्य तालोऽयं कण्डिकानां[2] पृथक्पृथक्।
मया प्रोक्तो[3] मुनेश्चैव[4] संहतानां[5] निबोधत ॥ १३४ ॥
[6]पूर्वं विशाला कर्तव्या संगता तदनन्तरम्।
संगतायां[7] ग्र(गृ?)हं कृत्वा विशाला पुनरिष्यते[8] ॥ १३५ ॥
[9]कनिष्ठासारिते तालो यो यथा परिकीर्तितः।
स एव सर्वः कर्तव्यः प्रथमे कण्डिकोद्भवे ॥ १३६ ॥

---

१. 'शम्या तालो' इत्यादि पद्यत्रयीस्थानेऽत्र का. पुस्तके—
'पूर्वं विशाला कर्तव्या बालतालप्रयोजिता।
अन्तिमात्र कलोपेता बलमासारितं तु तत् ॥
सङ्गताया गृहं गत्वा विशाला सकला यदि।
युज्यते पूर्वताले तु तदा स्यात्तलयान्तरम् ॥
सुनन्दा च ततः कार्या सङ्गता पुनरेव हि।
विशालां च पुनश्चैव स (सु?)मुखीं च प्रयोजयेत् ॥
सुमुखी च सुनन्दा च सङ्गता पुनरिष्यते।
विशालायाः समाप्तिस्तु ज्ञेया अथ निवृत्तयः ॥' इति पद्यचतुष्टयी वर्तते ॥

२. 'कणिकायाः' का. ३. 'प्रोक्तं' का. ४. 'पुनश्चैव' का. ५. 'संयुक्तानां' का.
६. 'का. पुस्तकीया पद्यत्रयी निर्दिष्टपूर्वा १ अङ्कटिप्पण्याम्। तत्र—
'पूर्वं विशाला कर्तव्या बालतालप्रयोजिता।
अन्तिमात्रकलोपेता बलमासारितं तु तत् ॥' इति पूर्णमेतत्पद्यम्।
७. 'संगताया गृहं' का. ८. 'सकला यदि' का. ९. 'कनिष्ठासारिते तालो' इत्यादि पद्यमारभ्य पद्यचतुष्कस्थाने का. पुस्तके—

सुनन्दा संगता चैव [विशाला च यथोदिता ।
सुनन्दायां ग्रहं कृत्वा ततश्चैव] प्रयोजयेत् ॥ १३७ ॥
मध्यमासारिते तालो यो मया परिकीर्तितः ।
[1]शम्यात्रयस्य कर्तव्यः सुनन्दाद्यस्य पण्डितैः ॥ १३८ ॥
[2]सुमुखी च सुनन्दा च संगतप्रथमा तथा ।
सुमुख्यादौ ग्रहं कृत्वा यथोक्तं संप्रयोजयेत् ॥ १३९ ॥
[3]ज्येष्ठासारितके तालो निःशब्दः शब्दवांस्तथा ।
[4]स सर्व एव कर्तव्यो बुधैश्चतसृणामपि ॥ १४० ॥
[5]संयोगः कण्डिकानां तु तालोऽयं परिकीर्तितः ।
[6]एवमासां समायोगाद्वर्धमानकमिष्यते ॥ १४१ ॥

---

'प्रथमं कण्डिकां कृत्वा बालतालप्रयोजिताम् ।
अर्धि(न्ति?)मार्धकलाहीना बलमासारितं तु तत् ॥
द्वितीयां कर्णिकां कृत्वा प्रथमं सकला यदि ।
पूज्यते पूर्वतालेन यदा यत्तलयान्तरम् ॥
कनिष्ठासारिते का(ता?)लो यो यथा परिकीर्तितः ।
वर्धमानां तदा चित्रैर्न वित्तेन योजयेत् ॥
स हि वर्धमाने वा कनिष्ठं न हि दक्षिणे ।
द्विगुणाक्षर अन्यमाश्व(?) प्रयोजनम् ॥
वृत्तकालविशेषाच्च बालताललयान्तरम् ।
कनिष्ठासारिते तालो यो मया परिकीर्तितः ॥
स एव सर्वः कर्तव्यः प्रथमे कण्डिकाद्वये ।
तृतीया सद्वितीया च प्रथमा चैव तद्भवेत् ॥
द्विकलं योगमाश्रित्य मध्यमासारितं तथा ॥' इति सार्धं पद्यषट्कम् ।

१. 'सोऽन्यत्र यस्य कर्तव्यः सुनन्दां न्यस्य योक्तृभिः' । का.

२. अस्य श्लोकस्य स्थाने—

'चतुर्थमादितः कृत्वा चतस्रः कण्डिका यदि ।
चतुष्कयोगमाश्रित्य ज्येष्ठमासारितं तथा ॥' इति श्लोकः ।

३. 'ज्येष्ठलं सारिते तालो' का. ४. 'स एव सर्वः कर्तव्यो' का. ५. 'संयोगे कण्डिकालोपः……परिकीर्तितः ।' का. ६. इतः पूर्वं का. पुस्तके—

बालं न सु(नव?)कलं ज्ञेयं दशशब्दलयान्तरम्।
पञ्चषष्टि(ष्ठ?)कलं ज्येष्ठं त्रयस्त्रिंशत्तु मध्यमम्॥ १४२॥
कलानां वृद्धिमासाद्य त्वक्षराणां तु वर्धनात्।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते॥ १४३॥
आसारितेषु गीतेषु वर्धमानेषु चैव हि।
द्विगुणस्तालयोगेन कार्यो ह्यक्षरजो विधिः॥ १४४॥
समाप्तायान्तरयिनः(?) संनिपातो यदा भवेत्।
अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभिः॥ १४५॥
एवमेतन्मया प्रोक्तं वर्धमानस्य लक्षणम्।
[3]आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम्॥ १४६॥
अन्यूनायां कलायां तु ध्रुवं प्राज्ञो निवेदयेत्।

---

'प्रयोगस्तु यथा त्वेषां पिण्डबन्धैर्विकल्प्यते।
प्रत्येकं ह्यङ्गविन्यासः सर्वेषां च पृथक् पृथक्॥
बालं नवकलं ज्ञेयं दशसप्तलयान्तरम्।
पञ्चषष्ठकलं ज्येष्ठं त्रयत्रि(स्त्रिं?)शच्च मध्यमम्॥
एतत्तालविधानं सर्वेष्वासारितेषु च।
एवमासारिते बद्धं वर्धमानकमुच्यते॥
वर्धतालतया ग्रन्थत्राद्याभिनयवर्धनात्।
प(पा?)त्राणां वृद्धियोगाच्च वर्धमानकमुच्यते॥
वर्धमानशरीरस्य भवेदासारितस्य च।
कार्यकारणभावेन परस्परविकल्पना॥
आसारितेषु सर्वेषु वर्धमानेषु चैव हि।
द्विगुणा(ण?)स्ताल योगेन कार्यः स स्वरजो विधिः॥
समाप्तावन्तरहितः सनिपातो यदा भवेत्।
अन्त्या कला द्विमात्रा तु तदा कार्या प्रयोक्तृभिः॥'

'एवमासां समायोगात्' इत्याद्यारभ्य 'अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभिः।' इत्यन्तश्लोकचतुष्कस्थाने पद्यसप्तकम्। १. 'वर्धमानकलक्षणम्' का. २. 'आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम्।' १५१ इत्याद्यारभ्य, 'अत ऊर्ध्वं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि॥ १८०॥' इत्यन्त २९ मूनत्रिंशत्पद्यानां स्थाने का. पुस्तके—

अथ तालाक्षरवशास्त्वेषां ये तांश्च योजयेत् ॥ १४७ ॥
प्लुते लघ्वक्षरे चैव ध्रुवे साम्यं न विद्यते ।
न विद्यते त्रिभिः पातैः समत्वमुपदिश्यते ॥ १४८ ॥
तालैश्च संनिपातैश्च शम्याभिश्च ध्रुवेण च ।
कनिष्ठासारितं कार्यं मध्यमं ज्येष्ठमेव च ॥ १४९ ॥
.................................... ।
द्विगुणोत्तरया वृद्ध्या ह्यस्यैव न मध्यमं विधातव्यम् ॥ १५० ॥
प्रस्तारेण कलानां शम्यातालान्तरोपेतम् ।
पूर्वं शम्या कार्या द्विकलस्तालः कलाद्वयं शम्या ॥ १५१ ॥
पुनरेककलस्तालस्त्रिकलः स्यात्संनिपातश्च ।
त्रिकलोऽन्यस्मिंस्तालः शम्यैकः.....कलाद्वये तालः ॥ १५२ ॥
द्विकला च पुनः शम्या तालः क.......... ।
................................ ॥ १५३ ॥
त्रिकलश्च संनिपातो भूयो विधिरेष कर्तव्यः ।
द्वादश कलास्तृतीये तस्यान्ते संनिपातश्च ॥ १५४ ॥
प्रथमस्त्वष्टकलः स्याद्द्वादशकलिकौ तथापरौ ज्ञेयौ ।
अन्त्यश्च संनिपातो मध्यस्यासारितस्योक्तः ॥ १५५ ॥
ये पूर्वमङ्गुलिकृताः प्रवेशान्नि(शनि?)ष्क्रामसंज्ञया गदिताः ।
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञैः ॥ १५६ ॥
अयं(?) ज्येष्ठे तु कर्तव्यं शम्यातालकलान्वितम् ।
शतत्रयोऽथ निष्क्रामो विक्षेपोऽथ प्रवेशनम् ।
अङ्गुलीनां तु कर्तव्यं कलामानं चतुष्कलम् ॥ १५७ ॥
पूर्वं शम्या कार्या चतुष्कलोऽन्यो भवेत्ततस्तालः ।
शम्या चतुष्कला स्याद्द्विकलस्तालस्तथा चैव ॥ १५८ ॥

---

'अत ऊर्ध्वं प्रवक्ष्यामि गीतकानां तु लक्षणम् ।
सर्वेषामेव गीतानां वस्तुष्वेव यथेषु च ॥' इत्येकमेव पद्यम् ।

१. 'भवन्ति' हि का.

कार्यस्य संनिपातोऽपि षट्कलः षट्कलस्तु तालः स्यात् ।
द्विकला च पुनः शम्या चतुष्कलः स्यात्पुनस्तालः ॥ १५९ ॥
शम्या चतुष्कला स्याद्विकलस्तालश्च कर्तव्यः ।
पुनरेव संनिपातश्च षट्कलः संविधातव्यः ॥ १६० ॥
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि संनिपाते तु ।
पुनरेष वेष(?)मङ्गुलिविक्षेपात्संप्रवक्ष्यामि ॥ १६१ ॥
पूर्वं शम्या तथावापो निष्क्रामश्च ततः पुनः ।
विक्षेपोऽथ पुनस्तालः पुनरावाप एव च ॥ १६२ ॥
अनामिकी(का?)कनीयस्यान्नि(स्योर्नि?)ष्क्रामश्च पुनस्ततः ।
ताभ्यामेव हि विक्षेपः शम्याथो वापि एव च ॥ १६३ ॥
मध्यमायां ततस्तालो विक्षेपोऽथ प्रवेशनम् ।
आवापश्च पुनः कार्यस्तर्जनीनिष्क्रमः पुनः ॥ १६४ ॥
विक्षेपश्च पुनः कार्यः संनिपातस्तथैव वा ।
कलाः सप्तदशैवैताः संनिपातो भवेदयम् ॥ १६५ ॥
आवापश्च पुनः कार्यः कनीयस्याथ निर्गमः ।
विक्षेपश्च प्रवेशश्च आवापश्च ततः पुनः ॥ १६६ ॥
अनामिकाकनीयस्योस्ततस्तालो भवेत्पुनः ।
विक्षेपश्च पुनस्ताभ्यां ततः शम्याः प्रकीर्तिताः ॥ १६७ ॥
आवापस्य कनीयस्यां ततस्तालं नियोजयेत् ।
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ॥ १६८ ॥
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः ।
संनिपातः पुनश्चैव चतुर्विंशतिको भवेत् ॥ १६९ ॥
तृतीयः संनिपातस्य एष एव विधिः स्मृतः ।
एवं ज्येष्ठस्य विज्ञेयस्तालाङ्गुलिविकल्पितः ॥ १७० ॥

१. 'लेष एव' ख.

प्रथमः षोडशकलश्चतुर्विंशतिकस्तथा ।
द्वितीयश्च तृतीयश्च संनिपातकलाधिकः ॥ १७१ ॥
प्रत्येकं पातनान्येषु दलाः (तालाः?)सप्त भवन्ति हि ।
शम्यातालकृतानीह संनिपातकृतानि च ॥ १७२ ॥
हर्म्यं(?)मष्टमतालं त्रिसंनिपातं त्रिवस्तु चाप्येवम् ।
सप्तदशपातयुक्तं विद्यादासारितं सम्यक् ॥ १७३ ॥
आसारितानामित्येवं गदितं लक्षणं मया ।
गीतानां वस्तुकानां च प्रयोगः परिकल्प(ल्प्य?)ते ॥ १७४ ॥
अत ऊर्ध्वं[1] प्रवक्ष्यामि गीतानां वस्तुकेष्वपि ।
विव(वि?)धैककवृत्तानि त्रीण्यङ्गानि समासतः ॥ १७५ ॥
एकैकं[2] तु विदार्येका ते(द्वे?)तुमद्विविधः स्मृतः ।
षट्परं त्र्यवरं वृत्तं त्र्यङ्गं[3] सहरसं च तत्[4] ॥ १७६ ॥
विव(वि?)धैककयोः प्रायो मद्रके तु प्रयोजनम् ।
प्रैव(क?)र्याश्चापि[5] वस्त(स्त्वर्धे) पादे रोविन्दकस्य च ॥ १७७ ॥
रोविन्दकोत्त[6]राभ्यां तु वृत्तमुल्लोप[7]के तथा ।
पाणिकायां बहिर्गीता[8] लास्ये वै[9] परिकीर्तितम् (ता?) ॥ १७८ ॥
प्रवृत्तमवगाढं च द्विविधं स्त्वं[10](वृत्त?)मुच्यते ।
आरोहित्वादवगाढं प्रवृत्तमवरोहतः[11] ॥ १७९ ॥

---

१. 'सर्वेषामेव गीतानां वस्तुष्ववयवेषु च । विव(वि?)धैकैकवृत्तानि त्रीण्यङ्गानि समासतः ॥' इत्यधिकं ख-पुस्तके. २. 'एकतन्तुविदार्येका द्वे चापि विविधैः स्मृतः ।' का. ३. 'विदार्यः परिकीर्तिताः ।' का. ४. 'इतोऽग्रे का. पुस्तके—

'पदवर्णसमाप्त(प्ति?)स्तु विदारीत्यभिसंज्ञिता ।
न्यासापन्यासमं शान्तं वस्तु तत्परिकीर्तितम् ॥
विदारयन्ति यस्माद्धि परमध्यस्वरो यदा ।
तदा विदारी विज्ञेया गुरुवर्णानुकारिणी ॥' एषा श्लोकद्वयी समधिका.

५. 'प्रकर्यः' इत्युत्तरत्र, 'प्रकुर्याचापि' का. ६. 'रोविन्दतो(को?)तराभ्यां तु' का. ७. '°मुल्लाप्यकस्य हि' का. ८. 'बहिर्गीते' का. ९. 'लास्ये चैव प्रकीर्तिते ।' का. १०. 'वृत्तम्' का. ११. '°मपरो हि च' का.

आरोहणं च[1] द्विविधं तथा चैवावरोहणम्।
न्यासापन्यासविहितं मार्गान्नट(न्तर?)कृतं तथा॥ १८०॥
ध्यवैरेकादशपरा विदार्यः परिकीर्तिताः।
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम्॥ १८१॥
अर्ध्य[2][र्द्धाद्धि?] तृतीयाच्च संनिपाताः[3] प्रमाणतः।
उल्लोप्यके[4] विदारी तु स्मृता वैहायसे तथा[5]॥ १८२॥
विव(वि?)धेन[6] तु तत्कार्यो युग्मवृत्तेन चैव हि।
नह्यर्धसंनिपाते[7] तु भवेदङ्गसमापनम्॥ १८३॥

---

१. 'तु' का. २. 'अध्यर्धा च तृतीया च' का. ३. 'संनिपातप्रमाणतः।' का. ४. 'उल्लोल्यते का. (?)' ५. 'वैहायसे' का. ६. 'विविधेन च ताः कार्या युग्मवृत्तेषु चैव हि।' का. ७. 'नह्यर्धे संनिपातस्य' का. ८. 'इतोऽग्रे का-पुस्तके—

'विव(वि?)धस्त्रिविधो ज्ञेयः कीर्त्यमानान्निबोधत।
सामुद्रश्च समुद्रोऽपि विवृत्तश्चेति कीर्तितः॥
न्यासतोऽपि विधौ ज्ञेयो भुक्ता वै गेयकं सदा।
आद्या तु मद्रके चैव सामुद्रः परिकीर्तितः॥
लघुवर्णसमं ज्ञेयं सामुद्रे तु विधीयते।
तत्त्वन्ते च तृतीये च तद्वै गेयकसंज्ञितः॥
विदार्यङ्गसमोऽर्धं स्यात् अर्धं विसदृशं तथा।
योगे तु अर्धसामुद्रस्तथा ज्ञेयः प्रयोक्तृभिः॥
विदारी विषमा ज्ञेया न्यासापन्यास एव च।
असंप्रयोगबाहुल्यं विवृत्तं परिकीर्तितम्॥
द्विविधश्चैकतो वापि विज्ञेयं तु यथाक्रमम्।
न्यासापन्यासमंशान्तं सदा ज्ञेयं प्रयोक्तृभिः॥
सन्यासश्चैव विन्यासो ह्यङ्गमध्यो यथाक्रमम्।
विन्यासः स तु विज्ञेयो विदारीमध्यमस्थितः॥
विदारी वज्रविन्यासः पदान्ते क्वचिदेव हि।
न तद् बाहुल्यमुद्दिष्टं प्रयोगस्य प्रयोक्तृभिः॥ इयानधिकः पाठः।

[1]गीतानि ससमद्रोकोल्लोप्यके च परान्तकम् ।
[2]प्रेकर्यो वैणकं चैव रोविन्दकमथोत्तरम् ॥ १८४ ॥
द्विविधं मद्रकं [3]तत्र चतुर्वस्तु त्रिवस्तु च ।
शीर्षकेण समायुक्तं [4]तच्च ज्ञेयं त्रिवस्तुकम् ॥ १८५ ॥
पञ्च षट् सप्त तानि [5]स्युः शीर्षकं च [6]परान्तके ।
प्रकर्यामथ चत्वारि स्युस्त्रीण्यर्धाधिकानि च ॥ १८६ ॥
रोविन्दकं [7]तु सप्ताङ्गे षोडशाङ्गं परं स्मृतम् ।
[8]द्वौ पादौ समवर्णौ तु एकको ( कौ ? ) वात्र कीर्तितौ ॥ १८७ ॥
प्रवृत्तं विवधं [9]वापि तस्मा[10]त्पादौ प्रयोजयेत् ।
सप्ताङ्गं द्वादशाङ्गं वा प्राक्ष[11]मो(प्रोक्तमाः)वेणकं बुधैः ॥ १८८ ॥
[12]तत्र ध्यन्तं तु सप्ताङ्गं [13]त्र्यन्तं द्वादशकं त[14]था ।
[15]पादः संधिर्माषघातो[16]षजं ( वज्र ? ) संपिष्टकं तथा ॥ १८९ ॥
[17]एककं चतुरस्रं वाप्युपवर्तनमेव च ।
[18]उत(प?)पातः प्रवेणी च ध्यङ्गं संहरणं तथा ॥ १९० ॥
अङ्गानि द्वादशाङ्गस्य स्मृतान्यो(न्याः)वेणकस्[19]य च ।
[20]संपिष्टकोपपाताभ्यां प्रवेणी[21]भ्यां विवर्जितम् ॥ १९१ ॥
उपवर्तन[22]हं(ही?)नं च सप्ताङ्गपरिवर्जितम् ।
[23]नि(वि?)वर्तनं तु सप्ताङ्गो ( ङ्ग ? ) तुल्यवर्णपदं स्मृतम् ॥ १९२ ॥

---

१. 'ज्ञेयानि सप्त गीतानि मन्द्रकोऽथोपरान्ततः ।' इति का. २. 'प्रतर्यो(?) वेणको विद्याद् ह्युल्लोत्यु(?)श्चोत्तरं तथा ।' इति का. ३. 'मन्द्रकं' का. ४. 'तत्तु' का. ५. 'वापि' का. ६. 'चापरान्तके' का. ७. 'रोविन्दकस्तु' का. ८. 'समवर्णेन एकैकस्तत्र कीर्तितः ।' का. ९. 'चापि' का. १०. 'तस्य त्वादौ' का. ११. 'प्रोक्तमावेणकं बुधैः' का. १२. 'तत्र ध्यङ्गं तु' का. १३. 'त्र्यङ्गं' का. १४. 'स्मृतम्' का. १५. 'प्रस्तारसंधिमाषोस्थो वज्रसंविष्टकं तथा ।' का. १६. 'सज्जं' ख. १७. 'शीर्षकं चतुरस्रं च तथा चैवोपवर्तनम् ।' का. १८. 'उपपातः' का. १९. '°न्यावेणकस्य तु' का. २०. 'संविष्टको' का. २१. 'प्रवेण्या परिवर्जितम्' का. २२. 'उपवर्तविहीनं च सप्ताङ्गमपि कीर्तितम् ।' का. २३. 'विवर्तनं तु सप्ताङ्गं' का.

अन्त(न?)यो[1]द्वादशाङ्गे तु तथान्यै[2]पदमिष्यते ।
उल्लोप्यकेऽपि चाङ्गानामेष एव विधिः स्मृतः ॥ १९३ ॥
अवगाढ[3]प्रवृत्तं च महाजनिकमेव च ।
आंगात्त(?)[4]स्यात्तथा व्यङ्गो महाजनिकवर्जितः ॥ १९४ ॥
स्थिति(त?)प्रवृत्तं[5] संयोगादेकाङ्गो (चा?) या(ङ्गं?)पि कीर्त्यते ।
एकाङ्गे संविधातव्यं महाजनिकमेव च ॥ १९५ ॥
व्यङ्गं[6] चितप्रवृत्तं वा चैकाङ्गं वापि कीर्तितम् ।
व्यङ्गे[7] व्याससमासाभ्यां ध्रुवाधातुविधिः स्मृतः ॥ १९६ ॥
स्थितं प्रवृत्तं च तथा महाजनिकमेव च ।
त्र्यङ्गोत्त(ङ्गस्तु) स्यादथ व्यङ्गो महाजनिकवर्जितः ॥ १९७ ॥
एकाङ्गोऽपि विधातव्यो महाजनिकसंयुतः ।
एवं व्याससमासाभ्यां बहुधाङ्गविधिः स्मृतः ॥ १९८ ॥
चतुरस्रस्तथा त्र्यस्रो विस्र(?)चान्तः प्रकीर्तितः ।
उ(आ?)वेणकस्य[8] संहारो व्यङ्ग ऐकाङ्ग[9] एव च ॥ १९९ ॥
नांदौ[10] न मध्ये संहारे नित्यं चैव प्रयुज्यते ।
एककं(को?)विवधा[11]यापि (विविधो वापि?) कार्यो ह्यन्ते प्रयोक्तृभिः ॥
उल्लोप्यकं षडवरं शत्यं[12] चैव ( विंशत्यङ्ग ? ) परं स्मृतम् ।
तच्च[13] संहरणे कार्यं सु(मु?)खप्रतिमुखान्वितम् ॥ २०१ ॥
वैहा[14]यसकसंयुक्तं तेनापि च विवर्जितम् ।
त्रिष्वङ्गेष्ववरं ज्ञेयं परं स्याद्द्वादशस्वपि ॥ २०२ ॥

१. 'अनयो' का. २. 'यथान्यपद°' का. ३. 'सितं प्रवृत्तं च' का. ४. 'त्र्यङ्गान्तरः स्यान्त(त्त?)था ह्यङ्गो' का. ५. 'स्थितप्रवृत्तं' ख. 'स्थितप्रवृत्तसंयोगादेकाङ्गं चापि कीर्त्यते ।' का. ६. 'ह्यङ्गं सितं प्रवृत्तं वाप्येककाङ्गं प्रकीर्तितम् ।' का. ७. 'व्यङ्गे व्याससमासाभ्याम्' इत्यारभ्य 'चतुरस्रस्तथा त्र्यस्रो विस्र(?)चान्तः प्रकीर्तितः ।' इत्यन्तः पाठः का. पुस्तके नास्ति । ८. 'आवेणकस्य' का. ९. 'व्यङ्गेऽप्येकाङ्ग एव वा' का. १०. 'एतदर्धं' का. पुस्तके नास्ति । ११. 'एकैकोविवविधोवापि कार्योऽप्यङ्गैर्बुधैः सदा' का. १२. 'विंशत्यङ्गपरं स्मृतम्' का. १३. 'तत्र संहरणं ज्ञेयं मुखप्रतिमुखान्वितम् ।' का. १४. 'पद्यमेतत् का. पुस्तके नास्ति ।

एकाद्यङ्गवरं (ङ्गं षट्परं?) ज्ञेयं वैहायस(सि?)कमेव च ।
अस्य चाङ्गत्रयेऽतीते प्रयोगमुपपादयेत् ॥ २०३ ॥
उल्लोप्यकोत्तराभ्यां तु मुखप्रतिमुखे स्मृते ।
ततोऽङ्गानां समासो वा विस्तारो वा विधीयते ॥ २०४ ॥
मुखप्रतिमुखे चैवं ज्ञेये विविधसंज्ञिते ।
वृत्तप्रतिमुखं (खे?) च स्यादन्या या(दनयो?)स्तु समासतः ॥२०५॥
उल्लोप्यके तथा शाखा सोत्तरो (रे?) सांपरान्तके ।
प्रतिशाख्या (खा?) तथा चैव सवर्णान्यपदा[: ?] स्मृताः ॥ २०६ ॥
उत्तरं द्वादशपरं षडङ्गावरमिष्यते ।
आकारपा(वा?)दहीनेन तुल्यं रोविन्दकेन तु ॥ २०७ ॥
अन्ते चाथ विशेषेण स्थाप्यमस्य हि शीर्षकम् ।
एवमङ्गविधिः कार्यः सप्तरूपे प्रयोक्तृभिः ॥ २०८ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतांना(नां?)यां सु(वस्तु?)कल्पनम् ।
गुरुवेदाष्टकं कृत्वा न्यसेल्लघ्वष्टकं पुनः ॥ २०९ ॥
तत्रोपवहनं कार्यं प्रथमे तु गुरुद्वये ।
गुर्वक्षरे तृतीये तु ततः स्यात्प्रत्युपोहनम् ॥ २१० ॥
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चमे ।
षष्ठसप्तमयोस्तालः शम्या गुर्वक्षरेऽष्टमे ॥ २११ ॥

---

१. 'एकाङ्गं षट्परं ज्ञेयं वैदायसिकमेव च ।' का. २. 'एतदर्धमपि का. पुस्तके नास्ति । ३. 'उल्लाप्यको°' का. ४. 'मुखप्रतिमुखं स्मृतम्' का. ५. 'वापि' का. ६. 'विवधसंज्ञिते' का. ७. 'वृत्तं प्रतिमुखे च स्यात्' का. ८. 'तु शाखाख्यं' का. ९. 'सोत्तरे सांपरान्तरे' का. १०. 'प्रतिशाखा तथा चैषां समवर्णपदा स्मृता ।' का. ११. 'आकारवादहीनेन सह' का. १२. 'चास्याविशेषेण स्थाप्ये मध्ये च शीर्षकम् ।' का. १३. 'गीतानां वस्तुकल्पनम्' का. १४. 'का. पुस्तकेऽत्र—

'कलाः षोडश विज्ञेया मात्राः सर्वेष्ववस्तुषु ।
तस्याश्चैव चतुर्भागः पादभागः प्रकीर्तितः ॥' इत्यधिकम् ।

१५. 'आदौ गुर्वष्टकं कृत्वा' का. १६. 'तथा' का.

[1]ततोऽर्धकलिकान्पातान्कुर्याल्लघ्वक्षरेषु [2]च ।
गुर्वक्षरे तालगीत[3]पातास्तु कलिकाः स्मृताः ॥ २१२ ॥
शम्यातालौ तालशम्ये [4]तेषु कुर्यात्क्रमेण तु ।
तालं शम्यां च तालं च संनिपातं तथैव च ॥ २१३ ॥
एवमेककलो ज्ञेयः [5]कलायोगस्तु भ(म?)द्रके ।
गुरुविश्लेषपादेन द्विकलं परिकीर्ति[6]तम् ॥ २१४ ॥
[7]विशेषेण कलास्तत्र पूर्वं पूर्वं निवेशयेत् ।
[8]द्विकले भ(म?)द्रके चैव त्रिकलं स्यादुपोहनम् ॥ २१५ ॥
[9]कलिकं द्विकलं वापि न वा स्यात्प्रत्युपोहनम् ।
द्विकलैर्गुर्वक्षरकृतैः [10]पादभानै(गै?)र्यथाक्रमम् ॥ २१६ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तुसंज्ञितम् ।
त्रिवस्तु द्विकलं ज्ञेयं [11]भवेत्पातो विधीयते ॥ २१७ ॥
[12]गुर्वक्षरेषु ये पाताः शम्यातालादयः स्मृताः ।
[13]त एव पादभागेषु द्विकलेष्वत्र योजयेत् ॥ २१८ ॥
अष्टमी षोडशी शम्या दशमी च यथाक्रमम् ।
चतुर्दश्यां कलायां तु [14]तान्वेदा ( तालं न ? ) द्वादशीयुतम् ॥२१९॥
[15]लघ्वष्टके (क्षरे?) पात(द?)विधिर्यथापूर्वं प्रकीर्ति[16]तैः ।
वस्तुत्रयेऽपि द्विकले [17]एवं पातान्प्रयोजयेत् ।
शीर्षकं चैव कर्तव्यं षट्कलं पञ्चपाणिना ॥ २२० ॥

---

१. 'ततोऽर्धकलितान्' का. २. 'तु' का. ३. 'तालगीते पादास्तु कलिताः' का. ४. 'द्वे वाञ्च ( तु ? ) पूर्वशः' का. 'इतोऽग्रे—'शीर्षकं चास्य कर्तव्यं बुधैश्चापपुटेन तु ।' इत्यर्धमधिकं का. पुस्तके. ५. 'तालयोगस्तु मन्द्रके' का. ६. 'परिचक्षते' का. ७. 'विश्लेषणे कलाश्चात्र यथा पूर्वं निवेशयेत् ।' का. ८. 'द्विकले मन्द्रके चैव' का. ९. 'कलिका द्विकलं चापि भवेच्च प्रत्युपोहनम् ।' का. १०. 'पादभागैः' का. ११. 'पातावधिस्त्वयम्' ख. 'पादे पादविधिस्त्वयम्' का. १२. 'गुर्वक्षरे' का. १३. 'तानेव पादभागेषु द्विकलोऽथ प्रयोजयेत्' का. १४. 'तान्वेदा' क. 'तालं न' का. १५. 'लघ्वक्षरे पादविधिः' का. १६. 'प्रकीर्तितम्' का. १७. 'चैवं' का.

[१]ऋडंकंडं शैलेन्द्रराजसंस्थितमीशं शान्तं शिवं पन्नगेन्द्रपरिबद्धजटं मुनिगणनमितं ध्यानाभिरतं ज्ञानमयं मदनाङ्गहरं विभुं प्रभुं शरणगतोऽहं दैत्यैर्नागैः संस्तुतमीशं त्वां वेदमयं त्वां कर्तारं त्वां भुवनपतिं सर्वलोकनमस्कृतं ऋग्यजुःपति(ठि?)तं गङ्गाधरं शूलधरं भुजगेन्द्रधरं प्रणतोऽस्मि शिवं मृगराजचर्मपरिबद्धतनुं विपुलगतिं वृषभगतिं ज्वलनशिखिसदृशकपिलजटं तमहं नमामि शिवं शिरसा ।

समाप्तं द्विकलमद्रकम् ॥

देवं विमलं प्रणतार्तिहरं मायाधारं मायारूपं जटिलं नमामि शिवं शिरसा ।

शीर्षकं षड्कलं समाप्तम् । द्विकलमद्रकम् (?) ।

चतुष्कलं प्रवक्ष्यामि यथावद्द्विजसत्तमाः ।
चतुष्कलैः पादभाजै(गै?)[२]र्यथापूर्वमुदाहृतैः ॥ २२१ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं[३] वस्तुसंज्ञितम् ।
पातांश्चैव प्रवक्ष्यामि पादभागै[४]र्यथाक्रमम् ॥ २२२ ॥
चतुर्थे पञ्चमेत्ये(चै?)व (न्त्ये च?) शम्या कार्या तथाष्टके[५] ।
दशमैकादशेम्प [शम्या ?] द्वितीया नवमे स्मृता ॥ २२३ ॥
षष्ठे तु[६] सप्तमे ताला[७] अन्ते च नवमस्य[८] हि ।
दशमैकादशे[९] चैव द्वितीयः समुदाहृतः ॥ २२४ ॥
आद्यं[१०] तु द्वादशे प्रोक्तं[११] संनिपातोऽवसानतः ।
एवं पातविधानं स्यात्सर्ववस्तु[१२] प्रयोजयेत् ॥ २२५ ॥
[१३]द्विर्भावाद्विकलस्यैवं विज्ञेयं च चतुष्कलम् ।
सप्तमे लघुनि त्वन्त्यो द्विर्भावोऽस्मिन्विधीयते ॥ २२६ ॥

---

१. 'ऋंडुं ऋंडुं' ख. एष गद्यभागः का. पुस्तके नास्ति । २. 'पादभागैः' का. ३. 'त्रिमात्रः स तु संज्ञितः' का. ४. 'पादभागे' का. ५. '°ष्टमे तथा' का. ६. 'षष्ठे च' का. ७. 'ताल' का. ८. 'नवमेऽस्य हि' का. ९. 'नवमैकादशे चैव' का. १०. 'आद्ये तु' का. ११. 'द्वादशं' का. १२. 'सर्वं वस्तु' का. १३. का-पुस्तके तु 'द्विर्भावाद्विकलस्यैवं' इत्यादि श्लोकचतुष्टयस्थाने—

चतुष्कलोऽत्र विहितः कलाष्टकमुपोहनम् ।
एका द्वे च चतुष्कश्च तथा स्यात्प्रत्युपोहनम् ॥ २२७ ॥
यथाक्षरस्य कर्तव्यं मद्रकस्य तु शीर्षकम् ।
चतुष्कलः पञ्चपाणिर्द्विकले द्विकलः स्मृतः ॥ २२८ ॥
चतुष्कलस्तु कर्तव्यो मद्रके तु चतुष्कले ।
[1]त्रिवस्तु त्रिप्रमाणं तु अस्रतालसमुद्भवम् ॥ २२९ ॥
इत्युक्तं [2]मद्रकं पातैस्त्रयोदशभिरन्वितम् ।
गुर्वक्षराणि चत्वारि चत्वारि स्युर्लघूनि च ॥ २३० ॥
[3]तृतीये च चतुर्थे च शम्यातालौ लघूष्व(न्यः?)पि ।
तालं शम्यां च ताले च संनिपातं च योजयेत् ॥ २३१ ॥

---

'प्रथमे वस्तुके ह्यादौ कलाष्टकमुपोहनम् ।
प्रत्युपोहनमित्युक्तं द्वितीयं द्विकलं भवेत् ॥
तृतीयं त्रिकलं ज्ञेयं चतुर्थे तु चतुष्कलम् ।
अस्यान्ते शीर्षकं कार्यं षट् पिता पुत्रकेन तु ॥
द्विकले तु यथापातं पञ्चपाणिचतुष्टये ।
द्विके(ती ? )यकं तृतीये च चतुर्थे च यथाक्रमम् ॥
परिवर्तसमाप्तिस्तु चतुर्थे सा विधीयते ।
मन्द्रांशोपोहनं वस्तु प्रथमं च द्वितीयकम् ॥

एषा श्लोकचतुष्टयी वर्तते ।

१. 'चतुर्थस्तु त्रिप्रमाणं त्र्यस्रतालसमुद्भवम् ।' इति का. २. 'मन्द्रकम्' का. ३. का-पुस्तके तु 'तृतीये च चतुर्थे च' इत्यादि 'वस्तुशाखाख्यमित्येतद्गदितं त्वपरान्तकम् ॥ २४१ ॥' इत्यन्तपाठस्थाने—

'द्वितीये गुरुके शम्या तृतीये ताल एव च ।
लघ्वक्षरेऽष्टकमितान् पातानेतान् प्रयोजयेत् ॥
तालः शम्या च तालश्च सन्निपातोऽन्त्य एव च।
त्र्यस्रतालसमुद्भूतं विज्ञेयमवरान्तरम् ।
गुर्वक्षराणि विश्लिष्य विकलं संप्रयोजयेत् ॥
पादभागैस्तथा षड्भिः द्विकलं तु चतुष्कलम् ।
.........शम्यातालषष्ठो यथाक्रमम् ॥

लघ्वक्षरैककलिकैः पातैः सम्यक्प्रयोजयेत् ।
यथाक्षरं वर्धेष्वेतद्विज्ञेयं चापरान्तकम् ॥ २३२ ॥
आदौ कलोपवहनं विश्लेषाद्विगुणं भवेत् ।
द्विकले कलिकं ज्ञेयं द्विकलं चाप्युपोहनम् ॥ २३३ ॥
कलिकं कलिकं चेष्टं तथैव प्रत्युपोहनम् ।
एतदेव द्विगुणितं विज्ञेयं तु चतुष्कलम् ॥ २३४ ॥
लघ्वक्षरे तृतीये तु द्विर्भावेऽन्त्या कला स्मृता ।
अस्रतालसमुद्भूतं पातैः षड्भिर्विभूषितम् ॥ २३५ ॥
वस्तुशाखाख्यमित्येतद्गदितं त्वपरान्तकम् ।
यथा शाखा तथैवास्य प्रतिशाखा विधीयते ॥ २३६ ॥
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता ।
शिरश्चैककलेनापि[1] कर्तव्यं पञ्चपाणिना ॥ २३७ ॥
वृत्तौ[2] निवृत्तयोगश्च गते वस्तुचतुष्टये ।
शाखायां प्रतिशाखायां विशेषः पश्चिमे त्वयम् ॥ २३८ ॥
षट्कलापातसंयुक्ते तालिके तु ततः स्मृतः ।
तथैककलयुक्तेऽस्ति विधिवत्पञ्चपाणिना ॥ २३९ ॥
यथाक्षरेणैव[3] भवेदनयोरुपवर्तनम् ।
उपोहनं तु वस्त्वर्धं[4] द्विकलं प्रत्युपोहनम् ॥ २४० ॥

---

पूर्ववत् पातविन्यासः षष्ठपञ्चमयोः स्मृतः ।
आवापक्षेप···युतं पातैरेभिश्चतुष्कलम् ॥
चतुष्कलैः पादभागैः षड्भिस्तु समलंकृतम् ।
वस्तुसंख्यश्च षट्पञ्चसप्तमान् संप्रयोजयेत् ॥
द्वितीये पञ्चमेऽन्त्ये च द्वे शम्ये समुदाहृते ।
तृतीये तु भवेदन्त्यं द्वितीये पञ्चमे स्मृतः ॥
आदौ षष्ठे तु तालः स्यात् सन्निपातस्ततोऽन्तिमः ।
पूर्ववत्तु समुद्दिष्टाः पाता ह्येते चतुष्कले ।
··············योगो गदितः स्वापरान्तके ॥' एतच्छ्लोकाष्टकमास्ते ।

१. '°कलेनापि' का. २. 'वृत्तौ निवृत्तयोगश्च' इत्यादि पद्यद्वयं का-पुस्तके नास्ति ।
३. 'यथाक्षरे तु' का. ४. 'वस्त्वर्धं' का.

दक्षिणे तु तथा वृत्तौ चतुष्कलमपीष्यते[1]।
उल्लोप्यकं तु द्विगुरु द्विलध्वन्ते गुरुर्यथा[2] ॥ २४१ ॥
शम्यातालौ द्विरभ्यस्तौ संनिपातोऽन्त्य एव च।
प्रत्यक्षरकृतैः पातैः पञ्चभिः समलंकृतम् ॥ २४२ ॥
चतुरस्र[3](स्रं ?)स्तु (सः ?)विच्छेदमेवं ज्ञेयं यथाक्षरम्।
पूर्वोक्तेन विधानेन द्विचतुःकलमिष्यते[4] ॥ २४३ ॥
अस्य[5] चाङ्गत्रये गीते वैहायस(सि?)कमिष्यते।
तदेकाङ्गपरं ज्ञेयं द्वादशाङ्गपरं तथा ॥ २४४ ॥
प्रमाणं द्वादशकलं तथापातमथापि[6] च।
अस्य तु द्विकला शम्या तालश्च द्विकलस्ततः[7] ॥ २४५ ॥
द्विकलाश्च[8] (च ?) पुनः शम्या तालश्चैककलः[9] स्मृतः।
ततः शम्या[10] ततस्तालः संनिपातस्ततः[11] परम् ॥ २४६ ॥
शाखे यन्त्रशिखा[12] (प्रतिशाखे ?)तु (स्या ?)नित्यमन्यपदा स्मृता।
यदा[13] ह्यस्य भवेदन्तस्तदन्ताहरणं बुधैः ॥ २४७ ॥
यथाक्षरेण[14] नियमात्संहार्यं पञ्चपाणिना।
स्वतालेनात[15](न्त ?)हीनस्य संहारः (र्यः ?) परिकीर्त्यते ॥ २४८ ॥
द्विप्रकारनिवृत्तश्च त्र्यंशो[16](ङ्गो ?)ऽथ त्रिविधस्तथा।
त्र्यस्रश्च चतुरस्रश्च मिश्रश्चापि प्रकीर्तितः[17] ॥ २४९ ॥

---

१. 'दक्षिणे तु तथा वृत्तौ' इत्यादि पद्यार्धस्थाने का-पुस्तके—
'द्विकलं दक्षिणे कार्यं वृत्तौ चैव चतुष्कलम्।
न चात्रोपोहनं कार्यं शेषाणां तु कदाचन ॥
एवं चतुष्कले योगो मया प्रोक्तो परान्तके।' इत्येतत्सार्धमेकं पद्यम्।
२. 'स्मृतम्' का. ३. 'चतुरस्रं समश्चेदं वस्तु ज्ञेयं यथाक्षरम्' का. ४. 'द्विचतुष्कल०' का. ५. 'अन्ते चाङ्गत्रयातीते' का. ६. 'सप्तपातमथापि च' का. ७. 'स्मृतः' का. ८. 'द्विकला च' का. ९. 'द्विकलः स्मृतः' का. १०. 'शाम्या (?)' का. ११. '०मतः परम्' का. १२. 'शाखेयं प्रतिशाखे तु' का. १३. 'पदालस्य भवेदन्त्ये' का. १४. 'यथाक्षरेण कर्तव्यं संहार्यः पञ्चपाणिना।' १५. 'स्वतालेनान्तहीनस्य संहार्यः परिवर्त्यते।' का. १६. 'त्र्यङ्गोऽन्तस्त्रिविधः स्मृतः' का. १७. 'मिश्रश्च द्विविधः स्मृतः' का.

स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च[1] ।
स्यात्पञ्चपाणितालेन तदन्ताहरणं यदा[2] ॥ २५० ॥
तदा[3] स्थितं भवेद्युग्मं तस्य पातविधिस्त्वयम्[4] ।
शम्यापि द्विकला कार्या तालो[5]ऽपि द्विकलः स्मृतः ॥ २५१ ॥
चतुष्कलः संनिपातः प्रवृत्तमत इष्यते ।
अस्य[6] तु द्विकला शम्या तथैवैककला[7] पुनः ॥ २५२ ॥
चञ्चत्पुटश्च[8] तालादिः संनिपातस्ततः परम् ।
स्थितं[9] तालेन कर्तव्यं महाजनिकमस्य तु ॥ २५३ ॥
निवृत्ततालः कर्तव्यः प्र(नि ?)वृत्तस्यापि[10] तत्त्वतः ।
अत्र[11] तालविधिः श्रेष्ठः प्रायः समुपवर्तनम् ॥ २५४ ॥
आप्तमु(दावु ?)द्धटे(ट्ट?)कः[12] कार्यः परिवर्तक एव च ।
युग्मे हि[13] मिश्रतालत्वाद्युग्मे ह्यन्तः[14] प्रयुज्यते ॥ २५५ ॥
विव(वि?)धैककसंयुक्तपूर्वं[15] पश्चाद्विधः स्मृतः ।
यथावदन्ततालोऽयं युग्मो मिश्रश्च[16] कीर्तितः ॥ २५६ ॥
अतः परं प्रवक्ष्यामि त्र्यस्रतालविधिं प्रति[17] ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥ २५७ ॥
त्रिकलः संनिपातश्च प्रवृत्तं वाप्यतः[18] परम्[19] ।
प्रवृत्तमस्य[20] कर्तव्यं यथावत्परिवर्तनम् ॥ २५८ ॥

---

१. 'स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।' का. २. 'तथा' का. ३. 'तथा-स्थितं' का. ४. 'प्रथमस्य विधिस्त्वयम्' का. ५. 'तालश्च' का. ६. 'तस्यापि' का. ७. 'तालश्चैककलः पुनः' का. ८. 'चञ्चत्पुटस्य' का. ९. 'स्थिततालो न कर्तव्यो' का. १०. 'निवृत्तस्यापि' का. ११. 'स्थितमाहाजनिकयोः प्रायः शस्त्रप्रवर्तनम् ।' का. १२. 'आदावुद्घट्टकः का. १३. 'तु' का. १४. 'युग्मोऽप्यन्तः प्रयुज्यते' का. १५. 'विविधैकैकसंयुक्तः सर्वश्चान्तविधिः स्मृतः ।' का. १६. 'युग्मे मिश्रे च' का. १७. 'त्र्यस्रमन्तविधिं प्रति' का. १८. 'प्रवृत्तश्चा°' का. १९. इतोऽग्रे का-पुस्तके
'अतः परं प्रवक्ष्यामि त्र्यस्रमन्तविधिं पुनः ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥' इत्येष श्लोकोऽधिकः ।
२०. 'प्रवृत्तमत्र कर्तव्यं' का.

यथा[1] क(क्ष?)रप्रवृत्तेन विधिर्वि[2]त्पञ्चपाणिना ।
आस्यो(?)पि स्थिततालेन महाजनिकमिष्यते ॥ २५९ ॥
निवृत्त[3]तालः कर्तव्यस्तथात्र विनिवृत्तिमान् ।
युग्मौ[4]जमिश्रतालत्वान्मिश्रोऽप्यन्तःप्रवर्तनम् ॥ २६० ॥
विवधै[5]ककसंयुक्तः सर्वश्चान्तविधेः स्मृतः ।
द्व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ॥ २६१ ॥
तत्र युग्मं भवेद्द्व्यङ्गं[6] त्र्य[स्रमेका?]ङ्गमेव च ।
प्रवृत्तमपि विज्ञेयं द्व्यङ्गमेकाङ्गमेव वा ॥ २६२ ॥
महाजनिकमेकाङ्गं द्व्यङ्गं संहरणं भवेत्[7] ।
स्थितादिकः प्रवृत्ताङ्ग एवमन्तर्विधं[8] बुधैः ॥ २६३ ॥
उल्लोप्यके सदा योज्यं[9] ऊहापोहविशारदैः[10] ।
[11]प्रकरीवस्तुषपात्रं(?) पाताश्चैकान्नविंशतिः ॥ २६४ ॥
वस्तुप्रमाणं कर्तव्यं तथैव च चतुष्कलम् ।
आद्यमात्राद्वयस्यान्तः शम्यातालान्वितो भवेत् ॥ २६५ ॥
मात्रात्रयस्य चान्यस्यै[12] शम्यैका तु ततः स्मृता ।
चतुर्थ्यां द्वादशस्तालः पञ्चम्यां चाष्टमः स्मृतः ॥ २६६ ॥

---

१. 'यथाक्षरप्रयुक्तेन समासात्' का. २. 'अन्यापि' का. ३. 'प्रवृत्तः कालः कर्तव्यस्तथास्यान्तनिवर्तिते' का. ४-५. एषार्धद्वयी का-पुस्तके नास्ति । ६. 'त्र्यस्रमेकाङ्गःमिष्यते' का. ७. 'स्मृतम्' का. ८. '?प्रवृत्तान्तमेवमन्तं विदुर्बुधाः ।' का. ९. 'योज्यम्' का. १०. 'इतोऽग्रे का-पुस्तके 'प्रकरीवस्तुषपात्रं (?)' इत्यादि सार्धपद्यस्य स्थाने—

'यस्तु प्रयोगः कर्तव्यः प्रकुर्याद् द्विचतुष्कलम् ।
न(नि?)यताक्षरयोगोऽत्र न चात्र द्विकलो भवेत् ॥
आद्यमात्रात्रयस्यान्ते शम्यातालौ प्रकीर्तितौ ।
षण्मात्रं पातसंयुक्तं वस्तु कार्यं यथाक्रमम् ॥
उपोहनं तु वस्त्वर्धे प्रथमे च द्विजोत्तमाः ।
शम्या अस्य तु मात्रा स्याद् द्वितीया तालसंयुता ॥' इति श्लोकत्रयी वर्तते ।

११. 'षण्मात्रा' इति भवेत् का. १२. 'चान्त्या स्यात् शम्यैका च पुनस्तथा ।' का.

षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत् ।
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ॥ २६७ ॥
शम्या तालश्च [तालश्च ?]शम्या तालस्तथैव च ।
शम्याताल[?]संनिपात इति वस्तु प्रकीर्तितम् ॥ २६८ ॥
यदा त्वर्धचतुर्थानि वस्तूनि प्रकरी भवेत् ।
पश्चिमार्धं तदस्यैव तदर्धं प्राग्निवेशयेत् ॥ २६९ ॥
कनिष्ठासारितेनास्य कार्यं संहरणं ततः ।
पादः पूर्वसमः कार्यस्त्वपरान्तकशाखया ॥ २७० ॥
उ(आ?)वेणके (को? )द्वितीयोऽपि तस्यैव प्रतिशाखया ।
अनित्यः शीर्षको(कः? ) तालो माषघातस्ततः परम् ॥ २७१ ॥
माषघातो द्वादशकलस्तस्य पातविधिः स्व(स्त्व?)यम् ।
कर्तव्या द्विकला शम्या तालो द्विकल एव च ॥ २७२ ॥
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ।
ततश्चैककलस्तालसंनिपातः कलात्रये ॥ २७३ ॥
प्रायेण माषघातश्च विवि(वि ?)धाङ्गः प्रकीर्तितः ।
संनिपातश्च पश्चार्धः कदाचिदुपवर्तनम् ॥ २७४ ॥
तस्य स्यात्कलिकेनैव तच्चोधं (?) पञ्चपाणिना ।
संधिर्यथाक्षरेणैव कर्तव्यः पञ्चपाणिना ॥ २७५ ॥
एकक विव(वि? )धो वापि तस्याङ्गं समुदाहृतम् ।
अन्यस्य चतुरस्रस्य प्रवृत्तो(त्तौ?) या(यो?) विधिः स्मृतः ॥ २७६ ॥

१. 'शम्या तालश्च तालश्च' का. २. 'शम्यातालः' का. ३. 'प्रकीर्त्यते' का. ४. 'पश्चिमार्धपदस्यैतत्तदार्धं' का. ५. 'तालः संवरणे गतः' का. ६. 'आवेणको द्वितीयस्य तस्य च प्रतिशाखया ।' का. ७. 'स एवं पातविन्यासो माषघातमतः परम् ।' का. ८. 'षड्पातो' का. ९. 'गम्या च द्विकला पुनः' का. १०. 'एतदर्धं का-पुस्तके नास्ति । ११. 'तालः' का. १२. '°स्तु' का. १३. 'विविधाङ्गः' का. १४. 'संधिश्चैव हि तस्यान्ते' का. १५. एतदर्धं का-पुस्तके नास्ति । १६. 'यथाक्षरेणेव' का. १७. 'एकैकं विविधो वापि' का. १८. 'तस्याङ्गे समुदाहृते' का. १९. 'अन्तस्य' का. २०. 'प्रवृत्ते' का.

[1]विव(वि?)धाङ्गेन तेनैव चतुरस्रकमिष्यते ।
संधिवद्व[2]ज्रतालश्च द्विधा संपिष्टकं [3]स्मृतम् ॥ २७७ ॥
[4]सप्ताङ्गं द्वादशकलं द्वादशा[5]ङ्गे तथैव च ।
निष्काममादितः कृत्वा शम्यास्तिस्रः प्रयोजयेत् ॥ २७८ ॥
[6]तालत्रयं ततश्चैव शम्याता[7]लौ ततः परम् ।
शम्यातालौ ततः कार्यौ संनिपातोऽन्त्य एव च ॥ २७९ ॥
तु(आ?)वेणके [8]तु सप्ताङ्गे संपिष्ट[9]कमिदं स्मृतम् ।
द्विशम्यातालयोगेन द्वादशाङ्गेऽपि चेष्यते ॥ २८० ॥
पाता नवैकाद[10]शं वा संपिष्ट[11]कमुदाहृतम् ।
वज्र[12]वत्सं(त्सं?)प्रयोक्तव्यमुपवर्तनमेव च ॥ २८१ ॥
युक्ता विव(वि?)धवृत्ता[13]भ्यां प्रवेणी द्विवि[14]धा स्मृता ।
पञ्चपाणिः प्रकर्त[15]व्यौ (व्यः?) प्रवेण्या तु यथाक्ष[16]रा ॥ २८२ ॥
द्विकलो वापि मिश्रो वा प्रयोगोऽङ्गवशानुगः ।
[17]अन्ते वास्याः प्रकर्तव्यः कदाचिदुपवर्तनम् ॥ २८३ ॥
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् ।
[18]द्वितीयपाततालेन ह्यपपातश्च कीर्त्यते ॥ २८४ ॥
वज्रतालेन कर्तव्यं [19]क्रमं संहरणस्य तु ।
रोविन्दके तु षण्मात्राः [20]पाताश्चैकान्नविंशतिः ॥ २८५ ॥

---

१. 'विधिनानेन' का. २. 'वज्रकालस्य' का. ३. 'संविष्टकं' का. ४. 'सप्ताङ्गैः' का. ५. 'द्वादशाङ्गैर्दशैव तु' का. ६. 'तालस्तत्र ततश्चैव' का. ७. 'शम्यातालः' का. ८. 'आवेणके' का. ९. 'संविष्टकमिति स्मृतम्' का. १०. 'नवैकदश वा' का. ११. 'संविष्टक०' का. १२. 'वज्रवत्संप्रयोक्तव्यं' का. १३. 'विविधवृत्ताभ्यां' का. १४. 'विविधा' का. १५. 'प्रकर्तव्यः' का. १६. 'यथाक्षरम्' का. १७. 'अङ्गं चास्य प्रकर्तव्यं' का. १८. 'द्वितीया तालपातेन' का. १९. 'अन्ताहरणमस्य तु' का. २०. 'पादभागैश्चतुष्कलैः' का.

[1]अर्धा(र्धः?)तीते (च?) मात्राणां पञ्चानां पात इष्यते ।
[2]तालः शम्यार्धतालश्च शम्यातालस्तथैव च ॥ २८६ ॥[3]
पञ्चानामपि मात्राणां विधिरेष यथाक्रमम् ।
[4]चतुर्दशोऽपि पञ्चम्या [5]मात्रायास्ताल इष्यते ॥ २८७ ॥
चतुष्कलां(ला?) तु [6]या तुल्या [7]षष्ठी मद्रकमात्रया ।
[8]इति पादस्तथाष्टौ च कलापादादुपोहनम् ॥ २८८ ॥
ततश्चैव [9]प्रयोक्तव्यं द्विकलं प्रत्युपोहनम् ।
[10]धांतश्चेत्संनिपातश्च विव(वि?)धैकप्रयोजिताः ॥ २८९ ॥
वर्णानुकर्षोऽष्टकलः ख[11]ल्पः प्रस्तार इष्यते ।
[12]तुल्यवर्णोपनहनो द्वितीयः पाद इष्यते ॥ २९० ॥
शरीरताल(:?)[13]कर्तव्यः [14]प्रकारोऽपि विशेषतः ।
द्विकलेनैव कर्तव्यो विशेषात्पञ्चपाणिना ॥ २९१ ॥
कला द्वादश निर्दिष्टं प्रमाणं चास्य तत्त्वतः ।
रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम् ॥ २९२ ॥
[15]विव(वि?)धं वापि वृत्तं [ वा?] तस्यादौ परिकीर्तिता ।
आकार[16]वृत्तपरुषोऽत्र[17]..................... ॥ २९३ ॥

---

१. 'अर्धेऽन्ते चैवमात्राणां' का. २. 'तालशम्या च तालश्च' का. ३. इतोऽग्रे का. पुस्तके—

'अन्ते शम्या तथा चैव सर्वासामपि कीर्तिता ।' इत्यधिकम् ।

४. 'चतुर्दशस्तु पञ्चम्या' का. ५. 'मात्रायां' का. ६. 'चतुष्कला तु तत्तुल्या' का. ७. 'षष्ठमन्द्रकमात्रया' का. ८. 'तथा चाष्टौ कलाः कार्याः प्रथमायामुपोहनम् ।' का. ९. 'प्रयोक्तव्यः द्विकलः' का. १०. 'पाताः स्युः संनिपातान्ताः विविधैकक-योजिताः' का. ११. 'अन्ते' का. १२. 'तुल्यवर्णोपवहनो' का. १३. 'शरीरतालः' का. १४. 'प्रस्तारोऽपि' का. १५. 'विविधो वा प्रवृत्तं वा' का. १६. 'प्राकारवृत्त-मन्यत् स्याच्चतुष्कं त्रिकमेव वा ।' का. १७. 'का-पुस्तके त्वत्र—

'आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा ॥ ३९७ ॥' इत्यारभ्य,
'परिवर्ते तथैवास्य पुंवाक्यं प्राक् समाचरेत्।
त्रिवाक्यं पुरुषश्चास्य चतुर्वाक्याङ्गना स्मृता ॥' ४८९ ॥

इत्यन्ता ९२ श्लोका अधिकास्तेऽप्यत्र द्रष्टव्याः—

'आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा।
तस्योपरि यथेष्टं स्यात् अधस्तादङ्गयोजनम् ॥
अविशेषनिवृत्तं तु शीर्षकं तु प्रयोजयेत्।
यथाक्षरेण तच्चैव कर्तव्यं पञ्चपाणिना ॥
आदावेकैकमन्तस्य प्रवृत्तो नियमो भवेत्।
इति रोविन्दकः प्रोक्तः स्यादुत्तरमतः परम् ॥
उत्तरं संप्रवक्ष्यामि यथाविहितलक्षणम्।
अखेदमुत्तरस्याथ मुखं प्रतिमुखं भवेत् ॥
उल्लाप्यकपदस्यादौ मात्रा चैका चतुष्कला।
रोविन्दकपदाकारगणवर्जः प्रयोजयेत् ॥
शाखा षडङ्गा त्वपरा द्वादशाङ्गा परा स्मृता।
षट्पाता द्वादशकला शाखा ज्ञेया प्रमाणतः ॥
तस्यास्तु द्विकलस्तालः शम्या चैककला भवेत्।
तथा च द्विकलस्तालः शम्या च द्विकला ततः ॥
पुनश्चैककलस्तालः सन्निपातः कलात्रये।
शाखावत् प्रतिशाखा च भवेदन्यपदा तु सा ॥
अविशेषानिवृत्तस्याप्यस्यान्ते नियमो भवेत्।
शीर्षकश्चैव कर्त्तव्यं अस्यान्ते पञ्चपाणिना ॥
पञ्चपाणिविधानेन प्रतिशाखा ततः परम्।
द्विकलः पञ्चपाणिस्तु पूर्वपाकैर्यथाक्रमम् ॥
तालोऽयं दक्षिणे मार्गे सप्तरूपस्य कीर्तितः।
य एव दक्षिणे कालः स वृत्तावपि चेष्यते ॥
चित्रेणैव हि सर्वत्र विशेषो यत्र नोच्यते।
अर्थयोगादेष एव नृत्ततालविधिर्भवेत् ॥
उल्लोप्यकोत्तरमुखे हित्वा युग्मं तथैककम्।
अर्थयोगस्तु तत्काले द्विकलः सम्प्रकीर्त्यते ॥
चतुष्कलः स्याद् द्विकलो द्वितीयश्च तथाक्षरः।
रोविन्दकोल्लोप्यकयोर्मन्द्रकोत्तरयोस्तथा ॥'

शरीरेषु विधिर्ह्येष शेषेषु प्रकृतिर्भवेत् ।
प्रकृतावपि तेषां स्यात् विकलेन चतुष्कलम् ॥
कालेनैव भवेद्वृत्तावर्धयोगश्चतुष्कले ।
वार्त्तश्चतुष्कलो योगो दक्षिणे स्यात् कदाचन ॥
मन्द्रकोल्लोप्यकयोर्मुखोपवहनेषु च ।
यो दक्षिणे तालविधिर्वृत्तौ स समुदाहृतः ॥
चित्रैर्व्यस्ते समस्ते वा तावुभौ परिकीर्त्तितौ ।
शाखानिवृत्तमन्यत्र चित्रेऽत्र त्रयमार्गिकः ।
इति मार्गत्रये ह्येतत् सप्तरूपं प्रकीर्त्तितम् ॥
द्विविधा प्रकृतिश्चास्य कुलकं छेद्यकं तथा ।
एकार्थं कुलकं तत्र पृथक्छेद्यकमिष्यते ॥
निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च ।
त्रिविधं चैव विज्ञेयं सप्तरूपं प्रयोक्तृभिः ॥
बहिर्गीताङ्गशाखाभिर्युक्तं निर्युक्तमिष्यते ।
बहिर्गीतविहीनं तु पदनिर्युक्तमिष्यते ॥
बहिर्गीतावहीनञ्चाप्यनिर्युक्तमिति स्मृतम् ।
इत्येतत्सप्तरूपस्य प्रकृतं द्विविधं स्मृतम् ॥
ब्रह्मोक्तं सप्तरूपं हि समवेताद् विनिःसृतम् ।
दैवताराधनं पुण्यमनन्तं गीतवादितम् ॥
सर्वेषामेवगीतानामन्तेषु च्छन्दकं स्मृतम् ।
चतुरङ्गं ततस्त्र्यङ्गं नवाङ्गं युग्ममेव च ॥
ऋग्गाथापाणिकानां च प्रमाणानां तथैव च ।
अनेनैव विधानेन युग्मौजस्त्वं विभावयेत् ॥
यो गणः पूर्वमुद्दिष्टस्तस्यादौ तु कला भवेत् ।
चतुर्मात्राकृताश्चैव कलाः समवधारयेत् ॥
अष्टाङ्गा वा षडङ्गा वा युग्मौ यौ वा प्रमाणतः ।
इति युक्ते तु कर्त्तव्या आन्तिकी चैव पाणिका ॥
चतुष्पादा तथैकाङ्गा द्व्यङ्गा त्र्यङ्गा विभावयेत् ।
अङ्गैर्व्यस्तैः समस्तैर्वा युग्मौ यौ वा प्रकीर्त्तितौ ॥
तस्य रूपस्य तालोऽयं मया हि परिकीर्त्तितः ।
चतुरस्रा तथा त्र्यस्रा ध्रुवा ज्ञेया प्रयोक्तृभिः ॥
तासां तालविधानं तु षट्प्रमाणं समासतः ।

अङ्किता चोत्थिता चैव चतुरस्रा प्रमाणतः ॥
चतुर्भिः सन्निपातैश्च ज्ञेया चञ्चत्पुटा स्मृता ।
सुप्रतिष्ठावसानानां सन्निपातेऽन्त इष्यते ॥
अपकृष्टा स्मृता त्र्यस्रा तथा चापपुटाश्रिता ।
चतुर्भिः सन्निपातैश्च युक्तो पादान्तमिश्रिते ॥
तथाकाशगृहस्तासां तावचञ्चत्पुटः स्मृतः ।
विलम्बिता च त्र्यस्रा च स एतद्वितयान्विता ॥
निष्कामादिप्रयुक्तेन योज्या चापपुटेन तु ।
पादान्ते सन्निपातस्य द्विकलेन यथाविधि ॥
शीर्षकाणि च योज्यानि द्विविधं पञ्चपाणिना ।
चतुर्भिः सन्निपातैश्च सम्यक्पादान्तसंस्थितैः ॥
पादान्तस्यान्ततालस्य द्विमात्रान्तं प्रयोजयेत् ।
मात्राद्वयं च काले तु झंकारौ समतां नयेत् ॥
किंचिद्विनातिरिक्तायां मात्राभिर्यत्र चेत्कला ।
स्यात्समत्वं नयेत्तां तु क्षयवृद्ध्या प्रयोगवित् ॥
वर्णप्रकर्षेण च स्यात् तालानामपि वर्धनम् ।
स्यात् झंकारो नियुक्तानां अक्षरे च कलान्तरम् ॥
कलातालप्रमाणेन यत्स्यात् शुष्ककुट्टनात् ।
तथा ध्रुवाणां सर्वेषु कलातालौ प्रयोजयेत् ॥
भङ्गतालश्च कर्त्तव्यो नर्कुटानां यथाविधि ।
कलापातेन संयुक्तस्तालश्चञ्चपुटो भवेत् ॥
एष एव पुनस्त्र्यस्रः खञ्जखेलेति चेष्यते ।
पुनः प्रकृतयो ह्येष भङ्गस्त्वाक्रीडितो भवेत् ॥
यान्यङ्गानि ध्रुवासु स्युर्ध्रुवास्तथ भवन्ति हि ।
तानि अष्टकयोगेन योजयेत् षट्कलेन वा ॥
एवमेव मया तालो ध्रुवाणां परिकीर्तितः ।
चतुष्पादावसाने तु सम्प्रवक्ष्यामि लक्षणम् ॥
यद्देव्यकुसुमावाद्यः(?) शृङ्गाररससंश्रयः ।
वृत्तं विकल्पितं तस्य काललक्षणमुच्यते ॥
नारीप्रयोज्यं न ज्ञेयमाश्रितं तु चतुष्पदम् ।
त्र्यस्रा वा चतुरस्रा वा द्विविधा वा चतुष्पदा ॥
एकस्या वा बहूनां वा द्वयोर्वा वाक्ययोजनात् ।

तथा शृङ्गारभूयिष्ठा त्रिविधा स्याच्चतुष्पदा ॥
प्रवृत्तसंज्ञा विज्ञेया तथा च स्थितसंश्रया ।
स्थितप्रवृत्तिसंज्ञा च त्रिविधा स्यात् पुनश्च सा ॥
निष्क्रामश्चैव शम्या च तालशम्या तथैव च ।
ततोत्तमश्च निष्कामः सन्निपातस्तथान्तिमः ॥
अष्टाविंशतिकल्पा तु बुधैर्ज्ञेया चतुष्पदा ।
तस्या विकल्पान् वक्ष्यामि यथावदनुपूर्वशः ॥
प्रवृत्ताख्या द्रुतलया स्थिताख्या च विलम्बिता ।
स्थितप्रवृत्तसंज्ञा च ज्ञेया मध्यलयाश्रिता ॥
ज्ञेयश्चच्चत्पुटस्तस्य तथा चापपुटः पुनः ।
द्विकलेन विधानेन तस्य चापविधिस्त्वयम् ॥
बह्वक्षरा च विपुला मागधी चार्धमागधी ।
समाक्षरपदा चैव तथा च विषमाक्षरा ॥
तस्यात्यन्तापहरणा विज्ञेया वाप्यनीकिनी ।
अवसानापहरणा अन्तापहरणा तथा ॥
अभ्यन्तरापहरणा तथा चैवार्धनत्कुटा ।
अर्धखंजा च मिश्रा च तथा चैवान्तगीर्वका (?) ॥
एकावसाना विज्ञेया तथा च नियताक्षरा ।
अर्धप्रवृत्ते एतासां लक्षणं श्रूयतामिदम् ॥
व्यक्तवाक् या लघुप्राया लघ्वक्षरसमन्विता ।
द्रुतवाक्या द्रुतलया ज्ञेया बह्वक्षरेति सा ॥
गुरुप्लुताक्षरप्राया स्वल्पवाक्या यदा तथा ।
त्रिलया पृथुलाख्या च सुकुमारविधौ स्मृता ॥
त्रिलया त्रियतिश्चैव त्रिप्रकाराक्षरान्विता ।
एकविंशतिताला च मागधी सम्प्रकीर्त्तिता ॥
गुरुलघ्वरक्षरकृता द्रुतमध्यलयान्विता ।
मागध्येवार्ध्य(र्ध?)ताले च युक्ता स्यादर्धमागधी ॥
गुरुलाघवमात्राभिः पदैर्वर्णैस्तथैव च ।
लयतालैः समैश्चैव समाक्षरपदा स्मृता ॥
अक्षरैर्विषमायां तु मात्रापादैस्तथैव च ।
लयतालैरनियमा सा ज्ञेया विषमाक्षरा ॥

स्यात्त्वन्त्यः सन्निपातश्च स्वा(सा?)नुस्वारोऽन्त्य इष्यते ।
समाद्यन्तापहाराणां सानुस्वारकृता तथा ॥
मध्याद्यन्तैः सन्निपातैरनुस्वारकृताक्षरैः ।
शेषैरनिलया पादैर्विज्ञेया सा त्वनीकिनी ॥
अवसानापहरणा नित्यं ज्ञेयाऽमिताक्षरा ।
अनुस्वारद्रुता चैवमन्तापहरणा स्मृता ॥
द्वितीया सन्निपातेन मध्येऽक्षरसमन्विता ।
अभ्यन्तरापहरणा सानुस्वारेव सा स्मृता ॥
अर्धेन भिद्यते या तु विज्ञेया सार्धनत्कुटा ।
त्र्यस्रा ह्यनेन विधिना ह्यर्धखञ्जेन कीर्त्यते ॥
खञ्जनत्कुटनाभ्यां तु मिश्रभावो यदा भवेत् ।
त्र्यस्रा वा चतुरस्रा वा तदमिश्रेव कीर्त्यते ॥
उपक्षेपेण यस्यास्तु स एवार्धः समाप्यते ।
शीर्षकं सा तु विज्ञेया शीर्षितेन विभूषिता ॥
एकपादावसानस्तु यस्य स्यादर्धवर्णतः ।
एतावसानेव बुधैः सा ज्ञेया तु चतुष्पदा ॥
पूर्वपादेन तस्य स्यात् सर्वत्र गुरुलाघवः ।
पादे पादावसाने च सा ज्ञेया नियताक्षरा ॥
यस्या स्थितप्रवृत्तं वा भवत्यर्धनिवेशितम् ।
अर्धप्रवृत्ता सा तु स्यादुभाभ्यामपि वा कृता ॥
निष्क्रामश्चैव शम्या च तालः शम्या तथैव च ।
आवापः सन्निपातश्च षडस्या ग्राहकाः स्मृताः ॥
उपोहनं तु त्रिविधं सुकुमारे प्रकीर्त्तितम् ।
द्व्यवरं त्र्यवरं तस्य कलाभिः प्रत्युपोहनम् ॥
विकलाख्यं चान्तकलं सन्निपातपरं स्मृतम् ।
सन्निपातापहरणा आदौ मध्येऽन्ततोऽपि वा ॥
वाक्यद्वयाभिनिष्पन्ना नानावाक्यापि सा स्मृता ।
एकपादा द्विपादा वा त्रिपादा च प्रकीर्त्यते ॥
चतुष्पादापि वा भूला नातः परमिहेष्यते ।
कृत्वा तु पादबहुला न शोभां जनयिष्यति ॥
वर्णस्य प्रकृतिर्ह्यन्यद्रङ्गव्यक्तिर्हि···स्यति ।
तस्मात्स्थिता स्याद् द्विपदा ह्येकेनैव पदा स्मृता ॥

चतुष्पदा प्रवृत्ता तु सम्यक् प्रोक्ता प्रयोक्तृभिः ।
तत्रैकरूपैकपदा स हि पादपता(दा?) स्मृता ॥
द्यत्रिंशत्परमा सा हि सन्निपातपदा भवेत् ।
आभ्यामृध्यप्रमाणे तु त्रिपादः परिकीर्त्यते ॥
सन्निपातप्रमाणेन ज्ञेयो मध्यलयस्तथा ।
लास्यमित्येव यत्पूर्वं मया वः परिकीर्त्तितम् ॥
लक्षणं तस्य वक्ष्यामि प्रयोगञ्च यथाक्रमम् ।
लासनाल्लास(स्य?)मित्युक्तं स्त्रीपुम्भावसमाश्रयम् ॥
भाणवत् चैकहास्यं स्याद्बहवस्तु(?) च तद्भवेत् ।
एकार्थं पृथगर्थं वा तदङ्गेषु प्रकीर्त्तितम् ॥
अङ्गानि दश चैवास्य तेषां वक्ष्यामि लक्षणम् ।
गेयपादं स्थितं वाद्यं आसीनं पुष्पगन्धिका ॥
प्रच्छेदका(कः?) त्रिमूर्धञ्च सैन्धवाख्यं द्विमूर्धकम् ।
उत्तमोत्तमकं चैव विचित्रपदमेव च ॥
उक्तप्रत्युक्तभावश्च लास्याङ्गानि प्रकीर्त्तिताः ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणं ॥
आसीनकाख्यं योज्यं स्यात् प्रयत्नादासनस्थया ।
स्थितवाद्यञ्च भौमीभिः···चारीभिर्युतम् ॥
नृत्तकाले च वाद्ये च गृहमोक्षे तथैव च ।
गीताङ्गानां विधिर्यः स्यात् स लासो प्रायशः स्मृतः ॥
अङ्गान्येतानि लास्ये स्युर्दशोक्तानि समासतः ।
एतेषां चैव वक्ष्यामि प्रयोगं लक्षणं तथा ॥
स्थापितैर्भाण्डविन्यासैः पटे चैवापकर्षिते ।
बृंहणः पूर्ववर्षेषु चासने परिकल्पिते ॥
मार्दितेषु मृदङ्गेषु त्रिसान्नि प्रतियोजिते ।
प्राक् शुष्कासारितं कार्यं तन्त्रिवेणुप्रयोजितम् ॥
मार्गसारिततालेन ततश्चासारितं बुधैः ।
परिवृत्तेस्त्रिभिर्युक्तमतश्चोपोहनं भवेत् ॥
त्र्यस्रेण विकलेन स्यात् ततश्च परिधानकम् ।
प्रयोक्तव्यं प्रयोगज्ञैः परिवर्त्तात्मकं तथा ॥
परिवर्तं तथैवास्य पुंवाक्यं प्राक् समाचरेत् ।
त्रिवाक्यं पुरुषश्चास्य चतुर्वाक्याङ्गना स्मृता ॥

त्रिवाक्यं [ पुरुषश्चास्य ? ] (स्यात्) चतुर्वा[1]क्यं गता स्मृता ।
कार्यं तथा निर्वहणं प्रत्येकं [2]परिधानके ॥ २९४ ॥
इत्येतत्प्रथमं [3]त्वङ्गं [4]लास्ये गेयपदं स्मृतम् ।
स्थितपा(वा?)द्यस्य[5] वक्ष्यामि विधानं चाप्यतः परम् ॥ २९५ ॥
[6]वृत्तमेकप्रथमे द्वे योजयेत्पञ्चपाणिना ।
[7]ततः परं ते भूयोऽपि युग्मतालेन वा स्मृते ॥[8] २९६ ॥
[9]अवसानं तु कर्तव्यं त्व(च?)रितं पञ्चपाणिना ।
द्विकलेनेति कर्त[10]व्यं स्थितपाठ्यं प्रयोक्तृभिः ॥ २९७ ॥
उपोह्य तालं त्र्यस्रं वा [11]वृत्त्या तैस्तैः समैस्तथा ।
[12]आसीनपा(वा?)द्यं युञ्जीत सर्वैर्भावैस्तु पौरुषैः ॥ २९८ ॥
[13]एवं चतुर्भिः पादैस्तु समैरर्थवशा[14]नुगैः ।
[15]आसीनपा(वा?)द्यं कर्तव्यं विधिवत्पञ्चपाणिना ॥ २९९ ॥
अतीतयुग्मतालेन श्लो[16]कैः कार्यस्ततः परम् ।
अष्टादश द्वादश वा पदानि [17]तु ततः पुनः ॥ ३०० ॥

---

१. 'चतुर्वाक्याङ्गना स्मृता' का. २. 'प्राप्त्यर्थं' का. ३. 'त्र्यङ्गं' का. ४. 'गेयपादमिति स्मृतम्' का. ५. 'स्थितवाद्यस्य' का. ६. 'वृत्तमेकमथ द्वे वा' का. ७. 'अतः परं च द्वे भूयः खञ्जिते संप्रयोजयेत्' का.

८. 'चञ्चत्पुटेन कर्तव्या द्विकलेन ततः परम् ।
यथाक्षरेण चायुक्ता संनिपातैस्तथाष्टभिः ॥' इति पद्यमधिकमत्र ।

९. 'अवसाने तु कर्तव्यं चरितं पञ्चपाणिना ।' का. १०. 'योक्तव्यं स्थितवाद्यप्रयोक्तृभिः ।' का.

११. 'बृहत्पादपदैः समैः' का. १२. 'आसीनवाद्यं युञ्जीत भावैः सर्वैश्च पौरुषैः ।' का. १३. 'गेयं' का. १४. '°रर्थपरानुगैः°' का. १५. अस्यार्धस्य स्थाने का. पुस्तके तु—

'आसीनवाद्ये कर्तव्यः प्रयोगः शीर्षकस्य तु ।
अष्टभिः सन्निपातैश्च युक्तं तालादिनैव तु ॥
अथाक्षरप्रवृत्तेन विधिवत् पञ्चपाणिना ।' इति सार्धं पद्यम् ।

१६. 'शोकः' का. १७. 'च' का.

यथा—

परिधुनमानो[1] किरणपदं[2] अभिरुहमाणौ[3](णो?)उदयगिरिम् ।
उडुगणबन्धू कुमुदसखो[4] उदयदि[5] चन्दो गगणतले ॥ २१२ ॥
[परिधुन्वानः किरणपदमभिरोहन्नुदयगिरिम् ।
उडुगणबन्धुः कुमुदसख उदयति चन्द्रो गगनतले ॥]
आद्यचतुर्थे नैधनके[6] वा पञ्चमषष्ठे यत्र तु[7] दीर्घे ।
पुष्पसमृद्धा संकलिता[8]सौ पङ्क्तिरथैषा गीतकबन्धे ॥ २१३ ॥

यथा—

मेहसमूहं[9] चित्तवलाहं[10] भीसणणादं[11] विज्जपिणद्धम्[12] ।
परिकयसोभी[13](?)भीसणणादो वाचति[14](धावइ?)हत्थी चूदवणन्तम् २१४
[मेघसमूहं चित्रवलाहं भीषणनादं विद्युत्पिनद्धम् ।
............भीषणनादो वक्ति हस्ती चूतवनान्तः ॥]
यदि खलु पञ्चमकाष्टमके[15] पुनरपि चान्त्यगतं[16] च गुरु ।
चरणविधाविह वृत्तकृतौ[17] भवति हि सा द्रु(द्रु?)तपादगतेः ॥२१५॥

यथा—

गयणतलङ्गण[18]हिंडणओ किरणसहस्र[19](स्स?)विभूसिदओ ।
दिहुणियमेहपडणूमसू[20]···दि ससी गगणे विदुसम् ॥ २१६ ॥
[गगनतलाङ्गणहिण्डणकः किरणसहस्रविभूषितः ।
..................शशी गगने........ ॥]
यदि खलु षष्ठं गुरुयुगलं निधनगतं वाप्यथ[21] गुरुकम् ।
भवति हि सैवं चरणविधौ मुखचपले [द्युति?]चपला ॥ २१७ ॥

---

१. 'परिधुणमाणो' का. २. 'किरणपहं' का. ३. 'अतिरुहमाणो उदअगिरिम्' का. ४. 'तिमिरभरे' का. ५. 'उदअदि चन्दो गअणतले' का. ६. 'नैधनकं च' का. ७. 'च' का. ८. 'संकथिता सा' का. ९. 'मेहसमूहे' का. १०. 'किं णु वलाहे' का. ११. 'भीसणणादं' का. १२. 'विज्जुपिणद्ध' का. १३. 'पेखिअ सो भीमणिणादो' का. १४. 'धावइ हत्थीरूखवणम्मि ।' का. १५. 'पञ्चमकाष्टमं' का. १६. 'चान्त्यमं' का. १७. 'वृत्तगते' का. १८. 'गअण°' का. १९. 'किरणसहंसविभूसणओ' का. २०. 'विहुणि अमेहपडत अओ उदअदि चंदणंडो गअणे ।' का. २१. 'चाप्यथ' का.

यथा—

कुसुमसुगन्धी असुमवाणा विवरण्णो णलिणिवणे ।
तरुवरलोसे पमदवणे बहुकुसुमं सीणवसरदे ॥ २१८ ॥

[.................................... ।
.................................... ॥]

तृतीयमन्त्यं चतुर्थं च पञ्चमं चाष्टमेव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा विमला यथा— ॥ २१९ ॥

कुसुमाकिण्णे णिम्मलसलिले णलिणीसंडे छप्पंदमुहले ।
सवभूमध्ये सारसमुदिते समदो हत्थी परिचरिदो ॥ २२० ॥

[कुसुमाकीर्णे निर्मलसलिले नलिनीषण्डे षट्पदमुखरे ।
""सारसमुदिते समदो हस्ती परिचरितः ॥]

चतुर्थं पञ्चमं पूर्वमन्त्योपान्त्ये तथैव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा रुचिरा यथा—॥ २२१ ॥

मेघविदाणं अवधूणयमाणो कम्पयमाणो कुमुदवणाणि ।
तोयसमूहं अवकिरमाणो वायदि वाओ कुविदं इवासु ॥ २२२ ॥

[मेघवितानमवधूनयमानः कम्पयमानः कुमुदवनानि ।
तोयसमूहमविकरमाणो वाति वातः कुपित इवाशु ॥]

यदि खलु चरणे तु सप्तमं पुनरपि नवमं सनैधनम् ।
गुरु तदपरवक्त्रमुच्यते नियतमिति हि निदर्शनं यथा— ॥२२३॥

---

१. 'कुसुमसुअंधी(धी?) असुपवा तरुपलासो पमदपणे ।
बहुकुसुममिणवसरदे विअरइ रमेण वणे ॥' का.

२. 'तृतीयं च चतुर्थं च' का. ३. 'षष्ठमेव च' का. ४. 'छप्पअ'–का. ५. 'अदिसअरं मे' का. ६. 'सारसमुदितं' का. ७. 'एस विचरिदो' का. ८. 'अवधुणमाणो' का. ९. 'कंपअमाणो' का. १०. 'कुमुदवणाणि' का. ११. 'तोअ°' का. १२. 'वाअइ' का. १३. 'कुविअ' का. १४. का. पुस्तके तदेतदुदाहरणं च श्लोकषङ्कोत्तरं वर्तेते । १५. 'नियतमपि' का.

[यथा—]

गिरि[1]तटविचरे विक्कणिदो असणिघटरवेण कम्पयम्।
अभिपददि दुदं महीतलं पट्ठुतरणिणदो महारवो॥ २२४॥

[.................................................. ।
.................................................. ॥]

त्रिष्टु[2]भो जातयो ह्येता जगत्यास्तु निबोधत।
अष्ट[3]मं नैधनं चैव गुरुणि चरणे यदि।
वृत्ते तु [4]जगती सा तु ज्ञेया कमललोचना॥ २२५॥

यथा—

दि[5]अमूर्मिगणवियद्विअतेजोविततकिरणसहस्सपिणहो।
धुणिअतिमिरतपटन्तगदीवा उदयदेयाहदलअसुत्तरो॥ २२६॥

[.................................................. ।
.................................................. ॥]

यदि खलु लघुगण इह निय[6]तं य(प?)दि य(प?)दि गुरु निधनगतम्।
भवति हि लघुगतिरतिचपला अ(त्व?)रि[त?]गतिरधिकमतिजगती॥२२७॥

यथा—

विधुणि[7]यँजलधरमसितपरं दियगणमुणिवरपठिदो।
उदयगिरिशिखरतटमुकुटो विचरदि गगणतमसुखी॥ २२८॥

---

१. 'गिरिअरडविअरघुंणिदो असणिपणरवे एकपअ।
अभिपददि मदुममहीअलं पट्ठुतरणिणादो महाघणो॥' का.

२. सार्धं पद्यमेतत् का. पुस्तकेऽत्र नास्ति। अग्रे केवलमेकमात्रं पद्यं वर्तते।

३. 'नवमं नैधने द्वे च गुरूणी' का. ४. 'वृत्तेऽतिजगती' का.

५. 'चतिगणिमुनिगणवदिततेजो पवित किरणसविणधो।
विधुणि अतिमिरपडं जगदीवो उदअदि गअणअले अससूरो॥' इति का.

६. 'नियतो' का.

७. 'विधुणिअजलहरउमिदपहो अदिगणम्मणिगणपरिवडितो।
उदअगिरिसिहरउमहनिलओ वअरइअरणलअभुमसुखी॥' इति का.

[.................................. ।
.................................. ॥]

यदि खलु पञ्चमनिधनगतिद्विरदविधौ भवति हि गुरुणी । भवेत् (?) ।
अतिजगती भुवि कथितगुणा सा मदकलितेव निगदितनामा ॥ २२९ ॥

यथा—

गगणतलंगणमभिरुहमाणा रजतमहागिरिशिखरसरूपो ।
रजदमओ विपपियकलुसो सूपविचरिदो विअ निसिचन्दो ॥ २३० ॥

[.................................. ।
.................................. ॥]

एतास्तु जातयो ज्ञेया प्रावेशिक्यस्तथा हृताः ।
समवृत्तपदानां तु वर्धमानं निबोधत ॥ २३१ ॥

एतासां लक्षणं पूर्वं सर्वमुक्तं विधानतः ।
प्रतिष्ठादि यथा छन्दः सम्यक्पादविधानतः ॥ २३२ ॥

[प्रतिष्ठा] यथा—

मर्हरचं सावसरर ।
णिपक्रुद्धौ भस्वइ गयवरो ॥ २३३ ॥

[......................... ।
......................... ॥]

---

१. '०निधनगते द्वे चरणविधौ भवति हि गुरुणी ।' का. २. 'कृत अतिजगती' का. ३. 'मदकलितेति च' का.

४. 'गअण(ण)तलङ्गण अहिरुहमाणोरु(र?)जतमहागिरिसिहरसरूपो ।
महाणिणिअरणिआ सोपविअरिदो णवसरदि मिअंको ॥' इति का.

५. 'द्रुतास्तथा' का. ६. 'वक्ष्यमाणं' का. ७. 'सर्वं पूर्वमुक्तं' का.

८. 'मेहरवणसवरदेणिससिअ । कुद्धो असुहअप्पवरो ॥' का.

सुप्रतिष्ठा [यथा—]

विज्जुलदाहिं[1] अभिहयकं ।

चारुंददि वगणं यसमिह गतारम् ॥ २३४ ॥

[........................... ।

.............................. ॥]

गायत्री [यथा—]

मेघरवानुणद्धगहकंदकं[2] ।

एसमिददिवाकरं रुददि विपणहदलम् ॥ २३५ ॥

[........................... ।

.............................. ॥]

उष्णिक् [यथा—]

फुल्लीयतरुसंडे[3] सुरभिपवणहते ।

विअरदि पदम(द)वणे हंसो सहरिपरितुदो ॥ २३६ ॥

[........................... ।

.............................. ॥]

वर्धमानं[4] मवै(यै)वं तु अ(न्य)स्राणां परिकीर्तितम् ।

पुनश्च चतुरस्राणामेवमेवं निबोधत ॥ २३७ ॥

अनुष्टुप्[5] [यथा—]

ताराबन्धसणाहो[6][7] विरिकि(क्रि?)रमाणो मेघपडम् ।

किरणसहस्सभूसितओ उदयदि सोमो रजणिकरो ॥ २३८ ॥

---

१. 'विजृंकसाहिहदंमंरुद्ददि । वगअणं वामि अगततारे ॥' इति का.

२. 'महरवा उलं कन्दरवसामिअ । दिवा अरं रूअदि विअणह अलम् ॥' का. ३. का. पुस्तकेऽस्य स्थाने त्वत्रानुष्टुभ उदाहरणं वर्तते । ४. एतत्पद्यं का. पुस्तके नास्ति । ५. 'अनुष्टुप्' इति नास्ति का. पुस्तके ६. एतदुदाहरणं का. पुस्तके उष्णिगुदाहरणत्वेन वर्तते ।

७. 'ताराबन्धू एस णहे विक्किरमाणो मेहपडम् ।

किरण सहंसिं विंठसिओ उदअदि एसो रअणिकरो ॥' का.

[.................................. ।
.................................. ॥]

बृहती [यथा—]

एसो[1] सुमेरुवणकम्मी दियदेवसिद्धपरिगीदो ।
सुसुरभिसुगन्धवणचारी विचरदि वि णहंगमगतिवादो ॥ २३९ ॥
[.................................. ।
.................................. ॥]

पङ्क्ति [यथा—]

पादव[2]संपकंपयमाणो सुरभिसुगन्धधासुवादिओ ।
उदवणासरुवरलासणओ विचरदि वरतरुवणपद(व?)णो ॥ २४० ॥
[.................................. ।
.................................. ॥]

त्रिष्टुप् [यथा—]

कुमुदव[3]णस्स विभूषस(ण?)ओ विधुणिय तिमिरपटं गगणे ।
उदयगिरिसिहरमधिहन्तो रजणिकरो उदयदि विमलकरो ॥ २४१ ॥
[.................................. ।
.................................. ॥]

जगती [यथा—]

दियगण[4]मुणिगणसंयुक्तुतथिदवरकिरणसंनिभदेहो ।
द्रुतनिहणहयलमभिरुहमाणो विचरदि तपदि एस दिवसकरो २४२

---

१. 'एसो सुमेरुवणअम्मि देवअ सिद्धपरिगीओ ।
अतिसुरभिवणचारि पविचरदि गअसुवाओ ॥' का.

२. 'पादवसीसं कंपअमाणो ससुरभिगण्डसुवासिओ ।
वणतरुगणलासणओ विअरइ वरतरुवणपवणो ॥' इति का.

३. 'कुसुमवणस्स विहसणओऽणि धुणिअतिमिरपडगणओ ।
उदअदि गिरिसिहररोही रअणिअरो सुविमलअरो ॥' इति का.

४. 'यदि गणमुणिगणतुदओ तविरकदवरकअसंणिहिदो ।
दुतमिद णहअलसहिरुहमाणो विअरदि पदवदि दिअसअरो ॥' इति का.

[................................... ।
................................... ॥]

एतास्तु जातयः प्रोक्ताश्चतुरस्रविवर्धिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि गणमात्राविकल्पनम् ॥ २४३ ॥
त्र्यस्रायास्तु गणाः पञ्च संनिपातो विधीयते ।
अष्टौ च चतुरस्रायाः संनिपातो भवेत्तथा ॥ २४४ ॥
द्वौ पादौ संनिपातश्च ध्रुवाणां[2] परिकीर्तितः[3] ।
हृ(द्रु ?)तं च[4] शीर्षकं चैव हित्वा त्वभिभवन्ति[5] वै ॥ २४५ ॥
त्र्यस्रे त्वक्षरपिण्डः[6] पञ्चादिर्नवपरश्च[7] विज्ञेयः[8] ।
सर्वगुरुश्चाष्टादि[9]स्त्रयोदशपरश्च[10] सर्वलघुः ॥ २४६ ॥
एष त्वक्षर[11]पिण्डो विज्ञेया वै ध्रुवो(वा ?)विधानज्ञैः ।
गणमो(मा ?)त्रांशविकल्पं व्याख्यास्यामि हृतार्या[12]स्तु ॥ २४७ ॥
अर्धषष्ठ[13]गणैः पादः संनिपातो द्रुता[14](ध्रुवाः?)स्तथा ।
मात्रा[15] द्वाविंशतिश्चैव गुरुलघ्व[16]क्षरान्वितैः ॥ २४८ ॥
शीर्षकाणा[17]मनियमो भवेत्पादविधानतः ।
नाना[18]वृत्तविनिष्पन्नं कुर्याद्वै शीर्षकं बुधः ॥ २४९ ॥
गुर्वादि[19]रथ लघ्वादिर्युग्मः सर्वलघुः स्मृतः ।
चतुर्मात्रागणो[20] ज्ञेयः पूर्वच्छन्दोविकल्पनाः[21] ॥ २५० ॥
अर्धाष्टमगणाः पादाः शीर्षकस्य भवन्ति वै[22] ।
चतुर्मात्र[23]स्तु विज्ञेयो युग्मौजा[24]क्षरिकैः पदैः ॥ २५१ ॥

---

१. 'संनिपाताधिके पुनः' का. २. 'तु' का. ३. 'संप्रकीर्तितः' का. ४. 'द्रुतं च' का. ५. 'हित्वान्यानि' का. ६. 'अक्षरपिण्डस्त्र्यस्रे' का. ७. 'वस्वाधिको नवपरश्च. का. ८. विज्ञेयः' का. ९. '°गुरुरष्टादिः' का. १०. 'परतश्च सर्वत्र लघु' का. ११. 'ह्य' का. १२. 'ध्रुवाणां तु' का. १३. 'अर्धषष्ठगणा ज्ञेया' का. १४. 'ध्रुवास्तथा' का. १५. 'मात्राश्च विंशतिश्चैव' का. १६. '°क्षरान्विताः' का. १७. 'शीर्षको नाम नियमो' का. १८. 'नाम्ना' का. १९. 'गुरुपुर्वादिस्तथाल्पादिर्युग्मः स तु लघुस्तथा' का. २०. 'चतुर्मात्रोऽक्षरो' का. २१. '°विकल्पकः' का. २२. 'हि' का. २३. 'त्रिंशन्मात्राश्च' का. २४. '°क्षरजैः' का.

शीर्षकस्यै[1]कविंशत्या षड्विंशतिपरस्तथा ।
अक्षराणां भवेत्पिण्डः पादे ह्येकत्र नि[2]श्चयात् ॥ २५२ ॥

यु[3]ग्मा ओजा मिश्रा आदौ कार्या गणास्तु चत्वारः ।
नि[4]यतं शीर्षविधानं पश्चाल्लघुसंचयः कार्यः ॥ २५३ ॥

त्रीणि ग[5]णाय(न्य)स्य मुखे त्रीण्यवहित्थस्य वाद(व)सानानि ।
म[6]ध्ये चेद्गुरुणी (द्वि?) तच्चपलं शीर्षकं भवति ॥ २५४ ॥

पू[7]र्वार्धेऽथ चतुर्ह्रस्वा मिश्रा····गणास्तु चत्वारः ।
पादे भवन्ति नियतं पश्चाल्लघुसं[8]चयः शेषाः ॥ २५५ ॥

ए[9]कद्विकलं त्रिकलाश्चतुष्कलाः षट्कलास्तथाष्टकलाः ।
का[10]र्या ध्रुवाविधाने प्रासादिक्यान्तरापेक्षैः ॥ २५६ ॥

त्र्यस्रे विरामस्त्रिकलश्चतुरस्रे च[11]तुष्कलः ।
प्रावेशिक्या ध्रुवायास्तु नेष्कु(नैष्का?)मिक्यास्तथैव च ॥ २५७ ॥

विरामे द्वि[12]कलो व्यन्त(नित्य?)मन्तरा[13]याः प्रयोक्तृभिः ।
पादान्ते च[14] विरामस्तु विक्षि[15]प्तायाः प्रकीर्तिताः ।
स्थितायास्[16]तु तथैवार्धे प्रासादिक्यास्तथैव च ॥

कलाकलार्धयोगेन गुरुलघ्वक्षरान्विताः ।
त्र[17]यो ध्रुवाणां [18]संयोगा[त्?] विज्ञेया व्यन्त(वृत्त?)संश्र[19]याः ॥२५८॥

---

१. 'शीर्षके ह्येकविंशत्याः' का. २. 'निर्दिशः' का. ३. 'युग्मौजमिश्रकाः खलु पादे कार्यास्तु चत्वारः स्युः ।' का. ४. 'शीर्षके तु नियमेन' का. ५. 'त्रय एव गणास्तु मुखे लघवस्त्रय एवावसाने तु ।' का. ६. 'मध्ये चेद्गुरुणी द्वे तच्चपलाशीर्षकं नाम' का. ७. 'पूर्वे ह्यर्धे तु गुरु ह्रस्वा द्वित्रा गणास्तु चत्वारः ।' का. ८. 'संचयाः' का. ९. 'एककलस्त्रिकलश्चतुष्कलस्तथाष्टकलः कार्याः ।' का. १०. 'ध्रुवाविरामाः कार्याः' का. ११. 'चतुरस्रः' का. १२. 'विरामो द्विकलो नित्यं' का. १३. '°मन्तरायास्तथैव च' का. १४. 'हि विरामास्तु' का. १५. 'आक्षिप्तायाः' का. १६. 'स्थिरायाश्च तथा ह्यर्धे' का. १७. 'त्रयो ध्रुवाणां संयोगात्' का. १८. 'आदर्शद्वयेऽपि 'संयोगेन गुरुलघ्वक्षरान्विताः । त्रयो ध्रुवाणां' इत्यधिकं लेखकप्रमादजमिवालोक्यते. १९. 'वृत्तसंश्रयाः' का.

सर्वदीर्घः सर्वलघुर्गुरुर्ह्रस्वाक्षरास्तथा ।
गुरुप्रायो(याः?)स्थिता कार्या लघुप्राया ह्रु(द्रु?)तास्तथा ॥ २५९ ॥

गुरुलघ्वक्षरप्राया[ः]प्रासादिक्यान्तरा [स्?] तथा ।
एवं ध्रुवाणां कर्तव्या जातयो वृत्तसंभवाः ॥ २६० ॥

अत ऊर्ध्वं प्रवक्ष्यामि शीर्षकाणां तु लक्षणम्[6] ।
आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमाष्टमे ।
गुरूणि यस्याः पादे तु सा स्येनी(श्रेणी?)[प्र?]कृतिर्यथा—॥२६१॥

---

१. 'गुरुलघ्वक्षरस्तथा' का. २. 'गुरुप्रायास्तथा कार्या' का. ३. 'द्रुतास्तथा' का. ४. '°प्रायाः' का. ५. '°न्तरास्तथा' का. ६. इतोऽग्रे का. पुस्तके—

'आद्यमन्त्यश्चतुर्थं च सप्तमं दशमं तथा ।
गुरूण्येकादशञ्चैव संकृतौ वृत्तसंश्रये ॥
लघून्यन्यानि शेषाणि पादे यस्मिन् भवन्ति हि ।
तद् ज्ञेयं शीर्षकं तज्ज्ञैः स्खलितं नामतो यथा ॥
पादसमुंलदवीची(चि?)तरं गोपफलिवामणिणिकरजलो
वीच्चिपरघोणणिणादो पडुपवनललितदविहनकुलो ।
मीणकलकुलभीमतरघुगोघुभिदघणणिससरवो
तुगमहीरसमाणणिरुद्धो रुन्धिद इव सपदि सलिलणिहो ॥'

इत्यधिकम् । अथ २६७,२६८ संख्यकश्लोकौ पाठभेदेनात्रैवैवं वर्तेते—

'आद्यचतुर्थे पञ्चमषष्ठे दशममथ च निधनगतम्
ये च तथान्ये ते च लघुलं यदि भवति तु चरणविधिविहिते ।
सा विकृतिस्था पुष्पसमुद्धा द्विजगणमुनिगणपरिपठिता
नामविकल्पाद् वृत्तकृता वै विवरं बहुमतपदनियमा ॥

यथा—

पुंपविदार्णं उद्धुअमाणो रथ इव ददगतिरभिविददो
पेंखअमाणो सलिलतलेसु तरुसु अविकिरिअकमलदलं ।
मेहसमूहं लंदुअमाणो सरसियखुभिदं अजलकलो
भीमणिणादो च उववाही वा अदि वरतणुवणपवणो ॥'

७. 'आद्यमन्त्यं तृतीयं च' का. ८. 'सा श्रेणी प्रकृतिर्यथा' का.

सागरं[1] समुद्धुणन्तो रथपदलघुगदिभिभवति
मघादशमाहणन्ते भरुस्तु चजणविभयमतुलम् ।
रण(राग ?)जालमुख्ययन्तो दिवसकरणपिण्ड-
करणोऽवोधयंपजासु कामंदिवरतण्युसुहपवणा ॥ २६२ ॥

[[2]....................................................
.......................................।
....................................................
.......................................॥]

प्रकृत्या[3] पञ्चमान्त्ये तु[4] अष्टमैकादशे गुरुः[5] ।
द्वादशं चेति विज्ञेयं नामतश्चपला यथा[6] ॥ २६३ ॥

---

१. का. पुस्तके तु—
'सागरं समुधंअतोरभ इव लघुगतिअभिवदिप
वदेसहमाणं कोकतरुसुजणअदिचगुणतलइ ।
तेणुजालअक्लिपतोदिवसकरमिदमिणमिन्दुकिरणो
बाधितुअसुलोअकामो विअदि वरुणसुम्पवणो ॥' इति ।

२. का. पुस्तके २६९,२७० पद्ये पाठभेदेनात्रैव वर्तेते—
'अन्त्ये पञ्चमे षष्ठे च सप्तमं दशमं परम् ।
चतुर्विंशतिके पादे संभ्रान्ता नाम सा यथा ॥
किरणसहस्सं विक्किरमाणो फलिकमणिणिअरुइरणिहो ।
कुमुअवणाइं वा बाहअहाणो कुमुदाअणिरअसदबहू ॥
गणअणिबन्धूलो अपदिवोउडुगहणसमभिगतो ।
उदयति चंदो रोहिणिकंदो णवसरसिकुमुदिदजणसुहदो ॥'

३. का. पुस्तके २७७,२७८ श्लोकावत्रैव
यथा—
'पञ्चमं द्वादशं चैव दीर्घमन्त्यं त्रयोदशम् ।
उत्कृत्या यो भवेत् पादो वृत्तं वेगवती तु तत् ॥
गगणतलं गणमभिरुहमाणो उडुगणगहणसमुपगतो ।
हलधर आणण रुचिररूपञ्जवलजणसहिदमदकरकरको ॥
किरणपउंसु अपि किरमाणो रजदगिरिसहिरसदिवसबहू ।
उदयदि सपदि असु(ज)जगदीवो कुमुदवणरुचिरमविलमलकरो ॥' इति ।

४. 'च' का. ५. 'गुरु' का. ६. 'च सा' का.

मुनिगणनन्तविविद्धतेजा विधुणिय तिमिरपटं
कमलवणाइं विबोधयमाणो यदि गणपरिपठिदो।
भुजगसहस्रविवर्धितयासो वितविकरणचयो
उदयदि स एव यताविलोओ वेरत दिवसकरो॥ २६४॥
[.................................
................................. ।
.................................
................................. ॥]

पञ्च त्वादौ यत्र तु दीर्घं नियममपि च गुरुसमयकृतं
दीर्घं चान्त्याष्टममन्यल्लघु विरचितमपि चरणविधौ।
वृत्ते ज्ञेया जातिरपीयं बहुविधनिचयदितविहितौ
क्रौञ्चा नाम्ना छन्दसि चोक्ता द्विजगणमुनिगणपरिपठिता॥२६५॥

यथा—

एसो चन्दो णिम्मलदेहो विधुणियतमतपवसिदं
लोकानान्दो लोकपदांपो उडुगणउगहगणसमणुगदो।

---

१. का. पुस्तके तु—
'मुणिगणसंथविचथधिअतेजो विधुणिअतिमिरवधणघतवकं
लपणा इव बोहअमाणो जदिगणमुनिघणपरिपठितो।
भुजगसहविवधिदपादो सुतविदकरणअसुसद्विसवपूक
करणिअरेहिपसदिअलोओ उदअदि वरतणु दिवसअरो॥' इति।

२. 'पञ्च त्वादौ यत्र च दीर्घाण्यथ नवममपि च सदा
तं दीर्घं चान्त्यं चाष्टमयुतं लघु भवति रणविधौ संस्तुता स्यात्।
वृत्ते विधिज्ञैः श्रुतिसुखयति परविरचितविभवा
क्रौञ्चा नाम्ना छन्दसि चोक्ता द्विजगणमुनिगणपरिपठिता॥' इति का.

३. का. पुस्तके तु—
'एसो चंदो णिम्मलदेहो विधुणिअगणमसिदपडणिलोकाणहदो
लोकवदीवो उडुणगहगणसमुपददोपासाणंकारअमाणो।
सिदपडणिवसणमिव विपुलो आलोअरञ्जअमाणो
(सिदपडणिवसणसिवपुलो आलोअरजअमाणो?)
विअइव तणुगअलचले॥' इति।

पासादाणं कास्यमाणोसितनिवसणमिदविपुलं
 लोकं रञ्जयमाणो विचरदि वरतणु गयणतले ॥ २६६ ॥

[.................................
 ................................. ।
.................................
 ................................. ॥]

ओद्यचतुर्थं पञ्चमषष्ठं नवमदशममथ च निधनगतं
 ये च ततोऽन्येषु लघुत्तं(त्वं) यदि भवति च चरणगतिविधौ(?) ।
सा प्रकृतिः स्यात्पुष्पविवृद्धा द्विजगणमुनिगणपरिपठिता
 नामविकल्पाद्वृत्तकृता वै स्वशतलुलितमिह नभसि नदी ॥२६७॥

यथा—

पुप्फविदाणं उद्धुणमाणो रथ इव हृतगतिरभिपठति
 परकजमाणो मेहताडसुंतरसुव जणयदि भयमतुलं ।
उम्मिसहस्सं उद्धुणमाणो सरसि खुभितसलिलकलकला
 भीमणिणादो चण्डपदाही विचरदि वपत्तणु सुहपवणो ॥२६८॥

[................................. ।
 .................................
.................................
 ................................. ॥]

अन्त्यं च पञ्चमं षष्ठं सप्तमं दशमं परम् ।
वृत्ते संस्कृतिसंज्ञे तु संभ्रान्ता नामतो यथा—॥ २६९ ॥

किरणसहस्सं विक्किरमाणो फटिकमणिरुचिरधवलणिहो
 कुमुदवणाइं बोधयमाणो कुमुदकलाणकरसदिसव.... ।
पमहगणबन्धुलोकपदांवो(?) उडुगणगहगणसमणुगदो
 उदयदि चंदो रोहिणिकन्तो णवसरदमुदितसुखजणणो ॥ २७० ॥

१. इतः प्रभृति पद्यचतुष्कं का. पुस्तकीयं समुद्धृतपूर्वम् ।

[..................................

.................................. ।

..................................

.................................. ॥]

[1]आद्यमन्त्यं चतुर्थं च सप्तमं दशमं तथा ।
गुरूण्येकादशं चैव संस्कृतं वृत्तसंश्रयम् ॥ २७१ ॥
लघून्यन्यानि शेषाणि पादे यस्मिन्भवन्ति ते ।
[2]विज्ञेयं शीर्षकं तज्ज्ञैः स्खलितं नामतो यथा—॥ २७२ ॥

[3]वातसमुद्धतवीचितरङ्गे स्फटिकमणिनिकरइसजनले
　पङ्कजरेणुपरागपिषङ्गे विलुलितकमलकुवलयदले ।
मोटितकल्पतरूत्थितशाखे सुरयुवतिनयनसमसुश्रुतं
　क्रीडितदानसुगन्धमहोर्मे सुरगज इह सुरसरिभितिः ॥ २७३ ॥[4]

[5]अष्टावादौ (अष्टौ पादौ?) दीर्घाणि स्युर्यदि च
　[6](पुनरपि) हि भवति ([7]बहु) लघुगणः ।
भूयश्चान्ते दीर्घं [8]त्वेकं च यदि भवति पदि
　पदि पुनरपि ( [9]च ) तथा ॥ २७४ ॥
मत्ताक्रीडा विद्युन्मालेत्यपि च (विवि[10]धं)
　कविभिरपि बहुभिरुदिता ।

---

१. 'आद्यमन्त्यं चतुर्थं च सप्तमं दशमं तथा ।
　गुरूण्येकादशं चैव संकृतौ वृत्तसंश्रये ॥' इति का.

२. 'तज्ज्ञेयम्' का. ३. का. पुस्तके—
　'पादसमुंलदवीचितरंगो पफलिवामणिणिकरजलो
　वीचिपरघोणणिणादो पट्ठपवनललितदविहनकुलो ।
　मीणकलकुलभीमतरखुगोघुभिदघणणिससखो
　तुगमहीरसमाणणिरुद्धो रुन्धिद इव सपदि सलिलणिहो ॥' इति ।

४. अत्रत्यं का.पुस्तकस्थपद्यं समुद्धृतपूर्वम्. ५. 'अष्टौ पादौ' का. ६.७.९.१०. कोष्ठकान्तर्गतपाठस्य लेखकप्रमादप्रक्षिप्तत्वं प्रतीयते. ८. 'दीर्घस्त्वेको' का.

[1]नाम्ना छन्दोवृत्ते [2]वृत्तेदेवित्यमिति ( ज्ञेया
विकृतगतिः ) गतिविधिषु च नियतमहिता ॥ २७५ ॥

यथा—

[3]एसो मेहो सेलातुकसणिरवमुरजपटहसमरवा
णाणाविज्जुज्जोवालोओ घणपटलणिचयजलधरसमणुगदो ।
णाणावण्णो ताउग्घारी[4]तधवलखगविचरितकुसुमपभो
संछायन्तो लोपइयं(?)भमइ चलगिरिणिवह इव स्तुभसलिलो॥२७६॥

[..............................
.............................. ।
..............................
.............................. ॥]

[5]पञ्चमं द्वादशं चैव दीर्घमन्त्यं त्रयोदशम् ।
[6]उत्कृत्यां तु भवेत्पादे नृ(वृ?)त्तं वेगवती य[7]था—॥ २७७ ॥

गगणतलंगणमभि[8]रुहमाणो उडुगणसमा[9]र्ष(मणु)गदो
[10]युवतिजणाणं सुरचितरूपा सुखितदयितजणमदणकरो ।
[11]किरणसहस्सविमुञ्चितवन्दो रजति(त)[गि]रिशिखरसदिसवधू
[12]उदयदि संपदि अरु जगदीषो(वो?)कुमुदवणरुचिविमलकरो ॥२७८॥

---

१. 'नाम्ना छन्दोवृत्ते ज्ञेया विकृतगतिविधिषु नययुवतिरिहासा' इति का.
२. अत्रापि कतिचिदक्षराणि प्रक्षिप्तानि प्रतीयन्ते.

३. 'ए सो मे सो लोहो ओअ सणि मुरजपड्डपड्हसमरपोना वित्रजो
अलो पोहि थणध अड्डलणि अभजलहरुहर आनाणावणो ।
तोउग्घारोपविअरदिरूर कुसुमज धुरो छादतोलो
अचदोपइ हरिणिवह इसुतणुलतो ॥' इति का.

४. 'रीचरितधवल' ख. ५. 'तदेतत् पद्यं सोदाहरणं का. पुस्तके समुद्धृतपूर्वम् ।
६. 'उत्कृत्या यो भवेत्पादो' का. ७. 'तु तत्' का. ८. '°हिरुहमाणो' का.
९. '°गणगहणसमभिगतो का. १०. 'हलधर आणणरुचिररूपञ्जवलजण सहिदमद-करकरको' का. ११. 'किरण पउंसु अपि किरमाणो रजदगिरिसहिरसदिवसबहू' का.
१२. 'उदयदि सपदि असुज जगदीवो कुमुदवण रुचिरमविलमलकरो' का.

[..................................

.................................... ।

..................................

.................................... ॥]

एता ह्यष्टौ बुधैर्ज्ञेयाः शीर्षकाणां तु जातयः ।

पुनर्नर्कुटकानां[1] तु संप्रवक्ष्यामि लक्षणम् ॥ २७९ ॥

अष्टौ[2] हि नर्कुटानां तु विज्ञेया जातयो बुधैः ।

दर्शनं लक्षणं तासां[3] नामानि च निबोधत ॥ २८० ॥

रथोद्धता बुद्बुदकमुद्गता वंशपत्रकम् ।

शिखाक्षरा[4] कनुम(ध्वजव)ती हंसास्यं तोटकं तथा ॥ २८१ ॥

प्रथमं च तृतीयं[5] च सप्तमं नवमान्त्यके ।[6]

गुरूणि त्रैष्टुभे पादे नर्कुटं तद्रथोद्धतम्[7] ॥ २८२ ॥

यथा—

एसिका[8] कमलगब्भागेहकरेणुपिज्जरिदचारुगतिका ।

सादरं मदकलोपगूजिदा हिण्डते सिखरम्मि छप्पदी ॥ २८३ ॥

[.................................. ।

.................................. ॥]

---

१. 'पुनर्नत्कुटकानां च लक्षणं सन्निबोधत ।' का. २. 'अष्टौ नत्कुटकानां तु विज्ञेया मूलजातयः ।' का. ३. 'चासां' का. ४. 'प्रमिताक्षरा केतुमती हंसास्यं तोटकं तथा ।' का. ५. इतोऽग्रे का. पुस्तके—

'सप्तकं तृतीयकं यत्र चैव नवमं सनैधनम् ।

पादतो गुरु भवेद्रथोद्धता त्रैष्टुभं भवति तत्र नत्कुटम् ॥' इत्यधिकम् ।

'द्वितीयं च' का. ६. 'नवमान्तिकम्' का. ७. 'नत्कुटं तद्यथोद्यतम्' का. ८. का. पुस्तके तु—

'इंथ आकमलङ्गभगहओ ओअरेणुबीजरिदसारूपंतिआ ।

सारपङ्करगुणंपहतिआ हाउदेसरवमिछंपआ ॥' इति ।

पञ्चमं सप्तमं चैव निधनं च गुरूण्यथ ।
पादे तु बृहतीसंस्थे यत्र तद्बुद्बुदं त(य)था—॥ २८४ ॥

---

१. का. पुस्तके 'पञ्चमं सप्तमं चैव' इत्यादि २८४ श्लोकमारभ्य 'पफुल्लफुल्लपादपं' इत्यादि ३०७ श्लोकपर्यन्त २३० श्लोकानां स्थाने—

यथा—

'इंथआ कमलन्नभगहुओ ओअरेणुवीजरिदसारूपंतिआ ।
सारपडुरगुणपहतिआ ह्राउदेसरवसिछंपआ ॥ ३०९ ॥'
तृतीयं दशमं चान्त्यं नवमैकादशं गुरु ।
बुद्बुदं चातिजगती विज्ञेयं नत्कुटं तु तत् ॥ ३१० ॥

यथा—

तरुसडं अबुहिए सरो घणणादभदिहि अमणोहरो असुदीण ।
दीणागमणोणुकिदो समपे इदाणिणि कमलभोसपादव ॥ ३११ ॥
तृतीयं पञ्चमं चैव नवमं च तथैव च ।
चतुर्दशं द्वादशं च नैधनं च भवन्ति वै ॥ ३१२ ॥
यस्मिन्नष्टिकृते पादे गुरूण्येतानि नित्यशः ।
छन्दोज्ञैर्ज्ञेयमेतत्तु नत्कुटं द्रुतं यथा ॥ ३१३ ॥

यथा—

कमलाअरं कुसुमिदहलसरसंकुलं
वरहथिह्नह कलसीतअसाअरोपमं ।
असुमं असुमं मन्द महु अष्टरवममराणु
कुलदक्षर लोलुवे लतरिअसदागमे सरायन्तु ॥ ३१४ ॥
चतुर्थषष्ठदशमैः प्रथमनिधनकैः भूषितमक्षरैस्तु कविभिः ।
गुरुभिः कविजनायितं तत् खलु वंशपत्रपतितं चरणविधिगतम् ॥ ३१५ ॥

यथा—

सूदपणपुंलइविलतिलअकुरसहिणं
अचंवसाल हो अवयि इद कुसुमुदिअं ।
माहवमासए वणे वणे जुवइ सहअरो
हिंडइ कोइलो सहाकरसासवमंहुरवो ॥ ३१६ ॥
तृतीयं पञ्चमं चैव नवमं नैधनं तथा ।
ग(गु?)रूण्येतानि पादे तु जागते प्रमिताक्षरम् ॥ ३१७ ॥

तडिगुणावद्धविवओ सेदखगपसोहिदो णभसि गजो ।
समुका ओर्वेवर दिपसमे कर्त्तुं[1] ............ ॥ २८५ ॥

[........................................... ।
........................................... ॥]

तृतीयं पञ्चमं चैव नवमैकादशे तथा ।
द्वादशं षोडशं चैव चतुर्दशमथापि च ॥ २८६ ॥
यस्मिन्नष्ट(ष्टि)कृते पादे गुरूण्येतानि सर्वशः ।
छन्दोभिर्ज्ञेयमेतत्तु नर्कुटं ह्युद्गतं त(य)था— ॥ २८७ ॥

वणसण्डकं जहादि कोसिओ वायसाहदो
भयभीदओ च.........यदि पादवं दीणओ ।

---

यथा—

महुकाणणे भमिअ एस चिरं द्रवईमुदाहकसमं विहिआ ।
कमलाअरे सुरभिपङ्कअए अवहीसए सरईसवयि ॥ ३१८ ॥
आद्ये चतुर्दश च मात्रा अन्यत्र च षोडश भवन्ति तथा ।
ज्ञेया हि सा विषमपादे केतुमति नत्कुटं जातिः ॥ ३१९ ॥

यथा—

कुजलवमससेविकपपक अंरिमदे मरणिआपकंविहा ।
अभीम अभमरि हरणपरिसहिआ ॥ ३२० ॥
द्वितीयसप्तमान्त्याश्च चतुर्थकं गुरु बुदावि षष्ठो दशमोऽपि वा ।
अथोदितो हि पादेऽथ जागते भवेदितं हंसास्यमिति संस्मृतम् ॥ ३२१ ॥

यथा—

हालहओणतिसमणिओ सरंमि रमए बुलंअ पङ्कए तरङ्गसं ।
गुलेचपअकालिए विलोहू अन्त प्रोपकसणाहिअ ॥ ३२२ ॥
यदि षष्ठतृतीयकनैधनकैर्नवमो च भूमितमषट्पदम् ।
गुरुभिः सहितं लिह तद्वदितं भुवि तोटकमेव हि नत्कुटकम् ॥ ३२३ ॥

यथा—

अविरमे अतिभीमरवो भव असजणणो चरकोसि आओ सुवा ।
अस एहि पहंथिदओ सारिमगलकोधरअन्तुरिअ ॥ ३२४ ॥

१. त्रुटिचिह्नमादर्शद्वयेऽपि न.

तरुकोटरंदिसंपदं लोलणेत्तओ············
　　समभिहुदो णिसि चरो णयंयंदिपोहिदो ॥ २८८ ॥

[····································
　　···································· ।
····································
　　···································· ॥]

यत्र चतुर्थषष्ठदश(म)प्रथमनिधनगै-
　　र्भूषितमक्षरैर्गुरुकृतैः श्रवणसुखकरैः ।
ततवद्धु वंशपत्रपतितं मुनिगणगदितं
　　नर्कुटकं वदन्ति नियमादुपवृत्तिरचितम् ॥ २८९ ॥

यथा—

चूदवणं पप्फुल्लिअलयं कुरुवकसहिदं
　　चारुअसोअमलुकलिकं कुसुमसमुदिदम् ।
माधवकाणणं युवदिआजणमदजणणं[1]
　　हिण्ड····कोकिलाफर····सावनहुररवा···· ॥ २९० ॥

[··························
　　························ ।
··························
　　························ ॥]

तृतीयं पञ्चमं चैव नवमं नैधनं तथा ।
गुरूण्येतानि पादे तु यत्र तत्प्रमिताक्षरम् ॥ २९१ ॥

यथा—

कमलायरे सुरभिऊण चिरं भमली मुहासव····सुणओ ।
मधुसूसिदं च सुरदि चूदवणं परिहिण्डदे सुतणु छम्पदओ ॥२९२॥

---

१. 'नदजणाणां' क-ख.

[.................................... ।
.................................... ॥]

तृतीयपञ्चमान्त्यानि प्रथमे सचतुर्थकम् ।
षष्ठं च नैधने वाथ गुरूणि ध्वजिनी यथा— ॥ २९३ ॥

विलसन्तिआकमलसण्डे पुकसुअन्तके कुसुमलुद्धा ।
तुरिअपपीतमधुमत्ता छम्पदि आकुलं समुपयादि ॥ २९४ ॥

[.................................... ।
.................................... ॥]

तृतीयं च चतुर्थं च षष्ठं सप्तममेव च ।
दशमं नैधनं चैव गुरूणि च भवन्ति हि ॥ २९५ ॥

पादे तु या(जा)गते यत्र शेषाणि च लघून्यथ ।
हंसास्यं नाम विज्ञेयं गदितं नर्कुटं त(य)था—॥ २९६ ॥

दिजहंसाधकंसे सलिलसरे कुसुमसो(मो)दलुद्धको(क)मलाकरे ।
णलिणीपत्तामज्जोपरिहिण्डेदा भमणायासखिण्णा भमरावली ॥ २९७ ॥

[.................................... ।
.................................... ॥]

यदिहान्त्यतृतीयकषष्ठगतैर्नवमे नवमेन च भूषि(त)पदम् ।
गुरुभिः सततं त्विह तद्धदितं ननु तोटकमेव हि नर्कुटं(टकम्)॥२९८॥

यथा—

रमणीसहिओ रजनीविरांम[1] गगणङ्गणए खगकोसिगओ ।
अनुवायस एहोविद्यदि दुर्जपरिमग्भदे कोटरथम् (?) ॥ २९९ ॥

[.................................... ।
.................................... ॥]

---

१. 'विरतौ' इति भवेत्.

एतास्तु जातयः प्रोक्ता नर्कुटानां समासतः ।
पुनश्च खञ्जकानां तु संप्रवक्ष्यामि लक्षणम् ॥ ३०० ॥
प्रमोदं खञ्जकं पूर्वं भावनी मत्तचेष्टितम् ।
एतास्तिस्रः समाख्याताः खञ्जकानां तु जातयः ॥ ३०१ ॥
आद्यचतुर्थे षष्ठदशमं सषोडशमथान्त्यमेव च (?)
यदि द्वादशमेव यत्र चरणेषु सप्तदशकात्परं च विहितम् ।
छन्दसि चेत्तथा गुरु चेदथाकृतिगतं भवेत्तु सततं
मद्रकामदखञ्जकमदि (?) पुनश्च कथितं प्रमोदकमिदम् ॥३०२॥

यथा—

माधवमापसोभिद समग्गके उववाणम्मि फुल्लकुसुमो
निच्चपरमत्तबहुपरिधसंघपरिघट्टणादमुहले ।
कुडिद····दसंडसकयारचञ्जरविलोलानदपवणे
हिण्डदि छप्पदाणुगदेमग्गउपरदोयइद्र(न्दु)वदणा ॥ ३०३ ॥
[······························
······························ ।
······························
······························ ॥]

आद्यपञ्चमान्त्यसप्तमं स्यात्तृतीयमेव दीर्घकम् ।
यस्याः पादयोर्गतो हि सा भाविनीति खञ्जकम् ॥ ३०४ ॥

यथा—

जाति वेधुणयाणमानुवूदरेणुगुणिनृगओ ।
कल्लयंकतु वसोभिदो छम्पओ दुदंपिधाविदो ॥ ३०५ ॥
[······························ ।
······························ ॥]

यदा तृतीयसप्तमं तथाद्यपञ्चमं लघु ।
तदा तु मत्तचेष्टितं बुधा वदन्ति खञ्जकम् ॥ ३०६ ॥

यथा—

पफुल्लफुल्लपादवं विहंगमोवसोभिदम् ।
वनं पगीदछप्पदं उवेइ एस कोकिला ॥ ३०७ ॥

[.............................. ।
.............................. ॥]

[1]नर्कुटानां तु खञ्जानामेता वै मूलजातयः ।
आभ्यां[2] विनिःसृताश्चान्या युग्मौजा विषमास्तथा ॥ ३०८ ॥

चतुःषष्टिर्ध्रुवाणां हि[3] विज्ञेया मूलजातयः ।
समवृत्ताक्षरकृता [4]अतोऽन्या विषमाः स्मृताः ॥ ३०९ ॥

समवृत्तास्तु[5] जायन्ते ध्रुवास्तिस्रस्तु नित्यशः ।
युग्मौजाश्चा[6]पि मिश्राश्च विषमार्धसमाः समाः ॥ ३१० ॥

तत्रार्धं[7] विषमाणां तु षष्ट्यां चार्धशते स्मृता ।
एतदेव परीमाणं विषमाणां प्रकीर्तितम् ॥ ३११ ॥

[8]समान्योजाश्च जायन्ते ध्रुवा विषमपा[9]दिकाः ।
[10]स्वेन नाम्ना तु नामानि(ताः?)सां कार्याणि वृ(ह)त्तमः (यः?) ३१२

एतास्तु[11] जातयः प्रोक्ता नानावृत्तसमुद्भवाः ।
[12]अतः परं प्रवक्ष्यामि विकल्पान्पञ्चहेतुकान् ॥ ३१३ ॥

जातिस्थानं प्रका[13]रश्च प्रमाणं नाम चैव हि ।
[14]ज्ञेयं(याः?)ध्रुवाणां गीतज्ञै[15]र्विकल्पाः पञ्चके[16](हे?)तुकाः ॥ ३१४ ॥

---

१. 'नत्कुटानां बुधैर्ज्ञेया' का. २. 'आभ्यो विनिःसृता चान्या युग्मौजा विषमाक्षराः ।' का. ३. 'च' का. ४. 'ह्य' का. ५. 'समवृत्तासु' का. ६. 'युग्मौजोविषमाणां तु पञ्चाशीतिः शते स्मृता ।' का. ७. एतत्पद्यम् का. पुस्तके नास्ति । ८. 'सामान्या एव' इति का. ९. 'विषमवादिका' का. १०. 'स्वच्छा नाम्ना तु नामानि' का. ११. 'एवं तु जातयः' का. १२. 'अत ऊर्ध्वं' का. १३. 'प्रमाणं च प्रकारो नाम' का. १४. 'ज्ञेया' का. १५. 'नाट्यज्ञैः' का. १६. 'पञ्चहेतुकाः' का.

वृत्ताक्षरप्रमाणं हि जातिरित्यभिसंज्ञिताः ।
समार्धविषमाभिश्च[1] प्रकारः परिकीर्तितः ॥ ३१५ ॥
[2]षड्घनो(कला?)ऽष्टकले चैव [3]प्रमाणे द्विविधे स्मृते ।
यथा [4]गोत्रकुलाचारैर्नृणां [5]नामाभिधीयते ॥ ३१६ ॥
एवं [6]नामाश्रयोपेतं ध्रुवाणामपि चेष्यते ।
प्रवेशाक्षेपनिष्कामत्रा(प्रा?)सादिकमथान्तरम् ।
गानं पञ्चविधं [7]विद्याद्ध्रुव[8]योगसमन्वितम् ॥ ३१७ ॥
नानारसार्थयुक्ता नृणां [9]या नी(गी?)यते प्रवेशेषु ।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ॥ ३१८ ॥
अङ्कान्ते [10]निष्क्रमणे [11]पात्राणां गीयते प्रयोगेषु ।
निष्क्रमोपगत[12]गुणं विद्यान्नै(न्नै?)ष्क्रामिकीं तां तु ॥ ३१९ ॥
क्रममुल्लङ्घ्य विधिज्ञैः क्रियन्ते या [13]द्रुतलयेन नाट्यविधौ ।
आक्षेपिकी [14]ध्रुवासौ द्रुता स्थिता वापि विज्ञेया ॥ ३२० ॥
या च रसान्तरमुपगतमाक्षेपवशाद्द्रुतं [15]प्रसादयति ।
[16]रागप्रसादजननीं विद्यात्प्रासादिकीं तां तु ॥ ३२१ ॥
[17]विषसंमूर्छिते श्रान्ते वस्त्राभरणसंयमे ।
दोषप्रच्छादने या च गीयते [18]सान्तराच्छदा ॥ ३२२ ॥

---

१. '°विषमाणां च' का. २. 'षट्कलाष्टकले' का. ३. 'प्रमाणं' का. ४. 'यथा हेतुकुलाचारैः' का. ५. 'नाम विधीयते' का. ६. 'स्थाना श्रयोपेतं' का. ७. 'ज्ञेयं श्रूयतां चास्य लक्षणम्' का. ८. '°योगं' का. ९. 'गीयते' का. १०. 'निष्क्रान्ते' का. ११. 'या तु भवेत् प्रस्तुतखुतियोगे' का. १२. '°गुणा' का. १३. 'द्रुततके तु नृत्तविधौ' का. १४. 'ध्रुवा सा' का. १५. 'द्रुतं' इति का. पुस्तके नास्ति । १६. 'रङ्गरागप्रसादजननी ज्ञेया प्रासादिकी सा तु' का. १७. अस्य पद्यार्धस्य स्थाने—

'विषण्णे विस्मृते क्रुद्धे सुप्ते मत्तेऽथ संगते ।
गुरुभारावसन्ने च मूर्च्छिते पतिते तथा ॥' का. पुस्तके पद्यमेतत् ।

१८. 'सान्तरा ध्रुवा' का.

ध्रुवाणां चैव सर्वासां रसभावसमन्वितम् ।
तथा[1] स्थानं प्रवक्ष्यामि यत्र गेयं [2]प्रयत्नतः ॥ ३२३ ॥

द्विविधं तु स्मृतं स्थानं परस्थं [3]स्वात्मसंश्रितम् ।
य[4]त्राक्षेपसमायुक्तं तच्च मे संनिबोधत ॥ ३२४ ॥

बद्धे निरुद्धे पतिते व्याधिते[5] मूर्छिते मृते ।
अवकृष्टा ध्रुवा कार्या भावे च करुणाश्रये ॥ ३२५ ॥

औत्सुक्ये ह्यवहित्थे च चिन्तायां परिदेविते ।
श्रमे दै[6]त्ये(न्य?)विषादे च स्थिता कार्या ध्रुवा बुधैः[7] ॥ ३२६ ॥

एतेष्वेव तु भावेषु करुणावेदितेषु च ।
[8]ध्रुवा द्रुता च कर्तव्या करुणे भावसंश्रयाः[9] ॥ ३२७ ॥

यत्र [10]प्रत्यक्षरं (जं?)का दुःखं मृताभि[11]हतदर्शनात् ।
स्थिता तत्र प्रकर्तव्या[12] करुणे तु रसे बुधैः ॥ ३२८ ॥

[13]उत्पातदर्शनं चैव शृङ्गाराद्भुतदर्शने ।
वि[14]षादे च प्रमोदे च रोषसत्त्वस्य दर्शने ॥ ३२९ ॥

[15]वीररौद्रभयाप्येषु प्रत्यक्षावेदितेषु च ।
ध्रुवा ह्व(द्रु?)[16]तलया कार्या ह्यावेगे संभ्रमे तथा ॥ ३३० ॥

प्र[17]सादुयावने चैव तथानुसरणे पुनः ।
तथातिशयवाक्येषु तथा च [18]नय(व?)संगमे ॥ ३३१ ॥

---

१. 'यथास्थानं' का. २. 'योज्यं विभागतः' का. ३. 'परस्थात्मस्थसंश्रयम्' का. ४. 'यथाक्षेपसमायुक्तं' का. ५. 'साधिते' का. ६. 'दैन्यविषादे च' का. ७. 'बुधैः' का. ८. 'ध्रुवा ध्रुवा तु' का. ९. 'तथा वेगसमाश्रया' का. १०. 'प्रत्यक्षजं' का. ११. 'मृताभिहितदर्शनात्' का. १२. 'प्रयोक्तव्या' का. १३. 'उत्पाते संभ्रमे चैव ह्यमर्षेऽद्भुतदर्शने' का. १४. 'विषादे च प्रमादे रोषे सत्त्वप्रदर्शने ।' का. १५. 'रौद्रवीरभयावेषु प्रत्यक्षावेदितेषु च ।' का. १६. 'द्रुतलयाकार्या' का. १७. 'प्रासाद' क. 'प्रसादे' इति भवेत्. 'प्रसादने संभ्रमे च तथानुसरणेऽपि च ।' का. १८. 'नवसंगमे' का.

हर्षे[1] च प्रार्थनायां च शृङ्गाराद्भुतदर्शने ।
ध्रुवा प्रासादिकी[2] कार्या तज्ज्ञैर्मध्यलयाश्रया ॥ ३३२ ॥
शरीरव्यसने रोषे पुनः संधानकर्मणि ।
सानुबन्धा बुधैः कार्या गीतज्ञैरन्तरा[3] ध्रुवा ॥ ३३३ ॥
अध्रुवास्तु प्रवेशा[4] स्यु(स्तु?)र्गायनो(तो?)ग(रु?)दतस्तथा ।
संभ्रमे घो(प्र?)षणे चैव ह्युत्पाते विषमे[5] तथा ॥ ३३४ ॥
एवमर्थविधिं ज्ञात्वा कालं[7] देशमृतुं तथा ।
प्रकृतिं भावलिङ्गं च ततो योज्या ध्रुवा बुधैः ॥ ३३५ ॥
शीर्षका[8] चोद्धता चैव ह्यनुबन्धो विलम्बिता ।
इति(अड्डि?)ता[9] चावकृष्टा च षट्प्रकारा ध्रुवा स्मृताः ॥ ३३६ ॥
शिरः[10]स्थानीयमेतद्धि यस्मात्तस्मात्तु शीर्षिका ।
उद्ग(द्ध?)ता[11] उ(रु?)द्धता यस्मात्तस्माज्ज्ञेया ध्रुवा बुधैः ॥ ३३७ ॥
आक्रीडितप्रवृत्तो[12] यश्चतुर्थ[13]लेपकारकः ।
नाट्योपचारजनितः सोऽनुबन्धः प्रकीर्तितः ॥ ३३८ ॥
नाट्ये[14] त्वरितसंचारा नाट्यधर्ममनुव्रता ।
सविलम्बितसंचारा जा(या) च द्रुत[15]विलम्बिता ॥ ३३९ ॥

---

१. 'गर्वे च प्रार्थने चैव' का. २. 'प्रसादिनी' का. ३. 'हितज्ञैः' का. ४. 'प्रवेशास्तु गायतो रुदतस्तथा' का. ५. 'प्रेषणे चैव उत्पाते विस्मये तथा ।' का. ६. 'विस्मये' ख. ७. 'देशकालमतं च यत्' का. ८. 'शीर्षकं चोद्धता चैव अनुबन्धो विलम्बिता ।' का. ९. 'अड्डिता चापकृष्टा च' का. १०. 'शिरस्थानीयवे तद्धि यस्मात्तद्धि च शीर्षकम् ।' का. ११. 'उद्धता यस्माता यस्मात् तस्मात् गेया' का. १२. 'अन्यभावेऽपकृष्टा च द्रव्यहेतुषु बाध्यते । यस्मात् कारुण्यसंयुक्ता अपकृष्टा भवेत् ततः ॥' इत्यधिकं का. पुस्तके १३. '°प्रवृत्तं यच्चतुर्था लोपकारकः' का.

१४. 'नातित्वरितसंचारा नाट्यधर्ममनुस्मृता ।
अविलम्बितसंचारा भवेदथ विलम्बिता ॥' का.

१५. 'द्रुत' इति ख.

[1]अदि(ङ्कि?)ता तूत्कटगुणा शृङ्गाररससंभवा[2] ।
यस्मात्स्थानप्रसन्ना[3] च तस्मादेषादि(ङ्कि?)ता[4] स्मृता ॥ ३४० ॥
अन्यभावेषु[5] कृष्टं च कृष्टा हेतुर्हि गीयते ।
यस्मात्कारुण्यसंयुक्ता ह्यवकृष्टा भवेत्ततः ॥ ३४१ ॥
या तु प्रावेशिकी दीप्ता सा कार्या त्वदि(ङ्कि?)ता[6] नृणाम् ।
या[7] तु प्रासादिकी नाम स्त्रीणां कार्यादिता तु सा ॥ ३४२ ॥
या[8] स्थिता सावकृष्टा तु या द्रुता साविलम्बिता ।
यान्तरा[9] सानुबन्धा या[10]·················· ॥ ३४३ ॥
··················प्रकारास्तु प्रवेशजाः ।
[11]शीर्षिका चोद्धता चैव दोष(देव)पार्थिवयोर्भवेत् ॥ ३४४ ॥
दित्या(व्यः?) पार्थिववैश्यानां स्त्रीणां योज्या तथा दि(ङ्कि?)ता ।
मध्यमाना प्रवेशे च ज्ञेया (द्रु?)तविलम्बिता[12] ॥ ३४५ ॥
नीचा[13]नां चैव कर्तव्ये नृणां खञ्जकनर्कुटे ।
खञ्जकं नर्कुटं चैव स्थानप्रासादिकी तथा ॥ ३४६ ॥

---

१. 'पद्यमेतत्' का. पुस्तके ३३९ श्लोकात् पूर्वमेव वर्तते । २. 'शृङ्गारसंभवा का. ३. 'यस्मात्तस्मात् प्रसन्ना च' का. ४. 'तस्मादेवाङ्किता स्मृता' । ५. का. पुस्तके तु पद्यस्यास्य स्थाने—

'यतो लयवाद्य यति पदवर्णस्तथाक्षरम् ।
अनुबन्धालिगीतेषु अनुबन्धा भवेत्तथा ॥' इति वर्तते ।

६. 'सा कार्योद्धता नृणाम्' का. ७. एतदर्धं का. पुस्तके नास्त्येव ८. 'या समाश्रित-संचारा भवेदर्थविलम्बिता ।' का. ९. का. पुस्तके तु पद्यस्यास्य स्थाने—

'यतो लयवाद्ययतिपदवर्णस्तथाक्षरम् ।
अनुबन्धातिगीतेषु प्रकाराः षट् प्रवेशजाः ॥' इति ।

१०. 'आदर्शद्वयेऽपि त्रुटिर्न दृश्यते.

११. 'शीर्षकं चोद्धता चैव देवपार्थिवयोः स्मृतेः ।
दिव्या पार्थिववेश्यानां स्त्रीणां योग्या तथा स्मृतम् ॥' का.

१२. 'द्रुत' ख.

१३. 'नीचानां चैव कर्तव्यं नृणां नत्कुटखञ्जका ।
खञ्जनत्कुटके चैव स्थाने प्रासादिके तथा ॥' इति का.

[1]कामाल्ललितभावत्वाद्धास्यशृङ्गारयोर्यतः ।
कुर्यान्नीचे [2]मृते चैव अनु[3]बन्धलयाश्रयम् ॥ ३४७ ॥
स्त्रीणां राजन्यवैश्यानामपकृ[4]ष्टां तथैव च ।
संनिपातास्तु चत्वारः प्रावेशिक्या भवन्ति हि ॥ ३४८ ॥
शे[5]षा हि संनिपातास्[6]तु शीर्षकाः[7] षट्पदाः स्मृताः ।
[8]स्थितं चाप्यदितं चैव नीचानां नहि कारयेत् ॥ ३४९ ॥
[9]सर्वा(र्वे)भावाश्रयगतैस्तेषां कार्यं तु नाट[10]कम् ।
[11]त्रयो भावा भवन्त्येषां हास्यशोकभयानकाः ॥ ३५० ॥
एवं भावान्विदित्वा तु ध्रुवा कार्या[12] प्रयोक्तृभिः ।
वस्तुप्रयोगं प्रकृतं [13]रसभावाश्रितं च यत् ॥ ३५१ ॥
देशं [14]कालमवस्थां च ज्ञात्वा योज्या [15]ध्रुवा बुधैः ।
वस्तूद्दे[16]श्यसमुत्थं [17]पुं(पु?)न[ग?]रारण्यसंभवम् ॥ ३५२ ॥
प्रयोगश्चैव विज्ञेयो दिव्यमानुषसंश्रयः ।
उत्तमाधममध्यास्[18]तु(तु?) त्रिविधा प्रकृतिः स्मृता ॥ ३५३ ॥
रसभावौ तु पूर्वो[19]क्तावृतुः कालकृतस्तथा ।
शिशुयौवनवृद्धत्वं वयश्चैव प्रकीर्तितम् ॥ ३५४ ॥
[20]कक्षादिभावजनितो देशस्[21]तु द्वि(वि?)विधः स्मृतः ।
[22]कालो रात्रिंदिवकृतो [23]वामका(वासरा?)दि विनिश्चितः ॥ ३५५ ॥

---

१. 'कस्मा' क. 'तस्मात्' का. २. 'तथा चैव' का. ३. 'अनुबन्धाश्रये तु सा' का. ४. 'अपकृष्टाः' का. ५. 'शीर्षादि' का. ६. 'स्युः' का. ७. 'शीर्षकं षट्पदं' का. ८. 'स्थितवव्यड्डिता वापि नीचे…कारयेत् ।' का. ९. 'सर्वभावाश्रय गतौ' का. १०. 'नत्कुटम्' का. ११. 'त्रयोभावा भवन्त्येषां हास्यवीरभयाश्रयाः' का. १२. 'योज्या' का. १३. 'रसभावान्वितं' का. १४. 'देशकालं' का. १५. 'सदा' का. १६. 'वस्तुदेशसमर्थं तु' का. १७. 'नगरारण्यसंभवम्' का. १८. '°मध्या तु' का. १९. 'पूर्वोक्ता ऋतुः' का. २०. 'कक्षा दिवभागजनिता' इति भवेत्. 'कध्यादिभेदजनितो' का. २१. 'विविधः' इति का. २२. 'कालो रात्रिदिनकृतो' का. २३. 'मासपक्षविनिश्चितः' का.

अवस्था चैव विज्ञेया सुखःदुखं[1]समुद्भवा ।
स्थानान्येतानि तु बुधैर्नानावस्थानि नित्यशः ॥ ३५६ ॥
प्रयोगे[2] संप्रयोज्यानि रसभावौ समीक्ष्य तु ।
यानि वाच्यैस्तु[3] न ब्रूयात्तानि गीतैरुदाहरेत् ॥ ३५७ ॥
न (ग?)तैरेवं[4] हि वाक्यार्थे(र्थैः?)रसपाको बलाश्रयाः (?) ।
ध्रुवाणामाश्रयाः कार्या औपम्य[5]गुणसंभवाः ॥ ३५८ ॥
उत्तमाधममध्यानां नृणां[6] स्त्रीणामथापि च ।
आद्यत्व[7]सेमेयय(पवः?)ना(?) देवपार्थिवयोः स्मृता ॥ ३५९ ॥
दैत्यानां राक्षसानां च मेघपर्वतसागराः ।
सिद्धगन्धर्वयक्षाणां ग्र(आ?)[8]हेम(भ?)वृषभाः स्मृताः ॥ ३६० ॥
तपःस्थितानां सर्वेषां सूर्याग्निपवनाः[9] स्मृताः ।
हव्यवाहस्तु[10] विप्राणां ये चान्ये तपसि स्थिताः ॥ ३६१ ॥
एतेषां चैव यानार्थ[11](र्थः?)स्तासामौपम्यसंश्रयाः ।
विद्युदुल्काकर[12]सौघा दिव्यानामपि च स्मृताः ॥ ३६२ ॥
देवानां[13] च प्रयोज्या ये नृपाणा[14]मपि ते स्मृताः ।
नागसिंहवृक[15]ाश्चैव नैते दिव्येषु कीर्तिताः ॥ ३६३ ॥
[16]महिषा रुरुसिंहाश्च क्रव्यादाः पशवश्च ये ।
हिंस्रसत्त्वेषु ते कार्या यक्षराक्षसजा[17]तिषु ॥ ३६४ ॥

---

१. 'सुखदुःखसमुद्भवा' का. २. 'प्रयोगे तु प्रयोज्यानि' का. ३. 'वाक्यैस्तु' का. ४. 'गतैरेव हि वाक्यार्थैरन्यैः प्रतिबलाश्रयैः' का. ५. 'द्यौपम्यगुणसंश्रयाः' का. ६. 'स्त्रीणां नृणामथापि च' का. ७. 'चन्द्राग्निसूर्यः (नाः ?) पवनदेवपार्थिवयोस्तथा ।' का. ८. 'प्राहेभवृषभाः' का. ९. 'सूर्याग्निपवनः(नाः ?) स्मृताः (?)' का. १०. एतत्पद्यार्धं का. पुस्तके नास्ति । ११. 'या नार्यः' का. १२. 'विद्युदुल्कार्करा-मश्च ? ।' का. १३. 'देवतायाः प्रयोज्यास्तु' का. १४. 'नृपाणामपि च ते मताः' का. १५. '०वृषाः' का. १६. इतः पूर्वं का. पुस्तके—'वारणे राजसिंहश्च नृपाणामपि चेष्यते । इत्यधिकम् । १७ '०भूतजाः' का.

[1]उत्तमानां प्रयोक्तव्या नानारससमाश्रयाः ।
मत्तमातङ्गसहिता राजहंसाश्च योक्तृति(भिः ?) ॥ ३६५ ॥
सारसाः शिखिनः क्रौञ्चाश्चकाह्वाः कुमुदाकराः ।
[2]मध्यमान(नां:?) प्रकर्तव्या औपम्यगुणसंश्रयाः ॥ ३६६ ॥
[3]कोकिलं षट्पदं ध्वाङ्क्षं कुररं कौशिकं बकम् ।
पारावतं सकादम्बमधमेषु प्रयोजयेत् ॥ ३६७ ॥
एवमेषां यथोक्तानां स्त्रियो [4]यास्तु भवन्ति हि ।
उत्तमाधममध्यानां तासां चैव निबोधत ॥ ३६८ ॥
व(श?)र्वरी [5]वसुधा यो(ज्यो?)त्स्ना तिन्तिनी (नलिनी?) [6]करिणी नदी ।
नृपस्त्रीणां भवन्त्येता औपम्यगुणसंश्रयाः ॥ ३६९ ॥
दीर्घिका कुररी वल्ली सारसी शिखिनी मृगी ।
मध्यमानां भवन्त्येता [7]वेश्यानां चैव नित्यशः ॥ ३७० ॥
षट्पदीं [8]कुररीं ध्वाङ्क्षीं परपुष्टां च योजयेत् ।
अधमानां [9]ध्रुवास्त्वेताः प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३७१ ॥
[10]गत्यर्थे यमिता(?) याश्च बलनाथा भवन्ति हि ।
[11]प्रावेशिक्या बुधैरेव नैष्क्रामिक्यास्तथैव च ॥ ३७२ ॥
प्रावेशिक्याश्रया यास्तु पूर्वाह्णे यास्तु ते(?) स्मृताः ।
नक्तंदिनसमुत्थास्तु नैष्क्रामिक्याः स्वकालजाः ॥ ३७३ ॥

---

१. एतत्पद्यं का. पुस्तके नास्ति । २. 'मध्यमानां प्रयोक्तव्या' का. ३. का. पुस्तके त्वेतदेव पद्यम्—

'कोकिलः षट्पदो ध्वाङ्क्षः कुररः कौशिकोऽपरः ।
पारावतः सकालम्बो(म्ब ?) अधमेषु प्रयोजितः ॥'

४. 'स्त्रियामपि भवन्ति हि' का. ५. 'शर्वरी' का. ६ 'नलिनी तरुणी नदी' का. ७. 'वेश्यादीनां तु' का. ८. 'कुक्कुटी' का. ९. 'ध्रुवास्त्वेताः' का. 'प्रयोज्यास्तु प्रयोक्तृभिः' इति का. १०. 'गमनार्थं हि ये प्रोक्ताः प्रावेशिक्यां भवन्ति हि ।' का. ११. 'प्रावेशिक्या बुधैरेव' इत्याद्यारभ्य 'करुणाश्रयाः' इत्यन्तं सार्धपद्यद्वयी का. पुस्तके नास्ति ।

सौम्याः पूर्वाह्णकाले तु मध्याह्ने दीप्तसंश्रयाः ।
अपराह्णे तथा काले संध्यायां करुणाश्रयाः ॥ ३७४ ॥
[1]चलनार्था हि ये प्रोक्ता आक्षेपिक्या भवन्ति हि[2] ।
[3]आक्षेपा एवमेव स्युर्हृ(द्रु?)तस्थितिगतास्तथा ॥ ३७५ ॥
[4]रोषामर्षादिसंभूताः शोकाद्भुतभयानकाः ।
[5]पदव्यं ( यद्द्रव्यं ? ) वसुधासंस्थं कृतदैवतमाश्रितम् ॥ ३७६ ॥
[6]तत्सर्वमुपनेयं तु गानयुक्त्योपमाश्रयम् ।
[7]स्थावरा(रे?)स्थावरं कुर्याद्गत्यर्थैक्यवलं ( चलं ? ) तथा ।
[8]सुखदुःखकृतैर्भावैरौपम्यगुणसंश्रयात् ( न् ? ) ॥ ३७७ ॥
[9]तुल्थ(भूमि?) रथवाजिकुञ्जरमृगपशुपक्षिशिबिकाविमा[10]ना(न?)[याना?]नाम् ।
गतिविभ्रमं [11]हि दृष्ट्वा कर्तव्या [12]तु ध्रुवा तज्ज्ञैः ॥ ३७८ ॥
[13]रथपत्रिवाजिवारणविमानसिक्यस्थपक्षियानेषु ।
[14]हृतदषद(द्रुतपद?) वर्णवर्णैः कर्तव्या [15]तु ध्रुवा तज्ज्ञैः ॥ ३७९ ॥
[16]ओजःकृता तु रुवै(ये वै?)....गुरुवर्णा वृष[17]गजेन्द्रसिंहेषु ।
[18]सारसवानरहंसे तथा [19]मयूरे विधातव्या ॥ ३८० ॥
[20]द्रुतगमने लघु[21]वर्णो विततगतौ च दीर्घवर्णकृताः ।
एवं स्थिते[22]ह्रुतानां ज्ञात्वा भावं [23]ध्रुवा कार्या ॥ ३८१ ॥

---

१. 'स्थावरा ये च संप्राप्ता आक्षेपिक्याश्रया हि ते ।' का. २. इतोऽग्रे का. पुस्तके—'आक्षेपिक्याश्रिताः सर्वे द्रुताः स्थितकृतास्तथा ।' इत्यर्धमधिकम्. ३. 'आक्षेपो ह्येवमेव स्युर्द्रुताः स्थितगताश्रयाः ।' इति का. ४. 'रोषामर्षादिसंभूताः' का. ५. 'यद्द्रव्यं वसुधासंस्थं मृतदैवतमानुषे ।' इति का. ६. 'तत्सर्वमपनेयं तु गाने युक्तोपमाश्रये' का. ७. 'स्थावरे स्थावरं कुर्यात् गतार्थेषु चलं तथा ।' का. ८. 'सुखदुःखकृतान् भावानौपम्यगुणसंश्रयान् ।' इति का. ९. 'भूमिरथं' का. १०. '°विमानयानानाम्' का. ११. 'गतिविक्रमं' का. १२. 'वै' का. १३. 'रथसिंहपक्षिवारणविमानशिबिकान्तरिक्षयानेषु ।' का. १४. 'द्रुतपदवर्णविशेषा' का. १५. 'वै' का. १६. 'ओजःकृता हि ये वै' का. १७. 'वृषगजासिंहर्क्षाः' का. १८. 'सारसवानरहंसैः' का. १९. 'मयूरैश्च कर्तव्या' का. २०. 'द्रुतगमनेन' का. २१. 'लघुवर्णविलम्बितकृते तु दीर्घवर्णकृताः ।' का. २२. 'एवं स्थिते द्रुतानां' का. २३. 'द्रुताः कार्याः' का.

नास्ति किंचिदवृत्तं तु[1] पदं गानसमाश्रयम्[2] ।
तस्माद्गीतिमभिप्रेक्ष्य[3] तद्वृत्तं योजयेद्ध्रुवाम्[4] ॥ ३८२ ॥

तस्माद्वहनगत्यर्थै[5]र्ध्रुवा कार्याक्षरैस्तथा[6] ।
अङ्गानां समता यत्र भाण्डवाद्ये करिष्यते[7] ॥ ३८३ ॥

[8]प्रहतो वाहनगतौ ध्रुवापादो विधीयते ।
तद्वृत्तं तु भवेच्चाद्य[9]मङ्गवाद्यसमं तथा ॥ ३८४ ॥

पूर्वं[10] गानं ततो वाद्यं ततो नृत्तं[11] प्रयोजयेत् ।
गीतवाद्याङ्गसंयोग[ःप्रयोगः?] इति संज्ञितः ।
[12]हृदयस्थस्तु यो भावः साङ्गाभिनयनैरथ ॥ ३८५ ॥

[13]निवृत्त्यङ्कुरसूचा तु कार्यस्त्व(र्या त्व?)भिनयान्वितः (ताः?) ।
तत्र प्रासादिकी योज्या प्रहर्षार्थं[14] गुणोद्भवा ॥ ३८६ ॥

आकाशपुरुषो यत्र यत्र चाकाशभाषणम् ।
[15]अस्वर्थार्थास्तत्र कर्तव्या ध्रुवाद्यो भाषसंश्रयः ॥ ३८७ ॥

[16]प्रसादनाश्रया वापि ही[17]र्ष्याक्रोधाश्रयापि वा ।
शृङ्गाररसमासाद्य ध्रुवा त्वा(न्व?)र्था प्रयोगतः[18] ॥ ३८८ ॥

यानि प्र(प्रा?)सादिकानि[19] स्युः स्थानानि रससंश्रयां(त्?)[20] ।
अन्वर्था तत्र कर्तव्या ध्रुवा प्रासादिकी तथा[21] ॥ ३८९ ॥

---

१. 'हि' का. २. 'गानकृताश्रयम्' का. ३. 'तस्माद्गानमभिप्रेक्ष्य' का. ४. 'योजयेद(द्?) ध्रुवम्' का. ५. '°गत्यर्था' । ६. '°कार्याक्षरैरथ' का. ७. 'भविष्यति' का. ८. 'तद्वृत्तं वाहनगतौ ध्रुवामाने विधीयते ।' का. ९. 'भवेद्गानमङ्गपातसमं' का. १०. 'पूर्वगानं' का. ११. 'वृत्तं' का. १२. 'हृदयस्थास्तु ये भावाः सोऽङ्गजैरथनिर्वृताः ।' का. १३. 'निवृत्त्यङ्कुरसूचा तु कार्यास्तेभिनयान्विताः ।' का. १४. 'प्रकषार्थ°' का. १५. 'अन्वर्था तत्र कर्तव्या ध्रुवा ह्याभाषणाश्रया ।' का. १६. 'प्रासादिक्याश्रयाश्चापि ।' १७. 'हि' इति का. पुस्तके नास्ति । १८. 'प्रयुज्यते' का. १९. 'यानि प्रासादकानि' का. २०. 'रससंश्रयात्' का. २१. 'तथ' का.

भाषादि[1] सौरसानां (सेनीं) तु ध्रुवायां[2] संप्रयोजयेत् ।
यदापि[3] मागधी यत्र कर्तव्यं नर्कुटं तथा ॥ ३९० ॥
दिव्यानां संस्कृताङ्गानां प्रमाणैस्तु विधीयते ।
अर्धसंस्कृतमेवं तु मानुषाणां प्रयोजयेत् ॥ ३९१ ॥
ये त्वौपम्यकृतौ[4] दिव्या यदि तेषां प्रयोगतः ।
प्रवेशे नायकं[5] तु स्याच्छृणु तेषां समाश्रयम् ॥ ३९२ ॥
यस्त्वेषां सात्त्विको भावः[6] कर्मसंकीर्तनं च यत् ।
तत्तत्कार्यं[7] गानयोगे प्रमाणगुणसंश्रयम् ॥ ३९३ ॥
छन्दः[8]प्रमाणसंयुक्तं दिव्यानां गानमिष्यते ।
पुण्याश्रयं[9] च तत्कार्यं कर्मसंकीर्तनादपि[10] ॥ ३९४ ॥
माला[11] वक्रं पुटं वृत्तं विश्लोकश्चूलिका तथा[12] ।
उद्गा(द्गी?)ता परवक्रं[13] च कर्तव्यानि प्रयोक्तृभिः ॥ ३९५ ॥
विधानं छन्दसामेतन्मया[14] पूर्वमुदाहृतम् ।
जयाशीर्वादयुक्तानि कार्याण्येतानि दैवतैः[15] ( ते ? ) ॥ ३९६ ॥
कफां ( ऋग्गा? ) था[16] प्रा(पा?)णिका चैव द्रष्टव्यानि प्रमाणतः ।
सुश्रवच्चैव(विश्राव्यश्चैव?) यस्मात्तु तस्माद्गीतं प्रयोजयेत् ॥ ३९७ ॥

---

१. 'भाषा तु शूरसेनी स्यात्' का. २. 'ध्रुवाणां' का. ३. 'न भाषां चैव मागध्यात् कर्तव्यं नत्कुटं बुधैः' का. ४. 'त्वौपम्यकृतौ' का. ५. 'प्रदेशे नाटकेऽपि स्यात् कार्यास्तेषां समाश्रयः ।' का. ६. 'सात्त्विके' का. ७. 'तत्कार्यं गानयोगे तु प्रमाणं विधिसंश्रयम् ।' का. ८. अत्र ३९४,३९५ पद्ययोः पौर्वापर्यम् । ९. 'स्तुत्याश्रयेण' का. १०. इतोऽग्रे का. पुस्तके—

'ध्रुवापादविधौ कार्यं यच्चौपम्यगुणाश्रयम्' इत्यधिकमत्र ।

११. 'मालावृत्तं पुटोपेतं' का. १२. 'चूलिकापि च' का. १३. 'परवक्रे च' का. १४. 'छन्दसामेषा' का. १५. 'दैवते ?' का.

१६. 'ऋग्गाथा पाणिका ह्येषां बोद्धव्यास्तु प्रमाणतः ।
विश्राव्यश्चैव यस्मात्तु तस्माद्गीतं प्रयोजयेत् ॥' इति का.

गान्धारमध्यमयुतः(ताः ?)[1] पञ्चमयुक्तास्तु जातयो यास्तु ।
ताभिः प्रमाणगणनं कर्तव्यं धैवतोपेतम् ॥ ३९८ ॥
प्रासादिकं स्थितं चैव नैष्क्रामं संप्रवेशजम्[2] ।
प्रमाणमपि[3] कर्तव्यं चतुःस्थानसमन्वितम् ॥ ३९९ ॥
प्रायसं(शः?)[4] संस्कृतं योज्यमनुष्टुप्छन्दसा कृतम् ।
नानादैवतकार्यं[5] तु[6] ह्यन्तराया(यं ?) विना तथा ॥ ४०० ॥
विष्कम्भापरवक्रं[7] च माला चेति प्रवेशजम् ।
पुनश्च[8] (पुटं च?) चूलिका चैव नैष्क्रामिकमथेष्यते[9] ॥ ४०१ ॥
प्रासादिक्युद्धतावृत्ति[10](त्तं?)स्थितं चानुष्टुभी(बि?)ष्यते[11] ।
स्थानान्येतानि बोध्यानि[12] प्रमाणे[13]विबुधैरथ ॥ ४०२ ॥
यदनुष्टुप्कृतं गानं स्थितस्थानसमाश्रयम् ।
स्वर्गभ्रान्त्याश्रयकृतं[14] चिन्तादुःखसमन्वितम् ॥ ४०३ ॥
गुरुप्रायाक्षरकृतं करुणाश्रुतिया(जा?)तिक(ज?)म्[15] ।
अभ्रष्टवर्णबहुकं[16] स्थितस्थानं तु[17] तद्भवेत् ॥ ४०४ ॥
उत्पादनार्थं[18] नृणां तु तथा विहरणेष्वपि[19] ।
दिव्यान्वयं[20] तु कर्तव्यं गानं पात्रसमाश्रयम् ॥ ४०५ ॥
मानुषेष्ववतीर्णस्य दिव्यस्य स्मरणाश्रयम् ।
प्रायेण[21] गानं कर्तव्यं दिव्यभावसमन्वितम् ॥ ४०६ ॥

---

१. 'गान्धारषड्जमध्यमपञ्चमयुक्ताश्च जातयो याश्च ।
एभिः प्रमाणगणनं कर्तव्यं दैवतोपेतम् ॥' इति **का.**

२. 'संप्रवशेयत्' **का.** ३. 'प्रमाणं परिकर्तव्यं' **का.** ४. 'प्रायशः' **का.** ५. 'नानादैवतकार्येषु' **का.** ६. 'अन्तरायं विना तथा' **का.** ७. 'वक्रं चापरवक्रं च' **का.** ८. 'पुटं च चूलिका चैव' **का.** ९. '°मपीष्यते' **का.** १०. '°वृत्तं' ११. '°ष्टुबिष्यते' **का.** १२. 'योज्यानि' **का.** १३. 'प्रामाण्यस्य' **का.** १४. 'शापभ्रंशाश्रयकृतं' **का.** १५. 'करुणस्वरजातिजम्' **का.** १६. 'प्रकृष्टवर्णबहुलम्' **का.** १७. 'भवेत्तु तत्' **का.** १८. 'उन्मादनार्थं' **का.** १९. 'तथापहरणेन च' **का.** २०. 'दिव्यान्वयानां कर्तव्यं स्थानमानुष्टुभाश्रयम्' **का.** २१. 'प्रमाणगानं कर्तव्यं दिव्येष्वेवं प्रयोक्तृभिः ।' **का.**

तस्यैव दुःखविषयं शोकचिन्ता[1]विनाशनम् ।
प्रमाणगानं कर्तव्यं शोकावस्था[2]न्तराश्रयम् ॥ ४०७ ॥
ध्रुवाणां हि विधानस्थान्या[3]श्रयस्य विशेषतः ।
तथा प्रयोगः कर्तव्यस्तच्च मे संनिबोधत ॥ ४०८ ॥
स्थापिते भाण्डविन्यासे त्रिशान्ति[4](त्रिसाम्नि ?) परिकीर्तिते ।
आश्रा[5]वणकं कर्तव्यं बहिर्गीतप्रयोगकम् ॥ ४०९ ॥
[6]प्रयुज्य च बहिर्गीतं पूर्वरङ्गं प्रयोजयेत् ।
[7]प्रयुक्ते पूर्वरङ्गे तु नाट्यागारं समाश्रयेत् ॥ ४१० ॥
गत्याश्रयेण नाट्यज्ञैः पदैर्नुगतैस्तथा ।
परि[9]क्रमेण रङ्गस्य गानेनार्थवशेन वा ॥ ४११ ॥
परिवर्ताः प्रयोक्तव्याः षडेव तु तथा[10] बुधैः ।
[11]ध्रुवा तत्र प्रकर्तव्या देवताभिर्यथा बुधैः ॥ ४१२ ॥
तत्र पाताः [12]प्रकर्तव्या एकविंशतिरेव च[13] ।
त्र्यस्रा वा चतुरस्रा वा ध्रुवा नाट्यैः [14]प्रयोगतः ॥ ४१३ ॥
त्रिकलं पादपतने त्र्यस्रायां तु[15] विधीयते ।
[16]चतुष्कलं तु पतनं चतु[17]रस्रगतं भवेत् ॥ ४१४ ॥

---

१. 'शोकसंतापनाशनम्' का. २. 'शोकावस्थाक्षयाश्रयम्' का. ३. 'विधानस्य आश्रयस्य विभागशः ।' का. ४. 'त्रिसाम्नि संप्रकीर्तिते' का. ५. 'आश्रावणात् यत् कर्तव्यं बहिर्गीतं प्रयोजयेत्' का. ६. पूर्वरङ्गप्रवृत्तेषु नाट्यद्वारं प्रयोजयेत् । ७. का. पुस्तकेऽर्धस्य पद्यस्यास्य स्थाने—

'पूर्वरङ्गप्रवृत्तेषु नाट्यद्वारं प्रयोजयेत् ।
ध्रुवा यत्र प्रकर्तव्या प्रकृतीनां प्रवेशजा ॥' इति पद्यम् ।

८. 'गानस्य परिवर्तकम्' का. ९. 'परिक्रामात्तु रङ्गस्य तथैवार्थवशेन वा' का. १०. 'बुधैरर्थे' का. ११. का. पुस्तके पद्यार्धमेतदागतपूर्वम् । १२. प्रयोक्तव्याः' का. १३. 'तु' का. १४. 'नाट्यप्रयोक्तृभिः' का. १५. 'च' इति का. १६. 'चतुरस्रं' का. १७. 'चतुरस्रा गतिः' का.

उत्तमे चतुरस्रा तु[1] त्र्यस्रा चैव तु मध्यमे ।
[2]त्र्यस्रं नर्कुटकं चैव ह्यधमे तु प्रयोजयेत् ॥ ४१५ ॥
विधिः स्वस्थगतो योऽत्र भवेच्चरणपातने ।
संभ्रमोत्पातरोषेषु कलार्धकलमिष्यते ॥ ४१६ ॥
[3]वि(त्रि?)कलद्विकलैककलाश्चतुष्कला [4]यत्र पादविन्यासाः ।
तत्र च साम्यं कार्यं भाण्डेन समं न गानेन ॥ ४१७ ॥
नह्य(ह्येकलकला) द्विकला ध्रुवा विरामा भवन्ति गान[5]विधौ ।
[6]तस्मात्साम्यं कार्यं भाण्डेन समं न गानेन ॥ ४१८ ॥
[7]ये पूर्वोक्ता भावाः स्थिताश्रया [ [8]द्रुताश्रया ? ] वापि ।
तेषां पादनि[9]पातं ज्ञात्वा साम्यं बुधैः कार्यम् ॥ ४१९ ॥
अपटाक्षेपकृ[10]तांश्चत्यधिक(दत्यधिका?)हर्षरोषशो[11]काद्याः ।
तत्र परिच्छेदसमः कार्यस्तज्ज्ञैः प्रदे[12]शैस्तु ॥ ४२० ॥
एवमेते [13]बुधैर्ज्ञेयाः प्रयोगे परिवर्त[14]काः ।
अत ऊर्ध्वं प्रवक्ष्यामि ग्रह[15]भाण्डसमाश्रयम् ॥ ४२१ ॥
अभाण्डमेकं गानस्य परिवर्तं प्रयोजयेत् ।
[16]चतुर्थे परिवर्ते तु तस्य भाण्डग्रहो भवेत् ॥ ४२२ ॥
संनिपातग्र[17]हा काचित्काचिद्वै [18]तर्जनीग्रहा ।
तथाकाशग्रहा [19]काचिद्ध्रुवा गाने भवन्ति हि ॥ ४२३ ॥
ध्रुवायोग[20]स्तु ( ध्रुवायास्तु ? ) ग्रहो यस्मात् कलातालसमन्वितः ।
स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरि(रा?)क्रमे ॥ ४२४ ॥

---

१. 'च' का. २. 'खञ्जनर्कुटकं चैव ह्यधमेषु प्रयोजयेत् । विधिस्वरगतो ह्येष भवेत् श्वसनपातने ॥' का. 'व्यस्रं' क. ३. 'त्रिकलाः' ४. 'चतुष्कलाश्चैव पादविन्यासः' का. ५. 'नाट्यविधौ' का. ६. 'तत्र च' का. ७. 'पूर्वोक्ता भावस्थिताश्रया' का. ८. 'द्रुताश्रया' का. ९. 'पातनिपातं' का. १०. 'कृतादत्यधिका' का. ११. 'हर्षशोकरोषाद्याः' का. १२. 'प्रवेशास्तु' का. १३. '°मेता' का. १४. 'परिकीर्तिताः' का. १५. 'ग्रहान् भाण्डसमाश्रयान्' का. १६. 'यच्चतुर्थे संनिपाते' का. १७. '°ग्रहः कश्चित्' का. १८. 'कश्चिद्वै तर्जनीग्रहः' का. १९. '°ग्रहः' का. २०. 'ध्रुवायास्तु ग्रहा यस्मात् कलातालसमन्विताः' का.

शीर्षकश्चोद्धतायाश्च[1] प्र(प्रा ?)देशिक्यां[2] ग्रदो (ग्रहो?) भवेत् ।
विलम्बितास्थितायोगे[3] [4]संनिपातेन कल्पते ॥ ४२५ ॥
नर्कुटस्यादि(ड्डि ?)तायाश्च[5] प्रासादिक्यास्तथैव च ।
[6]संनिपातग्रहः(हा?) कार्या द्रुतां[7] य(या?)श्चोर्ध्वजो(श्चोद्धतो?)ग्रहाः(हः?)४२६
नैष्क्रामिक्यानुबद्धानां[8] ग्रहो गानसमो भवेत् ।
तेषां[9] हि परिवर्तस्तु कार्यो गाने प्रयोक्तृभिः[10][11] ॥ ४२७ ॥
संनिपातश्च शम्या च तालश्चाकाशजस्तथा[12] ।
संभ्रमा[13] दे(वे ?)गजाश्चैव सापेक्षा[ये?] भवन्ति हि ॥ ४२८ ॥
ग्रहो[14] गानसमानस्तदुपान्त्यं संप्रकीर्तितम् ।
भूषणवासः पतने वैकल्ये[15](ल्पे?) विस्मृते परिश्रान्ते ।
दोषाच्छादनहेता[16](तो ?)रुध्वान्त्यो(द्धात्यो ?) नान्तरी[रन्तरा ?]यास्तु ॥४२९॥
एकं[17] (तो?) प्रयोक्तृभिः कार्यं ध्रुवाणां संनिवेशनम् ।
यथास्थानाश्रयोपेतं नृत्तनाट्य[18]प्रयोगजम् ॥ ४३० ॥
यथा वर्णावृ(द्द ?)ते चित्तं[19](त्रं ?) न शोभाजननं भवेत् ।
एवमेवं[20] विना गीतं नाट्यं रङ्गं न गच्छति ॥ ४३१ ॥
पूर्वरङ्गविधानेन[21] कर्तव्यो गानजो विधिः ।
देवपूजा[22]धिकारस्तु स च पूर्वः प्रकीर्तितः ॥ ४३२ ॥

---

१. '°स्योद्धतायाश्च' का. २. '°शिन्या ग्रहो' का. ३. '°ड्डितायाश्च' का. ४. 'संनिपातेतृतीयके' का. ५. 'नत्कुटस्याड्डितायाश्च' का. ६. 'संनिपाते ग्रहे कार्यः' का. ७. 'द्रुतायाश्चोद्धतो ग्रहः' का. ८. '°नुबन्धानां' का. ९. 'न तेषां परिवर्तस्तु' का. १०. 'गानप्रयोक्तृभिः' का. ११. 'नत्कुटस्य तु चत्वारो ग्रहाः कार्या प्रयोक्तृभिः' इत्यधिकं का. १२. '°काशगस्तथा' का. १३. 'संभ्रमावेगहर्षेषु प्रवेशा ये भवन्ति हि ।' का. १४. 'ग्रहो गानसमस्तत्र उद्घात्यः संप्रकीर्तितः ।' का. १५. 'वैकल्प' का. १६. 'दोषाच्छादनहेतोरुद्घात्योरन्तरायास्तु ।' का. १७. 'एवं' का. १८. 'यथावृत्तकृतं तथा' का. १९. 'चक्रं शोभते न निवेशनम् ।' का. २०. 'एवमेनं विना गानं नाट्यं रागं न गच्छति ।' का. २१. 'विधाने तु' का. २२. 'देवपूजाधिकारश्च तत्र संपरिकीर्तितः' का.

ततश्च काव्यबन्धेषु नानाभावसमाश्रयम् ।
ग्रामद्वयं च[1] कर्तव्यं यथा[2]साधारणाश्रयम् ॥ ४३३ ॥
मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे भवेत्[3] ।
साधारितं तथा गर्भे विमर्शे[4] चैव पञ्चमम् ॥ ४३४ ॥
कैशिकं च तथा कार्यं गानं[5]निर्ग्रहणे बुधैः ।
[6]संनि(धि?)वृत्ताश्रयं चैव रसभा[7]वसमन्वितम् ॥ ४३५ ॥
तथा[8] रसकृता नित्यं ध्रुवाः प्रकरणाश्रिताः(श्रयाः ?) ।
नक्षत्रीव(त्राणीव?)गगनं नाट्यमुद्द्योतयन्ति ताः ॥ ४३६ ॥
मागधी प्रथमा गीतिस्तथा चैवोर्ध्व(वार्ध)मागधी ।
संभाविता तृतीया स्यात्पृथुला च तथापरा ॥ ४३७ ॥
त्रिर्निर्वृत्त्या पदानां तु मागधी समुदाहृता ।
चित्रेऽर्धमागधी चैव द्विनिर्वृत्तपदाश्रया ॥ ४३८ ॥
वृत्तौ संभाविता प्रायो लघुवाद्याक्षरान्विता ।
गानयोगे चतस्रस्तु योज्याः सर्वत्र गायनैः ।
यथाक्षरकृता ह्येताः प्रयुज्यन्ते ध्रुवास्वपि ॥ ४३९ ॥
पूर्णस्वरं वाद्य[10]विचित्रवर्णत्रिस्थानशामि[11](शोभि ?)त्रितयं त्रिमार्गगम् ।
रक्तं सम[12]श्लक्ष्णमलंकृतं च मु[13](सु?)खं प्रशस्तं मधुरं च गानम् ॥ ४४० ॥
गीते प्रयत्नः प्रथमं तु कार्यः शय्यां[14] हि नाट्यस्य वदन्ति गीतिम्[15] ।
गीते च वाद्ये च हि सुप्रयुक्ते[16] नाट्यप्रयोगो न विपत्तिमेति ॥ ४४१ ॥

---

१. 'न' का. २. 'तथा' का. ३. 'भवेत्' का. ४. '°मर्शे कैशिकमध्यमः' का. ५. 'गानं निर्वहणे' का. ६. 'संधिवृत्ताश्रयश्चैव' का. ७. 'रसभावसमन्वितः' का. ८. 'यथा रसकृतायाः स्युः' का. ९. इतोऽग्रे पद्यत्रयं का. पुस्तके नास्ति । १०. 'तत्र विलम्बिवर्णं त्रिस्थानशोभं त्रितयं त्रिमात्रम् ।' का. ११. 'गामि त्रिलयं' इति भवेत्. १२. 'समं' का. १३. 'सुखप्रयुक्तं' का. १४. 'शय्या' का. १५. 'गीतम्' का. १६. 'संप्रयुक्तो' का.

एतदुक्तं मया सम्यग्ध्रुवाणां लक्षणं महत्।
अत ऊर्ध्वं प्रवक्ष्यामि गातृवादकयोर्गुणान् ॥ ४४२ ॥

इति भारतीये नाट्यशास्त्रे ध्रुवाध्यायो द्वात्रिंशः समाप्तः[1]।

---

त्रयस्त्रिंशोऽध्यायः[2]।

गुणात्प्रवर्तते[3] ज्ञानं दोषाच्चित्तं निरस्यति।
तस्माद्यत्नेन विज्ञेया गुणदोषाः समासतः ॥ १ ॥

गाता प्रत्यग्रवया स्निग्धो[4] मधुरस्वरोपचितकण्ठः।
लयतालकलापातप्रमाणयोगेषु[5] तत्त्वज्ञः ॥ २ ॥

रूपगुणकान्तियुक्ता[6] माधुर्योपेतसत्त्वसंपन्नाः।
पेशलमधुरस्निग्धानुनादसमरक्तशुभकण्ठाः[7] ॥ ३ ॥

सुविहितसमकविधायिन्या(?)क्षोभ्यगीततालकुशलाः[8]।
आतोद्यार्पितकरणा विज्ञेया गायिका श्यामाः ॥ ४ ॥

प्रायेण[9] तु स्वभावात्स्त्रीणां गानं नृणां च पाठ्यविधिः[10]।
स्त्रीणां स्वभावमधुरः कण्ठो नृणां सुललितत्वं[11] च ॥ ५ ॥

ये [12]स्त्रीणां पाठ्यगुणा भवन्ति नराणां[13] च गानमधुरत्वम्।
[14]ज्ञेयोऽलंकारोऽसौ नहि स्वभावो ह्ययं[15] तेषाम् ॥ ६ ॥

---

१. का. पुस्तकेऽत्राध्यायसमाप्तिर्नास्ति, त्रयस्त्रिंशाध्यायसमाप्तौ द्वात्रिंशाध्यायसमाप्तिः। २. 'त्रयस्त्रिंशः' इत्येवादर्शद्वये. ३. पद्यमेतत् का. पुस्तके नास्ति। ४. 'स्निग्धस्वरमांसलोपचितः' का. ५. '°कलामानप्रमाण' का. ६. 'रूपगुणकान्तिसंस्थानधैर्यमाधुर्यसंपन्नः' का. ७. '°शुभकण्ठः' का. ८. 'अवसितशरीरमनसो सुनिविष्टो मधुरसंचारः। अन्योन्यार्पितकरणा विज्ञेया गायिकाः श्यामाः॥' इति का. ९. 'प्रायेणे'त्यादिपद्यद्वयी का. पुस्तके नास्ति, किंतु श्लोकचतुष्टयानन्तरं वर्तते। १०. 'वाद्य' इति स्यात्. का. पुस्तके 'वाद्य' इत्येव. ११. 'नृणां बलत्वं च' का. १२. 'यः स्त्रीणां वाद्यगुणो' का. १३. 'नृणां च' का. १४. 'ज्ञेयः सोऽलंकारो' का. १५. 'भवति तेषां' का.

सुनिविष्ट····वाणिलयनियोगज्ञो(?)सुमधुरं प्रलयहस्तौ ।
गातृगुणैश्चोपेतावनवहितम[न]सौ सुसंगीतौ ॥ ७ ॥
स्फुटरचितविचित्रकरणौ गीतं श्रवणौ च तौ प्रवीणौ च ।
चि(द्वि)त्रादिवाद्यकुशलो वीणाभ्यां(या?) वादको भवति ॥ ८ ॥
बलवानवहितबुद्धिर्गीतलयज्ञस्तथा सुसंगीतः ।
श्रावकमधुरः स्निग्धो दृढपाणि···वेदिको ज्ञेयः ॥ ९ ॥
अविचलितमविच्छिन्नवर्णालंकारबोधकं मधुरम् ।
स्निग्धं दोषावारण(?)वेणोरेवं स्मृतं वाद्यम् ॥ १० ॥

अन्ये—ज्ञानविज्ञानकरणवचनप्रयोगसिद्धिशिष्यनिष्पादनानि षडाचार्यगुणाः ।

---

१. 'सुनिविष्ट······' इत्याद्यारभ्य 'षडाचार्यगुणाः ।' इति पर्यन्तपाठस्थाने का॰ पुस्तके—

'यद्यपि पुरुषो नेता गीतविधानं तु लक्षणोपेतम् ।
माधुर्यगुणविहीनं शोभाजननं न तद्भाति ॥
एवं स्वभावसिद्धं स्त्रीणां गानं नृणां च पाठ्यविधिः ।
अपरस्परसंपन्नं कार्यं वासयनिष्पन्नम् ॥ (?)
प्रायेण दानवासुररक्षोयक्षोरगा विविधचेष्टाः ।
वाक्याश्रिताः प्रयोगे भवन्ति पुरुषाङ्गनाबद्धाः ॥
स्त्रीभिः कार्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ।
यस्मात् स्वभावोपहितो विलासः स्त्रीकृतो भवेत् ॥
नित्यं व्यायामयोग्याभिर्नृणां भवति सौष्ठवम् ।
स्वभावतस्तु मधुरं स्त्रीणामङ्गविचेष्टितम् ॥
एवं स्त्रीणां तु पुरुषैरुपदेष्टव्यमेव हि ।
गानं वाद्यं च पाठ्यं च नानाप्रकृतिसंभवम् ॥
अवैस्वर्यं भवेत् स्त्रीणां गानवाद्यक्रियास्वथ ।
न हि तत् कर्णमाधुर्यं पुरुषेषु भविष्यति ॥
स्मृतिर्मतिश्च मेधा च ऊहापोहस्तथैव च ।
शिष्यनिष्पादनं चैव षडाचार्यगुणाः स्मृताः ॥
मेधास्मृतिर्गुणा(ण?) श्लाघा रागः संघर्ष एव च ।
उत्साहश्च षडेवैते शिष्यस्यापि गुणाः स्मृताः ॥' इति पाठः ।

श्रावकोऽथ घनः स्निग्धो मधुरो ह्यवधानवान्।
त्रिस्थानशोभीत्येवं तु षट्काङ्गस्य गुणाः स्मृताः ॥ ११ ॥
दूरात्तं (दूरात्तु?) श्रूयते यस्मात्तस्माच्छ्रावक उच्यते।
श्रावकः सुस्वरो यस्मादच्छिद्रः स घनः स्मृतः ॥ १२ ॥
अरूक्षध्वनिसंयुक्तः स्निग्धस्तज्ज्ञैः प्रकीर्तितः।
मानप्रह्लादनकरः स वै मधुर उच्यते ॥ १३ ॥
स्वरेऽधिके च हीने च ह्यविरक्तो विधानवान्।
शिरःकण्ठेष्वभिहितं त्रिस्थानमधुरस्वरैः ॥ १४ ॥
त्रिस्थानशोभीत्येवं तु स हि तज्ज्ञैः प्रकीर्तितः।
कपिलो व्यवस्थितश्चैव तथा संदष्ट एव च ॥ १५ ॥
काकी च तुम्बकी चैव पञ्च दोषा भवन्ति हि।
वैश्र्य(स्व?)र्यं च भवेत्तत्र तथा स्याद्यर्य(द्धर्व?)रायितम् ॥ १६ ॥
कपिलः स तु विज्ञेयः श्लेष्मकण्ठस्तथैव च।
ऊनताधिकता वापि स्वराणां यत्र दृश्यते।
कृष(श?)त्वदोषतश्चैव ज्ञेयः स त्वम(न?)वस्थितः ॥ १७ ॥

---

१. 'घनस्निग्धो' का. २. 'मधुरस्वरधानवान्' का. ३. 'च' का. ४. 'षट्कण्ठस्य' का. ५. 'दूरात्तु' का. ६. 'यस्तु न विक्षिप्तो घनः स्मृतः' का. ७. 'स्वराधिको विहीनो वा ह्यविरक्तो विधानवान्।' का. ८. अस्य पद्यार्धस्य स्थाने का. पुस्तके—

'सुश्रावः सत्त्वपुरुषस्निग्धस्तज्ज्ञैः प्रकीर्तितः।
महास्थानेऽप्यवैस्वर्यं यस्यासौ मधुरः स्मृतः ॥
त्रिस्थानेऽपि हि माधुर्यं यस्य नित्यं विधीयते।' इति सार्धं पद्यम्।

९. 'स कण्ठो मधुरः स्मृतः' का. १०. का. पुस्तके तु—

'कपिलोऽप्यवस्थितः काकी तुम्बी संदष्टकस्तथा।
समासतस्त्वमी पञ्च कण्ठदोषा भवन्ति हि ॥'

११. 'वैस्वर्यं तु भवेद् यत्र तथा गुरुकरार्पितम्। १२. 'कपिलः स तु विज्ञेयः' इत्यादिसार्धपद्यद्वयी का. पुस्तके नास्ति।

दत्तप्रयोगात्संदष्टः स्वाचार्यैः परिकीर्तितः ।
यो न निस्तरति स्थाने स्वरमुच्चारणागतम् ॥ १८ ॥
तथा[1] रूक्षस्वरश्चैव स काकीत्यभिसंज्ञितः ।
नासाग्रग्रस्तशब्दस्तु[2] तुम्बकी सा(सोऽ ?)भिधीयते ॥ १९ ॥

अन्ये[3]—

सन(?)प्रहरणौ चैव जविनौ विशदौ तथा ।
जितश्रयौ विकृष्टौ च मधुरौ स्वरवर्जितौ ॥ २० ॥
तथा दृढनखौ चैव ज्ञेया हस्तस्य वै गुणाः ।
एते गुणाश्च दोषाश्च तत्त्वतः कथिता मया ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यवनद्धविधिं पुनः ॥ २१ ॥

गान्धर्वमेतत्कथितं मया च[4] पूर्वं यदुक्तं प्रपितामहेन[5] ।
कुर्याद्य एवं तु नरैः[6] प्रयोगे सन्मानमध्यं[7] (मग्र्यं?) लभते स लोके २२

इति भारतीये नाट्यशास्त्रे गुणाध्यायो नाम त्र्यस्त्रिंशः[8] समाप्तः ।

---

चतुस्त्रिंशोऽध्यायः[9] ।

ततवाच्य[10][11](द्य ?)विधानं यन्मयावि(भि?)हितं पुरा ।
अवनध्या(द्धा ?) [त ?] तस्यापि तस्य वक्ष्यामि लक्षणम् ॥ १ ॥

---

१. 'तथा च विस्वरं चैव स काकीति हि संज्ञितः ।' इति का. २. 'नासागतस्वरो यस्तु विज्ञेयः स तु तुम्बकः ।' इति का.

३. 'अन्ये' इत्यारभ्य 'ह्यवनद्धविधिं पुनः' इति श्लोकान्तपाठस्थाने का. पुस्तके—

'संदष्टदशनो यस्तु स संदष्ट इति स्मृतः ।
एते गुणाश्च दोषाश्च कण्ठजा गदिता मया ॥
ध्रुवाविधानं च मया स्वरतालपदात्मकम् ।' इति सार्धं पद्यम् ।

४. 'हि' का. ५. 'खिह नारदेन' का. ६. 'मनुजः प्रयोगं' का. ७. 'सन्मानमध्यं कुशलेषु गच्छेत्' इति का. ८. 'इति भारतीये नाट्यशास्त्रे ध्रुवाविधानं नाम द्वात्रिंशोऽध्यायः ।' इति का. पुस्तके पाठः । ९. 'चतुस्त्रिंशः' इत्यादर्शद्वये. १०. 'अथ त्रयस्त्रिंशोऽध्यायः' का. ११. का. पुस्तके तु 'ततवाद्यविधानं' इत्यादिपद्यत्रयस्थाने—

यथोक्तं मुनिभिः पूर्वं स्वातिनारदपुष्करैः ।
सर्वलक्षणसंयुक्तं सर्वातोद्यविभूषितम् ॥ २ ॥
मृदङ्गानां समासेन लक्षणं पणवस्य च ।
दर्दुरस्य च संक्षेपाद्विधानं नाट्यमेव च ॥ ३ ॥
अनध्याये कदाचित्तु मुनिर्महति दर्दुरे(दुर्दिने ?)[1] ।
जलाशयं जगामाथ सलिलानयनं प्रति ॥ ४ ॥
तस्मिञ्जलाशये यावत्प्रविष्टः पावकाशनः[2] ।
धाराभिर्महतीभिस्तु[3] पूरयन्निव मेदिनीम् ॥ ५ ॥
पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये ।
पुष्करिण्या[4] पटुः शब्दः याप्र(पत्रा ?)णामभवत्तदा ॥ ६ ॥
ववां( नवं ?)[5]धीरोद्भवं शब्दं निशम्य[6] तु महामुनिः ।
आश्चर्यमिति[7] मन्वानश्चावधारितवांश्च तम् ॥ ७ ॥
ज्येष्ठमध्यकनिष्ठं तु पत्राणामवधार्य च ।
गम्भीरमधुरं हृद्यमाजगामाश्रमं ततः ॥ ८ ॥

---

'अथातोद्यविधिस्त्वेष मया प्रोक्तः समासतः ।
अवनद्धविभागेन लक्षणं कर्म चैव हि ॥
आतोद्यानां प्रवक्ष्यामि विधिं वादनमेव च ।
मृदङ्गपणवानां च दर्दुरस्य तथैव च ॥
गान्धर्वं चैव वाद्यं च स्वातिना नारदेन च ।
विस्तारगुणसंपन्नमुक्तं लक्षणकर्मतः ॥
अनुवृत्त्या तथा स्वातेरातोद्यानां समासतः ।
पौष्कराणां प्रवक्ष्यामि निर्वृत्तिं संभवं तथा ॥' इति श्लोकत्रयी वर्तते ।

१. 'स्वातिर्वै दुर्दिने दिने' का. २. 'तस्मिन् परो निषण्णे तु प्रहृष्टः पाकशासनः ।' इति का. ३. '०श्च कर्तुमेकार्णवं जगत् ।' का. ४. 'पुष्करीणां कलरवः पत्रिणामभवत्तदा ।' का. ५. 'ववाधीरोद्भवं ख. ६. 'तेषां धीरं कलं शब्दं' का. ७. 'निशम्य सहसा मुनिः' का. ८. 'आश्चर्यमिति संप्राप्तं अवधारितवान् स्वयम् ।' इति का.

गत्वा सृष्टं मृदङ्गानां पुष्करानसृजत्ततः ।
पणवं दर्दुरांश्चैव सहितो विश्वकर्मणा ॥ ९ ॥
देवानां दुन्दुभिं दृष्ट्वा चकार मुरजं ततः ।
आलिङ्ग्यमूर्ध्वकं चैव तथैवाङ्किकमेव च ॥ १० ॥
क(च ?)र्मणा चावनद्धांस्तान्मृदङ्गान्दर्दुरांस्तथा ।
तन्त्रीभिः पणवं चैवमूहापोहविशारदः ॥ ११ ॥
भूयश्चान्यान्यपि तथा काष्ठायसकृतान्यथ ।
झल्लरीपटहादीनि चर्मनद्धानि तानि तु ॥ १२ ॥
आतोद्यन्समया(?)ये तु यानि वाद्यानि वादकैः ।
अङ्गप्रत्यङ्गयोगेन गदतो मे निबोधत ॥ १३ ॥
विपञ्ची चैव चित्रा च दारवीष्वङ्गसंज्ञिते ।
कच्छपीघोषकादीनि प्रत्यङ्गानि तथैव च ॥ १४ ॥
मृदङ्गो दर्दुरश्चैव पणवेष्वङ्गसंज्ञिते ।
झल्लरीपटहादीनि प्रत्यङ्गानि तथैव च ॥ १५ ॥
अङ्गलक्षणसंयुक्तो विज्ञेयो वंश एव हि ।
शङ्खस्तु डक्किनी चैव प्रत्यङ्गे परिकीर्तिते ॥ १६ ॥
नास्ति किंचिदनायोज्यमातोद्यं दशरूपके ।
रसभावप्रयोगं तु ज्ञात्वा योज्यं विधानतः ॥ १७ ॥
उत्सवे चैव याने च नृपाणां मङ्गलेषु च ।
शुभकल्याणयोगे च विवाहकरणे तथा ॥ १८ ॥
..................उत्पन्ने संग्रामे शुद्धसंकुले ।
ईदृशेषु च कार्येषु सर्वातोद्यानि वादयेत् ॥ १९ ॥
स्वभावगृहवार्तायामल्पभाण्डं प्रयोजयेत् ।
उत्थानकाव्यबन्धेषु सर्वातोद्यानि वादयेत् ॥ २० ॥

1. 'तला' ख.

अङ्गानां तु समत्वार्थं छिद्रप्रच्छादने तथा।
विप्राप्तिहेतोः शोभार्थं भाण्डवाद्यं····जायते ॥ २१ ॥
तत्रावनद्धं वक्ष्यामि विधिस्वरसमुत्थितम्।
नानाकरणसंयुक्तं मानजातिविभूषितम् ॥ २२ ॥
यावन्ति वम(चर्म ?)नद्धानि ह्यातोद्यानि द्विजोत्तमाः।
तानि त्रिपुष्कराद्यानि त्ववनद्धमिति स्मृतम् ॥ २३ ॥
एतेषां तु पुनर्भेदाः शतसंख्याः प्रकीर्तिताः।
किंतु(?)त्रिपुष्करस्यत्ते(?) लक्षणं प्रोच्यते मया ॥ २४ ॥
शेषाणां कर्मबाहुल्यं यस्मादस्मिन्न दृश्यते।
न स्वरास्तत्र हाराश्च नाक्षराणि न मार्जना ॥ २५ ॥
भेरीपटहझञ्झाभिस्तथा दुन्दुभिडिण्डिमैः।
शैथिल्यादायतत्वाच्च स्वरे गाम्भीर्यमिष्यते ॥ २६ ॥
प्रायशः[1] स्वानि कार्याणि कालं कार्यं समीक्ष्य तु।
किंतु त्रिपुष्करस्यास्य श्रूयतां यो विधिः स्मृतः ॥ २७ ॥
वाद्यात्मको भवेच्छन्दः स वापि द्विविधः स्मृतः।
स्वरवांश्चैव विज्ञेयस्तथा चैवाभिधानवान् ॥ २८ ॥
तत्राभिधानवान्नाम नानाभावसमाश्रयः।
स्वरवानपि विज्ञेयो नानातोद्यसमाश्रयः ॥ २९ ॥
शारीर्यामेव वीणायां स्वराः सप्त प्रकीर्तिताः।
तेभ्यो विनिःसृताश्चैवमातोद्येषु द्विजोत्तमाः ॥ ३० ॥
पूर्वं शरीरादुद्भूताः स्वरा गच्छन्ति दारवीम्।
ततः पुष्करतं(?) चैवमनुयान्ति घनं पुनः ॥ ३१ ॥
एषां बाह्यीरणैर्ज्ञेया प्रहारा वचनाश्रयाः।
युद्धादिभिः सदा योस्या(ज्या ?) वीणावाद्येषु योक्तृभिः ॥ ३२ ॥

---

१. 'प्रायशस्तानि' ख.

शारीर्यामथ वीणायां श्लिष्टं जगति कादिति(?) ।
भवेद्वाष्करणं तत्र नानाकरणसंयुतम् ॥ ३३ ॥
यं यं गाता स्वरं गच्छेत्तमातोद्यैः प्रयोजयेत् ।
यतिपाणिसमायुक्तं गुरुलघ्वक्षरान्वितम् ॥ ३४ ॥
पौष्करस्य तु वाद्यस्य मृदङ्गपणवाश्रयम् ।
विधानं तु प्रवक्ष्यामि दर्दुरस्य तथैव च ॥ ३५ ॥
षोडशाक्षरसंपन्नं चतुर्मार्गं तथैव च ।
विलेपनं षट्करणं त्रियति त्रिलयं तथा ॥ ३६ ॥
त्रिगतं त्रिप्रका(चा)रं च त्रियोगं च त्रिपाणिकम् ।
दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ॥ ३७ ॥
विशल्य(विंशत्य?)लंकार(रं?) च त(?) तथाष्टादशजातिकम् ।
एभिः प्रकारैः संपन्नं वाद्यं पुष्करजं भवेत् ॥ ३८ ॥

तत्र षोडशाक्षरमिति यत्तदनुव्याख्यास्यामः—

क-ख-ग-घ.ट-ठ ड-ढ.त-थ-द-ध.य-र-ल-ह.इति षोडशाक्षराणि स्युः ।
पुष्करवाद्ये नित्यं वाष्करणे संविधेयानि ॥ ३९ ॥

चतुर्मार्गं नाम—

आलिप्तादितगोमुखवितस्तात्पत्वा[नि ?] चत्वारो मार्गाः ।

विलेपनं नाम—

वामोर्ध्वकप्रलेपात् ।

षट्करणं नाम—

रूपं कृत[प्रतिकृतं ?] प्रतिभेदो रूपशेषमोघः प्रतिशुक्केति ।

त्रियति नाम—

समा श्रोतागता ? गोपुच्छेति अन्वयात् ।

त्रिलयं नाम—

द्रुतमध्यविलम्बितयोगात् ।

त्रिगतं नाम—

तत्त्वं घनमोघश्चेति।

त्रिप्रचारो नाम—

समप्रचारो विषमप्रचारः समविषमप्रचारश्चेति।

त्रिसंयोगं नाम—

गुरुसंयोगो लघुसंयोगो गुरुलघुसंयोगश्चेति।

त्रिपाणिकं नाम—

समपाणिः अवरपाणिः उपरिपाणिश्चेति।

पञ्चपाणिप्रहतं नाम—

समपाणिरर्धपाणिरर्धार्धपाणिः पार्श्वपाणिः प्रदेशिनीतः इति।

त्रिप्रहारं नाम—

निगृहीतोऽर्धनिगृहीतो मुक्तश्चेति।

त्रिमार्जनं नाम—

[1]...............................।

[विशल्य(विंशत्य?)लंकारं नाम—]

...............................।

[अष्टादशजातिकं नाम—]

...............................॥

अभिव्यक्तानि पूर्वं यान्येतानि षोडशाद्यानि।
तान्यक्षराणि जानीत पुष्करेषु यथाक्रमम्।
पणवे दर्दुरे चैव मृदङ्गेषु तथैव च॥ ४०॥

कटरतघजस्तु दक्षिणमुखेऽत्र महथाश्च वामकेनिवताः (?)।
थकारो(?) चैवोर्ध्वे करणध्वलाश्वस्युरालिङ्ग्ये(?)॥ ४१॥

---

१. त्रिमार्जनादीनां नामानि त्रुटितानि प्रतीयन्ते.

एतेषामक्षराणां स्वरसंयोगं च व्याख्यास्यामः—

तत्र—अ-आ-इ-ई-उ-ऊ-ए-ऐ-ओ-औ-अं-अः-इति स्वरा व्यञ्जनैः सह संयोगं गच्छन्ति ।

तत्र अकारेकारोकारैका[रौका ?]रांकाराः ककारे यथा—'क कि कु के को कं' इति ।

इकारोकारौकाराः खकारे यथा—'खि खु खो' इति ।

उकारैकारौ[कारा ?] गकारे यथा—'गु गे गो' इति ।

अकारैकारौकारा घकारे यथा—'घ घे घो' इति ।

अकारेकारौकारांकाराष्टकारे यथा—'ट टि टो टं' इति ।

अकारेकारौकारांकाराष्ठकारे यथा—'ठ ठि ठो ठं' इति ।

अकारौकारौ डकारे यथा—'ड डो' इति ।

[1]अकारेकारैकारा णकारे यथा—'ण णि णे' इति ।

अकाराकारेकारैकारास्तकारथकारयोर्यथा—'त ता ति ते, थ था थि थे' इति ।

अकारोकारैकारौकारा दकारे यथा—'द दु दे दो' इति ।

अकारेकारौकारांकारा धकारे यथा—'ध धि धो धं इति ।

अकाराकारेकारैकारा रेफे यथा—'र रा रि रे' इति ।

अकाराकारेकारैकारा लकारे यथा—'ल ला लि ले' इति ।

हकारमकारौ शुद्धौ (?) ।

तत्र—ककारघकारनकारथकारधकाराणां रेफोऽनुच्छमः(बन्धः?)यथा—'[2]ध्रु कं भ्रम्न त्रेत्रघ्न घ्नं भ्रम्न' इति(?) ।

ककारस्य लकारोऽप्यनुबन्धो यथा—.............'द्धंद्ध' इति ॥

एवमेतैः संयोगैर्द्विहस्तसंयुक्तान्यक्षराणि भवन्ति ।

तत्र—अङ्किके मृदङ्गे द्विपुष्करे समहस्तनिपाताद्धंकारः ।

---

१. 'अकारेकारैकाराणकारे यथा—'णणिण' इति ।' इत्येषा पङ्क्तिः का. पुस्तके नास्ति । २. 'धुकं भ्रेघ्नघ्नभ्रघ्न' इति का.

तत्र—अङ्गुलिचलनात्कुकारः। तत्रैव—अवष्टम्भाद्यकारः।

तत्रैव—अर्धनिगृहीतस्थकारः। तत्रैव—दक्षिणमुखे पार्ष्णिपीडितः क्ककारः।

तत्रैव—अङ्गुलिकूजनात्क्षकारः। ऊर्ध्वकवामकयोः समहस्तनिपाताद्धं-कारः प्रदेशिन्या वालिङ्ग्ये क्केकारः।

[1]पञ्चपाणिप्रहतमिति यदुक्तम्—···········समपाण्यर्धपाण्यर्धा-र्धपाणिपार्श्वपाणिप्रदेशिन्यश्चेति। त एते पञ्चपाणिप्रहता निगृहीतार्धनिगृही-तमुक्ता यथायोगं कार्याः।

तत्र—समपाणिप्रहता(तो?) मकारः स निगृहीतः। गकारघकारधकारा अर्धपाणिप्रहतार्धनिगृहीताः। ककारखकारटकारदा( द ?)काराः पार्श्वपाणि-प्रहतानिगृहीताः। तकारवकारावर्धपाणिप्रहतावर्धनिगृहीतौ। ठकारण-काररेफलकारहकारा द्विहस्ताप्रहरतामुक्ताः। प्रदेशिनीप्रहतो मुक्तः क्लंकारः पार्श्वपाणिद्विहस्तप्रहतमुक्ताः अपि द्राँ द्राँ द्राँ द्रकारः।

तत्र च—क्ककारा अर्धपाणिगृहीताः। पार्श्वपाणिनिगृहीतश्चकारः। एव-मेतेष्वक्षरेषु यो(?) प्रवेशो न कार्याः प्रहाराः।

---

१. 'पञ्चपाणि प्रहतमिति यदुक्तम्' इत्याद्यारभ्य 'न कार्याः प्रहाराः' इत्यन्तं पाठस्थाने का. पुस्तके—'केचिदेकवक्रजं केचित् त्रिवक्रजं केचिन्निर्वक्रजं इति यथा रेफः सर्ववक्रेषु दकारावलिङ्ग्यवामके आलिङ्ग्य दक्षिणे मकारः वामोर्ध्वमोकारः क्वचिदा-लिङ्गेऽपि लाघवार्थं धकारः कर्तव्यः। एवं तत्र प्रतिषेधेन कार्य इति उक्तः स्वरव्यञ्ज-नसंयोगजः।

पञ्चपाणिप्रहतानां समपाणिरर्धपाणिरर्धार्धपाणिः पार्श्वपाणिः प्रदेशिनी चेति। एते च निगृहीतार्धार्द्धगृहीतमुक्ता भवन्ति। तत्र समपाणिहतो मकारः स निगृहीतः। गकार-दकारधकाराः अक्षरार्धगृहीता अर्धपाणिप्रहताश्च ककारखकारणकारङकाराः पार्श्वपाणि-प्रहता निगृहीताश्चा(श्च ?) तकारथकारहकारा अर्धार्धपाणिप्रहताश्च प्रदेशिन्याहतश्चा-लिङ्गं कारथंकारणाकारमुक्ताश्च विहस्तप्रहस्तप्रहतां अविभृङ्काङीतमुक्ताश्च कुतसर्धं इत्यर्धपाणिप्रहता निगृहीताश्च। एवमेतेष्वक्षरेषु प्रयोगेन कार्यं प्रहितम्। कुतः?' इति पाठः।

षोडशैतानि दृष्टानि वाद्यजात्य(न्य?)क्षराणि तु ।
अनेनैव विधानेन योज्यं वा ज्वरसं(?)बुधैः ॥ ४२ ॥

चतुर्मार्गमिति यदुक्तं तदनुव्याख्यास्यामः—

अदि(ड्डि?)तालिप्तमार्गौपु(ऽल्प ?)वितस्ता गोमुखी तथा ।
मार्गाश्चत्वार एवैते प्रहारकरणाश्रयाः ॥ ४३ ॥

तत्र—एषां किल मृदङ्गप्रहारप्रयुक्तोऽदि(ड्डि ?)तमार्गः । ऊर्ध्वाङ्किकदक्षिणमुखो ········क्षिप्तहस्तप्रहतो वितस्तामार्गः । आलिङ्गिककरणबहुलसर्वपुष्करप्रहतो गोमुखीमार्गः इति ।

तत्र—अदिताप्रहारं जातम्(?) । 'कटमटथिवेतटघोवेरामरावेघेटाथिम-

१. 'षोडशैव तु' का. २. 'वाद्यजान्यक्षराणि' का. ३. 'अड्डितालिप्तमार्गौ तु वितस्तो गोमुखस्तथा । ४. का. पुस्तके 'तत्र—एषां किल मृदङ्गप्रहार–' इत्यादि 'क्लेदेघा गोमुख्यः' इत्यन्तपाठस्य स्थाने—'तत्रालिङ्गमृदङ्गाङ्गहारयुक्तस्त्वड्डितो मार्गः । प्रहारयुक्तस्त्वालिप्तमार्गः । ऊर्ध्वाञ्चितक्षिप्तप्रहतो वितस्तमार्गः । अलिङ्गकरणबहुलः सर्वपुष्करप्रहतो गोमुखमार्ग इति ।

तत्राड्डितप्रकारजो यथा—मट्टं कथितघट्टघंटाघट्टं गत्थित्थुंगत्थिमगद्यसन्धित्थ इत्यड्डितो मार्गः ।

इदानीमालिप्तः—दद्रोमामाद्रोमंगुदुपें गुदुरनन्दुंधेंप्रेद्रं धेंद्रोसां आलिप्तमार्गवाद्यं विज्ञेयं वादकैरेवम् ।

इदानीं वितस्तमार्गः—तत्र नितान्तकितत्सेन्ताकिनान्धिसंकेता इदुहुदुकेन्तांतस्ते स्ता त्

अङ्गुलिप्रचालनाद्वर्तितो हकारो मुक्तं च स एव स्वस्तिकोनोर्ध्वाकयोरर्धनिगृहीतः । तयोरेवं समहस्तदर्शनात् ।

प्रचलनात् हाकारो मुक्त इति धित्थतित्थडित्था किताखदेर्ङे खदेर्ङे गुघुड्डुलोञ्जच्चितिदिमाचुणमध्येघेघो (?) विधातव्याः । एवं वितस्तमार्गे गणे लमरवर्जिता ( वर्जिता ? ) प्रहाराः स्युः । ऊर्ध्वमार्गेण विशेषाः कार्याश्च गोमुख्या खटमत्थिमट्टघण्ठांखेट्टङखङमांचुणकितिकित्तिकिटिमांखुखुणुद्धेघेघोधो विधातव्याः ।

इदानीं गोमुखीवाद्यं ठढणघेण्ढणुत्रन्दुलङडुखेन्दंघटमट्टाइदुणुधुणांत्थिघटं घिटिमांककुदांन्दुणुघेर्ङकिटिमार्ङघेघेकोखोमखोमगोमुख्या ।' इति पाठः । ५. आलिप्तमार्गलक्षणशेषभूतो वितस्तामार्गलक्षणादिभूतोऽत्र पाठस्त्रुटितः प्रतीयते.

टाघेय' इत्यदि(ङ्कि ?) तामार्गः । 'घदुघदुखं घेगुड्डघेगुड्ड घेमुघघेघोघथु घघदो घेघघे' इत्यालिप्तमार्गः । 'कथिता तकिता तकिथे तकिते थथके ता गुदाघेघेघेदा' इति वितस्तामार्गः । 'गुद्धक्कद्धं मथिकटा घंघेम छिदुखुखुणो गगटस्थिमटम्' इति गोमुखीमार्गः ।

कुर्याद्वितस्तामार्गे दणमहविवर्जितान्प्रहारांस्तु उद्दूतमार्गेण विना शेषाः ।

कार्यास्तु गोमुख्यां द्रोमां द्रोमां गुड्डघे गुड्डघे दुमात्थीति । आलिप्तमार्गं वाद्यं विज्ञेयं वादकैस्तज्ज्ञैः । घणघंटणघो गुदुघेघेदघटमटां कटां किटिमां करहल दुनाकेकेदिट्टुंटे क्केद्घा गोमुख्यः ।

ये त्वालिप्तसमुत्थाः सर्वे [१]मार्गास्तु[ते?] विधातव्याः ।
[२]ग्रहमोक्षणसंघातैस्तु मृदङ्गानां ग्रहो भवति ॥ ४४ ॥
एतेषां तु प्रवक्ष्यामि दर्शनानि यथाक्रमम् ।
[३]चतुर्णामपि मार्गाणामक्षरग्रहणं यथा ॥ ४५ ॥

[४]वन्दुघेटां मंटाघंरोत्थिमयं कटात्थिमथिक्केक्काथि क्काथिकटाकिटीथिघघेडित्ता वाद्यं चन्द्रां त्रकितां चन्द्रां दघिटिटाघेटा मथिकिटिकितांटाकुतौ तकिकिदो मतिसंयोगाद्धिस्तेत्र द्रामांगुदघेघेदो घविदाघंद्रमाम् ।

आलिप्तकसंयोगः कार्योऽयं वादने सम्यक् ।

---

१. 'मार्गैस्तु ते विधातव्याः' का. २. 'ग्रहणाक्षरसंधाने । ह्याद( दि?) मृदङ्गात्तु ग्रहो भवति । इति का. ३. 'चतुर्गुणा (?)मपि मार्गाणां' का.

४. 'वन्दुघेटां' इत्यारभ्य 'हस्तप्रहितावालिप्ते वाद्यकरणे तु' इत्यन्तपाठस्थाने 'घृङघृङघटघेङमत्थिभटामदर्थिठिङमनखेङक्कङकथिकटाङत्वडितेवाघगेन्द्रातकिताघृङध्रोकिनिघण्डांङगान्धकिटिकेस्थायकुताकिताकिरिदामितिसंयोगोऽपि तस्तेतुडामाङगुदधेंङघेघे घण्डाघेघटदमा आलिप्ते संयोगो कार्योऽयं वादने तज्ज्ञैः ।

घैघोटत्थिकटांहिहुर्टाघेङघेटाघण्डान्धिमाधस्थितं केसटेघेगघेणोणणोमिति ।

गोमुख्या उक्तो यो मार्ग एतेषां पुष्कराणाम् ।
त्रिविधस्तत्र प्रचारः समविषमः समविषम इति ॥
वामोर्ध्वगयोर्वामसव्ययोरङ्कितामार्गोऽपि ।
कार्यः समप्रचारस्त्वालिप्ते वाद्यकरणे तु ॥' इति का. पुस्तके पाठः.

घटामथ गुड्डघोटाघेटाखोणांटाघोटखमटिघंक्कंवंघड्डुणोणोणा किंतारां कुतौतकिटां किकिदोमतिसंयोगाद्वितस्तेत्र द्रामांगुदुघेघेघेदोघघेदा घंद्रामां आवेगो मुख्याः ।

एतेषां पुष्कराणां त्रिविधः प्रचारः—समप्रचारो विषमप्रचारः समविषमप्रचारमिति । तत्र—वामोर्ध्वकयोर्वामे सव्येनैव, ऊर्ध्व[कि ?] तु दक्षिणक········· । कार्मारवी पुनस्तिस्रस्तु मार्जना ज्ञेयाः । पुष्करेषु पुष्कराश्रयाः (?) ।

गान्धारो वामके कार्याः( र्यः ?) षड्जो दक्षिणपुष्करे ॥ ४६ ॥
ऊर्ध्वके पञ्चमश्चैव मायूर्यां तु स्वरा मताः ।
वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ॥ ४७ ॥
ऊर्ध्वके पञ्चमश्चैवमर्धमायूर्युदाहृता ।
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ॥ ४८ ॥
पञ्चमश्चोर्ध्वके कार्यः कार्मारव्याः स्वरास्त्वमी ।
एतेषामनुवादी तु जातीनां यः स्वरः स्मृतः ॥ ४९ ॥
आलिङ्ग्यमार्जनप्राप्तो निषादः संविधीयते ।
मयूरी मध्यमग्रामे षड्जे त्वर्धा तथैव च ॥ ५० ॥
कार्मारवी च गान्धारे साधारणसमाश्रया ।
स्वराः स्थानस्थिता ये तु स्तुतिसाधारणाश्रयाः ॥ ५१ ॥
एवं संमार्जनकृताः शेषाः संचारिणो मताः ।
वामके चोर्ध्वके कार्या हार्या लेपतश्च सप्त स्वराः(?) ॥ ५२ ॥
शैथिल्यादायतत्वाच्चर्मस्फोटनमापि च ।
स्वराणां संभवं······················ ॥ ५३ ॥
································ ।
·········हस्तप्रहितावालिप्ते वाद्यकरणे तु ॥ ५४ ॥

---

१. अनुष्टुभि कियानंशः, आर्यापूर्वार्धं, आर्योत्तरार्धांशश्च कियांस्त्रुटितः प्रतिभाति. आदर्शद्वयेऽपि त्रुटिचिह्नं न दृश्यते.

वामोर्ध्वकमध्यानां प्रहतौ वामः करस्तु कर्तव्यः ।[1]
वामोर्ध्वकसंयोगात्प्रहते हस्तप्रस्तारं तु ॥ ५५ ॥
संछन्दतः कराणां प्रहतशेषेषु मार्गकरणेषु ।
आदित(अङ्कित?)गोमुखयोगे समविषमो हस्तसंचारः ॥ ५६ ॥[2]
शृङ्गारहास्ययोगे वाद्यं योज्यं तथादि(ङ्कि?)ते मार्गे ।
वीराद्भुतरौद्राणां वितस्तमार्गेण मार्गं तु ॥ ५७ ॥[3]
करुणरसे त्विह वाद्यं योज्यं त्वालिप्तमार्गेण ।[4]
बीभत्सभयानकयोस्तथैव नित्यं हि गोमुख्याः ॥ ५८ ॥[5]
रसभावसत्त्वयोगं दृष्टा(ष्ट्वा?)भिनयं गतिप्रचारं च ।[6][7]
वाद्यं वृत्ते कार्यं तथा तथा मार्गसंयोगात् ॥ ५९ ॥[8][9]
एवं प्रतिविधानं कार्यं मार्गाश्रितं बुधैः सम्यक् ।[10]
वक्ष्याम्यतश्च भूयो द[र्दु]रपणवाश्रमं ( यं?) वाद्यम् ॥ ६० ॥
अतिवादितमनुवाद्यं समवादितमुच्यते तथा वाद्यम् ।
तत्रातिवादितं स्यात्पुष्करङ्गा(गा?)नामग्रतो यत्र ॥ ६१ ॥[11]
यत्त्वनुगतं मृदङ्गैरनुवादितमुच्यते तथा वाद्यम् ।[12][13]
समवादितं मृदङ्गैर्ज्ञेयं साम्येन यद्वाद्यम् ॥ ६२ ॥

---

१. का. पुस्तके तु 'वामोर्ध्वकमध्यानां' इत्यादिसार्धश्लोकस्य स्थाने—
'वामोर्ध्वापसव्यानां प्रहतो वामस्तु कर्तव्यः ।
सव्योर्ध्वगमनानां सद्यो विषमप्रचारे तु ॥
एवं स्वस्तिकयोगात् द्वाभ्यामपि यत् भवेत्तु हस्ताभ्याम् ।
माने वितस्तिसंज्ञे प्रहते विषमप्रचारः सः ।
स्वच्छकस्तु करयोः शेषः प्रहतेषु मार्गकरणेषु ॥' इति सार्धपद्यद्वयी ।
२. 'अङ्कितगोमुखयोगात्' इति का. ३. 'वाद्यं स्यात्' का. ४. 'करुणरसेऽपि च कार्यं वाद्यं चालितकरणमार्गेण ।' का. ५. 'गोमुखो मुख्याम्' का. ६. 'रससत्त्वभावं' का. ७. 'दृष्ट्वाभिनयं' का. ८. 'नित्यं' का. ९. 'यथाक्रमं स्थानसंयोगात्' का. १०. 'अहतविधानं कार्यं मार्गाश्रितं रसैः सम्यक् ।' का. ११. 'मुखाणां' का. १२. 'यत्त्वनुगतैः' का. १३. 'तु तद्वाद्यम्' का.

[1]कखचाः पखमा दोण्हा नचला ककिलं…ति करिह्वः ।
एते वर्णाः पणवातोद्यविधाने विधातव्याः ॥ ६३ ॥

'धा[2]धा नाचोत्तकुलं द्रहुलं हाकिरिणिकिरिल्हठंठेणिक्कमिणिकिथखोणं' इति पणववाद्यम् ।

तस्य प्रहै[3]स्तं (प्रहते?) कार्यं[4] कनिष्ठिकानामिकाग्रकोणे(केणैव?) ।
नानाकरणविभागैः पणवैः शिथिलां च तानज्ञैः ॥ ६४ ॥
वादकनिष्ठिकाभ्यां शीघ्रकृ[5]ता करेण ह्लेण(?) ।
शेषास्तु[6] वादनविधौ स्मृताः प्रहारा विविधवाद्याः ॥ ६५ ॥
[ [7]कोणानामिकवाद्यं मध्याङ्गुल्यादिवादने कार्यम् । ]
कोणानामिकवाद्यं शुद्धं प्रहतं भवेदेतत् ॥ ६६ ॥
(?)भात्तकयोगात्रिकुलमित्येतद्भ्रान्तवादनाग्रकृतम् ।
जगति करणानुविद्धं तत्राभ्यस्तत्र कारस्तु ॥ ६७ ॥
[9]दीर्घकरणानुविद्धैकारे……तूर्ध्वहस्तसंयोगात् ।
स तु वादकेन वाद्यैर्ध्रुवेण…विशेषतः कार्यः ॥ ६८ ॥

---

१. का. पुस्तके तु—
'कखगापं पणवमुखाद्गो ग्रहणात् ग्रहुलाम् ध्राहुलाम् ।
एते वर्णा नित्यं पणववाद्ये प्रयोक्तव्याः ॥' इति

२. 'किरिघण्टां थो थो णो धो त्रहुलां किरिघण्टां णो णो णद्माकारकण्डा मटामट-त्थितेटदोभाम् पणववाद्यम् ।' इति का. ३. 'तस्य प्रहते कार्यं' का. ४. '°नामिकाग्रकेणैव' का. ५. 'शीघ्रगताभ्यां तु करणरागवर्णाः' का. ६. 'वादनकृताः स्मृताः प्रकार(रा?)श्च वाद्यानाम्' का.

७. का. पुस्तके तु—
'कोणानामिकवाद्यं मध्याङ्गुल्यादिवादने कार्यम् ।
कोणानामिकवाद्यं शुद्धं प्रहतं भवेदेतत् ॥' इति

८. 'भ्रान्तकरणयोगात् कुलहामीत्येतत् भ्रान्तवदनाग्रकृतम् ।
रभितकरणोऽनुबन्धास्तत्राभ्यस्तोरकारस्तु ॥' इति का.

९. 'मिश्रकरुणानुबन्धे द्रेकारस्तूर्ध्वहस्तसंयोगात् ।
अनुवादकेन वाद्यो ध्रुर्येण विषतः कार्यः ॥' इति का. पुस्तके.

संचितकक्षौर्येण वौ कृत्वा धुर्यपरिवादकाम्यादि ।
रणणकिकिलिकिणिज्वा इति प्रहारा विधातव्याः ॥ ६९ ॥
कृत्वा शिथिलं कक्षं कार्योत्सुकनिष्ठिकाग्रकोणेन ।
तेनैव चरेद्धत्त्वो(?)द्वाण······इत्यञ्चितेनैव ॥ ७० ॥
(?)अञ्चितशिथिले पणवे कठणतणिणकृताः प्रहारास्तु ।
वैभ्रान्तक(?)करणा न तथा स्वस्तिककत्थे च शिथिले च ॥ ७१ ॥
अञ्चितकक्षे पणवे खखणण···कृताः प्रहारास्तु ।
विण्णे इति प्रहारा[ःप]णवे तु······सदा शिथिलकक्षाः ॥ ७२ ॥
खलु चटाकृताः प्रहाराः स्वत्सासहि पणवे विधातव्याः ।
शेषभ्रान्तकयोगाः संयुक्ताः संविधातव्याः ॥ ७३ ॥
टंकारानुस्वनं वाद्यं कक्षाञ्चिते तु संभवति ।
तेनं णकारो युक्तो ल्ह इति पणवे प्रहारः स्यात् ॥ ७४ ॥
तिर्यग्गृहीतवा[द ?]नमुखवर्तित इष्यते तकारस्तु ।
भ्रहुलं भ्रहुलं क्रमधीत्येवं ह्येते प्रहारास्तु ॥ ७५ ॥
एवं पणवे वाद्यं विधिवत्संक्षेपतो मयाभिहितम् ।
व्याख्याम्यतः परमहं दर्दुरवाद्याक्षराण्येवम् ॥ ७६ ॥

---

१. 'संचितक—' इत्यादिपद्यत्रयस्थाने—
'खञ्चित्रकरणरम्यकार्यस्तथा कनिष्ठिकाग्रेण ।
तत्रैकार्या दोष्णि मथाणिणिकृता प्रहारवै ।
भ्रन्तकरणे तथाञ्चिसकथा पशिथिन्न वा (?) ॥' इति का. पुस्तके सार्धं पद्यम् ।
२. 'अञ्चितकक्ष्ये पणवे येकंकार एकप्रकारस्तु ।
तथेन्ततः प्रहारः पणवे कार्यः प्रशिथिलपक्ष्ये ॥' इति का.
३. 'कखटेकृताः प्रहाराः सोच्छ्वासे पणवे विधातव्याः ।
थोकारोऽनुस्वारजे पणवे कक्ष्याञ्चितेन संभवति ॥' इति का. पुस्तके.
४. एतदर्धं का. पुस्तके नास्त्येव । ५. 'णै णैकारो युक्तो ह्ल इति पणवप्रकारः स्यात् ।' का. ६. 'तिर्यग्गृहीतवादनरववर्तितमिष्यते प्रहारोऽयम् ।' इति का. ७. 'कहुलं क्रुकुलां क्रमा सति क्कुलां इत्थं प्रकारः स्यात् ।' का. ८. का. पुस्तके तु—
'एवं च संकरकृताः प्रहाराः शुद्धाः प्रकीर्तिता[ः] तज्ज्ञैः ।
दर्दुरपणवमृदङ्गैः मिश्रितवाद्यं प्रवक्ष्यामि ॥' इति ।

(?)[1]रक्तिन्त्रिकलौ क्लेचद्रो गौणो हथिहासयुक्ताः ।
इति दर्दुरे प्रहाराः कार्यामुक्ता थणन्तांश्च(?) ॥ ७७ ॥
कुर्यात्तत्रेणणक्षार अघ इति च दक्षिणकरेण ।
वामेण(न) गोमत्थास्तु स्पृष्टः ककारोग्रेण ॥ ७८ ॥
मुक्तोल्लातितिनिपीडचैकरद्वयेनापि ।
विमुक्तग्रहतस्यान्ते स्वने निपीडिते चैव ॥ ७९ ॥
स्यात्पीडिते च थित्थेन्त्र नित्यमथावि ।
मुक्तारिशेषा भवन्ति मुक्तास्तक्त इति चैव नि[गृ?]हीते ॥ ८० ॥
शीघ्रकरणानुविद्धस्थितिरेव हि व स्वरखलतिकं स्यात् ।
इति दर्दुरप्रहाराः समासतस्तत्र विज्ञेयाः ॥ ८१ ॥
एवं त्वसंकर[2]कृता प्रहारशुद्धिरिह कीर्तितास्त(तः?)ज्ज्ञैः ।
दर्दुरपणवमृदङ्गैर्मिश्रितवाद्यं प्रवक्ष्यामि ॥ ८२ ॥
तत्र व्यक्तीभावं वाद्ये गच्छन्ति मिश्रिता[?] केचित् ।
युगप[3]त्करण(णः केचित् ?) केचित्केचित्पर्यायकारणात् (करणास्तु?) ॥
एकैकसंप्रयुक्ता वर्णा नैं[गरा ?]स्तथैव संयुक्ताः ।
[5]यैन्तारा दोखो त्रिकुलं तत्कृता मृदङ्गेषु ॥ ८४ ॥
[6]अथ दर्दर पिर्पिथिक्के निपणवयोस्तु संयुक्ताः ।
···········णणखोदो देदे थिथिविमिश्रास्तु ॥ ८५ ॥
एभ्यो येऽन्ये शेषास्ते मिश्रा एव नित्यशः कार्याः ।
पूर्वेऽपि च मिश्रत्वं व्रजन्ति सर्वे यथायोगम् ॥ ८६ ॥

---

१. 'रक्तित्रिकलौ' इत्यादिपद्यार्धस्थाने का. पुस्तके—( पद्यचतुर्दशकम् )
'तत्र विभागं केचित् वाद्ये गच्छन्ति मिश्रिताः केचित् ।
केचिद् युगपत् करणः केचित् पर्यायकरणास्तु ॥'

२. 'एवं च संकरकृताः प्रहाराः शुद्धाः प्रकीर्तिताः तज्ज्ञैः ।' का. ३. 'केचिद् युगपत्—किरणाः केचित् पर्यायकरणास्तु' इति का. ४. 'नगरास्तथैव सप्रयोक्तव्याः' का. ५. 'घेंका कथं त्रैखो कहुलं तकिता मृदङ्गेषु ।' इति का. ६. 'अथ दर्दुरो दङ् इयेङ् रङ् कहुलां मटं किपणवे च । थंमट त्थिङांकहुलां मटत्थिदेङ् विमिश्रितस्तु इति का. ॥'

युगपत्करणान्निपुणं नाणो खुरचुणघुणहेस्ह[1]······ ।
मेहुलं[2] हल्ला दोदो एवं योज्यास्तु पणवे हि ॥ ८७ ॥
धुर्यकृताश्च[3] क्रमशः करणे परिवादनेन कर्तव्याः ।
णोणो[4] देदे धाणल्लितिकिणिकिणिकृतास्तु पणवानाम् ॥ ८८ ॥
अणुबन्धे[5] कार्यं तु कुचुकुणकेतिवाद्यं तु ।
भूयः[6] प्रतिकृतिभेदो मार्दङ्गिकदर्दुरिभ्यां च ॥ ८९ ॥
यद्यत्कुर्यान्मुरजे प्रहारजातं[7] यतिप्रचारेषु ।
अनुगतोऽक्षरवृत्तं[8] तदेव वाद्यं तु पणवेऽपि[9] ॥ ९० ॥
नहि चित्रं कर्तव्यं गतिप्रचारेषु वादनं[10] तज्ज्ञैः ।
समविषमं[11] तत्र हि यत्र लक्ष्यं पादसंचारे ॥ ९१ ॥
उपरिकरणे[12] यथेष्टं कर्तव्यस्तु पणवो मृदङ्गेषु ।
तत्र[13] प्रहारकरणैर्मृदङ्गवाद्यं विधातव्यम् ॥ ९२ ॥
प्रायेण सर्ववाद्येष्वादौ पणवग्रहः प्रयोक्तव्यः ।
वक्ष्याम्यतः[14] परमहं लक्षणं करणजातस्य ॥ ९३ ॥

---

१. 'अथ युगपत् करणां कहुलां णणण्णां खुखुण्णेखे' । २. 'द्रोमा दोणं थेघोघोर्थि द्वयोर्ज्य पणवे वाद्यम् ॥ का. ३. 'धुर्यकतं च क्रमश [ :? ] करणं परिवादकेन कर्तव्यम् ।' इति का. ४. 'टटटे घोणणण किरिणि किण्णो कतंचेति ।' ५. 'पणावस्याचारबन्धे कार्यं खुखुणोति वाद्यंतु ।' ६. 'भूयः कृतं च प्रतिकृत मार्दंगिकदार्दुरिकाभ्यां तु ।' इति का. ७. '°मुरवप्रहारजातं' का. ८. 'अनुगतमक्षरवृत्तं' का. ९. 'पणवेन' इति का. १०. 'वाद्यतत्त्वज्ञैः' का. ११. 'समसहितं तत्र हितं नलक्ष्यते पाद्यसंचारो' इति का. १२. 'उपरिकरं यथेष्टं कर्तव्यं पणवं मृदङ्गं च ।' का. १३. 'तद्वत् प्रकारकरणं मृदङ्गवाद्ये विधातव्यम्' इति का. १४. का. पुस्तके श्लोकार्धस्यास्य स्थाने—

'वक्ष्याम्यतः परमहं दसत्सेन्तति ताएत्सदेवेदे
रेभिन्नत्ता तिमथि इति दर्दरे प्रहारः ।
तयोर्मुक्ते निषण्णे च कार्यस्तत्र णणणारे
मधीकीर्तांविदक्षीकरेण वा ते तुत्सिद्धि ॥
संतलवृष्टौ कराग्रेण मुक्ते न मिति चैवं निगृह्या ।
शीघ्रं करणानुबध्न स्थितिरेवहितां स्यात् ॥
इति दर्दुरे प्रहारे वक्ष्याम्यूर्ध्वकरणजातम् ॥' इति सार्धपद्यत्रयी ।

[1]रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
[2]षष्ठी च प्रतिशुक्केत्येवं ज्ञेयं करणजातम् ॥ ९४ ॥

[3]तत्र रूपं नाम करणविभक्तं यथा—'घेघं घेघं घेघं किटिमाद्यां त्रिघत-मत्थि घगु गुरु किटि किटं दो घे क्क' इति रूपम् ।

कृ[4]तप्रतिकृतं नाम यत्रैकं करणं त्रिपुष्करमुद्भावयति । य[5]था—दं खु-खुणं ऋहुलं ग्रहुलं णणणं क्कमित्थिम् । घे दो घे घत्तिमथिनदे णे णो किं तोटो मत्थि टोणं ऋाम् । गुडये क्लिहुलेद्वां रहदो ध्रोध्रो णखे वाद्यम् ।

[प्रतिभेदो नाम—] युगपत्कृते करणे मृदङ्गानां यदुपरि[6] णे[कर?]न गछ(च्छ?)ति यथा—

[7]धांघा णा धा ऋहुलं णा णा क्रमटि दो ।
एभिः करणविशेषैः प्रतिभेदो नाम विज्ञेयः ॥ ९५ ॥

रूपशेषं नाम करणानामविशेषो यथा—[9]खुखुणं णणणणणां मढाघेव मथिटां घेटां घेदो । ये घेटमठिणष्णखो इति वाद्यं रूपशेषं तु ।

प्रति[10]शुक्का नाम—अनुस्वारो मार्दङ्गिकदर्दरवादिनाभ्यां(?)यथा—
घटमथि कुणकिटि किटिखो खोघोणा खोण खोण खोणा.... ।
कुटकुटकुणकुटि घुटखे प्रतिशुक्काख्यं सदाकरणम् ॥ ९६ ॥

---

१. 'रूप-कृतं प्रतिकृतं' इति **का.** २. 'षष्ठी वै प्रतिकृतिशुष्केभ्यो ज्ञेयं करु-णजातम् ।' इति **का.** ३. **का.** पुस्तके तु—
'तत्र रूपं नाम विहस्तनकरणकरणं यथातंखुखुण खुधं क्रधं त्थिमंथेत्तरं घटां घत्तिमेत्ति घण्डाकठशुद्धरण किटि घंघेकटं केक्क मितिरूपं ।' इति पाठः । ४. 'कृत' इति **का.** पुस्तके नास्ति । ५. **का.** पुस्तके तु—
'थं घुकण खुमं क्रमथिवं गोर घटांट घट त्थिघंत्सां इदुखैं कुख लांण्णं दीधील इति कृतप्रतिकृताख्यम् ।' इति । ६. 'करणेन गच्छेति' **का.** ७. 'धोधोणा खोलाल णाणात्थिटघि घण्डां एभिः करणविशेषः प्रतिभेदो नाम विज्ञेयः ।' इति **का.** ८. 'विरामकृतं यथा—' इति **का.** ९. 'खुखुणोण्णाभट घें घेण्डामठ घोटामथि आल्याम् घो मिति वाद्यं रूष (प ?) शेषम् ।' इति **का.** १०. 'प्रतिशुष्कं नामानुस्वारो मार्द-गिके पाणविकदार्दुरिकाणां यथा—घट मटत्थि दुणथेर्जकिटिकेघेंङ्घोङ् घोण्डा घोण खोखोख कुटकिट वखत्थि णणत्थि ।' इति **का.**

ओपो[1] नाम—(?) सर्वभाण्डविवेचोऽद्भुतपाणिलयो न घोषवदो घः । यथा—

धिकिटि मथटि घेघें खयचेटो खोणखोणखोणोखो ।
घटगुघघटगुरुघणणि······एते तथौघे च ॥ ९७ ॥

करणानां[2] समायोगः षड्विधः परिकीर्तितः ।
अनेन नामयोगेन योज्यं वा करणं बुधैः ॥ ९८ ॥

त्रियति[3] नाम—समा श्रोतोगता गातु त्वगोपुच्छा चेति(?)लयपाणीनां त्रिविधः संयोगो(गः?)स च त्रिप्रकारो भवति । यथा—राद्धं विद्धं शय्यागतमिति ।

त्रिलयं[4] नाम—द्रुतो मध्यो विलम्बितश्चेति ।

त्रिपाणिकं नाम—समपाणिरर्धपाणिरुपरिपाणिश्चेति ।

समा[5] यतिर्द्रुतश्चापि लयो यत्र भवेदथ ।
तथैवोपरिपाणिश्च राद्धस्यैष विधिर्भवेत् ॥ ९९ ॥

---

१. 'चतुष्काख्ये सर्वभाण्डविरामे द्रुततालयोगे घोघो दोघो यथा—थं किटि मंथिहि किटिघेङ् घण्डणां घोण्डा घोण घोण घट घट धढु घेङ् घं घे किरिणि णगेहं थोथो तथो तथौघश्च' इति का. पुस्तके. २. का. पुस्तके तु—

'करणानां समयोगं करणेषु विधीयते ।
अनेनैव विधानेन योज्यं वा करणं बुधैः ॥ इति ।

३. 'यतिर्नाम समा स्रोतोगता गोपुच्छा चेति । यतिपाणिना त्रिविधसंयोगः । स च त्रिप्रकारो भवति । यथा—राद्धं विद्धं शय्यागतम् । एवं त्रिप्रकारः संयोगः करणेषु विधीयते ।' इति का. पुस्तके पाठः । ४. 'त्रिलयं नाम—द्रुतो मध्यो विलम्बितश्चेति ।' त्रिपाणिकं नाम समपाणिरर्धपाणिरुपरिपाणिश्चेति । इति का. पुस्तके नास्ति । ५. का. पुस्तके तु—

'अवपाणिस्तु यत्र स्यात्तथा चैव स्थितो लयः ।
गोपुच्छा च यतिर्वाद्यं तद्वै शय्यागतं भवेत् ॥
यथा च गीतिप्राधान्यं मार्गश्चैव···दक्षिणः ।
अत्युक्तमेवातोद्येषु वाद्यं शय्यागतं भवेत् ॥'

श्लोकस्यास्य स्थाने पद्यद्वयी ।

श्रोतोगता[1] यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ॥ १०० ॥
अर्धपाणिस्तु[2] यत्र स्यात्तथा चैव स्थितो लयः ।
गोपुच्छं चैव हि यतिर्वाद्यं शय्यागतं हि तत् ॥ १०१ ॥
स्थितात्[3]लयात्प्रभृत्येषां प्रमाणं संप्रकीर्त्यते ।[4]
कार्या हानिः[5] कलानां च शेषेष्वन्येषु पाणिषु ॥ १०२ ॥
यतयः पाणयश्चैव लया वै[6] वाद्यसंश्रयाः ।
यथाकामं[7] हि कर्तव्या नाट्ययुक्तिमपेक्ष्य च ॥ १०३ ॥

त्रिर्मार्जनं[8] नाम—

मायूरी ह्यर्धमायूरी तथा कर्मारवी[9] पुनः ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ १०४ ॥
गांधारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
([10]ऊर्ध्वके [11]पञ्चमश्चैव मायूर्यां तु स्वरा मताः ॥ १०५ ॥
वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ।)
ऊर्ध्वके पञ्चमश्चैवमर्धमायूर्युदाहृता ॥ १०६ ॥

---

१. 'स्रोतोगता' का.

२. 'वार्तिको वृत्तिमार्गः स्याद्दक्षिणो गीतवाद्ययोः ।
पात्रेषूत्तममध्येषु विद्धं वाद्यमुदाहृतम् ॥
तथा वाद्यप्रधानं च परिपाणिः समायतिः ।
भूतश्चापि लयो यत्र राद्धं वाद्यं तु तद्भवेत् ॥'

इति पद्यद्वयं का. पुस्तकेऽस्य श्लोकस्य स्थाने । ३. 'त्वापा' ख. ४. 'संप्रवर्तते' का. ५. 'कार्यहानिः' का. ६. 'वाद्यसमाश्रयाः' का. ७. 'यथा कर्म हि कर्तव्यं नाट्ययुक्तिमवेक्ष्य च' का. ८. 'तिस्रो मार्जना नाम'—का. ९. इतः प्रभृति कतिचन श्लोका अत्रैवोपयुक्ता आदर्शद्वयेऽपि दृष्टत्वात्पूर्वमपि यथादर्शं लिखिताः. १०. धनुश्चिह्नान्तरगतः पाठो भ्रष्टः क-पुस्तकात्.

११. 'ऊर्ध्वगे मध्यमश्चैव मायूर्यश्च स्वराश्रयाः ।
सामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ॥
धैवतश्चोर्ध्वगे कार्यः कर्मारव्यः स्वराश्रयाः ।'

का. पुस्तके सार्धः श्लोकोऽस्य सार्धस्य स्थाने ।

ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वके[1] कार्यः कर्मारव्याः स्वरास्त्वमी ॥ १०७ ॥
एतेषामनुवादी तु जातीनां[2] यः स्वरः स्मृतः ।
आलिङ्ग्य[3] मार्जनप्रोक्तो निषादः स विधीयते ॥ १०८ ॥
मायूरी[4] मध्यमग्रामे षड्जे त्वर्धा तथैव च ।
कर्मारवी तु गान्धारे साधारणसमाश्रयाः ॥ १०९ ॥
स्वराः[5] स्थानस्थिता ये तु स्तुतिसाधारणाश्रयाः ।
एवं संमार्जनकृताः शेषाः संचारिणो मताः ॥ ११० ॥
वामके[6] चोर्ध्वके कार्या अहार्या लेपतश्च··· ।
सा·································स्वराः ॥ १११ ॥
शैथिल्यादायतत्वाच्च चर्मस्फोटनयापि च ।
स्वराणां संभवः कार्यो मार्जनासु प्रयोक्तृभिः ॥ ११२ ॥
मार्जना तु कृता कार्या वामकोर्ध्वकयोः[7] सदा ।
लक्षणं मृत्तिकायास्तु गदतो मे निबोधत ॥ ११३ ॥
निःशर्करा निःसिकता निस्तृणा निस्तुषा तथा ।
न विच्छिन्ना न विर्ष(श?)दा[8] न[9] क्षारा कटुका न च ॥ ११४ ॥

---

१. 'पञ्चमश्चोर्ध्वगे कार्यः कर्माख्यः स्वराश्रयाः ।' का. २. 'जातिरागस्वरान्वितः' का. ३. 'आलिङ्गे मार्जनं प्राप्य निषादस्तु विधीयते ।' का.

४. 'मायूरी मध्यमे ग्रामे षड्जे त्वर्धा तथैव च ।
कर्मारवी तु गान्धारे साधारणसमाश्रयाः ॥' का.

५. 'स्वरा ये स्थायिनो यान्ति श्रुतिसाधारणाश्रयाः ।
त एवं मार्जनं कृत्वा शेषाः संचारिणाः स्मृताः ॥' का.

६. 'वामके' इत्यादि पद्यद्वयस्थाने का. पुस्तके—
'वामेऽर्धगाभ्यामाहार्याः कार्या वै लेपनाः स्वराः ।
शैथिल्यादायतत्वाच्च कार्यास्त्वालिङ्गकाङ्किते ॥
शैथिल्यश्चायतत्वं च बध्वा पीडनमार्दवम् ।
एवं स्वरोद्भवः कार्यो मार्जनासंप्रयोक्तृभिः ॥' इति का.

७. 'वामगोर्ध्वगयोस्तथा' इति का. ८. 'विशदा' का. ९. 'न क्षारकटुका तथा' का.

नावदाता न कृष्णा च नाम्ला नैव च तिक्तिका ।
मृत्तिका लेपने शस्ता तया कार्या तु मार्जना ॥ ११५ ॥
नदीकूलप्रदेशस्था श्यामा या मधुरा च या ।
त(तो?)यापसरणाश्चक्षा(च्छ्लक्ष्णा ?) तया कार्या तु मार्जना ॥ ११६ ॥
बधिरा ह्यवदाता च कृष्णा गुर्वी न च स्थिरा ।
न(स)तुषा न स्वरोपेता श्यामा स्वरकरी भवेत् ॥ ११७ ॥
यवगोधूमचूर्णं वा तत्र दद्यात्प्रलेपने ॥ ११८ ॥

त्रिसंयोगं नाम—गुरुसंचयो लघुसंचयो गुरुलघुसंचयश्चेति ।

तत्र गुरुसंचयो नाम गुरुस्थितलयौघवृत्तौ यथा—
घेतो केतां चन्द्रां खेतां द्वंद्वं तथैव खेतांद्धम् ।
द्वंद्वं द्राघेतां कत्तां खेचामिति गुरूणि स्युः ॥ ११९ ॥

गुरुलघुसंचयो नाम—लघुकैह्व(ध्वक्कैर्द्धु)तलोपे (लय)प्रवृत्तौ यथा—'घटविमथिथे मथितं कितांघ गंघमो थिकं नाद्धं कटथिं करस्थि मघवे' इति संयोगो गुरुलघु स्यात् ।

---

१. 'नवाकृष्णा' का. २. 'मृत्तिकालेपने ह्येषां यथा कार्यन्तु मार्जनम् ।' का. ३. 'सा मृत्तिका भवेत्' का. ४. 'तोयापसरणश्लक्ष्णा' का. ५. 'तया कार्यं तु मार्जनम्' का. ६. 'बहुकार्यावदाता तु' का. ७. का. पुस्तके 'न तुषा इत्यादिपद्यस्थाने—

'स तुषा न स्वनकरी श्यामा यत्र न दृश्यते ॥'
तत्र गोधूमचूर्णं वा यवचूर्णं च दापयेत् ।
यवगोपुच्छ ( धूम ? ) चूर्णं तु कदाचिदुपभुज्यते ॥
एकस्तस्य च दोषः स्यादेकस्वरकरो भवेत् ।
एवं तु मार्जना योगात् श्यामा स्वरकरी भवेत् ॥
त्रिसंयोगस्य वक्ष्यामि लक्षणं द्विजसत्तमाः । इति पद्यत्रयी ।

८. 'त्रिसंयोगो नाम गुरुलघुसंचयगुरुसंचयो(यौ ?) लघुसंचयो(य ?) इति ।' ९. 'उरुस्थितिलयवृत्ते यथा—स्थितटान्त क्रियात्त किटा घटतिथिमथि मतथित्वं घटमथि भावेञ्ज घटा स्यामेवं गुरुलघु स्यात् ।' इति का. १०. 'गुरुलघुसंचयो नाम' इत्याद्यारभ्य 'इति संयोगो गुरुलघु स्यात् ।' इत्यन्त पाठः का. पुस्तके नास्ति ।

लघुसंचयो[1] लघुद्द(द्रु)तलघुप्रवृत्तौ यथा—

घटमटमटघटमथिघट्टघट्टघट्ट गुरुकृते लघुसंचयश्च।
इति संयोगाज्ज्ञेयं मृदङ्गवाद्यं प्रयोगज्ञैः॥ १२०॥

त्रिगतं[2] नाम—तत्त्वमनुगतमोघश्चेति।

अक्षरसदृशं वाद्यं स्फुटपदवर्णं[3] तथैव वृत्तसमम्।
सुविभक्तकरणयुतं[4] तत्त्वे वाद्यं विधातव्यम्॥ १२१॥
समपाण्यवपाणियुतं स्फुटप्रहारकरणानुगं[5] चैव।
(?) गेयंपेय(?) वाद्यस्य...स भवेद्धाताय तदनुगतम्॥ १२२॥
नैकंकरणाश्रययुतं[6] ह्युपर्युपरिपाणिकं द्रुतलयं च।
.............................. ॥ १२३॥
आविद्धकरणे बहुलायाज्यं वाद्यं बुधैरोघैः।
सर्वस्यैव हि वाद्यस्य अष्टौ साम्या(?) भवन्ति हि॥ १२४॥

तद्यथा—

अक्षरसममङ्गसमं तालयतिसमं(?) ग्रहसमं च।
न्यासोपन्याससमं पाणिसमं चैव विज्ञेयम्॥ १२५॥
यद्वृत्तं तु भवेद्गानं गुरुलघ्वक्षरान्वितम्।
यद्वृत्तं तु भवेद्वाक्यं तदक्षरसमं स्मृतम्॥ १२६॥
ध्रुवाणां ग्रहमोक्षेषु[8] कालान्तरकलासु[9] च।
यदङ्गत्रिगतं[10] वाद्यं तदङ्गसममुच्यते॥ १२७॥

---

१. 'लघुसंचयो नाम द्रुतलयप्रवृत्ते यथा—
घटमटकट घटमत्थि मटथि घटघटद्रुतेलघुसञ्चयः।
इति संयोगा ज्ञेया मृदङ्गवाद्यप्रयोगज्ञैः॥' इति का.
२. 'त्रिप्रकीर्ति नाम तत्त्वमनुगतमोघश्चेति' का. ३. 'पदवर्णसमं तथैव प्रवृत्तम्' का. ४. 'सुविभक्तकरणयुक्तं' का. ५. 'स्फुटप्रकरणानुगतं भवेत् वाद्यम्' का. ६. 'अनुगतं च नैककरणाश्रयमुपर्युपरि पाणिसमश्चेति विज्ञेयम्।' का. ७. 'नैककरणाश्रययुतं' इत्याद्यारभ्य 'न्यासोपन्याससमं पाणिसमं चैव विज्ञेयम्।' इत्यन्तः पाठः का. पुस्तके नास्ति। ८. 'ग्रहमोक्षे तु' का. ९. 'कलान्तरकलासु च' का. १०. 'यदङ्गं क्रियते वाद्यं तदङ्गं सम उच्यते।' का.

[1]यच्छरीरं भवेद्गानं कलातालप्रमाणजम् ।
तत्प्रमाणं तु तद्वाद्यं तद्वै तालसमं भवेत् ॥ १२८ ॥
[2]स्थिते मध्ये द्रुते वापि लये गानं च यद्भवेत् ।
तथैव यद्भवेद्वाद्यं तद्वै लयसमं भवेत् ॥ १२९ ॥
समा श्रो(स्रो?)तोगता[3] वापि गोपुच्छा य(च?)यतिर्यथा ।
[4]यत्तथाहि भवेद्वाद्यं तद्वै यतिसमं भवेत् ॥ १३० ॥
[5]तंतावनद्धवंशानामेकश्रुतिकृतोऽपि च ।
ग्रहो मानेन सहितस्तद्वै ग्रहसमं भवेत् ॥ १३१ ॥
[6]न्यासापन्यासयोगं तु तृतीयायां भवेद्यथा ।
वंशवीणोद्भवं वाद्यं न्यासापन्यासजं तु तत् ॥ १३२ ॥
[7]समपाण्यर्धपाणिस्थं तथैवोपरिपाणिगम् ।
गीतवाद्यानुगं वाद्यं ज्ञेयं पाणिसमं तु तत् ॥ १३३ ॥

'अष्टादशजातिकम्' इति यदुक्तम्, तदनुव्याख्यास्यामः—तदाथ[8] (यथा-)

---

१. 'यत्प्रमाणं भवेद्गानं कलाकालप्रमाणतः ।
यत्प्रमाणं तु यद्वाक्यं तद्वै तालसमं भवेत् ॥' इति **का.**

२. पद्यमेतत् **का.** पुस्तके नास्ति ।

३. 'स्रोतोगता' **का.** ४. 'यद्विपन्तु' (?) **का.** ५. पद्यमेतत् **का.** पुस्तके नास्त्येव ।

६. 'न्यासोपन्यासयोगस्तु स्वराणां हि यथा भवेत् ।
वंशवैणोद्भवं वाद्यं न्यासापन्यासजं तथा ॥' इति **का.**

७. 'समपाण्युपपाण्योक्त तथैवोपरिपाणिजम् ।
गीतानुगं च यद्वाद्यं स्मृतं पाणिसमं तु तत् ॥' इति **का.**

८. 'तदाथ' इत्यारभ्य 'एतासां लक्षणानि दर्शनान्यभिव्याख्यास्यामः—' इत्यन्तपाठ-स्थाने **का.** पुस्तके—

'शुद्धा एकरूपा देशानुरूपा देशादपेतरूपा पर्यायो विष्कम्भः पर्यस्ता संरम्भः पार्ष्णि-समस्ता दुष्करकारणा ऊर्ध्वगोष्ठिका उच्चितिका एवं वाद्या मृदङ्गपणवा अवकीर्णा अर्द्धावकीर्णा संप्लवा विधूतमिति एतासां जातीनां लक्षणमभिव्याख्यास्यामः ।'

इति पाठः ।

शुद्धा पुष्करकरणा विषमा विष्कम्भितैकरूपा वा।
पार्ष्णिसमा पर्याया समविषमकृतोवि(ताव)कीर्णा च॥ १३४॥
पर्यवसानोच्चितिका संयुक्ता संप्लुता महारम्भा।
विगतक्रमा विगलिता वञ्चितिकान्यैकवाद्या च॥ १३५॥

एतासां लक्षणनिदर्शनान्यभिव्याख्यास्यामः—

एकाक्षरकृतं वाद्यं यद्भवेत्सार्वकार्मि(मि)कम्।[1]
नित्यं करणयोगेन सा शुद्धा नामतो यथा—॥ १३६॥
चन्द्रं इन्द्रं खो खो णाणाति या विहितवाद्या।[2]
.............................. ॥ १३७॥

---

१. 'एकाक्षरं द्व्यक्षरं वा यद्वाद्यं सर्वमार्मिकम्।
भवेत् करणयोगे तु···शुद्धा नामतो यथा॥' का.

२. 'चन्द्रं इन्द्रं खो खो' इत्याद्यारभ्य 'पर्यवसानाम तु सा जातिः॥ १४७॥' इत्यन्तस्य पाठस्य स्थाने का. पुस्तके—

'खो खोधंक्कामेभिर्जात्यक्षरैः समायुक्ता।
सा शुद्धा विज्ञेया मध्यस्त्रीणां भवेज्जातिः॥
गोममङ्कितालिप्तो वितस्ता वा श्रिता यदा।
यन्त्रित धैकक एकरूपा हि सा यथा॥
द्रोङ् धोङ् दोङ् धोङ् घेघेङ् अङ्कितमार्गाक्षरैः सभायुक्तो।
सा लेकरूपा ज(जा?)तिर्नृणाङ्गीतविधानतः कार्या,
सर्वास्वपि प्रकृतिषु प्रयोज्या सा स्थिता यद्द्रुता वापि॥
देशकालमवस्थां ज्ञात्वा मध्येऽपि विनियोज्या।
सर्वातोद्यानि यत्रैकं कारणं भावयन्ति॥
मृदङ्गवाद्यानुगमादेकरूपा तु सा स्मृता।
अङ्कितमार्गविभक्ता सम्भोगकृते भवति शृङ्गारे
देशानुरूपजातिः शृङ्गारे चोत्तमे स्त्रीणाम्॥
वामोर्ध्वगप्रवृत्तबोधा क्षिप्तापकृष्टलययुक्ता।
उपदेशादुपेतरूपा करुणरसे सा भवेज्जातिः॥
यथा— घेद्रङ घेद्राङ घेमेभिर्जात्यक्षरैः समायुक्ता
देशादयेतरूपा सा कार्या वाद्ययोगेषु॥
पर्यवगच्छति पूर्वा यस्मिन् सिद्धैस्तु करणजातम्।
त्रिविधेऽपि च लययोगे पर्याया नाम सा जातिः॥' इति।

.................................... ।

सा शुद्धा विज्ञेया मध्यस्त्रीणां सदा जातिः ॥ १३८ ॥

.................................... ।

.................................... ॥ १३९ ॥

गुरुयुग्मं लघुयुग्मं तोरटकं तथा वाद्ये ।

............विष्कम्भा नाम सा जातिः ॥ १४० ॥

.................................... ।

.................................... ॥ १४१ ॥

.................................... ।

.................................... ॥ १४२ ॥

टोघे तां तां दोघे देहा प्रत्यक्षरेषु संयुक्ताः ।
पर्यायजातिरियं मध्यमपुरुषेषु कर्तव्या ॥ १४३ ॥
कृतोपरिकृतं वाद्यं दन्तलयं समारूढम् ।
पुनरेव समस्तं स्यात्समविषमा सा तु विज्ञेया ॥ १४४ ॥
अवकीर्णं यद्विगुणैर्गुणैर्वापि करणं मृदङ्गानाम् ।
पणवेषु दर्दरेष्वभ्य(प्य)वकीर्णा नाम सा जातिः ॥ १४५ ॥
पर्यवगच्छति पूर्वं यस्मिन्वै प्रस्तुतं करणजातम् ।
त्रिष्वपि लयेषु योज्या पर्यवसाना तु सा जातिः ॥ १४६ ॥
[1]घेटो दोल्हां णणणं एभिर्या त्वक्षरैरेभिः(?) ।
(?) संवद्धा साम्यार्थे उच्चितिका जातिर्वाद्ये तु बोद्धव्या ॥ १४७ ॥

---

१. 'घेटो दोल्हां णणणं' इत्याद्यारभ्य 'दक्षिणवामप्रहारा च ॥ १५३ ॥' इत्यन्तस्य पाठस्य स्थाने का. पुस्तके—

'यथा—

घोदाङ्घेदेङ्गुदुघोङप्राया वामोर्ध्वगवामहस्तसञ्चारः ।
पर्यायकृता जातिः वीराद्भुतरौद्रयोगेषु ।
गुरुयुग्मं लघुयुग्मं तथैव च लघुगुरूणि चैव गुरु लघुश्चैव यथा ॥
सिङमाङ्गटचेन्द्रगुदुधेङ्गमथिमेत्थं ।
विष्कम्भाख्या जातिः शृङ्गारे चोत्तमस्त्रीणाम् ॥

(?) घंकेयंकटकिटां एभिर्या त्वक्षरैस्तु ...... ।
.............................................. ॥ १४८ ॥

संयुक्तकृता सा जातिर्वैरगतौ संविधातव्या ।
सर्वाङ्गुलिचलनकृता सर्वमृदङ्गप्रहारसंयुक्ता ॥ १४९ ॥
भीता गतिर्नभोगत्योः संप्लुतजातिर्विधातव्या ।
(?) अर्धपाणिकरणयुक्तं कृत्वादौ मध्यलयेन तुल्यं वा ॥ १५० ॥

---

एकैकाक्षर(ण)योगाचार्यं सर्वमार्गसंयुक्तम् ।
पर्यस्ता जातिः समहस्ता विचारसंयुक्ता ॥
आकाशे रथविमानऋषिविद्याधरभुजङ्गमादीनाम् ।
चरिते गतिविन्यासे यथा रायाश्चैव पर्यस्ता ॥

यथा—

घेङ्ताङ्घोह्नामेभिर्जात्यक्षरैः समायुक्ता ।
अधमस्त्रीणां योज्या संरम्भा नाम वै जातिः ॥
ऊर्ध्वांगदक्षिणः मुखैः क्षिप्ता प्रभूता वितस्तमार्गे तु ।
पार्ष्णिसमस्ता जातिः कार्या शृङ्गारहास्यगतौ ॥

यथा—

तत्थिकटंमंच्छिकरणै(:?) सपार्ष्णिनिष्पीडैः ।
धीन्दाङः गुघेङ् गूधिताङ् पार्ष्णिसमस्ता पुनर्जातिः ॥
स्थितिलयगतिविन्यासे शृङ्गारे भवेत्तु योत्तमप्रकृतौ ।
धीरोत्तमपर्यस्ता जातिर्वै साधमपुरुषेषु कर्तव्या ॥
अवपाणिकरयुक्ता ह्यादौ मध्यमलयेन यत्तुल्यम् ।
आरम्भं तं विद्यादन्तेवासिश्रुतं यस्याः ॥

यथा—

मगहं कुयुधकिम् पुरुषाणामन्येषां दानवादीनाम् ।
सहस्तिकहस्तविचाराः सर्वमार्दङ्गप्रकारसंयुक्ता ॥
सत्रिलयवाद्ययुक्ता दुष्करकरणा भवेज्जातिः ।
दैत्येन्द्रभुजगराक्षसपिशाचगन्धर्वगुह्यकादीनाम् ॥
गतिविन्यासे कार्या दुष्करकरणा भवेज्जातिः ॥
ऊर्ध्वाङ्गदक्षिणमुखोक्षिप्तप्रहिता वितस्तमार्गा च
अङ्कोर्ध्वप्रवृत्ता दक्षिणवामप्रवृत्ता च ॥' इति ।

(?) वाद्यहृतलयम(वऽ)चवं जातिः सा स्यान्महारम्भा ।
(?) आरम्भो विद्यादन्ते वापि द्रुतं यस्यद्रुति (?) ॥ १५१ ॥
ऊर्ध्वाङ्कदक्षिणमुखे क्षिप्तप्र(हृ)हृता विगतक्रमा नाम ।
अङ्कयोर्ध्वकप्रवृत्ता दक्षिणवामप्रहारा च ॥ १५२ ॥
प्रायेणोद्धतवाद्या वितस्तामार्गाश्रयेण दिव्यानाम् ।[1]
धद्रां धद्रां था·········(जा)तिर्विगतक्रमा नाम ॥ १५३ ॥
लघ्वक्षरभूयिष्ठा विचित्रकरणा च सर्वमार्गेषु ।[2]
वाद्यसमर्पितकरणा विगलितनामा तु सा जातिः ॥ १५४ ॥

---

१.　'प्रायेणान्तर्मार्गा वितस्तमार्गाश्रयेण दिव्यानाम् ।
धृङ्प्राया जातिरियमूर्ध्वङ्कोषा स्यात् ॥' इति का.

२. 'लघ्वक्षरभूयिष्ठा' इत्यारभ्य 'दशरूपे विशेषतः ॥ १५७ ॥' इत्यन्तपाठस्थाने का. पुस्तके—

'सर्वमार्गैः समुद्धृत्य यद्वाक्यं करणं भवेत् ।
उच्चितिकां विजानीयात् गूढरङ्गलिकाकृताम् ॥

यथा—

केन्ताकेत्वाङ्गदितामेभिर्जात्यक्षरैः समायुक्ता ।
राज्ञां स्वभावगमने जातिः कार्या वितस्तिकृता ॥
गोमुख्यक्षरसहिता सर्वमृदङ्गप्रकारसंयुक्ता ।
कुहकाभिनये योज्या वैलम्बिकदृष्टलिङ्गेषु ॥

यथा—

घण्डाजातोदकीतायेङ्केङ्मदाथि घट इङ्के ।
एभिस्त्वक्षरयोगैरेवंवाद्या भवेज्जातिः ॥
वामनविह्वलखञ्जस्युधाङ्गधेचशह्यहृतपादाम् ।
एवं वाद्या जातिरेषा गमने तु कर्त्तव्या ॥
पृथिवी वादितं यत्र पर्वतोऽन्येषु दृश्यते ।
मृदङ्गपणवादीनां सा जातिः सार्वमञ्चिकी ॥

यथा—

ध्रोंध्रोंटेंटें एभिर्जात्यक्षरैः समायुक्ता ।
मृदङ्गपणवानां स्त्रीणां जातिरवकीर्णा ॥

करणैर्बहुभिश्चित्रैः सर्वैमृदङ्गप्रहारसंयुक्ता ।
स्वाभाविकोत्तमगतौ वञ्चितिका सा तु विज्ञेया ॥ १५५ ॥
धाघ्रौ धाघ्रौ धाघ्रौ त्वेभिर्या त्वक्षरैस्तु संयुक्ता ।
सा ह्येकवाद्यजातिर्नृत्तगतिर्विधानतः कार्या ॥ १५६ ॥
एवमेतेन विधिना कर्तव्यं वादनं बुधैः ।
गतिप्रचारगाने च दशरूपे विशेषतः ॥ १५७ ॥
[1]सप्तरूपविधानेन छन्दक्यासारितेषु च ।
[2]तत्त्वं चानुगतं चैव तथौघो वाद्यमिष्यते ॥ १५८ ॥

---

यद्वाद्यं त्रिगुणैर्वाद्यकरणैर्मृदङ्गानाम् ।
दर्दुरपणवोपगमादवकीर्णा नाम सा जातिः ॥

यथा—

केन्तां केन्तां एभिर्जात्यक्षरैस्तु संयुक्ता ।
गोमुखमार्गे जातिः सा चैवंगुणा विधातव्या ॥
अर्धकीर्णविधैः करणैरिह मार्गयोगलघुयुक्तैः ।
दर्दरपणवमृदङ्गैरर्धार्धं वादने कार्यम् ॥

यथा—

थङ्गदघेण्डासेन्द्रामेभिर्जात्यक्षरैस्तु संयुक्ता ।
संप्लवमिति विज्ञेया कर्त्तव्या वानरैः करणैः ॥
दिव्यैर्नानाकरणैश्चित्रैर्मृदङ्गप्रहारसंयुक्तैः ।
स्वाभाविकोत्तमगतैर्विधूतजातिर्विधातव्या ॥

यथा—

ददिगे गुदुघेङ् एभिर्जात्यक्षरैः समायुक्ता ।
तितिथिक्कामटत्थिकणंकुक्कां••••••
एभिः स्वरसंयोगैर्विधूतजातिर्विधातव्या ॥
एता गतिप्रचारेषु विज्ञेया जातयो बुधैः ।
याश्च योष्कामया(?) चास्मिन् ता ग्राह्या लोकतोऽर्थतः ॥
एवमेतेन विधिना कर्त्तव्यं वादनं बुधैः ।
गतिप्रचारे गीते च दशरूपे तथैव च' ॥

१. 'सप्तरूपे विधाने च छन्दः सारितकेषु च' का. २. एतदर्धं का. पुस्तके नास्ति ।

वाद्यं गुर्वक्षरकृतं तथाऽल्पाक्षरमेव च ।
गतिप्रचारे कर्तव्यं गाने[1] साम्यमिहेच्छता ॥ १५९ ॥
तत्त्वं चानुगतं चैव ओघश्चापि[2] कदाचन ।
राज्ञां ललितगानैश्च[3] योज्यं वाद्यं स्वभावजम् ॥ १६० ॥
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतं भवेत् ।
तृतीये त्वोघसंज्ञं तु वाद्ये गतिपरिक्रमे[4] ॥ १६१ ॥
ध्रुवासु[5] छन्दतश्चित्रं शेषाणां संप्रयोजयेत् ।
प्रावेशिकीनां कर्तव्यं···तश्च(च) ह्यनुगतं तथा ॥ १६२ ॥
नैष्कामिश्चा[6](क्य?)न्तरकृतं कार्यं त्रिलयवाहि(दि?)तम्[7] ।
द्धु[8](द्रु?)तं भाण्डेन कर्तव्यं तज्ज्ञैर्गतिपरिक्रमे ॥ १६३ ॥
एवं गतिप्रचारेषु कार्यं वाद्यं[9] प्रयोक्तृभिः[10] ।

---

१. 'गानं सौम्यार्थदर्शनम्' का. २. 'तथौघं करणाश्रयम्' का. ३. 'ललितभावत्वात्' का. ४. 'गतिपराक्रमैः' का. ५. श्लोकस्यास्य स्थाने का. पुस्तके—

'शेषाणां छन्दतश्चित्रं ध्रुवाणां संप्रयोजयेत् ॥
अथ स्थितापकृष्टानां वाद्यं चानुगतं भवेत् ।
प्रावेशिकीनां कर्तव्यं लयश्चानुगतं तथा ॥' इति सार्धं पद्यम् ।

६. 'नैष्कामिक्यन्तरगतं' का. ७. 'कार्यं त्रिलयवादितम्' का. ८. 'द्रुतं प्रासादिकीनां च ध्रुवा पञ्चविधा भवेत् ।' इति का. ९. 'वाद्यं योज्यं प्रयोक्तृभिः' का. १०. इत ऊर्ध्वं का. पुस्तके—

'अत ऊर्ध्वं प्रवक्ष्यामि ग्रहान् भाण्डसमाश्रयान् ।
शम्यातालग्रहाः केचित् तथाकाशग्रहः पुनः ॥
तत्र शम्याग्रहा ज्ञेया नित्यं दक्षिणपुष्करे ।
वामोर्ध्वगे ग्रहाश्चापि ज्ञेयास्तालग्रहा बुधैः ॥
तर्जनीग्रहका नित्यमालिङ्गे परिकीर्तिताः ।
तथाऽऽकाशग्रहः प्रोक्तो निष्कामे वा प्रयोजितः ॥
आसारिता नित्यशम्या या(द्वि)तालास्तु ध्रुवाङ्गजाः ।
लयश्च न ग्रहं गानं तत्र स्यात्तर्जनीग्रहाः ॥
शीर्षश्चोद्धता चैव प्रदेशिन्या ग्रहाः स्मृताः ।
नत्कुटस्याड्डितायाश्च प्रासादिक्यास्तथैव च ॥

ताण्डवे सुकुमारे च वाद्यं[1] वाद्यामि(?)तत्त्वतः ॥ १६४ ॥
अभाण्डेनैव[2] गानस्य परिवर्तं प्रयोजयेत् ।
तस्यान्ते संनिपाते[3] च कार्यो भाण्डग्रहो बुधैः ॥ १६५ ॥
अथ[4] नृत्त[स्य?] शोभार्थमङ्गानां परिवर्तनम् ।
संगीतस्य[5] प्रकर्तव्यं लयस्य च निवर्तनम् ॥ १६६ ॥
यत्राभिनयमङ्गे[6] तु तत्र वाद्यं प्रयोजयेत् ।
यत्रापाणि(?)वशादङ्गं भूयोऽपि विनिवर्तयेत् ॥ १६७ ॥
स[7] तत्रार्थेऽभिनेयस्तु शेषं नृत्तेन योजयेत् ।
यद्वृत्तं तु पदं गाने तादृशं वाद्यमिष्यते ॥ १६८ ॥
गातथाद्य(गीतवाद्य?)प्रमाणेन[8] कुर्यात्स्वाङ्गविचेष्टितम्[9] ।
यद्वा[10] गुर्वक्षरं चैव तथाल्पाक्षरमेव च ॥ १६९ ॥
मुखोपवहने[11] कार्यं प्रकृते वर्णतस्तथा ।
स्थिते[12] शुद्धप्रहारं तु मध्येऽक्षरसमं तथा ॥ १७० ॥

---

सन्निपातग्रहा ज्ञेयास्तथैवैककलो विधिः ।
आकाशग्रहका ज्ञेयाश्चतुर्द्विकलयोगजाः ॥
तथा चाङ्गनिबन्धानि शीतकानि यथाक्रमम् ।
एवमेते बुधैर्ज्ञेया ग्रहा भाण्डसमाश्रयाः ॥
ताण्डवे सुकुमारे च वाद्यं वक्ष्याम्यतः परम् ।'

१. 'वाद्यं वक्ष्याम्यतः परम्' का. २. 'अभाण्डमेकगानस्य' का. ३. 'संनिपातस्तु' का. ४. 'अथवा नृत्तशोभार्थमङ्गाङ्गपरिवर्तनम्' का. ५. 'संगीतके प्रकर्तव्यं लयस्य परिवर्तनम्' का.

६. 'यत्राभिनेयमङ्गं तु वाद्यं तत्र प्रयोजयेत् । यत्राङ्गहारवृत्तं तु तत्र वाद्यं प्रयोजयेत् ॥' इति का. ७. 'यथा भीतिवशादङ्गं भूयो भूयो निवर्तते । तत्रावमभिनेयं तु शेषं नृत्तेन योजयेत् ॥' का. ८. 'गीतवाद्यप्रमाणेन' का. ९. 'कुर्याच्चाङ्गविचेष्टितम्' का. १०. 'यद्वा गुर्वक्षरं चैव तथाल्पाक्षरमेव च' का. ११. 'मुखोपवहनं कार्यं प्रकृते वर्णतस्तथा' का. १२. 'स्थिते स्वल्पं प्रहारं तु मध्याक्षरसमं तथा । कार्यं तु गीतके वाद्ये द्रुते चोपरिपाणिकम् ॥' का.

कार्यं तु गीतके वाद्यं द्रुते चोपरिपाणिकम् ।
समरक्तं विभक्तं च स्फुटं शुद्धं प्रहारजम् ॥ १७१ ॥
नृत्ताङ्गग्राहि च तथा वाद्यं कार्यं तु ताण्डवे ।
सनृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं तथा ।
अनृत्तेषु प्रयोगेषु तत्त्वमोघं क्रमेण तु ॥ १७२ ॥
यो विधिर्गानवाद्यानां पदाक्षरलयान्वितः ।
स तु नृत्ताङ्गहारेतु(षु ?)कर्तव्यो नाट्ययोगतः ॥ १७३ ॥
एतास्तु जातयः प्रोक्ता दश चाष्टौ च भाण्डजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि तोटकान्वाद्यसंश्रयान् ॥ १७४ ॥

चित्रः समो विभक्तश्चित्र(श्छिन्न ?)स्तेन्न(श्छिन्न ?)विद्धोऽनुविद्धो विद्धो वाद्यसंश्रयोऽसु(ऽनु ?)श्रितप्रतिविच्युतो दुर्गोऽवकीर्णोऽर्धावकीर्णः परिक्षिप्त एकरूपो नियमान्वितः (साचीकृतः) समुल्लेखश्चित्रलेखः सर्वसमवायकृतो दृढश्चेति ॥

(?) रिभितौजाकृतेश्चित्रो नानाकरणभूषितः ।
प्रसन्नकरणश्चैव त्रिपाणिलयसंभवः ॥ १७५ ॥

---

१. 'समं रक्तं विभक्तं च स्फुटं शुद्धं प्रहारजम् ।' का. २. 'नृत्ताङ्गग्राहि लोकज्ञैर्वाद्यं योज्यं तु ताण्डवे ।' का. ३. 'भवेत्' का. ४. 'तत्त्वमोघं च वादयेत्' का. ५. इतः पूर्वं का. पुस्तके—

'स्थिते मध्ये द्रुते चापि यथागानं तु वादयेत् ।
पादनृत्ताङ्गहारे तु तेनैव प्रक्रमेण तु ॥'

६. 'नृत्ताङ्गहारेषु' का. एष श्लोकोऽधिकः । ७. 'प्रकारान् वाद्यसंश्रयान्' का. ८. 'अथ प्रकाराः—चित्रः समः विभक्तः छिन्नः छिन्नविद्धः अनुविद्धः स्वरूपानुगतः अनुसृतः विच्युतः दुर्गः अवकीर्णः अर्धावकीर्णः एकरूपः परिक्षिप्तः साचीकृतः समलेखः चित्रलेखः सर्वसमवायदृढ इति ॥' इति का. पुस्तके पाठः । ९. धनुश्चिह्नद्वयान्तःस्थो भ्रष्टः पाठः ख. पुस्तकात्. 'सूचीकृत' इति लग्ने आदर्शद्वये. १०. 'तत्र—

'निर्वर्तितादिभिः प्रयुक्तं चित्रैः करणैरनेकविधहस्तैः ।
त्रिलयं त्रिपाणियुतं चित्रं वाद्यं बुधैर्ज्ञेयम् ॥' इति का. पुस्तके ।

दर्दरपणवमृदङ्गैर्नानाकरणैः समं समनुजातः ।
तालाङ्गवंशानुयुक्तः स तु विज्ञेयः समो नाम ॥ १७६ ॥
नान्या(त्या?)यतस्तथा स्यादिह संस्थानतो विभक्तश्च ।
अक्षरपाणिलयेषु च विभक्तकरणे विभक्तस्तु ॥ १७७ ॥
वाद्यद्रुतं लयं यत्र सहसा न निवर्तते ।
संघाताद्येषु भिन्नेषु प्रकारश्छिन्न एव सः ॥ १७८ ॥
अर्धपाणिमृदङ्गेषु पणवोपरिपाणिकः ।
यदा भवति वाद्येषु छिन्नविद्धस्तु सा(?) भवेत् ॥ १७९ ॥
विद्ध्यनुविद्धं यद्वाद्यं सर्वा(र्वा ?)तोद्येषु दृश्यते ।
परस्परानुबोधाच्च सानुविद्ध इति स्मृतः ॥ १८० ॥
मृदङ्गकरणैर्वाद्यं पणवा वादयन्ति यत् ।
सूचीविद्धैर्विधैन्तेसुकरणैर्द्विज(?) उच्यते ॥ १८१ ॥
विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा ।
स्वरूपानु(?)गतं विद्धं विज्ञेयो वाद्यसंश्रयः(?) ॥ १८२ ॥
मुरजं पणवो वापि पणवं दर्दरोऽपि वा ।
अनुयाति यदा वाद्यं भवेदनुश्रितस्तु सः ॥ १८३ ॥

---

१. 'स्तु यः सम्यक्' का.

२. 'नात्यायतश्च यः स्यात् संस्थानतः समं विभक्तश्च' का.

३. 'वाद्यं तु त्रिलयं यत्र सहसा च विवर्धते ।
सर्वातोद्यैः प्रवृत्तं तु प्रकारश्छिन्न एव सः ॥' इति का.

४. 'अवपाणिमृदङ्गानां पणवीपरिपाणि च ।
भवतो यत्र वाद्ये तु छिन्नविद्ध इति स्मृतः ॥' इति का.

५. 'विद्धानुविद्धं यद्वाक्यं सर्वातोद्येषु दृश्यते ।
परस्परविरोधे तु अनुविद्धं तु स स्मृतः ॥' इति पद्यं का.
पुस्तके 'मृदङ्गकरणैः' इत्याद्यग्रिमश्लोकोत्तरं वर्तते ।

६. 'मृदङ्गकरणं वाद्यं पणवो वेधयेद्यदि ।
सूचीवेधैर्विचित्रैस्तु करणैर्विद्ध एव सः ॥' इति का.

७. 'विशुद्धवाद्यं प्रकृतिः' का. ८. 'अरुपानं गतं' क.

अनुगम्य यदातोद्यं गच्छेद्विसलयं मुनेः ।
शुद्धवत्समवाद्येषु तदा स्यात्प्रतिविच्युतः ॥ १८४ ॥
वाद्यप्रचारविषमः सर्वमार्गप्रयेनत(बोधनः?) ।
अ(रि)विर(भ?)क्ताक्षरप[ दः ? ]स दुर्ग इति कीर्तितः ॥ १८५ ॥
समवृत्तास्तु मुरजाच्छे(से?)व्यन्ते पणवैर्यदि ।
नानाविचित्रैः करणैरवकीर्णः स उच्यते ॥ १८६ ॥
द्रुतं लयं समारभ्य पणवो दर्द(र्दु?)रोऽपि वा ।
अर्धपाणौ यदा स्यातां तदा त्वर्धावकीर्णकः ॥ १८७ ॥
पणवैश्छादितं यत्र वाद्यमल्पं मृदङ्गजम् ।
अविभक्ताक्षरपदं परिक्षिप्तः स उच्यते ॥ १८८ ॥
सर्वातोद्यानि यत्रैकं[1] करणं भावयेत तत् ।
[2]समवृत्तपदान्येवमेकरूप उदाहृतम् ॥ १८९ ॥
[3]प्रशान्तनियमोपेतः स्फुटं नाट्यसमन्वितः ।
न प्रयाति च गीतं च स ज्ञेयो नियमान्वितः ॥ १९० ॥
चित्रं हि का[4](क?)रणं यत्र वा[5]द्येनैकेन वाद्यते ।
वृ[6](नृ?)त्ताङ्गहारानुगतो ज्ञेयः सा[7](सा?)चीकृतस्तु सः ॥ १९१ ॥
कृत्वोपरिगतं वाद्यं पणवो द[8]र्द(र्दु?)रोऽपि वा ।
[9]प्रयाजमुत्तरं यत्र समुल्लेखः प्रकीर्तितः ॥ १९२ ॥
[10]चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र संरब्धैश्चित्रलेखः स उच्यते ॥ १९३ ॥

---

१. 'कारणं भावयन्ति च' का. २. 'समवृत्तपदान्येव एकरूपमिति स्मृतः' का. ३. पद्यमेतत् का. पुस्तके नास्त्येव । ४. 'करणं' का. ५. 'पदेनैकेन' का. ६. 'नृत्ताङ्गहारानुगतं ज्ञेयं साचीकृतं तु तत् ।' का. ७. 'साचीकृत' इति तु प्राक् । ८. 'दर्दुरोऽपि हि' का. ९. 'यत्रो दीक्षेत मुरवात् समलेखस्तु स स्मृतः ।' का. १०. पद्यमेतत् का. पुस्तके नैवास्ति ।

सर्वमार्गगतो[1] यस्तु सर्वपाणिलयाश्रितः।
विचित्रश्च विभक्तश्च समवायकृतस्तु सः[2] ॥ १९४ ॥
यस्तु मध्यलयोपेतः समः सुविहिताक्षरः।
गतिपूर्णार्धविहितप्रकारो[3] दृढ एव सः ॥ १९५ ॥
एवमेते प्रकारास्तु कर्तव्या वार्धसंश्रयाः[4]।
गतिप्रचारे[5] गीते च रसाभावानपेक्ष्य तु ॥ १९६ ॥
प्रकारा[6] जातयश्चैव सर्वमार्गेषु संस्थिताः।
ये वै गतिप्रचारेषु शुद्धास्ते केवलाः स्मृताः ॥ १९७ ॥

तत्र[7] प्रयोगमिदानीं वक्ष्यामि—तत्रोपविष्टे प्राङ्मुखे रङ्गे कुत[प?] एव विन्यासः कर्तव्यः। तत्र पूर्वोक्तयोर्नेपथ्यगृहयोः कुतपविन्यासः कार्यः। तत्र रङ्गाभिमुखो मौरजिकः, तस्य.................पाणविकाद्दर्दरिको वामतः। एष प्रथममवनद्धकुतपविन्यास उक्तः। तत्रोत्तराभिमुखो गायनः। गायनस्य वामपार्श्वे वैणिकः, तस्य दक्षिणे वंशवादकौ। गानु-(?)भिमुख्यो गायिका इति कुतपविन्यासः। तत्र प्रयोगे—अचला यकारश्च मकारश्च त्रिकैस्त्रिगुणितो भवेत्। विना दिसेतिजं दुंति चक्षं दुदोद्र द्वितीयं ति तावा ऋंदुभितिक्षतीर्यत्तदङ्गपूर्वं रङ्गविधानमनुप्राप्य छन्दसमेकाक्षरं समेन वाद्येन बहिर्गीतविधानमनुवर्तितव्यम्।

आसारितप्रयोगे च तत्त्वानुगतप्रादेयाद्यं विधातव्यम्। यस्त्रिसप्तप्रत्याहारः यासावतीर्णकोटिस्तत्र वाद्यं प्रवर्तते। तत्रादौ तावद्वा(?)मार्द[ङ्गि]कप्रहारयुक्तं पश्चाल्लिङ्गकविमर्दनवरणामूर्छा पत्तिमासाद्य विचित्रकरयुतं समार्दङ्गिकसर्वभाण्डिकमपि बद्धं पश्चात्प्रकटनीयम् कस्मात्पूर्वं हि भाण्ड-

१. 'सर्वमार्गकृतो यस्तु' का. २. 'स सर्वसमवायकः' का. ३. 'गतिप्रचारविहितः प्रचारो दृढ एव सः।' का. ४. 'नाट्यसंश्रयाः' का. ५. 'गतिप्रचारे गेये च रसभावौ समीक्ष्य तु।' का. ६. 'एते प्रकारा जात्यश्च सर्वमार्गेषु संस्मृताः।' का. ७. 'तत्र प्रयोगमिदानीं वक्ष्यामि' इत्यारभ्य 'आचार्याः सममिच्छन्ति' इत्यन्तपाठस्थाने।

वाद्येन सिद्धिरुत्पाद·····ती वा स्त्रीबालमूर्खावकीर्णे च रङ्गे कुरू(?)जनन-समर्थं वाद्यं समुत्पन्नं भवति ॥

अपि च—

आचार्याः सममिच्छन्ति पदच्छेदं तु पण्डिताः ।
स्त्रियो मधुरमिच्छन्ति विकु(क्रु?)ष्टमितरे जनाः ॥ १९८ ॥

तस्य चान्ते ताण्डवं प्रयोगमधिकृत्य नर्तक्या अवतरणकाले लघुवर्ण-संचयेऽङ्किकेऽङ्गुलिप्रचलनप्रायं वाद्यं योज्यम् । गीतका(?)संनिपाते च लास्या(स्य?)मनुवाद्यम् । तेन त्वङ्गहारानुगतं करणं वाद्यं प्रयोज्यम् । आलिप्त-मार्गेण जातिकरणाञ्चितमुत्थापने वाद्यं प्रयोक्तव्यम् । ततः परपरिवर्तनं चतुमार्गिकशूद्रजायाश्रयं चतुर्थकारप्रवेशेषु वाद्यमङ्गुलिप्रचलनप्रायमिति । नान्दी शुष्कायत्तः पशुकरणाश्रितं वाद्यं योज्यमिति रङ्गद्वारप्रवरणायां जर्ज-रिनिगनेवार्यं वादितमार्गाश्रितं संनिपातग्रहणं प्रयोक्तव्यम् । महाचार्या(?) वितस्तिमार्गाश्रितं प्रदेशिनीग्रहं पर्वतावपूर्वरङ्गे ताण्डववाद्यमुक्तम् ।

नायकायानास्वगतिप्रचारे वक्ष्यामः—·····························
घेत्ती व्वतो इति प्रियराज्ञं वप्रं इन्द्रं घटसछिरुण किटिजावियाणां व्यञ्ज-कप्रायं मध्यानाम् ।

एवं स्वस्थावस्थागतिप्रचारं विधीयते वाद्यम् ।
एककला··········श्चतुष्कलाश्चैववा(मा)दिविन्यासाः ।
तत्र तु साम्यं कार्यं भाण्डेन समं च गानेन ॥ १९९ ॥

पुनश्चावस्थाकृतं वाद्यं प्रवक्ष्यामि त्वरितगमने वं वं धेवे टां इत्येवं वाद्यं प्रयोक्तव्यम् यथा विषमादिकमङ्गुलिप्रचलनकृतं विहितम् । पण्यैव(?) पूर्वं सम्यग्लिखितं त्वङ्गुलिप्रचारेषु । पुनरत्यावस्थायी वधविधानं वक्ष्यामि । त्वरितमनेषु भावा ये पूर्वोक्ता गतिप्रचारेषु । ध्रं ध्रं घे घे प्रायं तत्र तु वाद्यं प्रयोक्तव्यम् । नौरथविमाननेपथ्यानिलाकाशजेऽङ्गुलिचलनं कार्यम् । तच्चतुष्केऽन्योन्यमाश्रितं (वाद्यमाश्रितम्) वाद्यमिति दुःखादि(दि?)तव्याधि-तेष्टजनवियोगविभावनारावधबन्धव्रतनियमोपासनादिमयुक्तेष्वालिप्तमार्गवधो

विघातव्यम् (?) दैत्यदानवयक्षराक्षसग्रहादीनां सचन्द्रां चन्द्रा वक्रान्ता घे घेटाप्रायम्। घेटकुसत्त्वादीनां विटकुखुनेत्यादिकम्। यतिप(पा?)शुपतशाक्यादीनां घहुघहु घे घे प्रायम्। विघष्कोपस्थापकनिर्मुण्डवर्षधा(व)रादीनां घे घे टां टां णां णां प्रायम्। वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां घो घो खो खो इतिप्रायम्। गजवाजिखरोष्ट्ररथविमानयानेषु वंकिटिप्रायम्। सर्वत्रोत्तममध्यमाधमेषु पुरुषेष्वित्थं रसान्भावान्भुवि समीक्ष्य वाद्यं प्रयोक्तव्यम्। एवं तावत्पुरुषवाद्यम्॥

स्त्रीणां पुनरपि व्याख्यास्यामः—तत्रोत्तमस्त्रीणां दिव्यानां वंगतिकिपिघमेटप्रथिघे इतिप्रायम्। अथ राज्ञीनां कथि कथि मथि दो दो खु खुप्रायम्। चं किचि किथि घट मट थिघे इति ब्राह्मणीनाम्। अथ मध्यमस्त्रीणां वेश्याशिल्पकारीणां किरित्ता तं थं कथि मामपि डण किटि किटिप्रायम्। मरथिकुले केडखुखिखि प्रायं गीतं स्त्रीणाम्। एवं तावत्सामान्यतोऽभिहितं स्त्रीणाम्॥

अवस्थान्तरितानां तु त एवापौरुषवाद्यविशेषा भवन्ति। तत्सामान्यं भयशोकक्रोधाद्यो हि भावा आसां समुत्पद्यन्ते। आसामपि रसभावाभिनयापेक्षं मार्गाश्रितं वंयं (?) भवति॥

अपि च—

जातिमार्गप्रकारैस्तु करणैरक्षरैस्तथा।
वादयेद्यस्तु संकीर्णं स श्रेष्ठो वाचकः[2] स्मृतः॥ २००॥

अथान्तरवाद्यानि—अनुबन्धो विग्रहारन्[3](?)सिद्धिग्रहणं परिच्छिन्नमिति॥

तत्रानुबन्धसंज्ञमन्तरवाद्यं यथा—'धे धे ण वेर कधे'। इति पाद्यविरामे प्रहारितं यथा— 'चन्द्रां खे खे ण' इति। सिद्धिरषै········॥

अपि च—

ऐश्वर्यविस्मृते श्रान्ते वस्त्राभरणसंयमे।
सिद्धिर्वादयितव्या तु नानाकरणसंश्रया॥ २०१॥

---

१. 'वाद्यं' इति भवेत्. २. 'वादकः' इति भवेत्. ३. 'प्रहारितं' इति भवेत्.

सा च सिद्धिर्यथा—समार्गकरणाश्रया कार्या विचित्रकला अवस्थान्तरे पुनरेव कृता भवति ॥

अपि [च]—

पाद्यविरामे वाद्यं कर्म सावध(?) कृतो विरामेति ।
वस्त्राभरणनिपाते (प्र)कुर्यादभ्यञ्जने काले ॥ २०२ ॥

अथ परिच्छिन्नम्—सर्वभाण्डिकध्रुवाया ग्रहोपशमे गम्भीराप्रहारमुद्धतं तथा संवसंकलम्(?) । तत्रोत्तमानां विततमार्गाश्रितम्—'इन्द्रं को घ क्के' इति ॥

अथोत्तमस्त्रीणामदितावाघाश्रयणम्—'से खो खा' इति । अधमानां खञ्जनर्कुटस्थं यथा—देष्कर्का कटि कटि क्क इति ॥

अथ प्रासादिकी प्रवेशिक्याक्षेपिक्यवकृष्टासु । तत्र प्रावेशिक्यां समपाणौ विभक्तकरणं वाद्यम् । द्रुतायामुपरिपाणिकरित्र[1](?)करणास्थिता···
······ । अवकृष्टायामर्धसंनिपातजमिति । यच्च धोर्णो चे येति ।

एवमेतत्प्रयोक्तव्यं वाद्यं गतिपरिक्रमे ।
प्रासादिक्यां ध्रुवायां च त्वन्तरायां तथैव च ॥ २०३ ॥
अभाण्डमेकं गीतं तु परिवर्त[2](?) प्रयोजयेत् ।
संनिपातावसानेषु भाण्डवाद्यग्रहो भवेत् ॥ २०४ ॥

यथा—द्रुतविलम्बितायां 'चे ते लघो ख' इति । आदितायां यथा—'एधो खो णं खो चेणं डिक्कणि ष्कघणुड्ड्प' इति । अथ नर्कुटखञ्जयोः—'णास्तु णाणणणखोदष्कणुज्ज' इति ।

अथोद्धात्यः—

संभ्रमावेगहर्षो[3]ऽथ विस्मयोत्साहशोकजे ।
ग्रहो दानस्य यद्वाद्यमुद्धात्यः संप्रकीर्तितः ॥ २०५ ॥

मोक्षमिदानीं वक्ष्यामः—तद्यथा—संहननं संसरणं च । तत्रोद्धत-

१. 'चारित्र' इति भवेत्. २. 'परिवर्त्य' इति भवेत्. ३. 'हर्षेऽथ' इति, 'हर्षोथ' इति वा भवेत्.

द्रुतानुबन्धे—'घित्तां किकिटि दत्तकेत्ति किंकदेत्तगोदोघघेदोघटेघोघे यदो' इति ॥

अथ खञ्जनर्कुटयोः—'धं द्रां धं द्रां ताकितां गुदुघे' इति ॥

अथ स्थितायाम्—'घे धं घेट मटघे घे छिमटं कंटछि मटछि कर्माक दीथिटी' इति ॥

अथावकृष्टायाम्—'घटमघटथिठ द्विगुड्घेटाघोणबंघणणोणणं' इति ॥

एवमेते ग्रहा मोक्षा ध्रुवाणां गदिता मया ।
निष्कामे च प्रवेशे च अक्षेपिन्युत्तरासु च ॥ २०६ ॥

एवं तालकलाज्ञाने[1] मार्दङ्गिकेण प्रयतितव्यम् ।

भवन्ति चात्र श्लोकाः—

अतालज्ञमकालज्ञमशास्त्र[ज्ञं ?] च कण्टकम्[2] ।
चर्मघातकमित्येवं प्रवदन्ति मनीषिणः ॥ २०७ ॥
अनेनैव विधानेन वाद्यं[3] कार्यं प्रयत्नतः ।
अत ऊर्ध्वं प्रवक्ष्यामि आतोद्यानां तु लक्षणम् ॥ २०८ ॥
त्रिधा[4] क्रिया मृदङ्गानां हरीतकियवाश्रया[5] ।
तथा[6] नेपथ्यगोपुच्छ आकृत्या संप्रकीर्तितः ॥ २०९ ॥
तालत्रयं[7] तथा तच्च मृदङ्गेऽङ्किक इष्यते ।
मुखं[8] तस्य च कर्तव्यं द्वादशाङ्गुलयोजितम् ॥ २१० ॥
तथोर्ध्वकश्च कर्तव्यश्चतुस्तालप्रमाणतः[9] ।
मुखं[10] तस्य प्रकर्तव्यमङ्गुलानि चतुर्दश ॥ २११ ॥

---

१. 'कालाज्ञान' ख. २. 'वादकम्' का. ३. 'योज्यं वाद्यं प्रयोक्तृभिः' का. ४. 'त्रिविधा क्रिया मृदङ्गानां' का. ५. 'हरिदक्रियवाश्रया' का. ६. 'तथागोपुच्छरूपा च भवत्येषां स्वरूपतः' का. ७–८. 'मुखे तस्याङ्गुलानि स्युस्त्रयोदशचतुर्दश' का. ९. '°प्रमाणकं' का. १०. 'मुखं तस्य' इत्यादि 'अथापि च' इत्यन्त पाठः का. पुस्तके नास्ति ।

'मुखे तस्याङ्गुलानि स्युस्त्रयोदश चतुर्दश ॥

आलिङ्ग्यश्चैव कर्तव्यो लयमात्रमथापि च ।
मुखं तस्याङ्गुलानि स्युरष्टावेव समासतः ॥ २१२ ॥
पणवस्यापि[1] कर्तव्यो दीर्घत्वे[2] षोडशाङ्गुलः ।
कृशा[3](शो ?)मध्याङ्गुलान्यष्टौ पञ्चाङ्गुलमुखस्तथा[4] ॥ २१३ ॥
अष्टौ[5](ओष्ठः?) तस्य तु कर्तव्यो(?) तज्ज्ञैरध्यर्धचा(म?)ङ्गुलम् ।
मध्यं च सुषिरं[6] तस्य चत्वार्येवाङ्गुलानि[7] च ॥ २१४ ॥
दर्दरश्च[8] घटाकारो नवाङ्गुलीमुखस्तथा[9] ।
मुखं तस्य च कर्तव्यं घटस्य सदृशं बुधैः ॥ २१५ ॥
द्वादशाङ्गुलविस्तीर्णं पीनोष्टं(ष्ठं?) च समन्ततः[10] ।
अतः परं[11] प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥ २१६ ॥
न वैरोपहतं[12] चर्म न च कङ्कमुखाहतम् ।
न[13] दोषापहतं क्लिन्नं न भूमाग्निविदूषितम् ॥ २१७ ॥
एभिर्दोषैर्विनिर्मुक्तं[14] चर्म निर्घस्तितं[15](?) गवा ।
मुखपल्लवसंकाशं[16] हिमकुन्देन्दुसप्रभम् ॥ २१८ ॥
स्निग्धामिषविहीनं तु क्लिन्नं चर्म प्रशस्यते ।
विधिनैव मुखार्णानि चर्माण्याहृत्य बुद्धिमान् ॥ २१९ ॥

---

तथोर्ध्वकश्च कर्तव्यश्चतुस्तालप्रमाणकम् ।
मुखं तस्याङ्गुलानि स्युः अष्टावेव समासतः ॥
पणवश्चापि कर्तव्यो दीर्घत्वात् षोडशाङ्गुलः ।
कृशो मध्याङ्गुलस्याष्टौ पञ्चाङ्गुलमुखं तथा ॥' का.

१. 'पणवश्चापि' का.　२. 'दीर्घत्वात्' का.　३. 'कृशो मध्याङ्गुलस्याष्टौ' का. ४. 'पञ्चाङ्गुलमुखं तथा' का.　५. 'ओष्ठं तस्य च कर्तव्यं तज्ज्ञैरध्यार्धमङ्गुलम्' का. ६. 'तु' का.　७. 'चत्वारो वाङ्गुलानि तु' का.　८. 'दर्दरस्य' का.　९. 'भवत्यष्टिमुखस्तथा' का.　१०. 'समासतः' का.　११. 'ऊर्ध्वं' का.　१२. 'न जीर्णोपहतं चर्म न च काकमुखाहतम्' का.　१३. 'न मे दोषगतं किंचित् न च धूमादिदूषितम्' का.　१४. 'षड्भिर्दोषैः' का.　१५. 'निर्वर्तितं' का.　१६. 'मुखपल्लवसंकाशं' इत्यारभ्य 'अङ्गिकालिङ्ग्यकोर्ध्वकान्' इत्यन्तः पाठः का. पुस्तके नास्ति ।

सी(शी?)तोदके निशामेकां स्थापयित्वा समुद्धरेत् ।
बद्धैः सुललितैर्दान्तैर्गोमयैरतिमर्दितैः ॥ २२० ॥
चन्द्रकैस्तनुभिः पश्चान्मृदङ्गान्योजयेद्बुधः ।
पुष्पावर्तं ततः कुर्यात्रिवर्ति चन्द्रिकाश्रयम् ॥ २२१ ॥
कक्षाख्यं वै परिकरं ग्रीवास्थं स्वस्तिकं तथा ।
शतानि त्रीणि कुर्वीत पुष्करैर्द्व्यक्षराणि तु ॥ २२२ ॥
दश तत्र हि बद्धास्तु प्रक्षेप्या वत्ति(?) संश्रयेत् ।
निहित्वा(?) त्वक्षिके वाम्ने तृतीये संप्रवेशयेत् ॥ २२३ ॥
सर्वेष्वेव प्रयोगोऽयमक्षिकेषु विधीयते ।
न वै मृदङ्गे दातव्यं रोहणं सततं बुधैः ॥ २२४ ॥
गव्ये घृते च तैले च तिलपिष्टं तथैव च ।
बद्धा ह्यनेन विधिना अङ्किकालिङ्ग्यकोर्ध्वकान् ॥ २२५ ॥
देवताभ्यर्चनं[1] कृत्वा ततः स्थाप्या[2] महीतले ।
चित्रायामथ वा हस्ते शुक्लपक्षे शुभे तिथौ[3] ॥ २२६ ॥
उपाध्यायः शुचिर्विद्वान्[4]कुलीनो रोगवर्जितः[5] ।
मतिमान्नीतितत्त्वज्ञो[6] मधुरो नियतेन्द्रियः ॥ २२७ ॥
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ।
मण्डलत्रयमालिख्य गोमयेन सुगन्धिना ॥ २२८ ॥
ब्रह्माणं शंकरं विष्णुं त्रिषु तेषु प्रकल्पयन्[7] ।
आलिङ्ग्यं[8] स्थापयेत्पूर्वं ब्रह्मणो मण्डले कृते[9] ॥ २२९ ॥
ऊर्ध्वकं[10] तु द्वितीयेऽस्मिन्रुद्रनाम्नि निधापयेत्[11] ।
तिर्यगुत्सङ्गिकं[12] सम्यग्वैष्णवे मण्डले न्यसेत् ॥ २३० ॥

---

१. '°भ्यर्चनां' का. २. 'स्थाप्य' का. ३. '°हनि पुण्ये शुभे तिथौ' का. ४. 'विद्वान्' का. ५. 'रागवर्जितः' का. ६. 'घनज्ञो गीततत्त्वज्ञो' का. ७. 'प्रकल्पयेत्' का. ८. 'आलिङ्ग्य' का. ९. 'ब्रह्माणं पूर्वमण्डले' का. १०. 'ऊर्ध्वगं' का. ११. 'रुद्रनाम्ना निपातयेत्' का. १२. 'तिर्यक् कृतां' का.

बलिपुष्पोपहारैश्च [1]पूजयेत्पुष्करांस्तथा ।
[2]पायसं घृतमध्वक्तं चन्दनं कुसुमानि च २३१ ॥
शुक्लानि चैव वासांसि दत्त्वालिङ्ग्ये स्वयंभुवे ।
[3]त्र्यम्बकाय च दातव्यः सगणायोर्ध्वके बलिः ॥ २३२ ॥
स्वस्तिके लेपिकापूपपिण्डकेण्डरिकैः सह ।
[4]उन्मत्तकरवीरार्कपुष्पैरन्यैश्च भूषितः ॥ २३३ ॥
बलिः कार्यः प्रयत्नेन रक्तो रक्ताम्बरैः सह ।
वैष्णवे मण्डले [5]स्थाप्यः सर्वबीजगतोऽङ्किके ॥ २३४ ॥
[6]स्रग्वस्त्रालेपनैः पीतैश्चरुभिश्च सपायसैः ।
वाचयित्वा द्विजान्[7]स्वस्तिं दत्त्वा पूर्वं [8]च दक्षिणाम् ॥ २३५ ॥
पूजयित्[9]वादिगन्धर्वान्पश्चाद्वाद्यं समाचरेत् ।
तन्त्रीभिः पणवं [10]नद्ध्ये[11]त्सुमृष्टाभिः समन्ततः ॥ २३६ ॥
[12]ततः पुष्करिकाश्चैव योजयेत [13]सुचर्मणा ।
[14]एवं मृदङ्गपणवाः कर्तव्या दर्दरास्तथा ॥ २३७ ॥
दैवतानि च वक्ष्यामि [15]येषां ते च भवन्ति हि ।
[16]वज्रेक्षणः शङ्कुकर्णो ग्रामणीश्च तथा महान् ॥ २३८ ॥

---

१. 'नानापुष्पैर्विचित्रितैः' का.
२. 'आलिङ्गे च बलिं दद्यात् मधुपायससंमिश्रितम् ।
आपूपोल्लपिकामिश्रामांगिके संप्रदापयेत् ॥' का.
३. 'अनन्तरं च दातव्यः सर्वमेवोर्ध्वगे बलिः ।
स्वस्तिकाधूपिकाधूपरूपकैश्चलितैः सह ॥' का.
४. 'उन्मत्तकरवीरैश्च पुष्पैरन्यैश्च भूषितैः ।' का.
५. 'मण्डपे स्थाप्य सर्वबीजकृतो हितम् ।' का. ६. 'शुद्धस्यालम्बनैः पीतैः' का. ७. 'स्वस्ति' का. ८. 'दत्वापूर्वप्रदक्षिणान्' का. ९. 'पूजयित्वा तु' का. १०. 'तु स्यात्' का. ११. 'मृष्टाभिः' का. १२. 'घातपुष्करिकाश्चैव' का. १३. 'योजयेत्तत्र कर्मणा' का. १४. 'मृदङ्गपणवा वापि कर्तव्या दर्दुरास्तथा ।' का. १५. 'यान्येषां च भविष्यति' का. १६. 'लक्षश्लक्ष्णश्शङ्कुकर्णे ग्रामणी तु तथा महान्' का.

एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिताः ।
[1]मृन्मयत्वान्मृदङ्गा(ङ्ग ?)स्तु भाण्डं भ्रमयतीति च ॥ २३९ ॥
मुरजास्तूर्ध्वकरणादातोद्यं तोदनादपि ।
भाण्डस्यादौ प्रणीतोऽद्य पणवश्च विधीयते ॥ २४० ॥
दारयोतो(?) दारयति तस्माद्भवति दर्दरः ।
[2]स्पृष्ट्वा मृदङ्गात्पणवान्दर्दरश्च महामुनिः ॥ २४१ ॥
मेघे सुस्वरसंयोगं मृदङ्गानामथासृजत् ।
विद्यु[3]ज्जिह्वो भवेद्रामो मेघस्य तु महास्व[4]नः ॥ २४२ ॥
ऐ[5]रावतो महामेघस्तथा चैवोर्ध्वको भवेत् ।
[6]आलिङ्ग्यके च व........[नाम्ना मेघो ?]....बलाहकः ॥ २४३ ॥
दक्षिणे पुष्क[7]रे मेघः किकि[8]लानामयोजितः ।
मृदङ्गश्चैव नाम्ना [9]तु ऊर्ध्वके [10]नन्द्यथो[नान्यथो]च्यते ॥ २४४ ॥
अङ्कि[11]कः सिद्धिरित्येथ(व ?)मालि[12]ङ्ग्यश्चापि पिङ्गलः ।
भूतप्रि[13]यो बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ॥ २४५ ॥
[14]अपूजयित्वा ह्येतान्वै नैव प्रेक्षां प्रयोजयेत् ।
[15]करीषस्य तु संघाते मृदङ्गं स्थापयेद्बुधः ॥ २४६ ॥
(?)पसंव[16]तानंकट्यांश्च तथा चावनताः पुनः ।
आतोद्यपणवैश्चैव नर्तकोपनतास्तथा ॥ २४७ ॥

---

१. 'मृन्मयत्वात्' इत्यादि पद्यद्वयं का. पुस्तके नास्ति ।
२. 'दृष्ट्वा मृदङ्गपणवदर्दरं च महामुनिः ।
मेघैस्तु रससंवादान् मृदङ्गो नाम वारणम् ॥' का.
३. 'विद्युज्जिह्वा' का. ४. 'महात्मनः' का. ५. 'एरावणो महामेघः तथा चोर्ध्वगतो भवेत् ।' का. ६. 'आलिङ्गे च तडित् ख्याता' का. ७. 'पुष्करो' का. ८. 'कोकिलानामतः स्मृतः' का. ९. 'च' का. १०. 'ऊर्ध्वगो नान्यथोच्यते' का. ११. 'अङ्गारस्सिरिरित्यैव' का. १२. '°भालिङ्गश्चाष्टपिङ्गलः' का. १३. 'तत्प्रियोऽपि' का. १४. 'पूजयित्वा तां देवीं प्रेक्षां रङ्गे प्रकल्पयेत् ।' का. १५. 'रीषस्य ?' का. १६. इतःप्रभृति सार्धपद्यद्वयी का. पुस्तके नास्ति ।

शान्तिकर्म प्रयुञ्जीत वि[धि]दृष्टेन कर्मणा ।
चत्वारः पणवाः कार्या दशरूपविधौ पुनः ॥ २४८ ॥
आतोद्यास्वपि तान्येव नानावस्थासु वादयेत् ।
नाटके[1] सप्रकरणे भाणके सप्रहासने ॥ २४९ ॥
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत् ।
एवमेतद्बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ।
अत[2] ऊर्ध्वं प्रवक्ष्यामि वादकानां तु लक्षणम् ॥ २५० ॥
(?) गीतवाद्यत्तलयाव्यसहस्तोक्षरविशारदोऽथ लघुहस्तः ।
(?) किंद्रावणो विज्ञेयः सिद्धिस्थाने ध्रुवाकुशलः ॥ २५१ ॥
कलरिभितमधुरकहस्तः सुनिविष्टो रक्तमार्जनो बलवान् ।
सुविदितशरीरबुद्धिर्मृदङ्गवादी गुणैरेतैः ॥ २५२ ॥

---

१. 'नाटकेऽङ्के प्रकरणे वीथ्यां भाणे डिमे तथा ।
मृदङ्गः पणवश्चैव दर्दरं चोपकारयेत् ॥' का.

२. 'अत ऊर्ध्वं प्रवक्ष्यामि उपहस्तस्य लक्षणम् ।
कर्तरी समहस्तश्च हस्तपाणित्रयं तथा ॥
वर्त्तनाद् दण्डहस्तश्च पश्चक्षिङ्गाकरस्ततः ।
तर्जन्याङ्गुष्ठयोगेन खत्रे जातिगतिस्ततः ॥
पर्यागापतनैर्ज्ञेया कर्तरी हस्तयोर्द्वयोः ।
समयोः समतालेन द्वयोर्हस्तसमाश्रयोः ॥
पर्यायतः प्रभातो यः समहस्त इति स्मृतः ।
विभावितव्या वामस्य पार्ष्णिनाङ्गुलिभिस्तथा ॥
सकृद्दक्षिणहस्तस्य हस्तपाणित्रयं भवेत् ।
पूर्वदक्षिणहस्तेन क्रमाद्वामेन पादतः ॥
चत्वारो यत्र वर्तन्ते वर्त्तनाद्वर्तनाः स्मृताः ।
प्रथमं वामहस्तेन गृहीत्वा दक्षिणेन तु ॥
प्रहाराः क्रमपादेन दण्डहस्तः समस्तयोः ।
सौष्ठवं लाघवञ्चैव बाहुल्यं दृढतापि च ॥
सर्वेषाञ्चैव हस्तानां गुणाश्चत्वार ईरिताः ।
एवमेतन्मया प्रोक्तं हस्तानामपि लक्षणम् ॥' इति का. पुस्तके ।

आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्च सः ।
प्रतिग्रहीता सिद्धीनामङ्गदोषविवर्जितः ॥ २५३ ॥
स्वभ्यस्तकरणैः साम्ये गीतज्ञो गुणितग्रहः ।
सुसंगीतप्रयोगज्ञो मृदङ्गी तु भवेद्गुणैः ॥ २५४ ॥
श्रान्तोऽर्धहस्तकालज्ञश्छिद्राचरणपण्डितैः ।
अभ्यस्तकरणैश्चैव भवेत्पाणविको गुणैः ॥ २५५ ॥
निश्चलो निर्गुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दरी तु प्रशस्यते ॥ २५६ ॥

एतत्सर्वं नाट्ययोगं समीक्ष्य प्रोक्तं वाद्यं सर्वलोकानुभावात् ।
नोक्तं यच्चेदागमाद्वस्तुबुध्या सद्भिः कार्यं मार्गजातीः समीक्ष्य ॥ २५७ ॥
स्फुटप्रहारं विशदं विभक्तं रक्तं विघुष्टं करलेपनं च ।
त्रिमार्जनापूरितरागरम्यं मृदङ्गवाद्यं गुणतो वदन्ति ॥ २५८ ॥
वाद्ये तु यत्नः प्रथमं तु कार्यः शैयानि[1](?) नाट्यस्य वदन्ति वाद्यम् ।
वाद्ये च गीते चे[2] हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति ॥ २५९ ॥

इति भारतीये नाट्यशास्त्रे पुष्करवाद्यो नामाध्यायः पञ्चत्रिंश(चतुस्त्रिंश)ः ।

---

पञ्चत्रिंशोऽध्यायः ।

विन्यासं[3] भूमिकानां तु संप्रवक्ष्यामि नाटके ।
यादृश्यो[4] यस्य कर्तव्या विन्यासे[5] भूमिकास्ततः ॥ १ ॥
गतिर्वागाङ्गदेष्वेभिः[6](?) सत्त्वशीलैः[7] समासतः ।
परीक्ष्य[8] पात्रं तज्ज्ञास्तु युष्टा(?)द्भूमिनिवेशने ॥ २ ॥
तस्मादन्विष्य हि गुणान्कार्यः पात्रसमाश्रयः ।
न खेदजननं बुद्धेराचार्यस्य भविष्यति ॥ ३ ॥

---

१. 'शया(द्यां)हि' ख. २. 'ऽत्र हि' ख. ३. 'भूभागं' का. ४. 'यादृशैरेव कर्तव्या' का. 'यादृशी' क. ख. ५. 'पुरुषैर्भूमिकास्तथा' का. ६. 'गतिवागङ्गचेष्टाभिः' का. ७. 'सत्त्वशीलसमासतः' का. ८. 'परीक्ष्य पात्रं' इत्यारभ्य 'पात्रं युञ्ज्यात् स्वभूमिषु' इत्यन्तं पाठः का. पुस्तके नास्ति ।

आधायो यभजा(?)श्चैव गुणानङ्गान्स्वभावजान् ।
ततः कुर्याद्यथायोगं नृणां भूमिनिवेशनम् ॥ ४ ॥
अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोऽन्वितम् ।
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् ॥ ५ ॥
श्लिष्टाङ्गं द्युतिमन्तं च सुस्वरं प्रियदर्शनम् ।
एतैर्गुणैस्तु संयुक्तं देवभूमिषु योजयेत् ॥ ६ ॥
स्थूलं प्रांशुं बृहद्देहं मेघगम्भीरनिस्वनम् ।
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् ॥ ७ ॥
रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत् ।
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः ॥ ८ ॥
सुनेत्राः सुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः ।
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः ॥ ९ ॥
स्वङ्गप्रत्यङ्गसंयुक्ता दीर्घाश्च मदमन्थराः ।
न स्थूला न कृशाश्चैव स्वभावेन व्यवस्थिताः ॥ १० ॥
सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः ।
कुमारराजभूमीषु प्रयोज्या भरतोत्तमाः ॥ ११ ॥
अङ्गैरविकलैर्वीरं स्फुटं वचनकर्मणि ।
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् ॥ १२ ॥
अहीनं च प्रगल्भं च प्रत्युन्नतविनिश्चयम् ।
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् ॥ १३ ॥
पिङ्गाक्षं दीर्घनासं च ह्रस्वमुच्चमथापि वा ।
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् ॥ १४ ॥
एवमन्येष्वपि तथा नाट्यधर्मप्रवेशने ।
दशावस्थानुरूपेण पात्रं युञ्ज्यात्स्वभूमिषु ॥ १५ ॥
मन्थरं वामनं कुब्जं विकृतं विकृताननम् ।
निष्टब्धनेत्रं[1] काणाक्षं स्थूलं चिपिटनासिकम् ॥ १६ ॥

---

१. 'विसृष्टनेत्रकार्याणां स्थूलं विहनुनासिकम् ।
दुर्वेषं दुःस्वभावं च विकृताकारमेव च ॥' का.

दुर्जनं दुःस्वभावं च विकृताकारमेव च ।
दासभूमौ प्रयुञ्जीत बुधा(धो?) दासाङ्गसंयुतम् ॥ १७ ॥
प्रकृत्या तु कृशं क्षामं तपःश्रान्ते सुयोजयेत् ।
तथा च पुरुषं स्थूलमुपयोगेषु योजयेत् ॥ १८ ॥
यदि वा नेतराः सन्ति प्रकृत्या पुरुषा द्विजाः ।
आचार्यबुद्ध्या योक्तव्या भावचेष्टास्वभावतः ॥ १९ ॥
या यस्य सदृशी चेष्टा ह्युत्तमाधममध्यमा ।
सा तथाचार्ययोगेन निव(य?)म्या भावभाविनि(नी?) ।*
अत ऊर्ध्वं प्रवक्ष्यामि भरतानां विकल्पनाम् ॥ २० ॥

---

१. 'बुधो' का. २. 'तत्र श्रान्तेषु' का. ३. 'ह्यरोगेषु' का. ४. 'नेदृशाः सन्ति' का. ५. 'हि' इति नास्ति का. पुस्तके। ६. 'तथा चान्ययोगेन' का. ७. 'नियम्या भावभाविनी' का.

८. 'एवमन्येष्वपि तथा नाट्यधर्मी प्रशस्यते ।
देशवेषानुरूपेण पात्रं योज्यं हि भूमिषु ॥
बहुबाहो बहुमुखस्तथा च विकृताननः ।
पशुश्वापदसिंहाश्च खरोष्ट्रा वारणास्तथा ॥
एते चान्ये च बहवो नानारूपा भवन्ति ये ।
आचार्यबुद्ध्या कर्तव्या मृत्काष्ठजनचर्मभिः ॥
स्वाभाविकेन भावेन प्रविशेद्रङ्गमण्डपम् ।
आत्मरूपमवच्छाद्य वर्णकैर्भूषणैरपि ॥
यादृशं यस्य यद्रूपं प्रकृत्या तस्य तादृशम् ।
वयोवेषानुरूपेण प्रयुक्तं नाट्यकर्मणि ॥
यथा जन्तुस्वभावं हि परित्यज्यान्यदेहिकम् ।
परभावः प्रकुरुते परदेहं समाश्रितः ॥
एवं बुधः परं भावं सोऽस्मीति मनसा स्मरन् ।
वागङ्गगतिलीलाभिश्चेष्टाभिश्च समाचरेत् ॥
अनुरूपा विरूपा च तथा रूपानुसारिणी ।
त्रिप्रकारा भवेन्नॄणां प्रकृतिस्त्वपि भाविता ॥
नानावस्थावयोपेता भूमिकादिकृतास्तथा ।
समुद्योतमये नाट्ये स्वभावकरणाश्च याः ॥

---

* अयं श्लोकः खपुस्तके न दृश्यते ।

स्त्रियस्तु स्त्रीगते भावे पुरुषाः पौरुषे यथा ।
यथा वयस्तथा तस्मिन् अनुरूपेति सा स्मृता ॥
यो बालः स्थाविरीं भूमिं वृद्धो वा बालभूमिकाम् ।
तद्भावैः कुरुते नाट्यं सा विरूपेति कीर्त्तिता ॥
पुरुषः स्त्रीगतं भावं यो वा प्रकुरुते पुनः ।
रूपानुसारिणी ज्ञेया प्रयोगे भरतोत्तमैः ॥
छन्दतः पौरुषीं कुर्यात् भूमिकां स्त्रीप्रयोगतः ।
न परस्परचेष्टाभिः कुर्यात्तौ वृद्धबालिशौ ॥
भूमिकं सुकुमारञ्च नित्यं स्त्रीभिरनुष्ठितम् ।
अत्यर्थं मानुषीणान्तु दिव्यमानुषयोस्तथा ॥
रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् ।
तथैव मानुषे लोके राज्ञामन्तःपुरेष्वपि ॥
उपदेष्टव्यमार्यैस्तु शास्त्रबुध्यांगनासु च ।
सुकुमारप्रयोगोऽयं राज्ञामामोदकारकः ॥
शृङ्गाररसमासाद्य तान्नारीष्वेव योजयेत् ।
यस्मात्स्वभावोपनतो विलासः स्त्रीषु दृश्यते ॥
तस्मात्स्वभावमधुरमङ्गं सुलभसौष्ठवम् ।
पौरुषं यत्तु ललितं सोऽलंकारपरो भवेत् ॥
स्वयं तु भूमिकान्यासं बुधः स्त्रीणां प्रयोजयेत् ।
तुल्योपि स्थापकोपेतो भूमिकान्यास इष्यते ।
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥
संगीतकमपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ।
मधुरकर्कशत्वं भवति नाट्यप्रयोगेन ॥
प्रमदा नाट्यविलासैर्लतेव कुसुमैर्विचित्रलावण्याः ।
कामोपचारकुशला भवन्ति काम्ये विशेषज्ञाः ॥
योग्यासु च प्रयत्नः कर्त्तव्यः सततमप्रमादेन ।
न हि योग्यां विना भवति भावरससौष्ठवं किञ्चित् ॥
प्रयोगो द्विविधश्चायं विज्ञेयो नाट्यमन्वितः ।
सुकुमारस्तथाविद्धो नानाभावरसाश्रयः ॥
नाटकञ्च प्रकरणं भाणो वीथ्यङ्क एव च ।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ॥
युद्धोद्धता वेगकृतासंरम्भबहुलाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः प्रयोज्याः पुरुषैर्हि ते ॥

न चाविद्याङ्गभावस्तु च्छेद्यमेद्याहवात्मिकम् ।
मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपिनम् ।
पुरुषप्रायसञ्चारमल्पस्त्रीकमनोद्धतम् ।
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतासां विद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यसमन्विताः ॥
एवं प्रयोगः कर्तव्यो भूमिकानां विकल्पनम् ।
अत्रोच्यते यथानाट्यमाहार्यगुणसम्भवः ॥
कथं राजगुणाः कार्या नटैरल्पपरिच्छदैः ।
अत्रोच्यते यथा लोके नाट्यधर्मिप्रवृत्तिता ॥
तदेवं सर्वसंपन्नं नाट्यमेतन्मया कृतम् ।
वर्णकैश्छादितस्तत्र भूषणैश्चाप्यलंकृतः ॥
गाम्भीर्याहार्यसंपन्नो राजचिह्नो भवेन्नटः ।
सप्तद्वीपाश्रयश्चैवमथवैको भवेन्नरः ॥
वर्णकैर्याति तेनेह कार्यं त्वङ्गविचेष्टितम् ।
आचार्यबुध्या कर्तव्यं सौष्ठवाङ्गपुरस्कृतम् ॥
राजवत् भरतस्तस्मात् राजापि नटवत् भवेत् ।
यथा नटस्तथा राजा यथा राजा तथा नटः ॥
द्रव्याणां यः परीवारो पार्थिवानां स एव हि ।
नाटके संप्रयोक्तव्यो देशभाषावयोऽन्वितः ॥
एवं राजोपचारे तु कार्यः पुरुषसंश्रयः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रयोक्तॄणां तु तद्गुणान् ॥

तत्र सूत्रधारगुणान् वक्ष्यामः । पुण्याभिधानमेव तल्लक्षणं अभिमतवाक्संस्काराः तालविधानज्ञता स्वरवादित्रतत्त्ववेदनञ्च ॥

चतुरातोद्यकुशलः शास्त्रकुर्मसुशिक्षितः ।
नानापाषण्डकार्यज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥
वेश्योपचारनिपुणः कामशास्त्रविचक्षणः ।
नानागीतप्रचारज्ञो रसभावविशारदः ॥
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः ।
पादच्छन्दोविधानज्ञः सर्वशास्त्रविचक्षणः ॥

ग्रहनक्षत्रतत्त्वज्ञो देहव्यापारपण्डितः ।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च ॥
प्रमाणचरितज्ञश्च राजवंशप्रसूतिवान् ।
श्रोता शास्त्रार्थकाराणां श्रुत्वा चैवावधारकः ॥
अवधार्य प्रवक्ता च शक्तश्चैवोपदर्शने ।
एवंगुणस्तथाचार्यः सूत्रधारो विधीयते ॥
स्वाभाविकान् गुणांश्चैव गदतो मे निबोधत ।
स्मृतिमान् मतिमान् धीर उदारः स्थितवाक् कविः ॥
अरोगो मधुरः क्षान्तो दान्तश्चैव प्रियंवदः ।
मन्युदोषविनिर्मुक्तः सत्यवाक् दक्षिणः शुचिः ॥
अलुब्धप्रतिपत्तौ च स्वाभाविकगुणास्त्वमी ।
सूत्रधारगुणैश्चैव किञ्चिदूनैः समन्वितः ॥
मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्विकः ॥
उज्वलो रूपवांश्चैव दृष्टोपकरणक्रियः ।
मेधावी च विधानज्ञः स्वकर्मकुशलो नरः ॥
सूत्रधारगुणैर्युक्ताः सर्व एव प्रयोगिणः ।
वेश्योपचारकुशलो मधुरो दक्षिणः कविः ।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो भवेत् ॥
उज्वलवस्त्राभरणः क्रुद्ध्यत्यनिमित्ततः प्रसीदति च ।
अधमो मागधभाषी भवति शकारो बहुविकारः ॥
वामनो दन्तुरः कुब्जो द्विजिह्वो विकृताननः ।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः ॥
कलहप्रियो बहुकथो विरूपो गन्धसेवकः ।
मान्यामान्यविशेषज्ञश्चेटोऽप्येवंविधः स्मृतः ॥
एवंगुणैश्च संयुक्तो नाट्ययोगविचक्षणः ।
कलाप्रयोगे चाचार्यैस्तोषिताभिरतः सदा ॥
लीलया हावभावाभ्यां सत्त्वेन विनयेन च ।
माधुर्येण च संयुक्ताश्चतुष्षष्टिकलान्विताः ॥
राजोपचारकुशला स्त्रीदोषैश्च विवर्जिता ।
प्रियवादिनी प्रियकथा प्रियदक्षा जितश्रमा ॥
एभिर्गुणैस्तु संयुक्ता गणिका परिकीर्तिता ।
रूपगुणशीलयौवनमाधुर्यशक्तिसंपन्ना ॥

भरताश्रयाच्च भरतो विदूषकस्तौरिपो ने(न्ये) च(?) ।
नन्दी[1] ससूत्रधारो नाट्यरसो नायकश्चैव ॥ २१ ॥
मुकुटाभरणविकल्पैर्विज्ञेयो माल्यवस्तुविविधैश्च ।
कारककुशीलवाद्या विज्ञेया नामतश्चैव ॥ २२ ॥
धुर्यवदेको[2] यस्माद्दुद्धारो[3]ऽनेकभूमिकायुक्तः ।
भाण्डग्रहोपकरणैर्नाट्यं भरतो भवेत्तस्मात् ॥ २३ ॥
लोको हृदाश्रयकृतां सर्वप्रकृतिप्रचारसंयुक्ताम् ।
नानाश्रयां प्रकुरुते तथा च नार्यां[4] च सर्वत्र ॥ २४ ॥
प्रत्युत्पन्नप्रतिभो नर्मकृता नर्मगर्भनिर्भेदैः ।
छेदविभूषितवदनो विदूषको नाम विज्ञेयः ॥ २५ ॥
नरपतिस्तूर्यमतिः सर्वातोद्यप्रवादने कुशलः ।
तूरपतिग्रहयुक्तो(हि)विज्ञेयस्तौरिपो नाम ॥ २६ ॥
नटइ(य)ति धात्वर्थभूतं नाटइ(य)ति लोकवृत्तान्तम् ।
रसभावसत्त्वयुक्तं यस्मात्तस्मान्नटो भवति ॥ २७ ॥
स्तुत्याभिवादनकृतैर्मधुरवाक्यैः समङ्गलाचारैः ।
सर्वं स्तौति हि लोकं यस्मात्तस्माद्भवेद्बहुधा ॥ २८ ॥
तस्मिन्·········साश्चर्यो वदति नाट्ययोगेषु ।
प्राकृतसंस्कृतपाठ्यो नान्दी नामेति विज्ञेयः ॥ २९ ॥

---

विशदा स्निग्धा मधुरा पेशलवचनाभिरक्तकण्ठी च ।
योग्या यामक्षुभिता लयतालज्ञा रसैस्तु संयुक्ता ॥
एवंविधगुणैर्युक्ता कर्तव्या नायिका तज्ज्ञैः ।
आस्थानराशिनिरूक्षा आविद्धगतिचेष्टिता ॥
दीर्घरोषा च दीना च तथोद्वृत्तोद्भटा सदा ।
सर्वाभरणसंयुक्ता गन्धमाल्योपशोभिता ॥
एवमेताः प्रकृतयो ज्ञेया नाट्यप्रयोक्तृभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि भरतानां विकल्पनम् ॥' इयानधिकः पाठः का. पुस्तके ।

१. 'नान्दी' इति लग्ने. २. 'धुर्यं' क-ख. ३. 'दुर्धरो' क-ख. ४. 'तथाल-नार्यां' इति भवेत्.

गानस्य च वाद्यस्य च पाठ्यस्याप्येकभावविहितस्य ।
शास्त्रोपदेशयोगात्सूत्रज्ञः सूत्रधारस्तु ॥ ३० ॥
(?)यस्माद्यथोपदिष्टान्साख्भावाद्यसत्त्वयुक्तान् ।
(?)भूमिर्विकल्पैति यति च नाट्यकारः कीर्तितस्तस्मात् ॥ ३१ ॥
चतुरातोद्यविधानं सर्वस्य तु शास्त्रोदविहितस्य ।
गच्छति यस्मान्नाट्ये तस्माद्वैनायको भवति ॥ ३२ ॥
नानाप्रकृतिसमुत्थं करोति यः शीर्षकं मुकुटयोगे ।
विविधैर्वेषविशेषैः स च मुकुटकार(?)[1] विज्ञेयः ॥ ३३ ॥
यश्चाभरणं कुर्याद्बहुविधिविहितं स चाभरणम् ।
कर्ता यश्चोपकरणायोगात्स तेन नाम्ना विधातव्यः ॥ ३४ ॥
यो वै माल्यं कुरुते पञ्चविधं माल्यकृत्स विज्ञेयः ।
यश्चापि[2] वेषयोगं सच वेषकरस्तु विज्ञेयः ॥ ३५ ॥
चित्रज्ञश्चित्रकरो वस्त्रस्य च रञ्जनाद्भवेद्रजकः ।
जत्वश्मलोहकाष्ठैर्द्रव्यकरः कारुकश्चैव ॥ ३६ ॥
नानातोद्यविधाने प्रयोगयुक्तः प्रवादने कुशलः ।
आतोद्येऽप्यतिकुशलो यस्मात्स कुशीलवस्तस्मात् ॥ ३७ ॥
यद्यत्समाचरन्ते शिल्पं वा कर्म वा प्रयोगं वा ।
तेनैवापगत(?)गुणा विज्ञेया नामतः पुरुषाः ॥ ३८ ॥
एवं तु नाटकविधौ जातिर्नटसंश्रया बुधैर्ज्ञेया ।
नाम्नोपकरणयुक्ता नानाशिल्पप्रयुक्ता च ॥ ३९ ॥

इति भारतीये नाट्यशास्त्रे भूमिविकल्पो नामाध्यायः षट्त्रिंशः ( पञ्चत्रिंशः ) ।

---

षट्त्रिंशाध्यायः ।

एवं तु[3] मुनयः श्रुत्वा[4] सर्वज्ञं भरतं तदा ।
पुनरूचुरिदं वाक्यं कुतूहलपुरोगमम् ॥ १ ॥

---

१. 'मुकुटकृत्तु' इति भवेत्. २. 'यश्चाविशेष' क-ख. ३. 'ते' का. ४. 'प्रीताः' का.

[1]यस्त्वया गदितो ह्येष नाट्यवेदः पुरातनः ।
एकचित्तैः [2]सदास्माभिः सम्यक्समुपधारितः ॥ २ ॥
[3]एकश्च संशयोऽस्माकं तन्नो व्याख्यातुमर्हसि ।
[4]को वान्यो यन्निवेद्यस्य निश्चयं वेत्ति तत्त्वतः ॥ ३ ॥

न वयं [5]परिहासेन [6]विरोधेन च नान्यथा ।
[7]इच्छामो भगवन्नाट्यमुपदेशार्थमेव तु ॥ ४ ॥
अस्माभिश्च तदा [8]नोक्तं व्याच्छेदो [न] भवेदिति ।
[9]इदानीं रूपशिक्षार्थं नाट्यं गुह्यं [10]प्रकाशय ॥ ५ ॥
लोकस्य चरितं नाट्यमित्यवोचस्त्वमीदृशम् ।
[11]शेषाणां लोकगुह्यानां निश्चयं [12]कर्तुमर्हसि ॥ ६ ॥
[13]लोकस्य कस्य चरितं पूर्वरङ्गे द्विजर्षभ ।
[14]किमर्थं युज्यते घोषप्रयुक्तः किं करोति च ॥ ७ ॥[15]
[16]कस्माच्चैव मुनिः शौचं शुचिश्चरति सूत्रधृक् ।
कथमुर्वीतले नाट्यं स्वर्गान्निपतितं विभो ॥ ८ ॥
कथं [17]तदायं वंशश्च [18]नष्ट(ष्टः?)संज्ञः प्रतिष्ठितः ।
सर्वमेतद्यथातत्त्वं कथयस्व महामुने ॥ ९ ॥
[19]तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति ॥ १० ॥

---

१. 'कथितो' का. २. 'सहास्माभिः' का. ३. 'भगवन् संशयो यो यत्' का. ४. 'को ह्यन्यो नाट्यवेदस्य निश्चयं वक्तुमर्हति' का. ५. 'परिभावेन' का. ६. 'न विरोधेन नेर्ष्यया' का. ७. 'पृच्छामो भगवन्नाट्यमुपदेशाभिपूर्वकम्' का. ८. 'नोक्तव्या' क-ख. तदा 'छेदो भवेदिति' का. ९. 'तत्सर्वं निखिलेनेदं' का. १०. 'निदर्शय' का. ११. 'तेषां नो लोकगुह्यानां' का. १२. 'वक्तुमर्हसि' का. १३. 'देवस्य' का. १४. 'किमर्थं पूज्यते ह्येष प्रयुक्तं किं करोति वा' का. १५. इतोऽग्रे का. पुस्तके 'प्रीतं किं दैवतं तत्र प्रीतिं वा किं करोति च ।' इत्यधिकं पद्यार्धम् । १६. 'कस्मादेव पुनः शौचं श्रुतं चरति सूत्रधृक् ।' का. १७. 'तवायं' का. १८. 'नटसंज्ञः प्रकीर्तितः' का. १९. पद्यमेतत् का. पुस्तके नास्ति ।

[1]कथयामि कथां गुह्यां [2]येन्मां पृच्छथ सुव्रताः ।
[3]पूर्वरङ्गविधानस्य तां च मे संनिबोधत ॥ ११ ॥
प्रोक्तवानस्मि यत्[4]पूर्वं शुभं विघ्ननिबर्हणम् ।
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः ॥ १२ ॥
शस्त्राणां प्रति[5]कारार्थं शरीराव[6]रणं यथा ।
[7]क्रियते हि यथा पापं हुतेनैव प्रशाम्यति ॥ १३ ॥
[8]एवं जत्तै(पै?)श्च होमैश्च देवताभ्यर्चनेन च ।
स्तुत्याशीर्वचनैः [9]शान्तैः कर्मभावा[10]नुकीर्तनैः ॥ १४ ॥
सर्वातोद्यनिनादैश्च त[11]थां गतिस्वनेन च ।
[12]मयां पापापकरणे कृते विघ्ननिबर्हणे ॥ १५ ॥[13]
[14]स्तुतिगीताभिसंहृष्टैर्देवैरभिहितोऽस्म्यहम् ।
[15]नितरां परितुष्टाः स्म प्रयोगेणामुना तव ॥ १६ ॥
देवतासुरमानन्द्य यस्माल्लोकं च निन्दति ।
तस्मादयं प्रयोगस्तु नान्दीना[16]मां भविष्यति ॥ १७ ॥
गीतवा[17]द्यात्तु नान्दी हि यत्र काक[18]स्वनः शुभः ।
तस्मिन्देशे विपा[19]प्मां नो म(मा?)[20]ङ्गल्ये च भविष्यति ॥ १८ ॥

---

१. इतः पूर्वं का. पुस्तके 'भरत उवाच—' इति वर्तते । २. 'ब्रवीमि वो ह्ययं विप्राः यन्मां पृच्छत सुव्रताः ।' का. ३. 'पूर्वरङ्गविधानस्य तां च मे संनिबोधत ।' का. ४. 'यत्पूर्वमहं' का. ५. 'परिहारार्थं' का. ६. 'शरीराचरणं यथा' का. ७. 'तथा सर्वगतं पापं स्मृतेनैव प्रशाम्यति' का. ८. 'एवं जप्यैश्च होमैश्च का. ९. 'युक्तः' का. १०. '०कीर्तनात्' का. ११. 'यथा गीतस्वनानि च' का. १२. 'मया च पापहरणे' का. १३. 'ध्यदम्' ख-क. १४. 'स्तुतिगीतादिसंहृष्टो येनाथ ह्रियते पुमान् ।' का. १५. 'नितरां परितुष्टाः स्म' इत्याद्यर्धं तथा 'देवतासुरमानन्द्या' इत्याद्यर्धं च का. पुस्तके न स्तः । १६. 'नान्दीनाम' का. १७. 'गीतवाद्यानुनादी च' का. १८. 'काकुस्वरः' का. १९. 'तु पापघ्नो' का. २०. 'माङ्गल्यश्च भविष्यति का.

[1]यावत्तं पूरयेद्देशं ध्वनिर्नाट्यसमाश्रयः ।
[2]न स्थास्यन्ति हि रक्षांसि तं देशं न विनायकाः ॥ १९ ॥
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिंस[3]ा(स्राः?) नश्यन्ति चैव हि ॥ २० ॥
[4]वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च ।
[5]वेदमन्त्रार्थवचनैः समं ह्येतद्भविष्यति ॥ २१ ॥
श्रुतं मया देवदेवाद्भव[6]तः शंकरोदितम् ।
स्नानजप्यसहस्रेभ्यो [7]यत्र संगीतवादितम् ॥ २२ ॥
[8]यस्मिन्नातोद्यनाट्यस्य गीतवाद्यध्वनिः शुभः ।
[9]भविष्यत्यशुभं देशे नैव तस्मिन्कदाचन ॥ २३ ॥
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया ।
[10]नानास्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च ॥ २४ ॥
यतोऽभिवादने क्लिष्टं [11]शितं तद्रङ्गमण्डले ।
[12]ततस्तस्य हि तच्छौचं विहितं तु द्विजोत्तमाः ॥ २५ ॥
शौचं कृत्वा यतो मन्त्रपूजनं जर्जरस्य तु ।
उच्यते पूर्वरङ्गेऽस्मिंस्तस्माच्छौचं प्रकीर्तितम् ॥ २६ ॥
..................... चैवमाद्यमेतन्महीतले ।
[13]वक्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितम् ॥ २७ ॥
[14]स[र्वे ?]मेतत्तया सर्वे नाट्यवेदसमन्विताः ।
[15]सर्वलोकप्रहसनैर्वाद्यं तेनाद्य संश्रये ॥ २८ ॥

---

१. 'यावन्तं पूरयेद्देशं ध्वनिरातोद्यसंश्रयः' का. २. 'तावतानां शुभं किंचित् न च विघ्नविनायकाः' का. ३. 'हिंस्रा' इति का. ४. 'वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च' का. ५. 'वेदमन्त्रार्थवचनैस्तथैव च' का. ६. 'ततश्च शंकरोदितम्' का. ७. 'श्रेष्ठं मे गीतवादितम्' का. ८. 'यस्मिन्नातोद्यनाट्यस्थो गीतवाद्यश्च निश्चयः' का. ९. 'भविष्यत्यशुभं तस्मिन् देशे नैति कदाचन' का. १०. 'यत्र स्तोत्रकृतैर्मन्त्रैर्देवताभ्यर्चनं प्रति' का. ११. 'शिरसा रङ्गमण्डले' का. १२. इतः प्रभृति पद्यद्वयी का. पुस्तके नास्ति । १३. 'तथा विधिसमापन्नं न शक्यं विनिगूहितुम्' का. १४. 'ममैते तनयाः सर्वे नाट्यवेदमदान्विताः ।' का. १५. 'सर्वलोकप्रहसनैर्बाध्यन्ते हास्यसंश्रयैः' का.

कस्यचित्त्वथ कालस्य [1]शिल्पकं ग्राम्यधर्मकम् ।
ऋषीणां [2]न्यङ्गकरणं [3]कुर्वद्भिर्ग्रहसंश्रयम् ॥ २९ ॥
[4]अश्रव्यं(?) सुदुराचारं ग्राम्यधर्म[5]प्रवर्तितम् ।
निष्ठुरं [6]चास्र(प्र?)शस्तं च काव्यं [7]संसद्वियोजितम् ॥ ३० ॥
तच्छ्रुत्वा मुनयः सर्वे [8]भीमरोषं प्रकम्पिताः ।
[9]ऊचुस्तान्भरताक्रुद्धा [10]निन्दयन्त इवाग्नयः ॥ ३१ ॥
मा तावद्भो द्विजा युक्तमिदमस्मद्विडम्बनम् ।
को नामायं परिभवः किंवा [11]नास्मासु संमते ॥ ३२ ॥
[12]यस्माज्ज्ञानमदोन्मत्ता [13]न चेच्छाविनयान्विताः ।
तस्मादेतद्धि भवतां कुज्ञानं नाशमेष्यति ॥ ३३ ॥
ऋषीणां ब्राह्मणानां च [14]समवायसमागमे ।
[15]निर्ब्रह्मणो निराभू(हू ?)तः शूद्राचारो भविष्यति ॥ ३४ ॥
[17]यश्च वा भवतां वंशः स चाशौचो भविष्यति ।
[18]ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तकाः ॥ ३५ ॥
[19]परोपस्थानवन्तश्च पुंस्त्रीबालोपजीविनः ।
[20]शापं दत्तं तथा ज्ञात्वा सुतेभ्यो मे तदा सुराः ॥ ३६ ॥
सर्वे विमनसो भूत्वा तानृषीन्समुपस्थिताः ।
[21]याचमानैस्ततः प्रोक्तं देवैः शक्रपुरोगमैः ॥ ३७ ॥

---

१. 'शिल्पकर्म ममाभ्यधात्' का. २. 'ऋषीणामङ्गं करणं' का. ३. 'कुर्वद्भिर्भाण्डं संश्रयम्' का. ४. 'अग्राह्यं सुदुराचारं' का. ५. 'प्रवर्तनम्' का. ६. 'चाप्रशस्तं च' का. ७. 'संसदि योजितम्' का. ८. 'भीमरोषाः प्रकोपिताः' का. ९. 'ऊचुस्ते भरतान् सर्वान्' का. १०. 'निर्दहन्त इवाग्नयः' का. ११. 'नाम्नाभिसंमतम्' का. १२. 'तस्मात्' का. १३. 'भवता विनयाश्रयाः' का. १४. 'समवायोऽथ संगमे' का. १५. 'तिर्ब्रह्माचरणाभूत्वा शूद्राचारा भविष्यथ' का. १६. इतोऽग्रे का. पुस्तके 'शूद्रास्ते केवलं भूत्वा तत्कर्म समवाप्स्यथ' इति पद्यार्धमधिकम् । १७. 'यश्च वो भवतां वंशः स च शूद्रो भविष्यति ।' इति का. १८. 'येऽत्रापि वंशजाताः' का. १९. 'तथोपस्थानवन्तश्च स स्त्रीबालकुमारकाः ।' का. २०. 'शापजन्म ततो ज्ञात्वा सुतानां मे सुरास्तदा ।' का. २१. 'तावद्भिश्च तथा प्रोक्तं' का.

ईदानीं[1] दुःस(ख?)मुत्पन्नं नाट्यमेतद्विनङ्क्ष्यति।
ऋषिभिश्च[2] ततः प्रोक्तं न हि त्वेतद्धि वक्ष्यति॥ ३८॥
शेषमन्यत्र[3] यत्प्रोक्तं सर्वमेतद्भविष्यति।
एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम्॥ ३९॥
विषण्णास्ते[4] ततः सर्वे श्रुत्वा तं समुपस्थिताः।
प्रोक्तवन्तश्च[5] मां पुत्रास्त्वयाहो नाशिता वयम्॥ ४०॥
अनेन[6] नाट्यघोषेण शूद्राचारा हि यत्कृताः।
ममापि[7] सान्त्वयित्वोक्ता मा क्रोधं व्रजतानघाः॥ ४१॥
कृतानुविहितो[8]ऽस्माकं नूनमेष विधिः स्रुतः[9]।
मुनीनां न मृषा वाक्यं भविष्यति कदाचन।
निधनं च[10] मनो मा भूद्युष्माकमिति सान्त्विताः॥ ४२॥
जानीध्वं[11] तत्तथा नाट्यं ब्रह्मणा संप्रवर्तितम्।
शिष्येभ्यश्चैतदन्येभ्यः[12] प्रयच्छामः प्रयोगतः॥ ४३॥
मा वै प्रणश्यतामेतन्नाट्यं दुःखंप्रवर्तितम्[13]।
महाश्रयं महापुण्यं वेदाङ्गोपाङ्गसंभवम्॥ ४४॥
अप्सरोभ्य[14] इदं चैव यथातत्त्वं तथा स्तुतम्।
नाट्यं दत्त्वा ततः सर्वे प्रायश्चित्तं चरिष्यति[15]॥ ४५॥

इति भारतीये नाट्यशास्त्रे नटशापो नाम सप्तत्रिंशः (षट्त्रिंशः[16]) अध्यायः।

---

१. 'इदानीं दुःखमुक्तश्च सर्वमेतद्विनिश्चतु।' का. २. 'ऋषिभिश्च ततो (?) प्रोक्तं न चैतद्धिविनश्यति।' का. ३. 'शेषमन्यत्तु' का. ४. 'विषण्णास्ते सुराः सर्वे पुनरात्मावनैषिणः।' का. ५. 'प्रोक्तवन्तस्खु मां क्रुद्धा बहुशो नाशितास्त्वया।' का. ६. 'अनेन नाट्यदोषेण शूद्राचारप्रियाः कृताः।' का. ७. 'मया च सान्त्वयित्वोक्तं' का. ८. 'कृतान्तविहितोऽस्माकं' का. ९. 'स्मृतः' का. १०. 'तु' का. ११. 'जानीध्वं तु तथा नाट्यं ब्रह्मणा संप्रकीर्तितम्।' का. १२. 'शिष्येभ्यश्च तदन्येभ्यः प्रयच्छध्वं प्रयोगतः' का. १३. 'दुःखात् प्रवर्तितम्' का. १४. 'अप्सरोभ्युदयश्चैव यथोक्तं न मया श्रुतम्' का. १५. 'चरिष्यथ' का. १६. का. पुस्तकेऽत्राध्यायसमाप्तिर्नास्ति।

सप्तत्रिंशोऽध्यायः[1] ।

[2]..............लिप्रयोगा(गो ?)र्वींप्रोक्तवास्तुषु ।
कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः ॥ १ ॥
प्राप्तं[3] वा देवराज्यं हि नयबुद्धिपराक्रमैः ।
प्रशशास तदा राज्यं देवैर्व्युष्टिमपान्नुवन्[4] ॥ २ ॥
गान्धर्वं चैव नाट्यं च दृष्ट्वा[5] चिन्तामुपागमत् ।
इष्टचिन्तासु[6] मनसा कथमेष गृहे मम ॥ ३ ॥
नाट्यप्रयोगो हि भवेद्दिवि देवर एव सन् ।
कृताञ्जलिः प्रयोगोर्वीं प्रोक्तवान्सुपुरान्नृपः[7] ॥ ४ ॥
अप्सरोभिरिदं सार्धं[8] नाट्यं भवतु नो गृहे ।
प्रत्युक्तश्च[9] ततो देवैर्बृहस्पतिपुरोगमैः ॥ ५ ॥
दिव्याङ्गनानां[10] नैवेह मानुषैः सह संगतिः ।
हितं[11] पथ्यं च वक्तव्यो भवान्स्वर्गाधिपो हि यत् ॥ ६ ॥
आचार्यस्तत्र[12] गच्छतु(न्तु?)....[गत्वा कुर्वन्तु?]...ते प्रियम् ।
प्रोक्तवांस्तु ततो[13] मां तु नृपतिः स कृताञ्जलिः ॥ ७ ॥
इदमिच्छामि[14] भगवन्नद्य(न्नाट्य ?) मुर्व्यां प्रवर्तितम् ।
पूर्वमाचार्यकं[15] चैव भवतो हि प्रतिश्रुतम् ॥ ८ ॥

---

१. 'सोऽयं' का. पुस्तके षट्त्रिंशाध्यायान्तर्गत एव । २. एतदर्धं का. पुस्तके नास्ति । ३. 'प्राप्तवान् देवराज्यं च' का. ४. 'दैवीं व्युष्टिमाप्नुवन्' ५. 'दृष्ट्वा चिन्तामुपागतः' का. ६. का. पुस्तके तु—

'स चिन्तयित्वा मनसा कथमेषोऽग्र उन्मनाः ।
मम नाट्यप्रयोगोऽयं भवेदिति ससम्भ्रमः ॥' का.

७. 'प्रोक्तवानमरान् नृपः' का. ८. 'इदमप्सरसामित्थं' का. ९. 'प्रयुक्तः स ततो देवैः' का. १०. 'सुराङ्गनानां नोक्तोऽयं मानुषैः सह सङ्गमः ।' का. ११. 'हितं पथ्यं च कर्तव्यं भगवन् स्वर्जयेष्यया ।' का. १२. 'आचार्यास्तत्र गच्छन्तु गत्वा कुर्वन्तु ते प्रियम् ।' का. १३. 'प्रोक्तवांश्च' का. १४. 'इदमिच्छामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम् ।' का. १५. 'पूर्वमाकुलितं चैव द्रव्यैर्हि किल वः श्रुतम् ।' का.

[1]व्यक्तभावात्त्विदं लब्धं त्वत्सकाशाद्द्विजोत्तम ।
पि[2]तामहगृहेऽस्माभिरेतदन्तःपुरे जने ॥ ९ ॥
पि[3]तामहक्रियायुक्तं पूर्वस्यां संप्रवर्तितम् ।
[4]तस्याः प्रणाशशोकेन उन्मदोपरते नृपे ॥ १० ॥
विपन्नेऽन्तःपुरजने पुनर्नाशमुपा[5]गतम् ।
[6]प्रणाशमेतदिच्छामि भूयस्तत्संप्रयोजितम् ॥ ११ ॥
[7](?)तिथियज्ञक्रियास्ते तद्यथा सन्मङ्गलैः शुभैः ।
[8]तत्यि(स्मि?)न्मम गृहे बद्धं नानाप्रकृतिसंश्रयम् ॥ १२ ॥
[9]स्त्रीणां ललितविन्यासं प्रणाशो नाशयिष्यति ।
तथास्त्विति [10]मया प्रोक्तो नहुषः पार्थिवस्तदा ॥ १३ ॥
सुताश्चाहूय संप्रोक्ताः [11]सं(सा?) पूर्वं सुरैः सह ।
अयं हि [12]नहुषो राजा याचते नः कृताञ्जलिः ॥ १४ ॥
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव हि[13] ।
करि[14]ष्यामश्च शापान्तमस्मिन्सम्यक्प्रयोजिते ॥ १५ ॥
ब्राह्मणानां नृपाणां च भवि[15]ष्यथ न कुत्सिताः ।
[16]तत्र गत्वा प्रयुज्यन्तां प्रयोगा वसुधातले ॥ १६ ॥
न शक्यं चान्यथाकर्तुं वचनं पार्थिवस्य हि ।
[17]अस्माकं चैव सर्वेषां नहु[18]षस्य (च) महात्मनः ॥ १७ ॥

---

१. 'व्यक्तभावाश्रयं लब्ध्वा त्वत्सकाशाद् द्विजोत्तमाः ।' का. २. 'पितामहगृहेऽस्माकं' का. ३. 'पितामहक्रियायुक्तमुर्वश्याः संप्रकीर्तितम् ।' का. ४. 'तस्याः प्रणाशशोकेन उन्मादापहृतेन वै' का. ५. '°मुपागतः' का. ६. 'प्रकाशमेतदिच्छामो भूतले संप्रकीर्तितम् ।' का. ७. 'तिथियज्ञक्रियास्त्वेवं यथा स्यान्मङ्गलं शुभम् ।' का. ८. 'तस्मान् मम गृहे बन्धं' का. ९. 'स्त्रीणां ललितविन्यासैर्यशो वः प्रथयिष्यति ।' का. १०. 'यथा' का. ११. 'साम पूर्वं' का. १२. 'तु' का. १३. 'च' का. १४. 'करिष्यामि च' का. १५. 'न भविष्यन्ति कुत्सिताः' का. १६ 'तत्र गत्वा प्रयुज्यन्तां प्रयोगं वसुधातले ।' का. १७. 'युष्माकं चैव संक्षेपात्' का. १८. 'नहुषस्य महात्मनः' का.

[1]आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा ।
[2]शेषं प्रस्तारतन्त्रेण को(का)हलः कथिष्यति ॥ १८ ॥
प्र[3]योगान्कारिकाश्चैव निरुक्तानि तथैव च ।
अप्सरोभिरिदं सार्धं क्रीडनी[4]यैकहेतुकम् ॥ १९ ॥
अधिष्ठितं मया स्व[5]र्गे स्वातिना नारदेन च ।
ततश्च[6] वसुधां गत्वा नहुषस्य गृहे द्विजाः ॥ २० ॥
स्त्रीणां प्रयोगं बहुधा बुद्धि[7]व(मः)न्तो यथाक्रमम् ।
[8]तत्रोपभोगतस्ते तु मानुषीषु ममात्मजाः ॥ २१ ॥
[9]बुद्धिमन्तोऽधिकस्नेहास्ते स्तुतिर्द्विजसत्तमाः ।
पुत्रानुत्पाद्य बद्धा च प्रयोगं [10]च यथाक्रमम् ॥ २२ ॥
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं [11]पुनः सुताः ।
एवमुर्वीतले नाट्यं शि[12]ष्यैः समवतारितम् ॥ २३ ॥
भरतानां च वंशोऽयं भवि[13]ष्यं च प्रवर्तितः ।
[14]कोहे(ह?)लादिभिरेवं तु वत्सशाण्डिल्यधूर्तितैः ॥ २४ ॥
[15]मर्त्यधर्मक्रियायुक्तैः किं चेच्छालमवस्थितैः ।
एतच्छास्त्रं प्र[16]णीतं हि नराणां बुद्धिवर्धनम् ॥ २५ ॥
त्रैलोक्य[17]स्य क्रियोपेतं सर्वशास्त्रनिदर्शनम् ।
[18]मङ्गल्यं ललितं चैव.................. ॥ २६ ॥

---

१. आत्मोपदेशसिद्धिश्च नाट्ये प्रोक्ता स्वयंभुवा' का. २. 'शेषमुत्तरतन्त्रेण कोहलः कथयिष्यति ।' का. ३. 'प्रयोगः' का. ४. 'क्रीडनीयक' का. ५. 'सर्वे स्वस्तिना नारदेन च ।' का. ६. 'ततस्ते' का. ७. 'स्रष्टवन्तो' का. ८. 'तत्र चोत्पाद्य ते पुत्रान् मानुषीभ्यो ममात्मजाः ।' का. ९. 'बद्धवन्तोऽधिकं सर्गं तेषां च विविधाश्रयम् ।' का. १०. 'ते' का. ११. 'पुनस्तदा' का. १२. 'शापात् समवधारितम्' का. १३. 'भविष्यच्च प्रकीर्तितम्' का. १४. 'कोहलादिभिरेतैर्वा वात्स्यशाण्डिल्यधूर्तिलैः ।' का. १५. 'मर्त्यधर्मतया युक्तैर्कंश्चित्कालमवस्थितैः ।' का. १६. 'प्रयुक्तं तु' का. १७. 'त्रैलोक्यक्रिययोपेतम्' का.

१८. 'श्लोकार्धस्यास्य स्थाने 'माङ्गल्यं ललितैश्चैव ब्रह्मणो वदनोद्भवम् ।
सुपुण्यं च पवित्रं च शुभं पापविनाशनम् ॥' इति पद्यं का. पुस्तके ।

यं[1] इदं शृणुयान्नित्यं प्रोक्तं चेदं स्वयंभुवा ।<br>
कुर्यात्प्रयोगं यश्चैवमथवाधीतवान्नरः ॥ २७ ॥

या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम्[2] ।<br>
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धि सः[3] ॥ २८ ॥

दानधर्मेषु[4] सर्वेषु कीर्तनेषु महत्फलम् ।<br>
प्रोक्षणीयप्रदानं हि[5] सर्वदानेषु शस्यते[6] ॥ २९ ॥

न तथा गन्धमाल्येन देवा[7] मुह्यन्ति पूजिताः ।<br>
यथा[8] नाट्यप्रयोगस्थैर्नित्यं तुष्यति मङ्गलैः ॥ ३० ॥

गान्धर्वं चेह[9] नाट्यं च यः सम्यक्[10]परिपालयेत् ।<br>
स[11] ईश्वरगणेशानां लभते सद्गतिं पराम् ॥ ३१ ॥

एवं नाट्यप्रयोगे बहु[12]विधिविहितं कर्मशास्त्रप्रणीतं<br>
नोक्तं[13] यच्चात्र लोकादनुकृतिकरणात्संविभाव्यं तु तज्ज्ञैः ।<br>
किं[14] चान्यत्संप्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा<br>
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम् ॥ ३२ ॥

महापुण्यं प्रशस्तं च लोकानां नयनोत्सवम् ।<br>
नाट्यशास्त्रं समासेदं(?)भारतस्य यशोवहम् ॥ ३३ ॥

इति भारतीये नाट्यशास्त्रे गुह्यविकल्पो नामाध्यायः सप्तत्रिंशः ।

**समाप्तश्चायं [ ग्रन्थः[15] ] । नन्दिभरतसंगीतपुस्तकम् (?)**

---

१. 'य इदं शृनुयात् प्रोक्तं नाट्यमेतत् स्वयंभुवा ।<br>
प्रयोगं यच्च कुर्वीत प्रेक्षते चावधानवात् ॥' का.

२. 'यज्ञयाजिनः' का. ३. 'नरः' का. ४. 'नृपधर्मेषु सर्वेषु कीर्त्यते स महाफलम् । का. ५. 'तु' का. ६. 'पूज्यते' का. ७. 'देवास्तुष्यन्ति' का. ८. 'यथा नाट्यप्रयोगज्ञैस्तुष्यन्ति स्तुतिमङ्गलैः' का. ९. 'चैव' का. १०. 'सम्यगनुपश्यति' का. ११. 'लभते सद्गतिं पुण्यां समब्रह्मर्षिभिर्नरः ।' का. १२. 'बहुबहु' का. १३. 'न प्रोक्तं यच्च लोकादनुकृतिकरणं तच्च कार्यं विधिज्ञैः ।' का.

१४. 'किं चान्यत् सत्यपूर्वं भवतु वसुमती शाश्वती नष्टरोगा ।<br>
शान्तिर्गोब्राह्मणानां नरपतिरवनिं पातु चेमां समग्राम् ॥' इति का.

१५. 'इति भारतीये नाट्यशास्त्रे नाट्यावतारो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ समाप्तश्चायं ग्रन्थः' ॥ इति का.